तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातु भवति तद् द्विप्रकृतीनां स्थानमिति प्रदिशन्ति[1]।

तदिति[2] वाक्योपन्यासे। यत्र धातौ स्वरस्याकारादेः पुरस्ताद्वा परस्ताद्वा। अनन्तरा अन्तस्था। यवरलानामन्यतमो[3] ऽन्तर्धातु धातुमध्ये भवति धातुस्थ[4] इत्यर्थः। तत् शब्दरूपं द्विप्रकृतीनां स्थानम्। ते द्विप्रकृतयः। एवमुपदिशन्ति पूर्वाचार्याः। द्विप्रकृतय इति किमुक्तं भवति[5]? प्रकृतिशब्दः स्वभावपर्यायः। द्विस्वभावाः। इकारादियकारादिस्वरूपत्वात्[6]। इतरेतरप्रकृतित्वाद्वा[7]। इह केचिद् यकारादी[8]नुपदिश्य किरसु सम्प्रसारणं कुर्वन्ति। अन्ये पुनरिकारादी[9]नुपदिश्य किरसु[10] यणम्। एवमितरेतरप्रकृतित्वाद्[11] द्विप्रकृतित्वम्। उदाहरणम्—इष्टम, यष्टा, उत्तम[12], वप्तेत्यादि लौकिकम्। वैदिकन्तु—

मा त्वाग्नि[13]र्ध्वनयीद्धूमगन्धिर्मोखा भ्राजन्त्यभि[14] विक्त जघ्रिः।
इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णन्त्य[15]श्वम्[16] ॥

दीर्घतमस आर्षम्। अश्व[17]मेधे यूपे नियुक्तोऽश्व उच्यते। मेति प्रतिषेधार्थीयः। ध्वनयीदित्यनेन सम्बध्यते। त्वा त्वा यूपे नियुक्तं सन्तमग्निरतिप्रवृद्धो निकटवर्ती[18] मा ध्वनयीत्[19]। 'ध्वन शब्दे'[20] इत्यस्य ण्यन्तस्य लुङि[21] 'नोनयति ध्वनयति'[22] इति चङ्प्रतिषेधाच्छा[23]न्दसं रूपम्। दिध्व[24]नत् शब्दं माचीकरदित्यर्थः। शब्दकरणे हि प्रा[25]यश्चित्तश्रवणात्। कथं पुनरग्निरश्वं[26] शब्दं कारयति? यतो—धूमगन्धिः—धूम[27]मिश्रः। अन्तस्तापेन धूमेन च

१–'तद्यत्र स्वरादनन्तरेति' एतावदेव प्रतीकवाक्यम् C. D.
२–०दितर वा० B.
३–अन्यतमा B. C.
४–धातुस्थेत्यर्थः B. C.
५–किमुक्तमिदानीं कश्चिद्द्विमध्ये भवति B.
६–०रूपा वा D., यकारादि उकारादिस्व० C., यकारादि इकारादियकारादिस्व० B.
७–'इतरेतरप्रकृतित्वाद्वा' नास्ति D.
८–०रादिमुप० D.
९–०नरवारा० B.
१०–किसु ( दीसु ) B.
११–०प्रभकृति० C., ०प्रकृतित्वद्विप्रकृति० D.
१२–गुप्तम B. C.
१३–०ग्निध्वनयि धू० B. C.
१४–०न्त्यभिवित्त ( ध्यक्त ) B.
१५–०गृणात्य० B. ०गृणत्य० C.
१६–[ऋ० १।१६२।१५]। 'मा त्वाग्निर्ध्वनयीद्–अश्वम्' एतावदेव प्रतीकम् D.
१७–०मेधयूपे C.
१८–०वर्त्ति B. ०कमवर्त्ति C.
१९–ध्वननी B. C.
२०–[धा० १।८५४]
२१–लुटि D.
२२–[ Fragment of पा० ३।१।५१ ]
२३–०धाच्छन्दसं C., धश्छन्दसं D.
२४–दीध्व० B
२५–प्रयश्चितमित्यर्थः श्रवणात् D.
२६–०रश्वं श० D.
२७–धूमः मिश्रः D.

ष्याकुलयन्नित्यभिप्रायः । मोखा—अयं च प्रतिषेधार्थीयो माशब्दोऽभिविक्तेत्यनेन[1] सम्बध्यते । उखा—मांसपचनी स्थाली । भ्राजन्ती दीप्यमाना । मा[2]भिविक्त[3]—'विचिर् पृथग्भावे'[4] इत्यस्यैतद्रूपम् । पृथग्भेदी माभूदित्यर्थः[5] । अन्तर्नीत[6]ण्यर्थस्य वा । अभिद्यमाना वा । अवदानाय यूपस्यमश्वमभिविविचत् । पृथग्भावं माचीकरदित्यर्थः । जघ्रिः—'घृ क्षरणदीप्त्योः'[7] इत्यस्य 'किकिनौ[8] प्रकरणे उत्सर्गश्छन्दसि सदादिभ्यो[9] दर्शनात्[10]' इत्येवं[11] किप्रत्ययः[12] । क्षरणशीलापि[13] सती । इष्टमित्यादीनामर्थान्वयः । अभिगूर्तम्[14]—अभ्युद्यतम्, घोतकान्तम्, इष्टं[15]—देवतोद्देशेन त्यक्तम्, वषट्कृतं[16]—वषट्कारेण च[17] हुतम् । अवदानायस्थं[18] तं त्वां[19] देवासो देवा[20] प्रतिगृभ्णन्ति । लोटोऽर्थे लट्[21] । प्रतिगृह्णन्तु स्वीकुर्वन्तु[22] भक्षयन्त्वश्वम् ।

सेनानीकेन[23] सुविदत्रो अस्मे यष्टा देवाँ आयजिष्ठः[24] स्वस्ति ।
अदब्धो गोपा उत नः परस्पा[25] अग्ने द्युमदुत रेवद्दिदीहि[26] ॥

गृत्समदस्यार्षम् । य उक्तो वक्ष्यमाणगुणोऽपि सः[27] । एना अनेन ज्वालालक्षणेनानीकेन[28] बलेन[29] मुखेन वा । सुविदत्रः[30]—कल्याणविद्यः प्रशस्तविज्ञानः । अस्मे अस्मभ्य[31]मित्यर्थः, दिदिहीत्यनेन सम्बध्यते । यष्टा—ताच्छीलिकस्तृन्[32] । अत एव च[33] 'न लोकाव्यय[34]' इति षष्ठीप्रतिषेधात् 'देवान्' इति द्वितीया । एवं यष्टे[35] मनुष्येभ्यो यष्टृभ्य आयजिष्ठः—

१–०भिव्यक्तेत्य० B., ०भिविभक्तेत्य० C.
२–'मा' इति नास्ति D. ३–०व्यक्त B. C.
४–[ धा० ७ । ५ ]
५–भेदीत्यर्थः B., भेदित्यर्थः C.
६–अन्तर्णीत० C., अन्तर्हित D.
७–[ धा० ३ । १४ ] ८–०नो: प्रक्र० D.
९–सदादिभ्यो द० B., अत्र 'सहादिभ्यो' इति पाठो युक्तः स्यात् ।
१०–[ cf. पा० ३ । २ । १७१ ]
११–'एवं' इति नास्ति D. १२–०त्ययम् B. C.
१३–'अपि' नास्ति D.
१४–अभिगूर्तः B., अभिगूर्त C.
१५–देवतो० B. C. १६–'वषट् कृतं' नास्ति D.
१७–'च' नास्ति D.
१८–अपवादाना वस्थं तं B. C.
१९–त्वा B. C. २०–०गृह्णन्ति B. C.
२१–लट् B. C. २२–'स्वीकुर्वन्ति' नास्ति D.
२३–सेनानी० B. २४–देवानामाय० D.
२५–परस्पा C.
२६–दीदिहि D. [ ऋ० २ । ९ । ६ ]
'सेनानीकेन० दीदिहि' एतावदेव प्रतीकम् D.
२७–सम: B. २८–०नीतेन B. C.
२९–एवन मुखेन न वा B. ३०–सुविदत्र: C.
३१–'अस्मभ्यं दीदिहीत्येतेन' इत्येतावानेव पाठ: B. C.
३२–देवान् ताच्छीलि कस्तृन् B., देवान् ताच्छीलिकस्तृन् C. ३३–'च' इति नास्ति D.
३४–[ Fragment of पा० २।३।६९ ]
३५–यष्टृत्वे च सति B. C.

आभिमुख्येन यष्टृतमः । स्वस्ति—स्वस्तीत्यविनाशनाम । दिदिहीत्यनेन सम्बध्यते । अद्ब्धः अनुपहिंसितपूर्वः केनचिद्रक्ष आदिना । गोपाः-गोपायिता । कस्य ? जगतः । उत नः-अपि च विशेषेणास्माकम । परस्पाः-परः पाता परेभ्यो वा पाता । हे अग्ने ! द्युमत्-दीप्तमुज्ज्वलम । किन्तत् ? सामर्थ्यात् शालिगोधूमाद्यन्नम । उत-अपि च, रेवत्-'रयेमेतौ बहुलम्' सम्प्रसारणम । धनवत्—गोहिरण्यादिना धनेन तद्वत् । दिदिहि-अविनाशमन्न-श्लोकविशेषणमस्मभ्यं देहीत्यर्थः । योगक्षेमकरो भवेत्यभिप्रायः ।

'यदोदीध्ये' इति सप्तदशे व्याख्यास्यते ।

यदुद्वतो निवतो यासि बप्सत् पृथगेषि प्रगर्धिनीव सेना ।

यदा ते वातो अनुवाति शोचिर्वप्तेव श्मश्रु वपसि प्र भूम ॥

द्रोणस्यार्षम । दावरूपस्याग्नेः संस्तुतिः । यत् यदा । उद्वतः-'उपसर्गाच्छन्दसि' इति वतिः । उद्वतानि स्थलपर्वतसानुप्रभृतीनि । निवतः-नीचैर्गतानि च निम्नानीत्यर्थः । यासि बप्सत् भक्षयन् नदीपर्वतादिलक्षणानि निम्नोन्नतानि दग्धव्यवशात् । पृथक् विष्वग्भूतः पथि-गच्छसि येनेन । प्रगर्धिनीव-प्रकृष्टेन गर्धेनाभिलाषेण तद्वती । यथा सेना तद्वत् । किञ्च यदा-यस्मिन् काले, ते-तव स्वभूतम । शोचिः-ज्वालालक्षणं वातोऽनुयाति

१–यस्मिन D. २–०विनाशि B. C.
३–'इति' नास्ति D.
४–०ब्धमपहिंसितपूर्वं B., ०पहिंसितपूर्वः D.
५–केनद्रच B C. ६–'पाता' नास्ति B. C.
७–'पा' इति भ्रष्टः C.
८–'उज्ज्वलम्' नास्ति B.
९–'तत्' इति नास्ति D.
१०–'तौ बहुलं प्रसारणं' इत्येव पाठः B. C. [ पा० ६।१।३४] इति सूत्रे वार्तिकम् ।
११–मदिदि B. मदिनि C.
१२–'अस्मभ्यं' इति नास्ति D.
१३–[ ऋ० १०।३४।५]
१४–'इति' नास्ति B. C.
१५–यदुद्व० C. १६–०र्धिनेव B. C.
१७–अनवाति B., अणुवाति C.
१८–गोचि० B. C. १९–वपसि C.
२०–[ ऋ० १०।१४२।४ ] । 'यदुद्वतो निवतः भूम' एतावदेव प्रतीकम् D.
२१–अदा० B. C. । '०वरूपस्या०' इत्येतावान् पाठस्त्रुटितः B.
२२–[ पा० ५।१।११८ ] २३–पतिः C.
२४–०तानिस्थल० C., ०तानि स्थूल० D.
२५–निर्गतानि निम्नानि चेत्यर्थः D.
२६–बप्सत् भक्षयत् D.
२७–०ता मनि ल० B., ०तानि ल० C.
२८–०व्यपदेशात् B. २९–प्रगर्धिना B.
३०–गर्ध्येना० B. C. ३१–तद्वतीति B.
३२–'ते' इति नास्ति D.

प्रेरयति । तदा[१] वप्तेव । यथा वप्ता । नापित इत्यर्थः । श्मश्रु । एवं बहुतृणं[२] वीरुद्वितानवनगहनं[३] वपसि छिनत्सि लुम्पसीत्यर्थः । प्रभूर्म[४]-दृष्टान्तदार्ष्टान्तिकयोरविशेषेण[५] विशेषणमेतत्[६] । प्रभूतं महदित्यर्थः ।

स्वरानन्तरवचनं[७] वृकर्णसंवीतादिषु[८] व्यवहितयकारादिनिवृत्त्यर्थम्[९] । अन्तर्धास्विति दीध्यत्यादिषु[१०] प्रत्ययनिवृत्त्यर्थम् । दृष्टानुविधायित्वाच्चैते[११][१२] एव द्विप्रकृतय इति नियमः परिगृहीतः । न पुनरेते[१३] द्विप्रकृतय एवेति । अतो[१४] यज्ञादिषु नातिप्रसङ्गो न लक्ष्यते[१५] लक्षणम् ।

तत्रेत्यादि[१६], तेषु द्विप्रकृतिषु[१७] सिद्धायां[१८] व्याकरणे प्रत्ययलक्षणेनानुपपद्यमानायामसम्भवन्त्यां[१९] सम्प्रसारणवृत्ताविति शेषः । इतरया[२०] परोक्षया तदसम्भवेऽप्यतिपरोक्षया उपपिपादयिषेत्[२१] उपपादयितुमिच्छेत्[२२] उपपादयेदित्यर्थः । यो हि यदिच्छति स तत् करोति । सोऽयं परोक्षादिवृत्तिपरिग्रहो[२३] वैयाकरणैरपि संप्रसारणविधावन्यत्र[२४] चानुस्मर्यते[२५]-'बहुलं छन्दसि'[२६] इत्यनेन । उदाहरणमाचष्टे-'कुहः कोऽभूत्'[२७] । 'कुचरः[२८] कार्यं न चरति'[२९] इति । 'तुरीयं स्वरतेः'[३०] इत्यादि । एवमसम्प्रसारणविषयस्य सम्प्रसारणं द्रष्टव्यम् ।

तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति । तद्यथैतद्-ऊतिर्मृदुः पृथुः पृषतः कुणारुम् इति[३१] ।

अनेन संप्रसारणवृत्तेर्विषयवत्त्वं[३२] दर्शयति । तेष्वपि सम्प्रसारणविषयेष्वेके[३३] धात-

१—यदा B. C. २—०तृणवीरु० B. C.
३—०वनगह्वनं B., ०वनगहन C.
४—प्रभूतं B. ५—०रवि विशेषणमे० D.
६—'एतत्' इति नास्ति B. C.
७—स्वरनन्त० B. C. ८—वृ-संभूतादि०
९—०त्यर्थः B. C. १०—दीप्यत्या० C.
११—दृष्टानु० B. C. १२—चैनत् द्वि० D.
१३—०रये ते द्वि० D. १४—अते B. C.
१५—'न लक्ष्यते' इत्यस्य स्थाने 'लक्ष्य' इत्येव पाठः B. C.
१६—अत्रेत्यादि B. C. १७—०प्रकृति सि० D.
१८—सिद्धाया C. १९—०भवन्त्या C., ०भवत्यो D.
२०—०रयया० C.

२१—'उपपिपादयिषेत्' इति नास्ति D. उपपादयिषेत् C.
२२—उत्पाद० C. २३—'वृत्ति' इति नास्ति D.
२४—'स' इति नास्ति B. C. २५—०नुसार्य्यते B. C.
२६—पाणिनीयाष्टके सूत्रमिदमेकादशस्थलेषु वर्तते, तद्यथा [ २।४।३९, ७३, ७६ । ३।२।८८ । ५।२।१२२ । ६।१।४।७।१।८, १०, १०३ । ७।३।९७ । ७।४।७८ ]
२७—[ *cf.* निरु० ११।१२ ] कुहुः C, कुभूत् D.
२८—०चर इति यत्रा० D.
२९—[ नि० १।२० ] ३०—[ *cf.* निरु० १२।१४ ]
३१—तत्राप्येक इत्यादि C. तत्राप्येक इत्यादिना D.
३२—'सं' इति नास्ति B. C. ३३—'सं' इति नास्ति C.

योऽल्पनिष्पत्तयो भवन्ति । अल्पा प्रसा[1]रणनिष्पत्तिर्येषां त इमे । अल्पप्रसारणविषया इत्यर्थः। तद्यथैतदुदाहर[2]णजातम्-ऊतिरित्यादि । ऊ[3]तिः-अवतेः। वि[4]त्तनि 'ज्वरत्वर' इत्यूठि। [5][6]अतोऽन्तोदात्तत्वं निपात्यते। ते[7]न सर्वत्र रक्षणतर्पणविषयमेव। तथा 'प्रथिम्रदिभ्र[8]स्जाम्' इत्युणादिव्युत्पत्त्या रूढित्वं प्रद[9]र्श्यते । [10]म्रदेर्मृदुः प्रथे[11]: पृथुः प्रच्छे[12]: पृषतः, फ[13]णेः कुणारम। इत्येवमाद्युप[14]लक्षणार्थम्। ततश्च 'प्रथनात्[15] पृथिवी' इत्येवमाद्यपि द्रष्टव्यम्।

अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते। दमूनाः क्षेत्रसाधा[16] इति।

[17]अपि चैतद्वैविध्यम। भाषिकेभ्यो भाषाविषयेभ्यो धातुभ्यो नै[18]गमाश्छान्दसाः कृतः प्रत्य[19]या भाष्यन्ते। दमूनाः क्षेत्रसाधा[20] इति। ननु च दमिसा[21]धी छन्द[22]स्यपि प्रयु[23]ज्येते।'स्वा[24]ध्यायप्रवचने दमनं दानानु या[25]मि' इति। 'यत्र पूर्वे साध्याः सन्ति देवाः[26]' इति च ? उच्यते, न भाषिकग्रहणेन छन्दसि प्रयोगो निवार्यते। अविशेषोपदेशात् । किन्तर्हि ? भाषायां तावत् साधुत्वमवगम्यते। प्रत्ययस्तु दमेरू[27]नसि छन्दसो विषय एवेत्युपपन्नं नैगमत्वम।

ननु च [28]उसिप्रत्ययस्याविशेषेणोपदेशात् पय आदिषु भाषायामप्यस्ति प्रयोगः। अतो नैगमावधारणमयुक्तम ? उ[29]च्यते। सत्यम। तथापि तु विशिष्टोपपदविषयसाधि-

१-लसारण C. २-०रणजातम् B. C.
३-एतिः B. C. ४-क्षिनिञ्ज्य० C.
५-[Fragment of पा० ६।४।२०]
६-'अतो' इति नास्ति D.
७-'ते' इति नास्ति B. C.
८-[ Fragment of उणा० १।२९ ] प्रस्न्दा मीत्युणा० B, प्रस्जाभिस्तृणा० C.
९-प्रदृश्यते D.
१०-त्रदेर्मृदुः C., म्रदे मृदुः D. ११-प्रथे मृदुः D.
१२-पृच्छेः C., प्रछेः D. १३-फुणेः B. C.
१४-०द्युफल० C. १५-[निरु० १।१३-१४]
१६-'अथापीत्यादि' इत्येव प्रतीकम् C, D.
१७-अथापि B. १८-नैगमा नैगमा छान्दसः D.
१९-प्रतिभाष्यन्ते B., प्रत्यभाष्यन्ते C.
२०-इति इति D. २१-०साधीय D.
२२-०स्व वि० C. २३-०युज्यते C. D.
२४-स्वाध्याप्रव० D.
२५-दानं दयामि D, [cf. शत० ब्रा० ११।५।७।१ cf. तै० उप० १।९।१ ]
२६-[ऋ० १।१६४।५०। यजु० मा. सं. ३१।१६]
२७-०नसी C.
२८-अत्र 'उनसिप्रत्ययस्य' इति पाठो युक्तो भाति।
२९-'न भाषिकग्रहणेन' इत्यारभ्य 'उच्यते' इत्यन्तः पाठो D. पुस्तके भ्रष्टः।

तेनासि (?) प्रत्ययस्य[1] नैगमत्वमेव। न क्वचिद् भाषायामस्ति[2] प्रयोग इति विशिष्टप्रकृतिनियतस्य[3] युक्तं नैगमत्व[4]मित्युदाहरणम्। 'जुष्टो दमूनाः'[5] इति नवमे[6] व्याख्यास्यते।[7]

'क्षेत्रसाधाः' इत्यस्योदाहरणम्[8]—

अग्निं वः पूर्व्यं गिरा देवमीडे वसूनाम् ।
सपर्यन्तः पुरुप्रियं मित्रं न क्षेत्रसाधसम्[9] ।

वैवस्वतस्य मनोरार्षम्। अग्निं वः छान्दसत्वात् द्वितीयैकवचनस्यार्थे[10] वकारादेशः[11] त्वां पूर्व्यं-पूर्वं प्रथममन्याभ्यो देवताभ्यो गिरा स्तोत्रशस्त्रलक्षणया वाचा[12] देवं-दातारम्, ईडे-'ईड स्तुतौ'[13] व्यत्ययेनै[14]कवचनं बहुवचनस्य[15] स्थाने-ईडामहे स्तुम इत्यर्थः। कस्य दातारम्? वसूनां धनानाम्। अथवा षष्ठीश्रुतेर्याचेति शेषः। सपर्यन्तः चरुपुरोडाशा[16]दिना परिचरन्तः। पुरुप्रियं-बहूनां यजमानानां प्रियम्। मित्रं न-मित्रमिव। यथा मित्रं क्षेत्रस्य साधयितृ[17] क्षेत्रस्य सम्पादयितृ इत्यर्थः।

अथापि नैगमेभ्यो भाषिकाः। उष्णं घृतमिति[18]।

अथापि नैगमेभ्यो धातुभ्यो भाषिकाः कृतः[19], पूर्वेण कृतव्याख्या[20]नमेतत्। उदाहरणम्-उष्णं घृतमिति। उषिजिघर्ती[21] छान्दसौ धातू व्याकरणस्य शाखान्तरे औषि[22]शलादौ स्मरणात्। 'गा स्तुतौ छन्दसि'[23] इति च[24] केषाञ्चित् धातुपाठे छान्दसत्वस्मर-

१–अत्र 'साधितोनसिप्रत्ययस्य' इति पाठो युक्तः स्यात्। ०पदे विपर्यात्साधितोसि प्रत्य० D. ०साधितेनासि प्रत्य० C.
२–०यामस्त्यस्ति D.
३–०स्यायुक्तं B. C. ४–'त्व' इति नास्ति D.
५–[ऋ० ५। ४। ५] ६–[निरु० ४। ५]
७–'जुष्टो दमूना' इत्यारभ्य '०दाहरणम्' इत्यन्तः पाठो D. पुस्तके भ्रष्टः।
८–मित्रतम C.
९–[ऋ० ८। ३१। १४] 'अग्नि वः–क्षेत्रसाधसम्' इत्येव प्रतीकम् D.
१०–०चनं अस्यार्थे D. ११–वकारादेशः B.
१२–वाचं D. १३–[धा० २। १]
१४–न व्यत्यये० B., व्यत्ययो नै० C.
१५–०चनस्थाने D. १६–०शादीनां D.
१७–'साधयित क्षेत्रस्य' इति पाठो भ्रष्टः D.
१८–इदं प्रतीकवाक्यं नास्ति C. D.
१९–कुतः B., 'कृतः' नास्ति D.
२०–पूर्वकृतव्याख्यास्यामेतत् D.
२१–'उष दाहे' [धा० १। ७२७]। 'घृ क्षरणदीप्त्योः' [धा० ३। १४]
२२–आविश० C.
२३–पाणिनीयधातुपाठे 'गा स्तुतौ' [३। २५] इत्यन्ता घृ प्रभृतय एकादश धातवश्छन्दसि वर्तन्त इति निर्दिष्टम्।
२४–चकारो ङित्वा तु पाठे D.

णात्। 'प्रत्युष्टं रक्षः'[1]।'जिघर्म्यग्निं हविषा'[2] इति छन्दसि प्रयोगदर्शनात् छान्दसौ धातू। ताभ्यां तन्निष्ठाप्रत्ययौ[3] भाषिकौ तौ च सत्यपि[4] भाषिकत्वे छन्दसि न[5] निवार्येते[6], 'घृतप्रुषां पुरुपश्चौषधीनाम्'[7] इत्यविशेषोपदेशादित्युक्तम्।

अथापि प्रकृतय एवैकेषु भाष्यन्ते विकृतय एकेषु।[8]

अथापीत्यादि[9]। प्रकृतय एवेति[10], प्रकृतिशब्द आख्यातवचन इहाभिप्रेतः। नाम्नामा[11]ख्यातजत्वस्य[12] प्रतिज्ञानात्, तेनाख्यातान्येवैकेषु[13] देशेषु भाष्यन्ते, विकृतयस्तज्जत्वान्नामानि[14], तान्येवैकेषु[15]। अन्ये[16] तु प्रकृतयो धातवः सर्वप्रत्ययान्ताः, विकृतयो नियत[17]प्रत्ययविषया इति व्याचक्षते। उदाहरणं दर्शयति-शवतिर्[18]गत्यर्थ आख्यातप्रत्ययान्तः, शवतीति प्रकृतिः, विकारोऽस्य नाम शव इति। सोऽयं प्रकृतिभूतो देशान्यवस्थया[19] कम्बोजेष्वेव[20] भाष्यते। विकारस्तस्य नामपदस्यार्थेषु[21] भाष्यन्ते[22] शवं[23] इति। अनियत[24]प्रत्ययो वा शवतिः कम्बोजेषु[25], नियतप्रत्ययस्तु शव इत्यार्येषु[26]। अथवा उपरतप्रत्ययस्य[27] सक्रियः[28] प्रकृतिः, तेन सक्रिये[29] जीवति गमिक्रियां कुर्वति[30] शवतीति प्रयुज्यते। जीवतो विकारे मृतमार्येषु[31] भाषन्ते, शवशब्दं मृते प्रयुञ्जत[32] इत्यर्थः। तथा दातिर्धातु[33]राख्यातप्र-

---

१–[यजु० वा० सं० १।७। तै० सं० १।१।२।१]
२–[ऋ० २।१०।४]
३–दिष्ठा B. C.
४–सत्यवि B. C.
५–'न' इति नास्ति B. C.
६–विचार्येते D.
७–०पश्चोप० C. [ऋ० १०।५१।८]
८–इदं मूलवाक्यं नास्ति C. D.
९–अथावीत्यादि C., ०त्यादिभिः D.
१०–'इति' नास्ति D.
११–'मा' इति त्रुटितः D.
१२–०जत्वप्रति० D. ०त्वस्य प्रज्ञा प्रति० B.
१३–०न्येवैके० D., ०केषु C.
१४–०ज्ञत्वात् तं ना० D.
१५–०वैतेषु B. C.
१६–अन्येषु तु B. C.
१७–नियतनियतप्रत्य० D.
१८–[धा० १।७६१]
१९–०वस्थाया C.
२०–काम्बोजे० B.
२१–०स्यार्थेषु D.
२२–भाष्यन्ते B. C.
२३–पशव D.
२४–मद नियत C. नियद D.
२५–काम्बोगेषु B. कां योजेषु C.
२६–रत्यार्येषु B.
२७–उपरतचैतन्यादेरित्यर्थः। उपरक्रियस्य D. अत्र 'उपरतक्रियस्य' इति पाठो युक्तः।
२८–सक्रिया B.
२९–सक्रये C.
३०–कुर्वती C.
३१–विकार मृत आर० D.
३२–०शब्द मृते प्रयुज्यन्त D.
३३–यथा (D.) दातिधातु० D. C. [cf. पा० ४।४०]

स्ययान्तो[1]ऽनवधृतप्रत्ययान्तो वा लवन[2]लक्षणेऽर्थे प्राच्येषु । व्रीहिं[3] दददातीति भाष्यते, सर्वप्रत्ययान्तो वा । दाता दात्रं[4] दातुमिति विकारो नाम निर्येतद्व[5]प्रत्ययान्तो वा[6] छेदनस्य[7] साधनं दात्र[8]मित्युदीच्येषु प्रयुज्यते ।

प्रसङ्गात् कम्बोजशब्दं[9] निराह–कम्बोजा नाम-उत्तरा[10]पथे क्वचिज्जनपदाख्या मद्रादिवत् । ते च हिमप्रायत्वाद्देशस्य, ईश्वरा अपि सन्तः[11] कम्बलानुपभुञ्जत इति कम्बलभोजाः सन्तो वर्णलोपव्यापत्त्यादिना[12] कम्बोजा इत्युच्यन्ते । कमनीयान्[13]वा यथेष्टं विषयान् भुञ्जते, म्लेच्छ[14]देशत्वात् । स्त्रियोपेय[15]गम्या[16]गम्यादिव्यवहार[17]रहिता इत्यर्थः । अदर्यरत्नादि[18] वा कमनीयमेव प्रायेणोप[19]भुञ्जते । अनुप्रसक्तं कम्बल[20]शब्दं निराह–कमनीयः शीतार्दितैः[21] प्रार्थनीयो भवति ।

उपसंहारवचनम्—

एवमेकपदानि निर्ब्रूयात् ।

एवम् 'अथ निर्वचनम्[22]' इत्येतत्प्रभृति ऐशभापाव्यवस्थापर्यन्तेनानेनैकेन प्रकारेण वैचित्र्येण, एकपदान्य[23]वृत्तिजानीत्यर्थः । कुतः[24] ? वृत्तिजा[25]नां पृथगारम्भात् । उक्त[26]प्रकारसाधारण्ये सति पृथगारम्भः किमर्थ इति चेत् ? कस्यचिद्विशेषस्य विवक्षया[27] ।

तदर्थमाह—

अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात्[28] ।

---

१–॰स्ययातो C. २–यवनवलक्ष॰ B., लवनवच॰ C. ३–व्रीहीन् C. व्रीहिः D. ४–दात्र दात्र D. ५–दात्रून D. ॰तृप्टन B. [cf. पा॰ ३।२।१८१] ६–॰यान्तं छे॰ B. C. ७–छेदस्य D. ८–साधन कुन्दात्रमुदी॰ B., ॰नं दात्र मिति D. ९–शब्दान्नि॰ D. १०–काम्बोजौ नाम उ॰ D. नाम औत्त B. ११–आपित्तं तः D. १२–॰स्यादीना C. ॰स्याविना D. १३–॰नीया सा B. १४–म्लेच्छ C. म्लेच्छ D. १५–॰स्वातोपपेय॰ D. । अत्र 'स्त्र्यपेयगम्या॰' इत्यादिसमस्तपाठो युक्तः स्यात् । १६–'गम्या' इति त्रुटितः D. १७–॰वहार हिता B., ॰वस्थारहिता D. १८–अश्वरादिना वा D. १९–प्रायणेनोप॰ D. २०–कम्बलं नि॰ D. २१–॰र्दितः प्रार्थितो भ॰ D. २२–निर्वनम् C. २३–॰न्यावृत्ति॰ B., ॰न्यवृत्तजा॰ D. २४–'कुतः' इति नास्ति D. २५–वृत्तिशब्दो B. C. २६–'॰त । उक्तप्रकारसाधारण्ये सति पृथगा॰' इति पाठस्त्रुटितः D. २७–विवक्षाया D. २८–'अथेत्यादि' इत्येव प्रतीकम् C. D.

अनन्तरं तद्धितेषु समासेषु च[1] विशेषं वक्ष्याम इति शेषः। एकपर्वस्वित्यादि। नात्र[2] यथासंख्यं विवक्षितम्। किं तर्हि? उभयमुभयत्र[3] पर्वसन्धिः। एकः प्रकृतिप्रत्ययसन्धिर्येषां[4] त एकपर्वाणस्तद्धिताः। एवमेव[5] एकः पदसन्धिर्येषां त एकपर्वाणः समासाः। एतेनानेकपर्वत्वं[6] व्याख्यातम्[7]। उदाहरणम्—'न जामये तान्वः'[8] अष्टमे[9] व्याख्यास्यामः। 'न वै स्त्रैणानि सख्यानि सन्ति'[10] 'हिरण्यरूपः'[11] 'अग्नीषोमौ'[12] एवमादीन्युदाहरणानि।

अत्र 'न वै स्त्रैणानि'[13] इति व्याख्यायते। पूर्वमपाकृतं[14] पुरूरवसं सपरिदेवनमुर्वशी अनयर्चा[15] पर्यवस्थापयामास[16]—

पुरूरवो मा मृथा मा प्र[17] पप्तो मा त्वा वृकासो अशिवास उ क्षन्।
न वै स्त्रैणानि सख्यानि[18] सन्ति सालावृकाणां हृदयान्येता[19]।

हे पुरूरवः! मा मृथाः। मा च प्रपप्तः[20] पर्वतात्[21] पतनं मा कृथाः। मा च त्वां[22] त्वा वृकासः-वृकाः। अशिवासः[23]-अशिवाः। उ[24] इति पदपूरणः। क्षन्-अदेर्लिङि[25] घस्लादेशे 'मन्त्रे घस'[26] इति लेर्लुकि[27] कृते[28] रूपमेतत्। मा खादिषुरित्यर्थः[29]। मदर्थमात्मानं मा परित्याक्षीरि[30]त्यभिप्रायः[31]। न वै[32]-वैशब्दो यस्मादर्थे। यस्मात् स्त्रैणानि-स्त्रीसम्बन्धीनि[33] सख्यानि[34] चिरं

---

१–०तेषु च स० D. २–नात्र यो यथा० B.
३–'उभयम्' इति नास्ति D.
४–'येषाम्' इति नास्ति D. ५–एकमेव D.
६–ऐतेना० D. ७–समाख्यातम् B.
८–[ ऋ. ३।३१।२ ] ९–[ निरु० ३।६ ]
१०–'सन्ति' इति नास्ति D. [ ऋ० १०।९५।१५ ]
११–[ ऋ० २।३५।१० ]
१२–[ ऋ० १।९३।१, १० ] '०षोमीयौ' इत्यपि पाठः B.
१३–स्त्रणानि B. C.
१४–०कृता सपरिवेदनं पुरुरवसं० B. C.
१५–०मर्वश्यनयर्चा C.
१६–०स्थापयामास B. C. १७–प्रवप्तो C.
१८–स्त्रैणविसंख्या० D. स्त्रैणानिसंख्या० C.
१९–[ ऋ० १० । ९५ । १५ ] ०न्येता C. D. 'पुरुरवो० न्येता' इत्येव प्रतीकम् D.
२०–'प्र' इति नास्ति B.
२१–० तान् प० B., ०तोत्प० D.
२२–'त्वा' इति नास्ति B. C.
२३–'अशिवासः' नास्ति D. २४–'इति' नास्ति D.
२५–अत्र 'अदेर्लुङि' इति पाठः साधुर्भाति। 'लुङ्सनोर्घस्लृ' [पा० २।४।३७] इति लुङि घस्लादेशविधानात्। D. पुस्तके 'अदेर्लुङ् घस्लादेशः' इति पाठो वर्तते। अत्रापि 'अदेर्लुङ्' इति पाठः साधीयान् भवेत्।
२६–[Fragment of पा० २।४।८०]
२७–लेर् लुकि C. २८–'कृते' इति नास्ति B. C.
२९–पदर्थ० B. ३०–परीत्याक्षि० C.
३१–०त्यर्थः D. ३२–'वै' इति नास्ति D.
३३–०न्धानि D. ३४–संख्यानि B. C.

त्ययान्तोऽनवधृतप्रत्ययान्तो वा लै[2]वनलक्षणेऽर्थे प्राच्येषु । व्रीहिं[3] ददातीति भाष्यते, सर्वप्रत्ययान्तो वा । दाता दा[4]त्रं दातुमिति विकारो नाम निर्येतष्ट्रन्प्रत्ययान्तो वा[6] छेदनस्य[7] साधनं दा[8]त्रमित्युदीच्येषु प्रयुज्यते ।

प्रसङ्गात् कम्बोजश[9]ब्दं निराह–कम्बोजा नाम-उ[10]त्तरापथे क्वचिज्जनपदाख्या मद्रादिवत् । ते च हिमप्रायत्वाद्देशस्य, ईश्वरा अपि स[11]न्तः कम्बलानुपभुञ्जत इति कम्बलभोजाः सन्तो वर्णलोपव्यापत्त्यादि[12]ना कम्बोजा इत्युच्यन्ते । कमनीया[13]न्वा यथेष्टं विषयान् भुञ्जते, म्ले[14]च्छदेशत्वात् । स्त्रियो[15]पेय[16]गम्यागम्यादिव्य[17]वहाररहिता इत्यर्थः । अश्व[18]रत्नादि वा कमनीयमेव प्रायेणोप[19]भुञ्जते । अनुप्रसक्तं कम्बल[20]शब्दं निराह–कमनीयः शीतार्दितैः [21]प्रार्थनीयो भवति ।

उपसंहारवचनम्—

एवमेकपदानि निर्ब्रूयात् ।

एवम् 'अथ निर्वचने[22]नम्' इत्येतत्प्रभृति वेशभाषाव्यवस्थापर्यन्तेनानेनोक्तेन प्रकारेण वैचित्र्येण, एकपदान्यवृ[23]त्तिजानीत्यर्थः । कु[24]तः ? वृत्ति[25]जानां पृथगारम्भात् । उ[26]क्तप्रकारसाधारण्ये सति पृथगारम्भः किमर्थं इति चेत् ? कस्यचिद्विशेषस्य वि[27]वक्षया ।

तदर्थमाह—

अथ तद्धितसमासेष्वेकपर्वसु चानेकपर्वसु च पूर्वं पूर्वमपरमपरं प्रविभज्य निर्ब्रूयात्[28] ।

---

१–०त्ययातो C, २–यवनवलक्ष० B., लवनवच० C.
३–व्रीहीन् C. व्रीहिः D. ४–दात दात्र D.
५–दाष्ट्रन D. ०तष्टन B. [cf. पा० ३।२।१८१]
६–०यान्तं छे० B. C. ७–छेदस्य D.
८–साधन कुन्दाग्रमुदी० B., ०नं दात् मिति D.
९–शब्दान्नि० D.
१०–काम्बोजौ नाम उ० D. नाम औत्त B.
११–आपिस्तं सः D.
१२–०त्यादीना C. ०त्याविना D.
१३–०नीया सा B. १४–म्लेच्छ C. म्लेछ D.
१५–०त्वातोयापेय० D. । अत्र 'स्त्र्यपेयगम्या०' इत्यादिसमस्तपाठो युक्तः स्यात् ।
१६–'गम्या' इति त्रुटितः D.
१७–०वहार हिता B., ०वस्थारहिता D.
१८–अश्वरादिना वा D. १९–प्रायणेनोप० D.
२०–कम्बल नि० D.
२१–०दितः प्रार्थितो भ० D. २२–निर्वचनम् C.
२३–०न्यावृत्ति० B , ०न्यवृत्तजा० D.
२४–'कुतः' इति नास्ति D. २५–वृत्तिकानां B. C.
२६–'०त् । उक्तप्रकारसाधारण्ये सति पृथगा०' इति पाठस्त्रुटितः D. २७–विवक्षाया D.
२८–'अथेत्यादि' इत्येव प्रतीकम् C. D.

अनन्तरं तद्धितेषु[1] समासेषु च विशेषं वक्ष्याम इति शेषः। एकपर्वस्वित्यादि। नात्र[2] यथासंख्यं विवक्षितम्। किं तर्हि? उभय[3]मुभयत्र पर्वसन्धिः। एकः प्रकृतिप्रत्ययसन्धिर्येषां[4] त एकपर्वाणस्तद्धिताः। एवमेव[5] एकः पदसन्धिर्येषां त एकपर्वाणः समासाः। एतेनानेकपर्वत्वं[6] व्याख्यातम्[7]। उदाहरणम्–'न जामये तान्वः'[8] अष्टमे[9] व्याख्यास्यामः। 'न वै स्त्रैणानि सख्यानि सन्ति'[10] 'हिरण्यरूपः'[11] 'अग्नीषोमौ'[12] एवमादीन्युदाहरणानि।

अत्र 'न वै स्त्रैणानि'[13] इति व्याख्यायते। पूर्वमपाकृतं[14] पुरूरवसं सपरिदेवनमुर्वशी अनयर्चा[15] पर्यवस्थापयामास[16]—

पुरूरवो मा मृथा मा प्र[17] पप्तो मा त्वा वृकासो अशिवास उ क्षन्।
न वै स्त्रैणानि सख्यानि[18] सन्ति सालावृकाणां हृदयान्येता[19]।

हे पुरूरवः! मा मृथाः। मा च प्रपप्तः[20] पर्वतात्पतनं[21] मा कृथाः। मा च त्वा[22] त्वा वृकासः-वृकाः। अशिवासः[23]-अशिवाः। उ इति[24] पदपूरणः। क्षन्-अदेर्लिङि[25] घस्लादेशे 'मन्त्रे घस'[26] इति लेर्लुकि[27] कृते[28] रूपमेतत्। मा खादिषुरित्यर्थः। मदर्थ[29]मात्मानं मा परित्याक्षीरि[30]त्यभिप्रायः[31]। न वै-वैशब्दो[32] यस्मादर्थे। यस्मात्स्त्रैणानि-स्त्रीसम्बन्धीनि[33] सख्यानि[34] चिरं

१–०तेषु च स० D. २–नात्र यो यथा० B.
३–'उभयम्' इति नास्ति D.
४–'येषाम्' इति नास्ति D. ५–एकमेव D.
६–ऐतेना० D. ७–समाख्यातम् B.
८–[ ऋ. ३।३१।२ ] ९–[ निरु० ३।६ ]
१०–'सन्ति' इति नास्ति D. [ ऋ० १०।९५।१५]
११–[ ऋ० २।३५।१० ]
१२–[ ऋ० १।९३।१, १० ] '०षोमीयौ' इत्यपि पाठः B.
१३–स्त्रणानि B. C.
१४–०कृता सपरिवेदनं पुरुरवस० B. C.
१५–०मर्वशयनयचा C.
१६–०स्थापयामास B. C. १७–प्रपतो C.
१८–स्त्रैणविसंख्या० B. स्त्रैणाविसंख्या० C.
१९–[ऋ० १० । ९५ । १५] ०न्येता C. D.
'पुरूरवो० न्येता' इत्येव प्रतीकम् D.
२०–'प्र' इति नास्ति B.
२१–० तात् प० B., ०तोत्प० D.
२२–'त्वा' इति नास्ति B. C.
२३–'अशिवासः' नास्ति D. २४–'इति' नास्ति D.
२५–अत्र 'अदेर्लुङि' इति पाठः साधुर्भाति। 'लुङ्सनोर्घस्लृ'[पा० २।४।३७] इति लुङि घस्लादेशविधानात्। D. पुस्तके 'अदेर्लुङ् घस्लादेशः' इति पाठो वर्तते। अत्रापि 'अदेर्लुङ्' इति पाठः साधीयान् भवेत्।
२६–[Fragment of पा० २।४।८०]
२७–लेर्लुकि C. २८–'कृते' इति नास्ति B. C.
२९–पदर्थं० B. ३०–परित्याक्षि० C.
३१–०यर्थः D. ३२–'वै' इति नास्ति D.
३३–०बन्धानि D. ३४–सख्यानि B. C.

सन्ति भवन्ति । सालावृकाणां मर्कटानां[1] हृदयान्ये[2]तानि[3] । स्त्रियः[4] पौंश्चल्याश्चलितेत्वा[5]-चेति । तस्मात् प्रसंख्यानमास्थाय धीरो[6] भव ।

अनेकपर्वा[7]-पवीरवान्[8], पावीरवी[9], कल्याणवर्णरूप इत्यादि । एवमादि पूर्वपदं पूर्वं निर्ब्रूयात् प्रविभज्यापरमपरं[10] निर्ब्रूयात् पश्चादित्यर्थे[11] एवं केचित् । न त्वयं नियमः । दृश्यते हि-अध्वरविधिवादिषु[12] 'ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः[13]', 'अपि वा[14] धव इति मनुष्यनाम, तद्वियोगाद्विधवा[15]' इति च[16] परस्य पूर्वं निर्वचनदर्शनात्[17] । अतोऽन्यथा व्याख्यायते-पूर्वं[18] पूर्वं निर्भज्या[19]परं पश्चाद्विभज्य निर्ब्रूयादि[20]त्येष्टमिति । एतदपि-अध्वरकल्याण[21]वर्णरूपादिषु पूर्वपदोत्तरपद[22]प्रविभागदर्शनाभावान्नैव संगच्छते । एवं तर्हि अयमभिप्रायो भाष्यकारस्य दूरतरमनुसारयितुं शक्यते । समुदायप्रकृतित्वादेव[23] उद्धारपदानां समुदायः पूर्वत्वेन विवक्षितः, तं पूर्वं निर्ब्रूयात् । 'अध्वर[24] इति यज्ञनाम', 'कक्ष्या रज्जुरश्वस्य । कक्षं सेवते[25]' इति समुदायार्थ[26]वचनश्च निर्वचनमभिप्रेतम् । अपरमपोद्धार[27]पदरूप[28]मवयवं पश्चा-द्वदेत् कल्याणवर्णस्यैवास्य स्वरूपमिति समुदायार्थमुक्त्वा कल्याणादीनवयवान् पश्चान्निरवोचत् पृथक् । तथा 'त्रिश्चैकद्राककर्षो[29] वीति[30] चद्राकर्ष इति इवगतौ भाष्यते[31]' इति

1-उरकटानां D. 2-'एता' इति नास्ति C.
3-एतौनि B. 4-स्त्रियः पौंश्च० D.
5-०लिकात्वा० D.
6-हिमरो भवति D. अत्र कदाचित् 'भवेति' इति पाठः स्यात् ।
7-०कत्व प० B.
8-पविरवान् C.
9-[ऋ० १० । ६५ । १३ ॥ नि० १२ । ३०]
10-०परं परं D. 11-०त्यर्थे C.
12-०विध्यादि० D. 13-[निरु० १ । ८]
14-विधव C., वाध्व D.
15-०द्विवतवति D. [निरु० ३।१५]
16-इपि पारस्य B., इषि परस्य C. चापर० D.
17-अत्र 'निर्वचनम्' इत्येष पाठः साधीयान् भाति । पूर्वनिर्दिष्टेन 'दृश्यते' इति क्रियापदेन सम्बध्यते । एवं च 'दर्शनात्' इत्यनावश्यकम् । अथवा पूर्वं 'दृश्यते हि' इति पाठो न भवेत् ।
18-पूर्वापूर्वे B. 19-०ज्य-परं B.
20-'इति' नास्ति D.
21-'कल्याण' इति नास्ति D.
22-'पद' इति त्रुटितम् D.
23-०त्वादयोद्धार० D.
24-आध्वरमिति C. [निरु० १ । ८ ]
25-[ निरु० २ । १ ]
26-०दायः, अर्थव० B.
27-०मयोद्धार० C. ०मप्यपोद्धार० D.
28-'रूप' इति नास्ति D.
29-वस्तक० B., पथक० C.
30-वीत B. C., चद्राक० C.
31-[ cf. निरु० २ । २ ]

वचनपुरस्सरं[1] यथेष्टमवयवनिर्वचनं द्रातीत्यादि[2] । राजपुरुषो[3]ऽध्वर्य्वादिषु च राज्ञः पुरुषो-ऽध्वर्य्युरिति[4] च समुदायार्थनिर्वचनाभि[5]प्रायं विगृह्य[6] वचनं द्रष्टव्यम् । एवमेतानि प्रदे-शान्तरदृष्टान्युदाहरणानि व्याख्यातृभिरुपन्यस्तानि प्रविभज्य निर्ब्रूयादि[7]त्यस्य सुख-प्रतिपत्त्यर्थम् ।

भाष्यकारस्य तु[8] तद्धितोदाहरणम्—

दण्ड्यः पुरुष इति, अभिधेयवचनम् । दण्डमर्हतीति समुदायार्थकथनम् । तद्वि-कल्पेन सम्पद्यत इति तद्धितार्थान्तरप्रदर्शनेन[9] । अकृत्यकारी हि दण्डादिना समस्तेन[10] व्यस्तेन वा सम्पद्यते संगच्छते संयुज्यते[11], पापनिवृत्तिहेतुत्वाद्वा[12] दण्डस्य । तेन पाप-निवृत्त्या साधुः शोभनः सम्पद्यते । 'सम्पादिनि[13]' इत्यर्थे ठञं[14] बाधित्वा छान्दसत्वात् यो[15] द्रष्टव्यः ।

अवयवार्थं निराह[16]-दण्डो ददतेः, दो[17] इत्यस्य धारयत्यर्थे वर्तमानस्य । धारयति ह्यसौ[18] निरुणद्धि[19] पश्वादिकमपि[20], किमङ्ग मनुष्यम् । तथा च व्यासस्य वचनेन[21] नीच-मध्यमोत्तमलक्षणम्—दण्डस्य हि भयान्नीचः[22] पापं कर्म न सेवते । परलोकभयान्मध्यः स्वभावादुत्तमो नरः[23] ॥ इति ॥

अस्ति पुनरयं ददतिः किं[24] कश्चिद्धारणार्थे ? अस्तीत्याह । अक्रूरो नाम वृष्ण्य[25]-न्धकाधिपतिः स[26] ददते धारयते मणिं मस्तकेन स्यमन्तकं नाम । एवं[27] भाष्यते[28] लोके[29] ।

१–कल्याणवर्मेत्यारभ्य पुरस्सरमित्यन्तः पाठो D. पुस्तके त्रुटितः ।
२–द्रादीत्यादि B. C. ३–पुरुषोऽध्व० B.
४–०ध्वर्युरि० D. ५–०प्रायः B. C.
६–०चनाभिप्रायं D. ७–'निर्' इति नास्ति B. C.
८–'तु' इति नास्ति D. ९–०र्शनार्थम् D.
१०–'स' इति त्रुटितम् B. C.
११–'संयुज्यते' इति नास्ति B., सम्प्रयुज्यते D.
१२–'वा' इति नास्ति D.
१३–[ पा० ५।१।९९ ] सम्पादनीयेत्यर्थे B. C.
१४–ठञ् C. १५–यत् B. यन् C.
१६–०वार्थं नि० D. १७–दद दाने इत्यस्य D.
१८–'हि' इति नास्ति D.
१९–हिरुणद्धि C., निराकरणाद्धि D.
२०–पश्वादि० C. D. २१–वचन C. वचनं D.
२२–भयान्नीचः D. २३–जनः D. [cf. मनु० ७।१८] cf. [महाभा० शां० १५।५] राजदण्डभयादेके नराः पापं न कुर्वते । यमदण्डभयादेके परलोक-भयादपि ॥ cf. also. यस्माददान्तान् दम-यत्यशिष्टान् दण्डयत्यपि । दमनाद्दण्डनाच्चैव तस्मा-द्दण्डं विदुर्बुधाः ॥ [महाभा० शां० १५।८]
२४–'किं' इति नास्ति D. २५–वृष्ण्यान्धकपतिः D.
२६–सद्दे ददते B. C. २७–'एवं' इति नास्ति D.
२८–भाष्यन्ते B. C. अत्र कदाचित् 'भाषन्ते' इति पाठः स्यात् । २९–'लोके' इति नास्ति D.

भूतानद्यतनपरोक्षत्वात्[1]तु धारणस्य[2] ददते मणिमिति लिडन्तस्योपपन्नतरः पाठः । अपि-शब्दाच्छन्दसि च[3] 'चतुरश्चिद्ददमानात्[4]' 'विश्वे देवाः पुष्करे त्वाददन्त[5]' धारयन्तेत्युपरि[6]-ष्टान्मन्त्रौ[7] व्याख्यास्येते ।

उपनमनहेतुत्वाद्दमनाद्दण्ड इत्यौपमन्यवो मन्यते । 'तेनादान्तान् दमयेत्[8]' उपनमयेदकृत्येभ्यः । धात्वन्यत्वमात्रमेव, न वस्तुभेदः । उभयस्योभयत्र भावात् ।

गर्हायामपि-दृश्यते-दण्डमस्याकर्षत[9] इति । कृतवन्तः शास्त्रावधारणायां[10] प्राड्विवाका[11] इति गर्हा गम्यते दण्डितोऽयमिति पापप्रख्यापनेन । मध्यमपाठेऽप्याकर्षतेति[12] दण्डमस्यावधारयतेति[13] गर्हैव[14] गम्यते । 'अर्हे कृत्ये[15]' इति दण्डार्हो दण्डनीयो दण्ड्य इत्यर्थ[16]रूपयोरविशेषः । दण्डः[17] प्राप्तोऽस्येति[18] दण्ड्यः, प्राप्तकालतयाऽप्येवमेव गर्हा प्रतीयते ।

द्वितीयमुदाहरणम्—'अन्या किल स्वाम्[19]' इति निरुक्तं स्यादि[20]त्युक्ते[21] आह-कक्ष्या रज्जुरश्वस्येति[22], अभिधेयवचनम् । कक्षं सेवत इति समुदायार्थनिर्वचनम्[23] । सेवत इति तद्धितार्थवचनम् । कथम् ? यो हि यं[24] सेवते स तत्र भवतीति भावार्थः प्रदर्शितो भवतीति । तेन कक्षे भवा कक्ष्या इत्यवयवनिर्विवक्षयाऽऽह तथा[25] कक्ष इत्यादि । अयं कक्षशब्दो न तथार्थैव[26] प्रसिद्धो यथा नद्य[27]नूपपर्वतकुञ्जा[28]दिषु । अतस्तत्रैवाभिधेययोगिनोऽनुगमस्य[29] वैरूप्यच्चाभिधीयते-गाहतेः[30] कक्ष[31] इति[32] नामकरणः[33] । तस्मिन्नादित्यापत्यु[34]-

---

१–०त्वात्न्तु तद्धा० D. २–०स्याददे मणि० B.C.
३–'च' इति नास्ति B. C.
४–[ ऋ० १।४१।९ ॥ निरु० ३।१६ ]
५–[ ऋ० ७।३३।११ ॥ निरु० ५।१४] पुष्करा ददन्त B. C. ६–'धारयन्त' इति नास्ति B. C.
७–मन्त्रौ B., मन्त्रौ C. मन्त्रे व्याख्यास्यते D.
८–[Fragment of गौत० धर्म० ११।३०] तेनादन्तो दम० B. नोदान्ता दम० D.
९–०स्याकृषत C. ०स्याकृषत D. १०–शास्त्रा० C.
११–प्राड्विवाका C., प्राड्विवाका D.
१२–०प्याकर्षे० C., ०प्याकृष० D.
१३–०धारिय० C., ०धारयेते D.
१४–'एव' इति नास्ति B.
१५–[ Fragment of पा० ३।३।१६९ ]
१६–इत्यर्थः । रूप० D. १७–दण्ड्यः D.
१८–[cf. पा० ५।१।६६] १९–स्वाम् B.
२०–०त्तस्योदि० C. २१–०दित्याह B. C.
२२–रज्जुर० C. रज्जुः सन्नाहरज्जुर० D.
२३–'सेवत इति समुदायार्थनिर्वचनं' इति वाक्य जातं त्रुटितम् B.
२४–शं D. २५–तद B. C. 'हि' इत्येव पाठः D.
२६–०थैव प्र० B. २७–यद्यनू० D.
२८–कुञ्ज्यादि D. २९–०गम्यस्य C.
३०–न गाह० B. C. ३१–स्त C.
३२–'इति' नास्ति D. ३३–०रणं B.
३४–०त्याः प्रत्यु० C.

पधाविकारह्रोढत्वकत्वप्रत्ययविनामेषु[1] कक्ष इति भवति। विलोडनीयो[2] ह्यसौ नाष्टीकैः[3] गवाद्यन्वेषुम्[4], राजपुरुषैर्वा तस्करान्[5], तस्करैर्वा लीयकान्[6] पथिकान्। ख्यातेर्वा तस्मिन्नेव प्रत्ययेऽनर्थको निर्निमित्तको[7]ऽभ्यासः, यकाराकारयोर्लोपः[8], अभ्यासविकाराश्च द्रष्टव्याः। तृणव्यूहनेनाख्यानीयो[9] हि तत्रस्थो भवति। अथवा[10] किमस्मिन् ख्यानमिति। किमैः[11] ख्यातेश्च[12]। गहनत्वान्न किञ्चित्कस्यचित् ख्यानं दर्शनमस्मिन्निति[13] वा कक्षः[14]। कषतेर्वा[15]। तत्र हि कपिकच्छ[16]तृणादिभिश्च[17] पीड्यमानस्य[18] कण्डूरुत्पद्यते, अतः कषणात्[19] कक्षः। तत्सामान्यात्तच्छब्देनोक्ताः क्रियाः[20] प्रतिनिर्दिश्यन्ते[21]। उक्तक्रियासामान्यान्मनुष्यकक्षः। तत्रापि हि विलोडनं[22] बाहुमूले नित्यप्रच्छादनाच्च[23] दिदृक्षाविशेषेण विषयिणः[24] स्त्रीकक्षे। अतः ख्यातेर्वा, कुत्सितमस्मिन् ख्यानमिति स्वेदक्लिन्न[25]दुर्गन्धत्वादिना[26] सम्भवति, कण्डूविनोदनार्थं[27] च कषणमपि। मनुष्यकक्षे बाहुमूलत्वमस्तीति[28] तत्सामान्यादश्वस्योक्ताश्च क्रियाः सम्भवन्त्यो द्रष्टव्याः। एतेन हस्तिकक्ष्या[29] व्याख्याता।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
द्वितीयः खण्डः[30]। ]

———

१–विनागमेषु B. २–विलोलनी० D.
३–अत्र 'वाष्टीकैः' इत्येव पाठो युक्तः तथैवार्थसंगतेः। नाटिकैः C', नास्ति कैः D.
४–०घन्वेष्टुः B., ०घन्वेष्टुम् C.
५–तस्कराति D.
६–लीनकापालिकान् B. लिनकापालिकान् C.
७–दुर्निमित्तको वारसः D.
८–घकारा० D.
९–०नेन ख्यानी० C., ०नेन ख्यापनी० D.
१०–अवा B. C. ११–कमः D.
१२–ख्यतेश्च C.
१३–०मस्मिन् दर्शनमिति D.
१४–जः D. १५–कर्षन्ते वा D.
१६–कविक० C.
१७–०दिभ्यश्च B. १८–पीड्यमा० D.
१९–क्षणात् B. C.
२०–क्रिया प्र० D.
२१–०र्दिश्यते C. D.
२२–विलोटनं C. विलोलनं D.
२३–प्रश्चाद० C.
२४–'विषयिणः' इति नास्ति B, C.
२५–कष B., क्लन्न C.
२६–०न्धित्वा० D.
२७–कण्डूविनो (विनो C.) टनार्थंश्च कर्षणमपि B. C.
२८–'त्व' इति नास्ति D. २९–हस्ती कक्ष्या C.
३०–अत्र हस्तलिखितपुस्तकेषु खण्डसमाप्तिर्न निर्दिष्टा।

## [ अथ तृतीयः खण्डः ][1]

एकसन्धिसमासोदाहरणम्—

राज्ञः पुरुषो राजपुरुष इति । अस्य समासस्य [2]समुदायार्थवचनं राज्ञः पुरुष इति । ननु च [3]दण्ड्यः कश्यपेत्यादितद्धितोदाहरणवत् समासोदाहरणं तावदुपन्यसनीयम्, पश्चात् समुदायार्थनिर्व[4]चनम्, ततोऽवयवनिर्वचनमिति ? सत्यमेवम्, तथापि तु क्रमभेदाश्रयणं निर्वा[5]च्यराजशब्दविशेष[6]णार्थम् । 'राजपुरुषो राज्ञः पुरुषः' इत्यु[7]क्त्वा 'राजा राजतेः' इत्युक्ते वाक्यार्थस्यै[8]तन्निर्वचनमिति ग[9]म्येत । न[10]त्वेक एव राजशब्द उच्यते । [11]एतज्ज्ञापयति [12]राजपुरुषशब्दे न राजशब्दो न पु[13]रुषशब्दोऽस्ति । किं तर्हि ? अन्यदेवेदं पृथक् प्रयुज्यमानरूपावयवं नरसिंहस्थानीयं परमार्थतो नि[14]रस्तपूर्वापरविभागं निस्सन्धिव[15]न्धनं [16]नित्यं विशिष्टार्थवृत्ति शब्दान्तरम् ।

यत्त्वत्र विभज्य[17]व्याख्यानम्, तद्बालानाम[18]व्युत्पन्नबुद्धीनां [19]सुखप्रतिपत्त्यर्थम् । तथा चाहुर्वैयाकरणाः—'वा वचनानर्थक्यञ्च स्वभावसिद्ध[20]त्वात्' इति । नैरुक्ता अपि स्वसिद्धान्तानुरोधेन यथा[21]प्रतिज्ञमेवैतन्निरवोचन् । अतो राजेत्यादि कल्पितावय[22]वं निर्वचनम् । राजशब्दो [23]ह्यभिषेकादिगुण[24]युक्ते जातिविशेषे क्षत्रिये रूढः । तथापि तु गवादिवत्[25]

१-अत्र हस्तलिखितपुस्तकेषु खण्डस्य प्रारम्भो न निर्दिष्टः ।
२-समुदायस्य समासार्थवचनं D.
३-दनु च ध्यः B., दनु च दद्यः C.
४-५०र्थवचनं D.
५-निर्वाच्यं B., निर्वच्य C.
६-भेदनार्थमित्यर्थः ।
७-०हष इति निरुक्ते वाक्या० D.
८-०स्यैक नि० B. ०स्यैक निर्व्न C.
९-गम्यते B.
१०-नन्वेक B. नरेक C.
११-एन ज्ञा० C.
१२-राजा पु० C.
१३-'न पुरुषशब्दो' इति त्रुटितम् B. C.
१४-निरस्तं पूर्वापरभागं B. C.
१५-०वन्ध B.
१६-'नित्य' इति नास्ति D.
१७-०ज्य व्याख्यानम् B.
१८-०मल्पबुद्धी० C., ०मप्युपन्नबुद्धी० D.
१९-'प्रति' इति त्रुटितम् D.
२०-[ पात० व्या० महा० २ । १ । १ ]
२१-०ज्ञातमेवै० B.
२२-०यवनिर्व० D.
२३-'हि' इति नास्ति D.
२४-०युक्तो जा० B.
२५-०दिवत् प्रक्रिया D.

क्रियया जातिर्लक्ष्यत इति व्युत्पाद्यते[1]। विशिष्टं वा राजानमन्येभ्यो व्यावृत्तं गमनवदि[2]ति रूढावपि व्युत्पत्त्यर्थम्[3]। तेन क्रियासमा[4]श्रयणादविरोधः। तथा चोक्तं सर्वं प्रादेशिकमित्यत्र धातोः[5] क्रियावचनत्वं प्रत्ययस्य च[6] स्वार्थे रूढित्वमिति। दीप्यते ह्यसावग्रानां लोकपालानां[7] वपुषो धारणा[8]दिति तेजस्वितया।

पुरुषः, पूः शरीरं 'शद्लृ शातने'[9] इत्यस्य शात्यत इति कर्मणि[10] घञ्[11], शादः[12]। पुरि शादो[13] मलसञ्चयः, पुरि शादोऽस्यासौ पुरिशादः सन् अन्त्यलोपोपधा[14]विकारशकारपकारौकारा[15]णां व्यापत्त्यादिना पुरुषः। तथा च[16] "वसाः[17] शुक्र[18]मसृग्[19]" इत्यादि 'द्वादशैते नृणां मलाः[20]" इति स्मरणात्। अथवा शादिर्गत्यर्थः[21]। तस्मात् पुरशब्दो[22]पपदे डप्रत्ययः[23]। पुरं शरीरं भोक्तृत्वेन गच्छतीति पुरिशः[24] सन् शकारपकारव्या[25]पत्त्यो[26]कारस्योपजनेन[27] पुरुषः। अस्मिन् पक्षे[28] पुरि शदो[29] गमनम[30]स्येति[31] व्युत्पत्तिवचनम्। पुरि शाद[32] इति तु[33] पाठा-

१–व्युत्पद्यते D.
२–यथा गमनाद् गौरिति व्युत्पाद्यते, तथैव राजतेर्दीप्त्यर्थस्य राजशब्दो व्युत्पाद्यत इत्यभिप्रायः।
३–०त्यर्थः C. ०त्यर्थत्वेन क्रिया० D.
४–समास श्रय० D. ५–धातो क्रि० D.
६–वचः स्वार्थे B., वच स्वार्थे C.
७–'लोकपालानां' इति नास्ति D.
८–०णाद्विवेजस्वि० D. ९–[धा० १।९०८]
१०–हलश्च [पा० ३।३।१२१] इत्यनेन। शायत D.
११–घड् C. १२–शादः D.
१३–पुरीशादो C.
१४–०पोवधा० C., ०पोयथा० D.
१५–०कारौकार व्याप० B. C.
१६–'च' इति नास्ति B. C.
१७–वसा C. D.
१८–शुक्ल B. C.
१९–मूसृग् D.
२०–[मनु० ५।१३५] मलाति स्म० D.
२१–शानिर्ग० B. शदि ग० D.
२२–शब्द उप० D.
२३–'ड' इति त्रुटितम् D.
२४–पुरिशय: B. अत्र 'पुरश' इति पाठो युक्तः स्यात्। इकारघटितः पाठो न साधुर्भाति।
२५–शापव्या० D.
२६–०व्यावत्त्यो० C.
२७–'०पजने' इति सप्तम्यन्तपाठः D.
२८–'पक्षे' इति नास्ति D.
२९–शब्दः B. C.
३०–'म' इति त्रुटितम् B. C.
३१–०र्योति D.
३२–पुरुशादः B. C. मुद्रितपुस्तकेषु 'पुरिषाद' इति मूर्धन्यषकारघटितः पाठो वर्तते। दुर्गोऽपीदं पदं 'पद्लृ विशरणगत्यवसादनेषु' [धा० १।९०७] इत्यस्मान्निर्वक्ति।
३३–'तु' इति नास्ति D.

न्तरम् । बहुः पापसञ्चयैः[1] शादो[2]ऽस्मिन्निति व्युत्पत्ति[3]वचनम् । [4]पुरिशयः, [5]अथवा पुरि[6] पूरयितव्ये[7]ऽन्नादिना शरीरे शेते तिष्ठति उपलभ्य इत्यर्थः । तथाच प्रयोगः-पुरि पुरुषः शेत इति । पूरयतेर्वा । अस्योपपत्ति[8]वचनम्-पूरयत्यन्तरित्यन्तर[9]पुरुषमभिप्रेत्य । अन्तर-पुरुषः क्षेत्रज्ञस्तम[10]भिप्रेत्योच्यते । तेन हीन्द्रियप्राणादिरूपं पुर्यष्टकं[11] स्थूलश्च धात्वादि-रूपं शरीरं यावद्व्याप्तिभूतत्वात् पूरितम्[12] । अथवा पूरयत्य[13]न्तरित्ये[14]वमन्तो[15] ग्रन्थः क्षेत्रज्ञा-भिप्रायः पूर्ववद्योजनीयः । ततोऽपि पर आत्माऽन्तरो[16]ऽन्तर्हिततर[17] आगमगम्यः, यः सर्वो-पनिषत्सु गीयते । पुरुषः पूर्णो[18] विश्वस्य सकल[19]स्य विकारजातस्य संभक्ता[20] पुरुष[21]स्त-मभिप्रेत्य निगमोऽपि गीयते-यस्मात्पर[22]मिति[23] । यस्मात्परं कारणभूतं तस्य नापर[24]मन्यत् किञ्चिदस्ति, सर्वस्य जगत[25]स्तस्यैव कारणत्वात् । यस्मान्नाणीयो यस्मा[26]न्न सूक्ष्मतरं न ज्यायो वृद्धतरश्च किञ्चिदस्ति । यश्च[27] वृक्ष इव, यथा वृक्षः स्तब्धो[28] निष्क्रियः, एवमसंकोच-विकासधर्मादि विचोननस्वभावे आत्मन्येव तिष्ठति । अथवा दिवि द्युलोके । प्रदेशनञ्च[29] द्युग्रहणम् । दिव्यन्तरिक्षे भुवि[30] च य एक एव, तेनेदं चतुर्दशसंस्थं भुवनं पूर्णं पुरुषेण सर्वं कृत्स्नम् ।

---

१-०सञ्चयं C.
२-शाश्वो० B. C.
३-पचनम् C, 'व्युत्पत्तिः' इत्येव पाठः D.
४-रिपुः शयः B., रिपुशयः C.
५-अथा D.
६-'पुरि' इति त्रुटितम् D.
७-पुरिव्यापादिना B., पूरयितव्येनादिना C. पूरयितव्यनादिना D. एतान् पाठानवलोक्योपरिष्टान्निर्दिष्ट एव पाठः साधुरित्येव गम्यते । 'पूरयितव्ये' इति पद 'शरीरे' इत्यनेन सम्बध्यते ।
८-'०पपत्तिः' इत्येव पाठः D.
९-'अन्तरपुरुषमभिप्रेत्य' इति त्रुटितम् C. D.
१०-०भिप्रोच्यते D.
११-पर्युष्टकं D.
१२-पूरितः B. C. १३-०रयित्य० D.
१४-०रिक्षेत्ये० B. १५-०मन्तज्ञो D.
१६-'अन्तरः' नास्ति B. अम्वरः D.
१७-'अन्तर्हिततरः' नास्ति D. १८-पूरणे D.
१९-कुलस्य B. C. २०-सम्भक्तः B.
२१-पुरुषं C. २२-परिमितिः B. परिमिति C.
२३-'यस्मात्परं नापरमस्तीत्यादि०' इति प्रतीकम् D. [श्वेता० उप० ३।९ ॥ महाना० उप० १०।४]
२४-'ना' इति त्रुटितम् B.
२५-जातस्य D.
२६-०नाणीयस्मा० C., ०नाणीयं य० D.
२७-'यश्च' इति नास्ति D.
२८-स्तुबन्धो D.
२९-अन्तरिक्षादीनामुपलक्षणार्थमित्यर्थः ।
३०-०रिक्षविय (पय) B., ०रिक्षे विय C.

अनेकपर्वसमासोदाहरणम्—

विश्वकद्राकर्षं[1] इति । घीति चकद्राकर्ष इति शब्दसमाधिर्यथा[2] दर्शयिष्यामः । [3]श्वगतौ भाष्यत इत्यर्थकथनम् । श्वानो गतिर्यस्य[4] शुनां वा गतिराश्रयः, मृगयाशीलः कश्चित्[5] श्वागणिकः पुरुषः, तस्मिन् भाष्यते । अयश्च व्याकरणस्य शाखान्तरे कैश्चि[6]दन्वाख्यातः । सम्प्रति तु विच्छिन्नान्वाख्यानो भाषिक एव पृषोदरादिषु वा[7] द्रष्टव्यः ।

यथाऽनेन प्रकृत[8] उच्यते तथा दर्शयति द्रातीति गतिकुत्सना[9] । धात्वर्थकथनमे-तेत्[10] । कुत्सन[11]विशिष्टायां गतावित्यर्थः । यद्यपि द्राति द्रूळतीति[12] सामान्येन[13] गतिकर्मसु पठितः, तथापि लोटते स्यन्दते कसति स्रवति सर्पतीत्यादिवत् गतिविशेषविषय एव द्रष्टव्यः[14] । तथा च धातुपाठस्मृतिः[15]—'द्रा कुत्सायां गतौ'[16] इति । इदानीं पुनः श्वागणि[17]-कस्य वा स्वभावतश्च सम्बन्धेन वा गतिः कुत्सिता सती हिंसाप्रयोजनतया पुनः कुत्स्यते । तांश्च पुनः कुत्सां पापज्ञानकृतां[18] कदादेशेन कुशब्देन[19] दर्शयति—कद्रातीति द्रातिकुत्सना[20] । चकद्राति[21] कद्रातीति सत इति । नेदं कारक[22]विशेषावधारणम्, धा-त्वर्थनिर्देशस्य विवक्षितत्वात् । किन्तर्हि[23] ? एवंरूपस्य सतो भवतः शब्दरूपस्यानर्थको निर्निमित्तकोऽभ्यासः, शब्दोपजननमात्रमित्यर्थः । तदस्मिन्नस्तीति विश्वकद्रः । तच्छब्देन धात्वर्थबुद्ध्या संवृतक्रमं[24] गतिर्गमनमिति कृदन्तशब्दवाच्यं व्यपदिशति । तदुक्तविशेष[25]-गमनमस्मिन् शुन्यस्तीति[26] श्वैवोच्यते[27] विश्वकद्र इति । तं रज्ज्वा गले बद्धमाकर्षतीति

---

१—नीत B. C.
२—अत्र तथेति शेषो बोध्यः । तथा दर्शयिष्याम इत्यर्थः ।
३—'श्व' इति त्रुटितम् B. श्वगतं D.
४—गतिरस्य शूनां D. ५—कश्चित् D.
६—श्चिदन्वा० D.
७—'वा' इति नास्ति D. ८—प्रकित D.
९—द्रावीति गवि इत्सरसना D. द्रातिति C.
१०—०मेतेत् D. ११—कुत्स्न वि० C.
१२—द्रात्रिद्रू इतीति B. द्राति द्रू इतीति C.
१३—'सामान्येन' इति नास्ति D.
१४—'द्रष्टव्यः' इति त्रुटितम् B.
१५—०पाठे स्मृतिः B. C.
१६—[धा० २ । ४५] १७—शुनश्वाग० C.
१८—'ज्ञान' इति नास्ति D.
१९—'कु' इति त्रुटितम् D.
२०—'द्राति' इति त्रुटितम् C. अत्र 'कुत्सना' इति द्विर्लिखितम् B.
२१—०द्रादि कुद्रा० C. कद्रातीति D.
२२—सामक D.
२३—'किन्तर्हि' इति त्रुटितम् D.
२४—संहृतक्रमं D. २५—शेषं गम० B. C.
२६—तन्यस्यती ( अस्ती ) ति B., नयन्यस्यती C.
२७—विश्वैवो० D. श्वैवो० C.

विश्वकद्राकर्षः[1] । कर्मोपपदे[2]ऽसावुपपदसमासः । तस्य च[3] श्वागणिकोऽभिधेयः[4] । यदापि[5] चकद्रा पुरुषगतिः[6], तदा तद्वान् पुरुषो विश्वकद्रुः[7] । तस्याकर्षः षष्ठीसमासः । आकृष्यते[8]-ऽनेनेत्याकर्षो बाहुः । कुत एतत् ? 'आकर्षफलकेन[9] जुहोति'[10] इति श्रुतेः । पाणिरेवात्र[11] फलकोऽभिप्रेतः[12] । अस्मिन् पक्षे श्वागणिकस्य बाहुरभिधेयः । यदा तु दैर्घसम्बन्धाद्धि-[13]साविषयत्वाच्च[14] हस्तव्यापारश्चकद्रः[15], तेन तद्वान्[16] विश्वकद्रो बाहुः, तदा विश्वकद्रु[17] आ-कर्षोऽस्येति बहुव्रीहिः । अन्यपदार्थः[18] श्वागणिकः । विशब्दो मत्वर्थे । पारस्करादित्वा-[19]त्सुट्, शब्दोपजनो वा । विविधमिता[20] वीता चकद्रौ[21] च कुत्सिता गतिर्यस्मिन् शुनि[22] तत्साहचर्याद्वा श्वागणिके तद्वाही वा, तुल्यकारणत्वात्[23], स वीतचकद्रुः[24] । तमाकर्षती-त्यादि[25] समानं पूर्वेण । वीतचकद्राकर्षः[26] सन्ननेकेन प्रकारेण विशब्दस्य मत्वर्थ[27]कल्पनया[28] सुटा च विश्वकद्राकर्ष[29] इति भवति । अनेकसमासकल्पनया चानेकपर्वत्वमत्र द्रष्टव्यम्, समासान्तरागतेः[30] ।

समासान्तरकल्पनया[31] चानेकपर्वत्वप्रदर्शनार्थ[32]मुदाहरणान्तरम् कल्याणवर्णरूप[33] इति । कल्याणवर्णस्येवास्य[34] रूपमिति समुदायार्थवचनम्[35], न विग्रहप्रदर्शनम्[36] । कल्याणो

---

१–'कद्रा' इति त्रुटितम् D.

२–०पदोऽसा० B. C.

३–'च' इति नास्ति D. पश्चाद्गणिको B.

४–विधेयः D. ५–यदा वि B. यथा विश्व० D.

६–गति तदा D. ७–चकन्द्रः C.

८–आकृष्यनेनने० C. आकर्षतेनेने० D.

९–आकर्षक फ० D.

१०–अनुपलब्धमूलमिदं वचनम् ।

११–'अत्र' इति नास्ति D. १२–फलम्, वो० B.

१३–धासम्ब० B., श्चः सम्ब० C.

१४–'च' नास्ति D.

१५–०रः श्वकद्रः B, ०राश्चकः भु C.

१६–तस्वाद्विश्व० B. C. १७–वश्वकद्र B.

१८–०दार्थे श्वाग० C. D.

१९–[cf. पा० ६ । १ । १५७] वारस्करा० C.

२०–विधवीता D. २१–चकुद्रा B.

२२–शमुनि ( हित ) C., 'तद' नास्ति D.

२३–०करण० D.

२४–०चक्दुः B., वीतकद्रः D.

२५–त्यादिः D. २६–०कर्षणः सन्नेकेन D.

२७–मत्वर्थे D. २८–कल्पना B. C.

२९–विश्वकद्रा० B. C.

३०–समासान्तरगतेः (ते) B. C., त्रुटितमिदं हेतुपदं D. पुस्तके । समासान्तरस्यान्यसमासस्य गतेरवकाशस्याभावादित्यर्थः ।

३१–'०न्तर' इति त्रुटितम् B. C.

३२–०पदर्श० C. ३३–०स्वरूप D.

३४–०स्यैवा० D.

३५–'०दायार्थः' इत्येव पाठः D.

३६–न विग्रहार्थः न विग्रहः D.

वर्णोऽस्येति कल्याणवर्णः । मैण्यादिरन्यपदार्थः[1] । कल्याणवर्णरूपमिति[2] षष्ठीसमासः । कल्याणवर्णरूपमिव रूपमस्येति[3] । अत्रापि चोत्तरपदलोपी बहुव्रीहिः । राजपुत्रादिरन्यपदार्थः । अत्र च नान्यस्य रूपमन्यस्य भवतीति सामर्थ्याद् रूपमिवेत्यस्यार्थस्य[4] गम्यमानत्वाल्लोपोपचारः[5] । एवमेव विग्रहीतव्यम्-कल्याणवर्णरूपं रूपमस्येति । अन्यत्रापि[6] चोत्तरपदलोपिनि समासे उष्ट्रमुखादावेष एव न्यायः[7] प्रयुक्तः । तत्र सामर्थ्याद् उष्ट्रो मुखं यस्येत्येवमेव[8] विगृह्णन्ति[9] ।

कल्याणं[10] कमनीयम्, इत्याद्यवयवनिर्वचनम्[11] । प्रार्थनीयं हि[12] तत् । वर्णो वृणोतेः, आच्छादयति[13] ह्यसौ तदाश्रयम् । रूपं रोचतेः । रोचिष्णु हि तद्भवति[14], आधेयतात्रिशेषात्[15] । एवमित्यनुक्तेषु विधिं दर्शयति । पूर्वं[16] पूर्वमित्यादिनोक्तेन प्रकारेणानुक्तान्[17] तद्धितसमासानेकपर्वणो[18]ऽनेकपर्वणश्च निर्ब्रूयात्[19] ।

नैरुपदानि निर्ब्रूयात् । एकशब्दोऽसहायवचनः, एकाग्रयः, 'एकहलौ[20]' इति यथा । असहायान्यवाक्यस्थानीत्यर्थः[21] । केनचिच्छिद्रान्वेषिणा दुराशयेनोपन्यस्तानि जहादीनि[22], जहातेर्हन्तेर्वेति[23] सन्दिह्यमानानि[24], 'मा न एकस्मिन्नागसि[25]' इति प्रकरणसर्वा[26]पेक्षार्थविशेषनिश्चयानि, गोमत्सरादीनि च यानि[27] पदान्तरसमवधानप्रकरणा[28]र्थविशे-

१-मर्यादि॰ C. २-॰रूपः षष्ठी॰ D.

३-'म' इति त्रुटितम् D.

४-एष्टमिवे॰ D.

५-॰त्वाल्लोपोनचारः C.

६-अत्रापि D., पुस्तके 'न्य' इति त्रुटितम् ।

७-न्नायः D.

८-॰स्येत्स्वेव C.

९-विगृह्णाति D.

१०-अत्र B. पुस्तके 'कल्याणं कमनीयं भवति' इत्यधिकः पाठ उपलभ्यते ।

११-॰चनप्रार्थं॰ B. C.

१२-'हि' इति नास्ति D.

१३-आश्वाद॰ C.

१४-तावि यति D,

१५-एव विशे॰ B. C.

१६-'पूर्वं' इति त्रुटितम् D.

१७-॰कात् स्तद्धि॰ C.

१८-॰पर्वाणो॰ D. १९-निर्ब्रूयान् D.

२०-[ Fragment of पा॰ ६ । ३ । ५९ ] ॰लादविति C.

२१-॰यानलिः अवा॰ C., यानवा॰ D.

२२-'जहादीनि' त्रुटितम् B., 'हादीनि' त्रुटितम् C.

२३-हन्तेर्वति C. हन्तेर्वेद D. 'हन्तेः' इति त्रुटितम् B.

२४-सन्दह्य॰ C. D.

२५-[ऋ॰ ८ । ४५ । ३४]॰मगसि C.

२६-सर्वापि॰ D.

२७-'यानि' इति नास्ति D.

२८-॰स्यार्थविशेषणानि D.

पाणि, 'गोभिः श्रीणीत मत्सरम'[1] इति यथा। एवमादीनां ह्यक्रस्मा[2]न्निर्वचने[3]ऽज्ञान[4]मपह्नो[5]-स्यता मृषा[6]वादो दोषानुषङ्गश्च स्यात्। पूर्वेण[7] च 'एवमेक[8]पदानि निर्ब्रूयात्' इत्य[9]नेनास्य विधेय[10]भेदाद[11]विरोधः।

एवं शेषपदलक्षणमभिधायेदानीमिदं विद्यास्थानं यस्मै कस्मैचिन्न[12] वक्तव्यम्। तदर्थमाह—नावैयाकरणाय। निर्ब्रूयादित्यनुषङ्गः। वैयाकरणो[13] हि प्रकृत्यादिविभागेन व्युत्पाद्य[14]मानं प्रत्येति। इतरस्य तु प्रकृत्यादयोऽप्यप्रसिद्धाः। तद्व्युत्पत्तौ च क्रियमाणायां यत्नो[15]ऽस्य गौरवम्। वैयाकरणायो[16]पि नानुपसन्नाय। शिष्यवृत्ति[17]मनास्थिताय। अनुपसन्नो ह्य[18]नर्थित्वान्न विद्यायां न गुरौ वाद्रियेत। ततश्च न धर्मो नार्थ्य[19]र्थ इति। प्रतिषेधस्मरणाच्च—

"धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा।
तत्र विद्या न वक्तव्या[20] शुभं बीजमिवोषरे[21]॥"
"विद्ययैव समं कामम्[22]"। इति च।

अनिदंविदे वा। वैयाकरण उपसन्नोपीदं विद्यास्थानं वेदितुमसमर्थो यः, असौ—अनिदंवित्। वा शब्दश्चार्थे। तस्मै च न[23] निर्ब्रूयात्। को हि[24] वृथा श्रममाथ-येत्[25]। कथं वासावसमर्थो भवेत्? यद्यनधीतवेदः[26] स्यात्। ततश्चै[27]तदुक्तं भवति—अन[28]-धीतिनेनेति। उक्तगुणत्रययुक्तायैवेत्यर्थः। अनध्येयवित्[29]-अनिदंवित्, इति केचित्[30]।

---

१–[ऋ० ९ । ४६ । ४ ॥ निरु० २।५] मत्सम् D.
२–ह्ये० B. C. ३–०स्या नि० D.
४–'अज्ञानं' इति नास्ति D.
५–'ह्न' इति त्रुटितम् B. C.
६–मृषाचादो D. ७–पूर्वेण D.
८–एकमेक० B. C.
९–०त्यत्राने० B. C., ०नेन सा D.
१०–त्रिय० D. 'घ' इति त्रुटितम्।
११–०दादित्यत्रि० B. C.
१२–यस्यै C. 'कस्मैचित्' इति नास्ति B. C.
१३–स हि D. १४–व्युत्पद्य० C.
१५–यत्ने गौ० D. १६–०णायापि C, D.
१७–०माना० C. १८–ह्यानर्थि० D.
१९–नाव्यर्थ C. २०–वक्तव्या D.
२१–[मनु० २ । ११२] ०वोखरे D.
२२–[मनु० २ । ११३]
२३–'न' इति त्रुटितम् D.
२४–'हि' इति नास्ति D.
२५–०श्रमेत् D.
२६–०वेद स्यात् C. यद्यधीती स्यात् D अत्र 'यद्य-नधीती स्यात्' इति युक्तः पाठो भाति।
२७–श्चे दु० C.
२८–'ने' इति त्रुटितम् B. C.
२९–विद्यानिदं D. ३०–किञ्चित् D.

अकिञ्चिज्ज्ञ[1] इत्यन्ये । इदं तदिति व्यपदेश्यं न किञ्चित् विद्यास्थानं यो वेत्ति । कुतः ? नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया[2] । असूया[3] अक्षमा परगुणासहिष्णुत्वं[4] चेतोधर्मः प्रादुर्भवतीति शेषः । ततश्चासावसकृदपि विविक्तमुच्यमानोऽपरिगच्छन्नसूयकत्वात् स्वाबोधमुपाध्याये न्यस्येत्[5][6] । यद्यमेव न बुध्यते तत् कथमन्यान् बोधयिष्यतीति । तथा च सत्यस्यायथाः[7] श्रमवैयर्थ्यश्च स्यात् ।

उपसन्नाय तु निर्ब्रूयाद्[8] यो वाऽलं विज्ञातुं स्यान्मेधाविने तपस्विने वा । तु[9] शब्दो विशेषणार्थः । शिष्यवृत्तिमास्थितायै[10] श्रद्धालवेऽन्यगुणाभावेऽपि कारुण्यान्निर्ब्रूयात् यो वाऽलं पर्याप्तं विज्ञातुं समर्थस्तस्मै । यो वा[11] मेधावी सकृच्छ्रुतग्रन्थग्रहणसामर्थ्यसमन्वितः । स[12] ह्युच्यमानमवधारयेत् । प्रतिशब्दकन्यायेनापि[13] च[14] प्रत्युच्चरेत्[15] । तथापि न प्रलीयेत[16] विद्येति । तस्मात् पूर्वोक्तगुणाभावेऽपि[17] निर्ब्रूयात् । तपस्विने[18] वा । 'नासाध्यं तपसा किञ्चित्[19]' इति स्यादेव तस्यानुग्रहः[20] । एतदुक्तं भवति, उक्तगुणशिष्यभाव[21]विरहितायापि शास्त्रा[22]विच्छेदायानन्तरोक्तेभ्यस्त्रिभ्य[23] एकैकगुणत्वेऽप्युपसदने सत्यसति वोपच्छन्द्येऽपि[24] निश्चयेन निर्ब्रूयादिति ।

[ इति सप्तमस्या-(द्वितीयस्या-) ध्यायस्य
तृतीयः खण्डः[25] । ]

---

१–०र्कि विज्ञः D.
२–यस्मादविज्ञातुर्विज्ञातुर्विज्ञाने D. यस्मादवि० C.
३–'असूया' इति नास्ति C. D.
४–'त्वं' इति त्रुटितम् B.
५–०मानः परि० B. C. । अपरिगच्छन्नव-
बुध्यमान इत्यर्थः ।
६–न्यसेत् D.
७–०स्यायं श्रमः वैय० B., व्यर्थश्रम० C.
८–'उपसन्नाय तु निर्ब्रूयात्' एतावदेव प्रतीक-
वाक्यम् C. D.
९–'तु' इति त्रुटितम् D. १०–मास्थाय D.
११–'वा' इति नास्ति D.
१२–संबच्यं श्यमान० B. संबच्यमान० C.
१३–प्रति श० D. १४–'च' इति नास्ति D.
१५–०च्चरेत् C. १६–०यते D.
१७–०भावे वि नि० C.
१८–०स्विनो वा B. तपने वा D.
१९–cf. कादम्बरी निर्णयसागर १९२७ पृ० २५५
'नास्ति खल्वसाध्यं नाम तपसाम्' 'ना' त्रुटितमादौ D.
२०–०नुग्रहाः C. 'एतस्यानुग्रहः' इत्येव पाठः D.
२१–'भाव' इति त्रुटितम् D. २२–०स्त्रवि० D.
२३–०भ्यः श्रीभ्यः B. ०भ्यस्त्रीभ्यः C.
२४–०च्छन्या C. अयमपि पाठो B. पुस्तके,
०च्छद्यापि D. । उपच्छन्दी–स्वेच्छया परिभ्रा-
म्यन्नपि गुरुर्निर्ब्रूयादेवेति भावः ।
२५–अत्र हस्तलिखितपुस्तकेषु खण्डस्य समाप्तिर्न दृश्यते ।

## [ अथ चतुर्थः खण्डः[1] । ]

एतमेवार्थमितिवृत्तार्थवादेन प्ररोचयन्नाह—

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि ।
असूयकायानृजवेऽयतायै[2] न मा ब्रूया वीर्यवती तथा स्याम्[3] ॥

चतुर्दशानां विद्यास्थानानामधिष्ठात्री देवता स्वयमेव[4] वा विद्या विग्रहिणी[5] यथा-दर्शनं शिष्यानध्यापयन्तं[6] कश्चिद्[7] ब्राह्मणमुपाध्यायमाजगाम । किमिति ? अन्वेषणार्थम्[8]। त्वं गोपाय त्रायस्व[9]। मा माम् । किमेवं स्यादित्युपचयं दर्शयति–रक्षिता सती शेवधिः सुखं निधानं[10] ते तव अस्मि भवामि । कीदृशी ? रक्षा इति चेत्[11] ? दर्शयति–असूयकाये[12]-त्यादि । असूयकः परगुणप्रध्वंसनशीलः, उपाध्यायद्विड् हैतुको वा । तत एव निर्दग्ध-श्रद्धास्तिक्य[13]भावनः सर्वमेवासूयन्न किञ्चित् प्रतिपद्यते । अनृजुः[14] शठः, अन्यथावाग-न्यथाचारः । अयतः–अप्रयतः[15], अशुचिः, भिन्नवृत्तो[16] वा अयतेन्द्रियः । एवंविधाय मा ब्रूयाः[17], मा[18]वोच इत्यर्थः ।[19] वीर्यवती फलस्य साधिका तथा तथैव[20] स्यां भवेयम् ।

एतैः[21] श्रोतुरुपदेशः—

य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन् ।
तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कतमच्चनाह[22] ॥

---

१–अत्र हस्तलिखितपुस्तकेषु खण्डस्य प्रारम्भो न दृश्यते ।

२–युताय B.

३–[Cf. मनु० २ । ११४] D. पुस्तके 'विद्या ह वै० कतमच्चनाह' इति द्वयोः श्रुत्योः प्रतीकत्वेन सहैव निर्देशः । 'विद्या ह वै' इत्येव प्रतीकम् C.

४–स्वमेव B. 'य' इति त्रुटितम् ।

५–०ग्रहणी B. C.

६–०ध्यान ध्याप० D.

७–कश्चित् C. D. अयमपि पाठः B. पुस्तके ।

८–मन्वेषिणार्थम् B., अन्वेषिणार्थम् C.

९–पालयस्व माम् D.

१०–सुखनि० D.

११–चेति D. १२–०यतायै० C.

१३–०स्तिरस्भा० C. १४–अनृजुच्छठः C.

१५–'अप्रयतः' इति नास्ति B C.

१६–अशुचिभिन्नवृत्तो C.

१७–न ब्रूयात् B. न ब्रूयां C.

१८–अत्र 'मां' इत्यधिकः पाठः B. C.

१९अत्र 'वीर्यं' इत्यधिकः पाठः C. २०–च D.

२१–उत्तर B. C. अत्र 'उत्तरं' इति 'अत उत्तरं' इति वा पाठो युक्तः स्यात् ।

२२–[ संहितोपनिषद्ब्राह्मणे तृतीये खण्डे दृश्यतेऽयं श्लोकः । ] मूलवाक्यमिदं नास्ति C. D.

य आतृणत्ति[1] विध्यति। अवितथेन[2] सत्येन ब्रह्मणः[3] कर्णौ। अदुःखम्। असमर्थ-समासोऽयम्। सूचीव[4]र्तिप्रवेशनादिनिमित्तं दुःखमकुर्वन्। अमृतं संप्रयच्छन्[5] अमृतत्व[6]-हेतुभूतमधिदेवता[7]दिविषयं ज्ञानं[8] सम्यक् प्रयच्छन्। तं मन्येत जानीयात् पितरं मातरञ्च, नेतरौ[9]। तौ हि अत्य[10]र्थं प्रवर्तेते[11]। पुत्रस्तु वाजिनवदनुनिष्पादी[12]। अयन्तु स्वार्थमनपेक्ष्य[13] तदनु जिघृक्षयैव प्रवर्तते। तस्यापि वाजिनस्थानीयं यशो लोकभ[14]क्त्याद्यशक्यपरिहार-मस्ति, तदस्य[15] चाविवक्षितं प्रयोजनम्[16]। तं मन्येतदुच्यते। अतश्च तस्मै न द्रुह्येत् कतमच्च नाह। अहशब्दो विनिग्र[17]हार्थीयः, नशब्दाच्च परो द्रष्टव्यः। चनशब्दः अप्यर्थे[18]। न[19] च कतमत् किञ्चिदल्पमपि कदाचिदपीति वा[20]।

गुर्वनुवृत्तिमकुर्वतः परिनिन्दा[21]वचनम्—

अध्यापिता ये गुरुं नाद्रियन्ते विप्रा वाचा मनसा कर्मणा वा।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तत्[22]॥

अध्यापिता[23] ग्राहिताः[24] सन्तो विद्यां ये[25] गुरुं नाद्रियन्ते[26]। यतश्चाध्यापिता अतः। विप्राः वाङ्मनःकर्मभिः। यथैवेत्यादि। भोजनीया इति बहुलवचनात् कर्तरि कृत्यः। यथा ते न गुरोर्भोजकाः[27], तथैव तान् न भुनक्ति[28] न पालयति। दृष्टे चादृष्टे च तत्कृत-फलाभावान्नानुगृह्णाति श्रुतं तत्।

---

१–०णत्त C. इदं वाक्यं नास्त्येव B.
२–अवित० C.  ३–ब्रह्मण: C.
४–र्वर्ते B. C.
५–'सम्प्रयच्छन्' इति नास्ति D.
६–'त्व' इति त्रुटितं भाति B. C.
७–दैवादि० C. देवादि० D.
८–ज्ञानं सत्यक् C.  ९–नेतरं B. C.
१०–हित्य० C.  ११–प्रवर्त्तते C.
१२–'नि' इति त्रुटितं भाति D.
१३–०क्ष्यैतदनु० D.
१४–०कपंक्त्यात्यपरि० B. ०कवक्त्यात्यपरि० C.
१५–तस्य च विव० B. C.
१६–'प्रयोजनम्' इति त्रुटितम् B. C., अग्रे 'तं' इति त्रुटितम् D.
१७–०ब्दोऽपि नि० B.
१८–अप्यर्थं C.  १९–नैव B. C.
२०–'इति वा' इति त्रुटितम् D.
२१–०विन्दा B.
२२–[cf. सं० उ० ब्रा० ३]'अध्यापिता ये-श्रुतं तत्' इत्येव प्रतीकम् D., नास्त्येव C. पुस्तके।
२३–अद्यापि० C. 'अध्यापिताः' नास्ति D.
२४–ग्राहीताः C.
२५–'ये' इति वाक्यस्यादावेव लिखितं D. पुस्तके।
२६–'ये' इति त्रुटितम् C.
२७–०रो भोज० C. फलका: D.
२८–हुनक्ति C.

संप्रति यस्मै वक्तव्या[1], तं दर्शयति—

यमेव विद्याः शुचिमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत् कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन्[2] ॥ इति ॥

यमेव विद्याः-जानीयाः। द्विप्रकारेणापि शौचेन शुचि-प्रमादवर्जितं शास्त्रार्थनिष्ठ[3]मित्यर्थः। मेधाविनम् मेधया[4] तद्वन्तम्। ब्रह्मचर्योपपन्नम्-कृतोपनयनादिसंस्कारम्। यस्ते तव न द्रुह्येत् नापकरोति। कतमच्चन-कदाचिदपि। अहशब्दः[5] पूर्ववद्विनिग्रहार्थीयः। नशब्दाच्च परः, नैव द्रुह्येदित्यर्थः। तस्मै मा[6] मां[7] ब्रूयाः। निधिपाय-निधिर्विद्यानां[8] सुख[9]हेतूनां निधानमुपाध्यायस्तं[10] पाति यच्छात्रस्तस्मै[11]। हे[12] ब्रह्मन् ब्राह्मण। निधिरधिकरणसाधनः[13], निहितो[14]ऽस्मिन्[15] विद्येति[16]। अर्थसामर्थ्याद्वा[17] कर्तृसाधनः, पात्रेषु निदधातीति।

इत्याचार्यस्कन्दस्वामिकृतायां
निरुक्तटीकायां
सप्तमस्या[18]-( द्वितीयस्या[19]-) ध्यायस्य
प्रथमः पादः ।
[ चतुर्थश्च खण्डः ।][20]

---

१–वक्तव्यतां द० B. C.
२–[cf. मनु० २ । ११५] 'यमेव विद्याः ब्रह्मन्' इत्येव प्रतीकम् D., नास्त्येव प्रतीकम् C.
३–शास्त्रनिष्ठ० D.
४–मेधाया C.
५–अहशब्दः B. C.
६–'मा' इति त्रुटितम् D.
७–'मां' इति त्रुटितम् B. C.
८–नधि वि० C.
९–विद्यास्थानं D.
१०–निधानमु० D.
११–यश्चात्र B. यश्चात्रः C
१२–'हे' इत्यस्मात्पूर्वं 'म' इत्यधिकं लिखितम् B.C.
१३–साधना B. C.
१४–नहि० D.
१५–०तस्मिन् B. C.
१६–विविच्येति D.
१७–'अर्थ' इति त्रुटितम् D.
१८–'सप्तमस्य' इत्येव पाठः D.
१९–इदं नास्ति आदर्शपुस्तके।
२०–हस्तलिखितपुस्तकेषु खण्डसमाप्तिर्नेह निर्दिष्टा।

# [ अथ द्वितीयः पादः ।

## पञ्चमः खण्डः । ]

अथ निर्वचनमित्यत्र गवादीनां सामान्येन निर्वचनलक्षणमुक्तम्, इदेदानीं क्रम-प्राप्तविशेषनिर्व[3]चनविवक्षया आह—

अथात [4]उपक्रमिष्यामः ।

तत्राथशब्द[5] आनन्तर्ये, सामान्यलक्षणानन्तरम् । अतः शब्दो हेतौ । यतः सामान्यलक्षण उक्ते विशे[6]षं प्रत्याकाङ्क्षास्तीत्य[7]त आनुपूर्व्येण [8]क्रमिष्यामः, विशेषलक्षणं व्याख्यास्याम [9]इत्यर्थः । अथवा अथशब्दो विशेषलक्षणाधि[10]कारार्थः। अतः श[11]ब्दे आनन्तर्ये हेतौ वा। शेषमुक्तार्थम् ।

का पुनरसौ विशेषव्याख्या ? उच्यते । अभिधानाभिधे[12]यतन्निर्वचनगौणनियम-प्रसक्तानुप्रसक्तत[13]दुदाहरण[14]संन्दिग्धनिर्णयसंख्यादिप्रदर्शनम् । तत्राभिधानम्-गौरिति । अभिधेयम्-पृथिव्या नामधेयमिति। तन्निर्वचनम्-यद्दूरं गते[15]र्योदि । गौणनियमः-गोभिः श्रीणीतेति।प्रसक्तानुप्रसक्तम्-पयः पिब[16]तेर्वा क्षीरं क्ष[17]रतेः । तदुदाहरणम्-उशीरमिति य[18]थेति। सन्दिग्धम्-निर्ऋ[19]तिसमुद्रादि। निर्णयः-वर्पकर्मेति नैरुक्ता इत्यादि । संख्या-एक-विंशतिः पृथिवीना[20]मधेयानि । तानि च[21] सर्वाधारत्वात् पृथिव्याः प्रथमं पठितानि ।

---

१-हस्तलिखितपुस्तकेष्वत्र पादस्य खण्डस्य वा प्रारम्भो नैव निर्दिष्टः ।

२-व्याप्त B. C. ३-निर्विवचया D.

४-'अथात इत्यादि' इत्येव प्रतीकम् C.D. । अन्य-मुद्रितपुस्तकेषु 'अथातोऽनुक्रमिष्यामः' इत्येव पाठः ।

५-'अथ आनन्तर्ये' इत्येव पाठः D.

६-०शेप प्रत्या० B. C.

७-०स्ति अत B., ०स्ती अत C.

८-०णानुक्रमि० D.

९-'इत्यर्थः' इति नास्ति B. C.

१०-०यद्वा आद्यो विशेपलक्षणार्थः D.

११-'शब्द' इति नास्ति D.

१२-०धेयं निर्व० D.

१३-तदूदा० C. १४-सदिग्ध C.

१५-गेतेत्या० C.

१६-'वा' इति नास्ति D.

१७-करतेः B. C. १८-अथेति D.

१९-०तिः समु० B. २०-नामानि D.

२१-'च' इति नास्ति B.

तेषाम[1]पि मध्ये प्राधान्यप्रद[2]र्शनार्थं प्रथमं पठितं बहुव[3]क्तव्यत्वात् गोशब्दमुपन्यस्यति।

गौरिति पृथिव्या नामधेयम्। मुख्यत्वाद्[4] भूतपृथिव्या अधिदे[5]वताया उदाहरणम् 'गोर्प[6]दसि' इति। गार्हपत्योपस्थाने विनियोगात्, गार्हपत्यस्य च गवि पृथिव्यां सादनात्, गोशब्दस्य च पृथिव्यभि[7]धानता निश्चिता।

सर्वशब्दानामाख्यातजत्वप्रतिज्ञानात् प्रवृ[8]त्तिनिमित्तमाह—

यद् दूरं गतो[9] भवति। नैरन्तर्येणात्माकाशादिषु[10]दूरेऽप्युपलब्धेर्गमिक्रियाव्यवहारः। अ[11]न्यत्र चान्यत्र चोपल[12]ब्धेर्दूरापदेशः। प्रत्ययोपात्त[13]रूढ्यर्थसम्बन्धाश्च गमिरत्र नैरन्तर्योपलब्धिदूरत्वविशिष्टं गमनमुपादत्ते, तक्षा परिव्राजक इति यथा। यद्यपि चायं गोशब्दः प[14]श्वादावनेकत्र रूढः, तथाप्यस्य त[15]त्र तत्र मन्त्रवाक्यार्थसमवायसम्भवादभिधेयं निश्चित्य तदवयवभूतस्य गमेस्तद्विशेषवि[16]पर्ययतैव व्यतिरेकव्यावृ[17]त्त्यर्थं पूर्ववत् प्र[18]दर्शनीयेति। यच्चा[19]स्यां भूतानि प्राणिनो गच्छन्ति। चो वार्थे। कारकविकल्पश्चायम्। कर्तरि कारकेऽधिकरणे चेत्यर्थः। 'गा[20]तेः' वा स्तुत्यर्थस्य, औकारप्रत्ययः। धातुविकल्पश्चा[21]यम्। गीय[22]ते स्तू[23]यतेऽसाविति गौः[24], गायन्ति वा[25]स्यां स्थिता इति गौः। इह च पूर्वत्र[26] च निर्व[27]चने क्रियैक[28]त्वे कारकभेदः।

अ[29]थापि पशुनामेह भवत्येतस्मादेव।

अथ शब्द[30]श्चार्थे, अपिशब्दाच्च परो द्रष्टव्यः। अपि चायं गोशब्दः पशुना[31]मेह

---

१—'अपि' इति नास्ति D.
२—'प्राधान्यप्रदेशनार्थम्' नास्ति D.
३—वक्तकत्वात् B., वक्तत्वात् C.
४—०त्वा भूत० C. ५—०दैवता० C.
६—गोवदसि B., गोपदसि C.
७—०धानत्वात् ता० B.
८—निवृत्ति D. ९—गतापि D.
१०—०ष्वदूरेप्युप० C. ११—अन्नान्यत्र D.
१२—०ब्धेः यददूरा० B. ०ब्धेर्गदूरात्वदेशः C.
१३—०पात्यरू० B., ०पात्यरूढ्यर्थ० C.
१४—पश्वादा० C.
१५—'तत्र तत्र' इति नास्ति D.
१६—विशेषतयैव B., विशेषयतैव C.
१७ ०त्यर्थः D. १८—प्रदेशनीये D.
१९—यस्यां D.
२०—[धा० १।२४] दुर्गस्तु गत्यर्थस्यैव गातेराह।
२१—'कर्तरि कारके' इत्यारभ्य 'धातुविकल्पश्चायं' इत्यन्तःपाठस्त्रुटितः D. धातुविक० C.
२२—'गीयते' इति त्रुटितम् B. C.
२३—श्रूयते D. २४—गौ B. C.
२५—वास्या C. २६—'च' इति नास्ति D.
२७—निर्वचन B. २८—क्रियैतत्वे B. C.
२९—अथापीत्यादि C., अथापीत्यादि D.
३०—अथशब्दे D. ३१—नामेव D.

लोके वेदे च भवति एतस्मादेव धातुद्वयात्। गच्छति गीयतेऽसाविति गौः। प्रसिद्धत्वाच्च निगमो न प्र[1]दर्शितः। न[2]नु च प्रसिद्धत्वादेव पशुनामत्वमप्यस्य न व्याख्येयम्? उच्यते। पृथिवीनामसु पा[3]ठात् तत्रैव च[4] निर्वचनप्रदर्शनात् यत्तादर्थ्या[5]न्तरनिवृत्तिर्मा वि[6]ज्ञायीति प्रसिद्धस्यापि पशुनामत्वस्य प्रदर्शनं ज्ञापयति च सर्वत्र पा[7]ठोऽतन्त्र इति। यत्र प[8]ठ्यते ततोऽन्यत्रापि भवतीति प्रदर्शनार्थं चैतत्[9]। ग्मादीनामप्येवं व्याख्या कर्तव्या[10]। शास्त्रगौरवभयात्तु भाष्यकारेण[11] नादृता।

अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भ[12]वन्ति। 'गोभिः श्रीणीत म[13]त्सरम्' इति पयसः।

अपि चा[14]स्यां गवि प[15]शुविषये प्रसक्तस्यायं विशेषो भवति। ताद्धितेन-तद्धि[16]तस्यायं ताद्धितोऽ[17]र्थो विकारावयवलक्षणः, तेन। 'इत्थंभूतलक्षणे'[18] तृतीया तद्धितार्थेन विकारावयवलक्षणेन संयुक्ताः सम्बन्धाः, कृत्स्नवत् कृत्स्नेनेव[19] प्रकृत्यर्थेनेव[19] गोशब्देनेवे[19]त्यर्थः, निगमा भवन्ति। तेषां प्रदर्शनार्थमुदाहरणम्-'गोभिः श्रीणीत मत्सरम्' ॥ इति॥

आ धावता सुहस्त्यः शुक्रा गृभ्णीत मन्थिना। गोभिः श्रीणीत मत्सरम्[20] ॥ इति॥

अथास्यैस्यार्थम्[21]। आधावत आगच्छत, हे सुहस्त्यः। अ[22]ध्वर्यूणामिदं सम्बोधनम्। क्षिप्रकारित्वात्सुवर्णेन चा[23]लङ्कृतत्वात्, सु[24]-शोभनो हस्तः सुहस्तः सोऽस्या[25]स्तीति

१–'प्र' इति नास्ति D.
२–'ननु च' इति त्रुटितम् B. C.
३–०सुपाठं D.
४–'च' इति नास्ति D. ५–०दर्थान्तर B. C.
६–०ज्ञायाति B. ७–पातो D.
८–'यत्र पठ्यते' इति त्रुटितम् B. C.
९–०थेचैत B. चेतत् C. D.
१०–कार्या D. ११–णानादृता D.
१२–अथावीत्यादि C., अथाधीत्यादि D.
१३–[ऋ० ९।४६।४]
१४–वास्यां D.
१५–पशुविषयं C., बहुविषये D.
१६–'तद्धितस्यायं' इति त्रुटितम् D.
१७–तांडितः D. तार्थितः अर्थविका० C. ०तो०ऽर्थविका० B.
१८–[पा० २।३।२१]
१९–०नैव D. 'कृत्स्नेनेव' इत्यनन्तरं 'गव्यूतियुक्ताः' इत्यधिकः पाठो भाति D.
२०–[ऋ० ९।४६।४] 'आधावता सुहस्त्यः-मत्सरम्' इत्येव प्रतीकम् D., अत्र C. पुस्तके 'गृह्णित' 'गोभि श्रीणित' इति पाठः।
२१–अयास्यार्थम् D. 'स्य' इति त्रुटितं स्यात्।
२२–अध्वर्यूणा० C. अध्वयूणा० D.
२३–'च' इति नास्ति B. C.
२४–'सु' इति त्रुटितम् B. C.
२५–यस्यास्ती० D. सोस्यस्ती० C.

तेषामपि[1] मध्ये प्राधान्यप्रदर्शनार्थं[2] प्रथमं पठितं बहुवक्तव्यत्वात्[3] गोशब्दमुपन्यस्यति।

गौरिति पृथिव्या नामधेयम्। मुख्यत्वाद्[4] भूतपृथिव्या अधिदेवताया[5] उदाहरणम् 'गोपदसि'[6] इति। गार्हपत्योपस्थाने विनियोगात्, गार्हपत्यस्य च गवि पृथिव्यां सादनात्, गोशब्दस्य च पृथिव्यभिधानता[7] निश्चिता।

सर्वशब्दानामाख्यातजत्वप्रतिज्ञानात् प्रवृत्तिनिमित्तमाह[8]—

यद् दूरं गता[9] भवति। नैरन्तर्येणात्माकाशादिवद्दूरे[10]ऽप्युपलब्धेर्गमिक्रियाव्यवहारः। अन्यत्र[11] चान्यत्र चोपलब्धेर्[12] दूरापदेशः। प्रत्ययोपात्त[13]रूढ्यर्थसम्बन्धाच्च गमिरत्र नैरन्तर्योपलब्धिर्दूरविशिष्टं गमनमुपादत्ते, तक्षा परिव्राजक इति यथा। यद्यपि चायं गोशब्दः पर्यायादावनेकत्र[14] रूढः, तथाप्यस्य तत्र[15] तत्र मन्त्रवाक्यार्थसमवायसम्भवादभिधेयं निश्चित्य तदवयवभूतस्य गमेस्तद्विशेषविषयतैव[16] व्यतिरेकव्यावृत्त्यर्थं[17] पूर्ववत् प्रदर्शनीयेति[18]। यच्चास्यां[19] भूतानि प्राणिनो गच्छन्ति। चो वार्थे। कारकविकल्पश्चायम्। कर्तरि कारकेऽधिकरणे चेत्यर्थः। 'गातेः'[20] वा स्तुत्यर्थस्य, औकारप्रत्ययः। धातुविकल्पश्चायमे[21]। गीयते[22] स्तूयते[23]ऽसाविति गौः[24], गायन्ति वास्यां[25] स्थिता इति गौः। इह च पूर्वत्र च[26] निर्वचने[27] क्रियैकत्वे[28] कारकभेदः।

अथापि[29] पशुनामेह भवत्येतस्मादेव।

अथ शब्दश्चार्थे[30], अपिशब्दाच्च परो द्रष्टव्यः। अपि चायं गोशब्दः पशुनामेह[31]

---

१–'अपि' इति नास्ति D.
२–'प्राधान्यप्रदर्शनार्थम्' नास्ति D.
३–वक्तकत्वात् B., वक्तव्यत्वात् C.
४–०त्वा भूत० C. ५–०देवता० C.
६–गोवदसि B., गोपदसि C.
७–०धानत्वात् ता० B.
८–निवृत्ति D. ९–गतापि D.
१०–०वद्दूरेप्युप० C. ११–अत्रान्यत्र D.
१२–०ब्धेः यद्दूरा० B. ०ब्धेर्गदूरावदेशः C.
१३–०पात्यरू० B., ०पायरूढ्यर्थ० C.
१४–पर्यायादा० C.
१५–'तत्र तत्र' इति नास्ति D.
१६–विशेषतयैव B., विशेषयतैव C.
१७ ०त्यर्थः D. १८–प्रदेशनीये D.
१९–यस्यां D.
२०–[धा० ३।२४] दुर्गस्तु गत्यर्थस्यैव गातेराह।.
२१–'कर्तरि कारके' इत्यारभ्य 'धातुविकल्पश्चायं' इत्यन्तःपाठस्त्रुटितः D. धातूविक० C.
२२–'गीयते' इति त्रुटितम् B. C.
२३–श्रूयते D. २४–गौ B. C.
२५–वास्या C. २६–'च' इति नास्ति D.
२७–निर्वचन B. २८–क्रियैतत्वे B. C.
२९–अथावीत्यादि C., अथापीत्यादि D.
३०–अथश्चार्थे D. ३१–नामैव D.

लोके वेदे च भवति एतस्मादेव धातुद्वयात्। गच्छति गीयतेऽसाविति गौः। प्रसिद्धत्वाच्च निगमो न प्रदर्शितः[1]। ननु[2] च प्रसिद्धत्वादेव पशुनामत्वमप्यस्य न व्याख्येयम्? उच्यते। पृथिवीनामसु पाठात्[3] तत्रैव च[4] निर्वचनप्रदर्शनात् यत्ताद्र्थ्यान्तर[5]निवृत्तिर्मा विज्ञायीति[6] प्रसिद्धस्यापि पशुनामत्वस्य प्रदर्शनं ज्ञापयति च सर्वत्र पाठो[7]ऽतन्त्र इति। यत्र पठ्यते[8] ततोऽन्यत्रापि भवतीति प्रदर्शनार्थं चैतत्[9]। ग्मादीनामप्येवं व्याख्या कर्तव्या[10]। शास्त्रगौरवभयात्तु भाष्यकारेण[11] नादृता।

अथाप्यस्यां ताद्धितेन कृत्स्नवन्निगमा भवन्ति[12]। 'गोभिः श्रीणीत मत्सरम्[13]' इति पयसः।

अपि चास्यां[14] गवि पशुविषये[15] प्रसक्तस्यायं विशेषो भवति। ताद्धितेन-तद्धितस्यायं[16] ताद्धितोऽर्थो[17] विकारावयवलक्षणः, तेन। 'इत्थंभूतलक्षणे[18]' तृतीया तद्धितार्थेन विकारावयवलक्षणेन संयुक्ताः सम्बन्धाः, कृत्स्नवत् कृत्स्नेनैव[19] प्रकृत्यर्थेनैव गोशब्देनैवेत्यर्थः, निगमा भवन्ति। तेषां प्रदर्शनार्थमुदाहरणम्-'गोभिः श्रीणीत मत्सरम्' ॥ इति ॥

आ धावता सुहस्त्यः शुक्रा गृभ्णीत मन्थिना। गोभिः श्रीणीत मत्सरम्[20] ॥ इति ॥

अयास्यस्यार्षम्[21]। आधावत आगच्छत, हे सुहस्त्यः! अध्वर्यूणामिदं[22] सम्बोधनम्। क्षिप्रकारित्वात्सुवर्णेन चालङ्कृतत्वात्[23], सु[24]-शोभनो हस्तः सुहस्तः सोऽस्यास्तीति[25]

---

१–'प्र' इति नास्ति D.
२–'ननु च' इति त्रुटितम् B. C.
३–०सूपाठं D.
४–'च' इति नास्ति D. ५–०दर्थान्तर B. C.
६–०सायाति B. ७–पातो D.
८–'यत्र पठ्यते' इति त्रुटितम् B. C.
९–०श्चैतत् B, चेतत् C. D.
१०–कार्या D. ११–०णानादृता D.
१२–अथावीत्यादि C., अथापीत्यादि D.
१३–[ऋ० ९ । ४६ । ४]
१४–वास्यां D.
१५–पशुविषयं C., बहुविषये D.
१६–'तद्धितस्यायं' इति त्रुटितम् D.
१७–तादितः D. तार्थितः अर्थविका० C. ०तोऽर्थविका० B.
१८–[पा० २ । ३ । २१]
१९–०नैव D. 'कृत्स्नेनैव' इत्यनन्तरं 'गव्यूतिमुक्ताः' इत्यधिकः पाठो भाति D.
२०–[ ऋ० ९ । ४६ । ४ ] 'आधावता सुहस्त्यः-मत्सरम्' इत्येव प्रतीकम् D., अत्र C. पुस्तके 'गृह्णित' 'गोभि श्रीणित' इति पाठः।
२१–अयास्यार्षम् D. 'स्य' इति त्रुटितं स्यात्।
२२–अध्वर्यूणा० C. अध्वयूणा० D.
२३–'च' इति नास्ति B. C.
२४–'सु' इति त्रुटितम् B. C.
२५–यस्यास्ती० D. सोस्यस्ती० C.

सुहस्ती[1], 'छन्दसीवनिपौ च[2]' इति मत्वर्थे ईकारः[3]। तत इदं बहुवचनम्-सुहस्त्यः। आगत्य च[4], शुक्रा गृभ्णीत[5] मन्थिना, शुक्रा[6] मन्थिनौ ग्रहौ गृह्णीत। गृहीत्वा चानन्तरं गृहीतं गोभि[7]र्गोविकारैः पय आदिभिः श्रीणीत मिश्रयत, मत्सरं सोमं मैत्रावरुणादिकम्। 'पयसा मैत्रावरुणं[8] श्रीणाति दध्नादित्वमे[9]' इति श्रुतेः। प्रकृत्या[10] गोद्रव्येण पृथिव्यादिभिश्च मिश्रण[11]स्यासम्भवात् पयसश्च[12] श्रुतत्वात् निश्चित्या[13]ह-पयस इति।

मत्सर[14]शब्दं निगमप्रसक्तं निराह-मत्सरः सोमः। अत्रापि प्रसिद्धस्य लोभस्य मिश्रण[15]सम्भवात् सोमस्य च[16] मिश्रणोपदेशात् क्रियायोगमङ्गीकृत्याह-मत्सरः सोम इति[17]। तत्र क्रियायोगं दर्शयति-मन्दतेस्तृप्तिकर्मणः[18]। मन्दतेस्तृप्त्यर्थस्य। तृप्यति[19] हि देवता मन्त्रेण[20]। प्रसिद्धिबोधनार्थ[21]माह-मत्सर[22] इति लोभनाम-इति। एवमन्यत्राप्यर्थान्तरवचनेन[23] सर्वत्र द्रष्टव्यम्। अभी[24]त्यादिना प्रवृत्तिनिमित्तमाह[25]। धनमभिमत्तो मूढ एतेन भवतीति। मत्सरो[26] लोभश्चेतोधर्मः, अनुपालयतो[27] लिप्सा[28]।

विकारप्रसङ्गेनाह—पयः पिबतेर्वा[29]। पीयते हि तत्[30]। प्यायतेर्वा वृद्ध्यर्थस्य[31]।

---

१-सुहसी C.
२-[पा० ५।२।२२] इति सूत्रे वार्तिकम्। ०सि चनिवेति C.
३-ई: D. ४-'च' इति नास्ति D.
५-गृह्णीत C.
६-'मन्थिना, शुक्रा' इति त्रुटितम् D.
७-'भो' इति त्रुटितम् D.
८-०वरुण: C.
९-[ अनुपलब्धमूलमिदं वचनम् ]
१०-प्रकृतित्यागोऽत्र द्रव्येण D.
११-मिश्रणसम्भ० D.
१२-पयश्च श्रुत्वा D.
१३-०श्चियान B.
१४-मत्सर इति निग० D.
१५-मिश्रणास० C. मिश्रणस्य स० D.
१६-'च' इति नास्ति D.
१७-'इति' नास्ति B. '०ह्रीकृत्य-मत्सरः सोमः इत्याह' इति पाठः D.
१८-इदं वाक्यं नास्ति C. D.
१९-तृप्यन्ति देव० D.
२०-अत्र 'मत्सरेण' इति युक्तः पाठो भवेत्।
२१-प्रसिद्धवाधना B. C.
२२-०सरमिति C.
२३-०वचने D.
२४-अभ्रीत्या० C.
२५-दर्शयति D.
२६-मत्सरे C.
२७-पीयतो D.
२८-उत्पद्यत इति शेषः।
२९-पीवतेः D.
३०-तम् B.
३१-प्रीत्यस्य B. प्रीत्यर्थस्य C.

वर्धन्ते तेन[1] पीतेन प्राणिनो गोमिनो[2] वा । दधिनवनीतोदश्वित्[3]प्रदानलब्धेन धनेन, दध्यादिभोजनेन वा वर्धन्ते[4] । स्वयमेव[5] चोधस्तूप[6]चीयते ।

पर्यायप्रसक्तं निराह-क्षीरं क्षरतेः । क्षरति हि तदूधसः[7] । घसेर्वा[8], ईरो नामकरणः[9] । अद्यते हि[10] तत् । ईरः[11] प्रत्ययः । किश्चायं द्रष्टव्य[12] उपधालोपार्थम् । अतएव च तत्कार्य[13]विषयमुदाहरणमुपन्यस्यति[14]-उशीरमिति यथा । वशेः ईरकि[15] कृतसम्प्रसारणस्येदं रूपम् । काम्यते हि तत्, सुगन्धितत्वात्[16] । उदकमपि क्षीरम्, एतस्मादेव[17] । 'उभाव[18]श्विभ्यां पयः क्षीरेण स्नातः[19]' इत्यादिषु दर्शनात् ।

प्रसक्तानुप्रसक्तनिर्वचनप्रयोजनं द्रष्टव्यम्-अंशुं[20] दुहन्तो अधीत्यादि । कृत्स्नवन्निगमा इति बहुवचननिर्देशादनेकोदाहरणप्रदर्शनम् । गवि गोरवयस्याधिपवण[21]चर्मणोऽधिकरणभूतस्य कृत्स्नवन्निगमः[22]—

ते सोमादो[23] हरी इन्द्रस्य निंसतेऽंशुं[24] दुहन्तो अध्यासते गवि ।
तेभिर्दुग्धं पपिवान्त्सोम्यं मध्विन्द्रो वर्धते प्रथते[25] वृषायते[26] ॥

अर्बुदस्यार्षम् । ते ग्रावाणः सोमस्यात्तारः[27], हरी इन्द्रस्य स्वभूतावश्वौ, अभिष-

१–वर्धनं ते (B.) तेनापि तेन B. C.
२–सन्दिग्धमिवेदं पदम् ।
३–०दश्वित्स्थ० C. ०श्विप्रधान D.
४–वयन्ते D.
५–'व' इति त्रुटितम् B. C.
६–०धस्तूप० B. ०धस्तुचश्री० D.
७–तमूधसः C., तदूधसं D.
८–अदेर्घस्लृ आदेशः क्रियते [पा० २।४।३७] । धात्वन्तरमपि [धा० १।७१६]
९–'ईरो नामकरणः' नास्ति C. D.
१०–०तेहिं C. ११–रेरः C. ईरप्रत्य० D.
१२–प्रत्यय उपधालोपार्थः D.
१३–तित्कार्य० B. C.
१४–'ति' इति त्रुटितम् D.
१५–ईरि D.
१६–सुगन्धित्वात् D.
१७–एतस्मा० B, एवतस्मादेनम् D.
१८–दुहामश्वि० B. C.
१९–[ अनुपलब्धमूलमिदं वचनम् ]
२०–इतः पूर्वं केवलं B. पुस्तके 'अंशुं दुहन्तो अध्यासते गवि' इत्याधिपवणचर्मणः' इति मूलवाक्यमधिकं वर्तते ।
२१–०स्याधिपवणवण च० D.
२२–निगमाः B.
२३–सोमादौ B. C.
२४–निंसेते C.
२५–प्रथते C.
२६–[ऋ० १० । ९४ । ९]
२७–सोमच भचयितारः D. 'सोमस्य' इति पाठः स्यात् ।

वलक्षणेन[1] शब्देन निंसते। णिंसि[2] चुम्बने अन्यत्र[3]। इह तु सामर्थ्यादाह्वानार्थः[4]। अयमभिपूयते सोमः, इन्द्रं[5] गृहीत्वा क्षिप्र[6]मागच्छतं[7] मा विलम्बि[8]पातामित्येवमाह्वयन्तीत्ये[9]त्यर्थः।[10]अथवा णिंसि चुम्बनार्थ[11] एव[12]। ते सोमाद इत्यत्र द्वितीयार्थे प्रथमा। निंसत इत्यपि द्विवचनस्य[13] स्थाने बहुवचनम्। तान् सोमादो ग्राव्णो हरी[14] निंसाते चुम्बतः। कथम्? हर्योः ऋजीषं[15] भागः, ग्रावाणश्च ऋजी[16]षलिप्ताः। तेन तानेव[17]दयं हरी चुम्बतः। एवं[18]मभिषवव्यापारद्वारेण अंशुं सोमं दुहन्तो अध्यासते गवि अधिषवण[19]चर्मण उपरीत्यर्थः। तेभि[20]स्तैर्दुग्धं क्षारितं पपिवान्[21] पीतवान्[22], सोम्यं सोममयं मधु, इन्द्रो वर्धते वीर्येण, प्रथते शरीरेण, वृषायते वृष इवाचरति[23] यथा हसो[24] वृषः, एवं[25] युद्धार्थि सर्वमारोहयन्[26] भ्रमतीत्यर्थः।

अंशुः शमष्टमात्रो भवति[27]। अंशुः कस्मात्? शमष्टमात्रो व्याप्तमात्रः पीतमात्रः[28] सुखो भवतीत्यर्थः। 'अपाम सोममृता[29] अभूम[30]' इति श्रुतेः। शमो मकारोऽशोमेध्ये[31]मनु-

१–०ववणल० C.
२–निंसि C.
३–'अन्यत्र' इति त्रुटितम् D.
४–'आह्वानार्थः' इति त्रुटितम् D.
५–इद D. ६–शीघ्र० D.
७–'गच्छतं' इत्येव पाठः D.
८–०लम्ब्यता० D. ९–०माह्वय० C.
१०–'अथवा' इत्यस्मात्पूर्वं केवले D. पुस्तके दुर्गनाम्ना कश्चन पाठ उद्धृतो वर्तते। स चेत्थम्–"'दुर्गवृत्तौ–'यदा ग्रावाणो (मुद्रितपुस्तके 'यदा' इत्यस्मात्प्रागेव 'ग्रावाण' इति वर्तते) ऽभिषवकर्मणि प्रवर्तन्तेऽथ तदा हरी इन्द्रस्याश्वौ यज्ञागमनार्थमेतेषां शब्दमुपश्रुत्य संस्कृतं सोमं मन्वानौ रथे योगमिच्छन्तौ आत्मनो (मुद्रितपुस्तके 'आत्मना' इति पाठः) ऋजीषं भक्षयिष्यन्ताविन्द्रश्च सोमं पाययिष्यन्तौ स्वयमेव निंसते नीचैर्नमेते युक्तौ आवां हे इन्द्र! गच्छ यज्ञायतने संस्कृतः सोम इति। तदैव च ऋत्विजोऽपि त्वरमाणा इन्द्रोपस्थानकालमभ्यग्रं मन्वानाः' एवं दुर्गः"।
११–चुम्बन D. १२–शाप B. C.
१३–०चन स्थाने D. १४–हरि C.
१५–हर्यो ह्वजीषं भागं B. हर्यो ह्य ऋजी० C.
१६–०श्चात्रीरवलिप्ताः D.
१७–अत्र 'न' इत्यधिक वर्तते B. C.
१८–एवाभिष० B. C. १९–०पवचर्म० D.
२०–तेहि द तैदुग्धं C. २१–पविवान् C.
२२–'पीतवान्' इति त्रुटितम् B. C.
२३–इव चर० D. २४–हृशो D.
२५–ततो D. २६–०यंत् C.
२७–इदं मूलवाक्यं नास्ति C. D.
२८–वीतमात्रः C. २९–सोमं मृता C.
३०–[ऋ० ८।४८।३]
३१–०रोऽशो मध्य० B., ०रोशेम्मध्य० C.

प्रविष्टोऽनुस्वारीभूतः[1] उकारश्च[2] प्रत्ययः। विकार[3]विकारिणोरभेदोपचारेण सोऽयमित्य[4]भिसम्बन्धात्तद्धिताभावः।

अननाय शं भवतीति वा[5]। अननाय चिरंजीवनाय सुखो भवतीति वा। रसाय[6]नायनसोमाभिप्रायमेतत्। अयमेव वा देवतातृप्तिद्वारेण यज्ञनिर्वृ[7]त्तिद्वारम्, वर्ष[8]हेतुत्वेन सर्वभूता[9]नां[10] जीवनाय सुखो[11] भवतीति। अस्मिन्पक्षे अनेर्धातोः-अं, शमर्थे[12] शकारः, उकारश्च[13] प्रत्ययः।

चर्म चरतेर्वा, उच्चृत्तं भवतीति वा[14]।

[15]चर्म-चरतेर्मनिन् प्रत्यये[16] कृते[17]। चरितं हि तच्छरीरे[18] भवति[19]। चरति वा[20] तत्र, अभिषवकाले सोममुपेत्य। उच्चृत्तं[21] उच्छिन्नं भवतीति वा।

अथापि चर्म च श्लेष्मा च[22]।

अथा[23]पीत्यादि चर्मणः प्रदर्शितत्वात् श्लेष्मार्थ[24]मुदाहरणम्। श्लेष्मण[25]श्चर्मविकारत्वात् विकार[26]स्यापि कृत्स्नवन्निगमप्रदर्शनम्। 'गोभिः सन्नद्धो असि वीळयस्व[27]' इति रथस्तुतौ। गोभिः सन्नद्ध इति वक्ष्य[28]माणमुदाहरणं रथस्तुतौ चतुर्दशे[29]। अत्रापि चर्मभिर्ग्रथितः[30] श्लेष्मणा च संश्लेषितो न वर्धत इत्यर्थः।

---

१–०ष्टोऽनुसारी० B. ०ष्टोनुसारी C.
२–उश्च D.
३–'विकार' इति त्रुटितम् C.
४–सोममभि० D.
५–इदं मूलवाक्यं नास्ति C. D.
६–'न' इति त्रुटितम् D. ७–निवृत्ति C.
८–वर्म B. C. ९–०र्भमू० D.
१०–०ता जीव० B. ०ताजीव० C.
११–'सुखः' इति नास्ति B C.
१२–शम शः D.
१३–उश्च D.
१४–इदं वाक्यं नास्ति C. D.
१५–चर्मेहत इनि चर्म C. चर्मेहत इति D.
१६–०त्ते मनि प्रत्य० D. चरतिः।
१७–'कृते' इति नास्ति D.
१८–तच्छरी० C.
१९–'भवति' इति नास्ति D.
२०–'वा' इति नास्ति D.
२१–उच्छृतं D.
२२–इदं मूलवाक्यं नास्ति C. D.
२३–अथावी० C.
२४–श्रेष्ठत्वमु० B. श्लेष्मत्वमु० C. श्लेषार्थमु० D.
२५–श्लेष्माण० D.
२६–विकार विकारस्यापि B. C.
२७–[ऋ० ६।४७।२६] इदं मूलवाक्यं नास्ति C.D.
२८–वक्ष्मा० C.
२९–[नि० ९।१२]
३०–ग्रथिते श्लेष्मा च संश्लिपितो नद इत्यर्थः D.

अथापि स्नाव च श्लेष्मा च[1]।

स्नावार्थमुत्तरमुदाहरणं वक्ष्यमाणमिषुस्तुतौ[2]। तत्रैव स्नाव्ना[3] श्लेष्मणा चेत्यर्थः।

ज्यापि गौरुच्यते गव्या चेत्ताद्धितम्, अथ चेन्न गव्या गमयतीषूनिति[4]।

ज्यापीत्यादि[5]। गव्या चेत् गोविकार[6]श्चेत्[7] स्नावनिर्वर्तिता चेत्, ताद्धितं तद्धिताभिधेयविकारविषयं गोशब्दाभिधानम्। अथ चेन्न गव्या, मौर्वी मौञ्जी वा स्यात्, तथा सति गमिक्रियायोगादेव गौः। न[8] हि तामन्तरेण गमनमिषोः सम्भवतीति हेतुकर्तृत्वेन विवक्षा।

[इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
पञ्चमः खण्डः[9]।]

---

१–इदं मूलवाक्यं नास्ति C. D.

२–अत्रानुपदमेवोच्यमानं 'गोभिः सन्नद्धा पतति प्रसूता' [ऋ० ६।७५।११] इत्यादि मन्त्रवाक्यम्।

३–स्नाया C. स्नाम्ना D.

४–इदं मूलवाक्यं नास्ति C. D.

५–ज्यावीत्या० C.

६–'गो' इति त्रुटितम् B., चे गोवि० D.

७–चे स्नाव० D.

८–गौ हि ता० B. गौ ह हि ता० C.

९–अत्र हस्तलिखितपुस्तकेषु खण्डसमाप्तिर्न निर्दिष्टा।

## [ अथ षष्ठः खण्डः ][1]

उदाहरणम्—

वृक्षेवृक्षे नियता मीमयद्गौस्ततो वयः[2] प्र पतान् पूरुषादः[3] ।
अथेदं विश्वं भुवनं भयात इन्द्राय सुन्वदृ[4] ऋषये च शिक्षत्[5] ॥

वसुक्रस्यार्षम्। वृक्ष इति वृक्षविकारत्वाद्धनुरुच्यते। धनुषि[6] धनुषि इन्द्रस्य स्वभूते नियता निबद्धा[7], मीमयत्-शब्दं करोति आकृष्यमाणा। काऽसौ ? गौर्ज्या। ततः[8]-ततश्च ज्यातः। ततो वाऽनन्तरम्। वयः-लुप्तोपममेतत्। वय इव पक्षिण[9] इव गन्तारो वा इषवः। प्रपतान्[10] प्रपतन्ति[11] पुरुषादः पुरुषाणामत्तारो मारयितार इत्यर्थः। अथशब्दो हेतौ। एतस्माच्चोक्तात्[12]कारणादिदं विश्वं सर्वं भुवनं भूतजातं[13] इन्द्राद् भयात्[14] बिभेति। इन्द्राय इन्द्रार्थं सुन्वत् सोमाभिषवं कुर्वदपि। ऋषये च ऋषिर्द्रष्टा[15] कर्मणाम्[16] ऋत्विग्भि[17]रभिप्रेतः। एतस्मै[18] च शिक्षत्-दक्षिणां ददत् अपि सोमयागं कुर्वदपीत्यर्थः।

वृक्षो व्रश्चनात्। यदा कदाचिच्छिद्यतेऽसाविन्धनार्थम्[19]। मीमयतिर्नैरुक्तधातुः शब्दार्थः, गौरमीमेदित्यादिषु[20] दर्शनात्। शेषं[21] भाष्यं मन्त्रव्याख्यानेन गतम्।

आदित्योऽपि[22] गौरुच्यते, न केवलं पृथिव्यादि। आदित्यशब्देनात्र[23] मण्डलमुच्यते नान्तरपुरुषः। यथा[24] 'स यश्चायं पुरुषे[25] यश्चासावादित्ये स[26] एकः' इति निगमसामर्थ्यात्।

---

१–हस्तलिखितपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति।
२–वयः C. ३–पुरुषादः C.
४–०न्वदृष० C.
५–[ ऋ० १०।२७।२२ ] 'वृक्षे वृक्षे०-शिक्षत्' इत्येव प्रतीकम् D.
६–०षि न धनु० C.
७–'बद्धा' इति त्रुटितम् D.
८–'ततः' इति नास्ति D. ९–पक्षिण C.
१०–प्रपतान् C. ११–प्रपतन्ति C.
१२–०स्माद्योक्ता D. १३–भूतजातं B, C.
१४–अन्तर्बिभेति D. १५–द्रष्टः C.
१६–कर्मणि D.
१७–०गादिरभि० D.
१८–'तस्मै' इत्येव पाठः D.
१९–'इन्धनार्थम्' इति नास्ति B, C.
२०–०मीमेत्या० D, अत्र 'दि' इति त्रुटितम्। ०मेदि इत्या० C, अत्र 'इ' कारोऽधिकः।
२१–'शेषं' इति त्रुटितं भाति D.
२२–०दित्यो गौरु० B. ०दित्यापगौ० C.
२३–आदित्शब्दे० B, D, अत्र 'त्य' इति त्रुटितम्।
२४–'यथा' इति नास्ति B.
२५–पुरुषो D.
२६–'स' त्रुटितम् D. [ तै० उ० २।८।१ ]

उदाहरणम्—

उतादः परुषे गवि सूरश्चक्रं हिरण्ययम्। न्यैरयद्रथीतमः ।

भरद्वाजस्यार्षम्। उतोऽप्यर्थे। अद इत्यपि द्वितीया सप्तम्यर्थे। अप्यमुष्मिन् स्वरवयवैः पर्वभिः, कालपर्वभ्यां वा तच्छब्दनाम्यामहोरात्राभ्यां वा पर्ववति, भास्वरे वा, गवि गन्तरि आदित्यमण्डले स्थित इत्यर्थः। कोऽसौ? सूरः। धर्ता चक्रम्, चक्राकृति देवादित्यमण्डलम्। हिरण्ययम्-उज्ज्वलवर्णत्वात्। हिरण्मयमेव वा। न्यैरयत्-नियतमुदयास्तमयाय प्रेरयत्। रथीतमः-अन्येऽपि रथिनः सन्ति, अयं तु मुहूर्तमप्यनवस्थितरथ इत्यतो रथीतमः। अतिशयेन रथीत्यर्थः। अथवा ब्राह्मणचक्रमिति दर्शनार्थकशब्दः समूहवचनः। तत्रात्र सामर्थ्यादुदकस्येयाह न यस्य कस्यचित्। उदकसमूहं पृथिवीतो रश्मिभिरात्मानमुज्ज्वलन्तं प्रति प्रेरयति भौमान् रसानादत्त इत्यर्थः। अथवा हिरण्ययशब्देनोदकमुच्यते 'हिरण्यदा दित्यन्नमस्मै' इति मन्त्रान्तरे दर्शनादुदकात्मकं चक्रमित्यर्थः।

१—[ ऋ० ६।५६।३ ]
२—'न्यैरयद्रथीतमः' इति मन्त्रभागमारभ्य 'हिरण्ययं' इत्यन्तः पाठो B. C. पुस्तकयोस्त्रुटितः।
३—०यद्रथीतमः B.
४—नियत उद० D.
५—०याय च प्रेर० B. C.
६—'अन्येऽपि रथिनः' इत्यारभ्य 'रथीतमः' इत्यन्तः पाठस्त्रुटितः B. C. एतदानुपूर्वीक एव पाठोऽत्र दुर्गवृत्तावपि वर्तते।
७—'अतिशयेन रथीत्यर्थः' इति पाठस्त्रुटितः D.
८—'अथवा' इत्यारभ्य D. पुस्तके दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते। तथाहि— "दुर्गवृत्तौ-'चक्रं लवचण (मुद्रितपुस्तके 'क्षणलव' इत्येवमपि पाठः) निमेषत्रुटिमुहूर्ताहोरात्रार्धमासमासर्त्वयनसंवत्सरादि (मुद्रितपुस्तके 'आदि' इति नास्ति) लक्षणं कालचक्रं ('सर्वभूतहारि' इत्यपि मुद्रितपुस्तके) हिरण्मयं हिरण्मयं ('हैरणमयं' इति 'हिरणमयं' इति च पाठो मुद्रितपुस्तके) सर्वभूतविनाशस्थितिहेतु न्यैरयत् नित्यमीरयति।... एवंगुणयुक्तः पूषा, तं वयमभिप्रेतार्थसिद्धये स्तुमः' एवं दुर्गः"।
९—अत्र 'क' इति मुद्रितम् B. C.
१०—'आद' इति नास्ति D.
११—'न यस्य' इति नास्ति B. C.
१२—०मूहः प्रथितो D.
१३—हिरण्मय C. D.
१४—[ 'हिरण्यदा ददत्यन्नमस्मै' ऋ० ३।३५।१० ] हिरण्यदादित्यन (र्ष C.) मस्मा B.
१५—तद्वदु० D.
१६—०दात्म० B. C.

अथाप्यस्यैको[1] रश्मिश्चन्द्रमसं प्रति दीप्यते, तदेतेनोपेक्षितव्यम्, आदित्य-तोऽस्य दीप्तिर्भवतीति[2]।

अथाप्यस्यादित्यस्य[3] एको रश्मिश्चन्द्रमसं[4] प्रति विशेषेण[5] दीप्यते। स्वयं चन्द्र-मण्डलमनुप्रविश्य दीप्तिं करोति[6]। यद्वशादस्य[7] वृद्धिक्षयौ भवतः। तथा च वक्ष्यति। 'यथा देवा अंशुमाप्याययन्ति'[8] इति। तदेतेन 'सुषुम्नः'[9] इत्यनेन मन्त्रेण उपेक्षितव्यं[10] विचारयितव्यम्[11]। आदित्यतोऽस्य[12] दीप्तिर्भवति न स्वत इति।

सुषुम्णः[13] सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम। स न[14] इदं ब्रह्म[15] क्षत्रं पातु[16] तस्मै स्वाहा वषट्[17] ताभ्यः स्वाहा[18]।

सुषुम्णः[19] आह्लादकत्वात् सुसुम्णः[20]। सूर्यरश्मिः[21]-सूर्यरश्मिना व्याप्तत्वात् सूर्यरश्मि-रूपश्चन्द्रमा गन्धर्वः, भोक्तृत्वात्तस्य। भोग्यत्वसामान्यान्नक्षत्राण्येवाप्सरसः[22]। यथैत-[23]रेषां गन्धर्वाणां मेनकाद्याः[24]। भेकुरयो नाम[25]-भा दीप्तिस्तां कुर्वत[26] इति भेकुरयः। भाशब्द-

---

१–०श्चोऽस्य B. २–इदं मूलवाक्यं नास्ति C. D.
३–'आदित्यस्य' इति नास्ति D.
४–रश्मिश्च० C. ५–प्रतिपन्न विविशे० D.
६–दीप्ति केरोति C. ७–०दस्य B.
८–[ निरु० ५।११ cf. यं देवा etc. अथ० ७।८१।६ cf. मैत्रा० सं० ४।९।२७ ]
९–सुषुम्ण B. १०–तदुपेक्षि० B. C.
११–'विचारयितव्यम्' इति नास्ति B
१२–'आदित्यतः' इत्यस्मात्पूर्वं केवलं D. पुस्तके दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते। स चेत्थम्–"दुर्गवृत्तौ 'येयमस्य चन्द्रमसो दीप्तिः ज्योत्स्नेयं ('ज्योत्स्ना सेयं' मुद्रितपुस्तके) आदित्यरश्मनु ('रश्मेरनु' मुद्रितपुस्तके) प्रह्लादिकास्य भवति। अम्मयं हि चन्द्रमसो मण्डलं तत्तेजःसम्बन्धाद् दीप्तिमद् भवति। ततः सर्वा दिशः प्रकाशयति' एवं दुर्गः"।
१३–सुषुम्नः C. D. १४–'न' इति मुद्रितम् B. C. D.
१५–'इदं ब्रह्म क्षत्रं' इति द्विधा लिखितम् C.
१६–वातता, वान्तु C. पान्तु D.
१७–वाट् इति मुद्रितम् B. स्वाहा ताभ्यः स्वाहा वग् C. स्वाहा वषट् D.
१८–[ यजु० १८।४० ] स्वाहेत्यनन्तरं B. पुस्तके 'भग' इति पाठो वर्तते। इदमपि पदं C. पुस्तके 'वग्' पदवत् लिपिप्रमादादपभ्रंशतां गतमिति भाति। वस्तुतस्त्वत्र प्रथमस्वाहापदानन्तरं 'वषट्' इति पाठो युक्तः। वेदे तु 'वाट्' इत्येव पाठः।
१९–सुषुम्नः आह्लादकत्वात् C. आह्लादकत्वात् सुषुम्नः D.
२०–'सुसुम्णः' इति नास्ति D.
२१–'सूर्यरश्मिः' इति प्रतीकपदं नास्ति B.
२२–०त्राणि चाप्स० B. २३–स यथै० D.
२४–मेकोद्याः B. C.
२५–'नाम' इत्यत्र नास्ति B. C.
२६–कुर्वन्तीति C. कुर्वन्तीति D.

स्याकारस्यैकारश्छान्दसः[1]। चरकाणां[2] वेकुरय[3] इति पाठः तेषां वकारस्यापि हकारश्छा[4]न्दसः। नामशब्दः प्रसिद्धस्य[5]प्रदर्शनार्थः। दीप्तिकारिण्यः प्रसिद्धा इत्यर्थः। स नः-सोऽस्माकमिदं ब्रह्म क्षत्रं ब्राह्मणान् क्षत्रियांश्चेत्यर्थः। पातु रक्षतु। तस्मै स्वाहा वषट्। नेदं 'वश कान्तौ'[6] इत्यस्यान्यस्य वा कस्यचिद्धातोराख्यातम्, निघातप्रसङ्गात्। किन्तर्हि? निपातोऽयं प्रदानार्थो वषट्[7]कारपर्यायः। चरकाणां[8] वषट् इति[9] पाठः। तेषां वेषट्[10] शब्दस्यैव वा ह्रस्वत्वं छान्दसम्, निपातान्तरं[11] वा तदर्थम्। यद्यपि स्वाहाकारोऽपि[12] प्रदानार्थ[13] एव, तथाप्यत्र द्वयोः प्रदानार्थयोः वचनात्[14] सह प्रयोगः। एवं हि शतपथे वचनम्—'उभाभ्यामेव वषट्कारेण स्वाहाकारेण[15] च पुंसे जुहोति स्वाहाकारेण[16] स्त्रीभ्यः पुमांसमेवैतद्[17]वीर्येणाभ्यादधाति[18]' इति। ता इदं ब्रह्म क्षत्रं पान्तु रक्षन्तु। ताभ्योऽप्सरोभ्यः[19] स्वाहा।

सोऽपि गौरुच्यते। 'अत्राह गोरमन्वत'[20] इति।

सोऽपि सुषुम्नोऽपि[21] यथा गौरुच्यते तथेदमुदाहरणम्-'अत्राह' इति। तदुपरिष्टात्[22] ऐकपदिके[23] व्याख्यास्यामः।

सुषुम्नस्या[24]भिधानादन्येभ्यो व्यावृत्तिर्मा[25] विज्ञायीत्यत आह—

सर्वेऽपि रश्मयो[26] गाव उच्यन्ते।

---

१-०श्छान्दः C. २-चरणकाणां B.

३-न्वेकुरयः C. भेकुर D.

४-अत्र 'तेषां भस्यापि छान्दसः' इत्येव पाठः D. वस्तुतस्त्वत्र 'तेषां भस्यापि ('भकारस्यापि' इति वा) वकारश्छान्दसः' इत्येव पाठो युक्तः। हकारस्य त्वत्रावकाश एव नास्ति, स चापि पुनर्बकारस्थाने।

५-'नाम प्रसिद्धौ' इयानेव पाठः D.

६-[धा० २।७०]

७-निपातोपप्रदर्शनार्थो वावकारपर्यायः D.

८-चरर्णाणां B., चकाराणां C.

९-वषधिति C. ०षट् इति ति पाठः D.

१०-वाषट् C. वा वषट् D. ११-दपाता० C.

१२-०कारो वि० C. १३-प्रदर्शनार्थं D.

१४-वचनात् हेतोरित्यर्थः।

१५-'स्वाहाकारेण च' इति त्रुटितम् D.

१६-०रेण च स्त्री० C.

१७-'वै' इति त्रुटितम् D.

१८-[शत० ]

१९-०भ्यश्च स्वा० D.

२०-इदं मूलवाक्यं नास्ति C. D.

२१-सुषुम्णः D.

२२-०'ष्टात्' इति त्रुटितम् B.

२३-[निरु० ४।२५] 'अत्राह' इति ऋक् [ऋ० १।८४।१५]

२४-सुषुम्ण० B.

२५-व्यावृत्तीर्मा C. ०भ्योपि वृत्ति० D.

२६-अत्र 'आदित्यस्य' इत्यधिकः पाठः C.

सामान्येन[1] यदि सर्वं उच्यन्ते, सुपुष्टस्यापि तेनैव सिद्धम्, किं विशेषेण कथ्यते[2]-सोऽपि[3] गौरुच्यत इति। अन्येषां सामान्येन गोशब्दाभिधानीयत्वम्, अस्योक्तविशेषस्य सामान्येन विशेषेण[4] चेत्यस्य विशेषप्रतिपत्त्यर्थं व्यस्तसमस्तप्रदर्शनम्।

[ इति सप्तमस्या-[द्वितीयस्या-] ध्यायस्य
षष्ठः खण्डः[5]। ]

---

१–सामान्यौ C.
२–कल्प्यते C.
३–सा गौरु० B.
४–०षेणवेत्य० B. ०पर्णवेत्यर्थं प्रतिप० D.
५–हस्तलिखितपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो नास्ति।

## [ अथ सप्तमः खण्डः[1] । ]

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि ॥

दीर्घतमा विष्णुमाह । ता[3] तानि । वा[4]-व्यत्ययेन द्वितीयाद्विवचनमेकवचनस्य[5] स्थाने । त्वां विष्णुं स्तुवन्, वास्तूनि गृहाणि[6] निवासस्थानानीत्यर्थः[7] । उश्मसि कामयामहे । गमध्यै गमनायात्मनः । अथवा वामिति[8] षष्ठीद्विवचनम् । दम्पती पतिपत्नी[9] यजमानावुच्येते, युवयोर्गमनाय कामयामहे वयमृत्विजः । यत्र गावो रश्मयः । भूरिशृङ्गाः श्रयणादिक्रियायोगात् शृङ्गस्थानीयत्वाद्वा[10] दीप्तिरत्र शृङ्गमुच्यते[11], बहुदीप्तयः[12] । अयासः-अयना[13] गमनशीलाः । क्रियाभेदादुत्तरोर्धर्चो भिन्नं वाक्यम्, अत एवमुच्यते । किञ्चात्र अहशब्दो[14] विनिग्रहार्थीयः । एष्वेव स्थानेषु । तदुरुगायस्य रसादानादिक्रियाद्वारेण बहुगतेः वृष्णः वर्षितुः[15], विषेर्वा[16] एतद्रूपम्, ऋकारोपजनेन । व्याप्तिरित्यर्थः[17] । विष्णोः स्वभूतं परमं पदं प्रकृष्टं[18] स्थानमादित्यमण्डलाख्यम् । अवभाति-अग्रे भाति, अग्रे दीप्यते । अर्वागिद् सर्वं कृत्वा भातीत्यर्थः[19] । भूरि प्रभूतम् । अथवा परमं पदं दिव एकदेशः परार्ध्यशब्दवाच्यः[20][21], तेन च तात्स्थ्यात्मण्डलं[22] लक्ष्यते । कुत एतत् ? 'दिव आहुः परे अर्धे

१-हस्तलिखितपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति ।

२-[ऋ० १ । १५४ । ६] 'ता वां वास्तू० भूरि' इत्येव प्रतीकम् D.

३-'ता' इति नास्ति D. ४-वां C.

५-०चन स्थाने B. ६-ग्रहाणि C.

७-'नि' इति नास्ति D.

८-वामीति C.

९-तिपत्नी C. अत्र 'प' इति त्रुटितम् । 'पतिपत्नी' इति नास्त्येव D.

१०-'वा' इति नास्ति B. C.

११-शृंग उच्यते D.

१२-०दीप्ताः D.

१३-'अयना' नास्ति B. । अत्राणि C. पुस्तके 'अयास:' इत्येव पाठः ।

१४-०चात्राह अहशब्दो B. C.

१५-वृषि वृष्णो D.

१६-विषे वा B. C.

१७-व्याप्तमित्यर्थः D.

१८-प्रकृष्टस्थान० D.

१९-'अवभाति' इत्यारभ्य 'भातीत्यर्थः' इत्यन्तस्य वाक्यजातस्य स्थाने B. C. पुस्तकयोः 'अधोवभाति अधो (भ C.) दीप्यते' इत्येव पाठः । D. पुस्तकानुपूर्वीक एव पाठो दुर्बोधत्त्वादपि ।

२०-परार्ध्य० C.

२१-'वाच्य' इति त्रुटितम् B. C.

२२-तदर्थमात्मण्ड० D. कदाचिदत्र 'तादर्थ्यात्मण्ड०' इति पाठः स्यात् ।

पुरीषिणम्[१]' इति मन्त्रान्तरे दर्शनात्। तथा च भाष्यकारः-परमं पदं पराध्यर्स्थ[२]मित्याह। अवभाति-अवभासते ज्ञापयत इत्यर्थः। भूरीति[३] बहुनामधेय[४]मिति पठितस्यापि[५] निर्विवक्षया पुनर्वादः प्रभवतीति[६] सत इति कारकपरिग्रहार्थम्। प्रभवति हि तत्सर्वस्यानुग्रहाय।

पदं रश्मिष्वपि दीप्तिरिव[७] ज्वलन्नामसु पठितं शृङ्गं प्रसङ्गान्निराह[८]-श्रयतेः[९]। श्रितं[१०] हि तदाश्रितं मण्डले। 'शृणातेः'[११] वा हिंसार्थस्य। हिनस्ति हि तद्ग्रीष्मे[१२] प्राणिनः। शरणाय हिंसायै उद्गत-मूर्ध्वंगत[१३]मिति शृणातेरुद्गमेश्चेति पुनर्निर्वचनं[१४] द्विधातुजत्वेन[१५]। तमआदेर्हिंसार्थमित्यर्थः। अथवा शरणं रक्षा[१६], तदर्थमा[१७]द्विधातुजमेव, रक्षति हि प्राणिनः सस्यनिष्पत्त्यादिना।

शिरसो निर्गतामिति वा। शिरःशब्दान्निर्गमेश्च[१८] शिरस आदित्यान्निर्गतमित्यर्थः। 'असावादित्यः शिरः प्रजानाम्[१९]' इति श्रवणात्। अथवा 'शिर आदित्यो भवतीति[२०]' अयमपि वक्ष्यति। पशोरपि शृङ्गे एता[२१]न्येव निर्वचनानि[२२] यथासम्भवं योजनीयानि।

पादः-पद्यते[२३]र्गत्यर्थस्य। गम्यतेऽनेनेत्युक्तम्[२४]। स यस्मिन्निधीयते प्रतिबिम्बोदये[२५]समर्थे भूप्रदेशे[२६] कर्दमादौ[२७] तदपि पादसम्बन्धात् प्रतिबिम्बं पदमित्युच्यते[२८]। तथा च मन्त्रे विष्णोः परमात्मनः पादा[२९] रश्मयः, तन्निधानान्मण्डलं पदमुक्तम्[३०], स्थान[३१]सामान्यात्। यत्र गमिगन्धोऽस्ति तत्रैवम्[३२], कार्षापणपादादौ[३३] कथम्? इत्याह-पशुपाद इत्यादि। पशुपादे हि पादशब्द[३४]प्रवृत्तिनिमित्तं पादैकार्थसमवायिचतुर्भागत्वं नास्तीति[३५] तस्या-

---

१-[ऋ० १।१६४।१२]
२-०र्धस्थानमि० B. C. ३-भूरिति C.
४-०यमति C. ५-०स्यापि C.
६-०वतिति C. ७-०ष्वदीप्तिरुपज्व० D.।
८-०मारोह C. ९-[धा० १ । ९४५]
१०-शृतं C. ११-[धा० ९ । १८]
१२-तं भीष्मे B. C.
१३-'ऊर्ध्वगतं' इति त्रुटितम् D.
१४-पुनर्वच० D. १५-०जनं: आदे० D.
१६-याजा D. १७-तदर्थद्विधातु क्षेवे D.
१८-'०निर्गमेश्च । शिरस' इति त्रुटितम् B. निर्गच्छेत् D.
१९-[तै० ब्रा० १।२।३।३]
२०-[निरु० ४।१३]
२१-एतान्यपि D. २२-०चनीयानि B. C.
२३-[धा० ४।६०] सादवघाने गत्यर्थस्य C.
२४-०त्युक्तः C. D.
२५-०दयमर्थे C. ०योर्ध सम० D.
२६-भूतप्र० D. २७-कर्दमान B. कर्दमादनः C.
२८-पदमुच्यते D. २९-पादरश्मयः B.
३०-पादमु० B C. ३१-पदसा० D.
३२-तत्रेव C.
३३कार्षापणपादौ पदम् B. ०पणादौ क० D.
३४-०शब्दः प्र० B. ३५-०गत्वमस्ति D.

न्वयात् कार्षापणस्य श्लोकस्य वा चतुर्भागे पादशब्दः प्रवृत्तः । पशुपाद[2]समन्वयात् पशुपादं प्रकृती[3]कृत्य चतुर्भागलक्षणः[4] पादो निरुच्यत इत्याह-पशुपादप्रकृतिः प्रभागपाद इति । अन्वयस्य प्रकृत्या यो वा[5] यस्मिन् निरुच्यत इत्यभिप्रायः । अन्यपदेषु कथम् ? इत्याह-प्रभागपादसामान्यादित्यादि । चतुर्भागत्वं[6] त्यक्त्वा प्रभागपादं सामान्यत्वमङ्गीकृत्योच्यते । प्रभागस्य पादः पदनं गमनं तस्मात् सामान्यात् अन्यस्य पदेषु पदशब्द[7]प्रवृत्तिरिति ।

प्रसक्तानुप्रसक्तमुक्तम्, सम्प्रति लाघवार्थमतिदिशति—

एवमन्येषामपि सत्त्वानां सन्देहा विद्यन्ते, तानि चेत्समानकर्माणि समाननिर्वचनानि, नानाकर्माणि चेन्नानानिर्वचनानि यथार्थं निर्वक्तव्यानीति[8] ।

अत्र केचिदाहुः-यथा पृथिवीपश्वादयो गोशब्देन निगमपदान्तरसम्बन्धसामर्थ्यादुक्ताः, एवमन्येषामपि सत्त्वानां द्रव्याणां गोशब्दा[9]भिधायकत्वेन श्रुतिसम्बन्धात्[10] सामान्यात् सन्देहा जायन्ते, किं कत्राभिधीयत इति ? तद्यथा-'अलातृणो वल[11] इन्द्र व्रजो गोः[12]' इति । तत्र च मध्यमस्थाना[13] वागुच्यते । 'प्रति त्यं चारुमध्वरं गोपीथाय[14]' इति सोमः । 'सं[15] ई सत्येभिः सखिभिः शुचद्भिर्गोधायसम्[16]' इत्युदकम् । मन्त्रा उपरिष्टाद् व्याख्यास्यन्ते[17] ।

अन्ये त्वाहुः[18]-अनुक्रान्ते[19] गोशब्दे गमादीनामवसर[20] आह-एवम्[21] । यथा गौरित्यस्या[22]भिधेयं प्रति सन्देहः, तद्वदन्येषामपि ग्मादीनां सत्त्वानां गमनसम्बन्धसामान्यादित्यर्थः ।

---

१–तस्यापयात् B. C.
२–०दृथमन्व० B. C.
३–०पादः प्रकृतीत्यकृत्य B.
४–भगिः लक्षणपादो D.
५–यो वास्मि निरु० B. C.
६–०भागं त्यक्त्वा D. 'प्रभागपादसामान्यादित्यादि । चतुर्भागत्वं त्यक्त्वा' इति त्रुटितः B.
७–चशब्द० D.
८–'एवमन्येषामपि सन्देहा विद्यन्ते–निर्वक्तव्यानीति' इयत् प्रतीकम् B., 'एवमन्येषामपीत्यादि' इत्येव प्रतीकम् C. D.
९–०द्गोऽभि० B.
१०–'सम्बन्धात्' इति नास्ति B. C.
११–पल B, अयमपि C. पुस्तके ।
१२–प्रजो B. [ ऋ० ३।३०।१० । निरु० ६।२ ]
१३–तत्र मध्यस्थाना D.
१४–गोवीथाय C. [ ऋ० १।१९।१ । निरु० १०।३६ ]
१५–सरं B. सई C.
१६–[ ऋ० १०।६७।७ ]
१७–०ख्यायन्ते B. मन्त्रानुपरिष्टाद् व्याख्यास्यामः D.
१८–'अन्ये त्वाहुः' इति त्रुटितम् D.
१९–०क्रामन्ते B.
२०–मादीना० B. C.
२१–एव C. यावं D.
२२–०यन्याभि० B.

सत्त्वाद्यर्थ[1]प्राधान्यान्नामानि सत्त्वानि, यथा धात्वर्थप्राधान्याद्धातव आख्यातानीति । न केवलं ग्मा[2] पृथिवी, किन्तर्हि ? गमनमपि । त[3]स्योदाहरणम्:—

अधा होता न्यसीदो यजीयानिळस्पद[4] इषयन्नीड्यः[5] सन् ।
तं त्वा नरः प्रथमं देवयन्तो महो[6] राये चितयन्तो अनु ग्मन्[7] ॥

भरद्वाजस्यार्षम् । अध-अथ, एतस्मादेव पूर्वोक्तात् रक्षोऽसुराभिभवनसमर्थबलत्वात् कारणात् त्वं होता न्यसीद्[8]-निषण्णः, निषीदसि वा । यजीयान्[9]-यष्टृतरः । इळः-इळा[10]शब्दस्य छान्दसत्वादाकारलोपः, इळायाः पृथिव्या अवयवभूते पदे-स्थाने वेद्याख्ये[11] । इषयन्[12] अकार उपजनः । अन्नानि हविर्लक्षणानि इच्छन्[13] । ईड्यः सन् य एवं कर्मासि, तं त्वा नरो मनुष्या अन्याभ्यो देवताभ्यः प्रथमं देवयन्तो देवान् यष्टुमिच्छन्तः । महः-चतुर्थ्यर्थे[14] एषा प्रथमा । महते राये[15] धनाय चितयन्तश्चेतयन्तो[16] जानन्तः । किम् ? सामर्थ्यात् तव माहात्म्यम् । अनुग्मन्-अनुगच्छन्ति त्वामेवाश्रयन्ती[17]त्यर्थः ।

न केवलं पृथिवी, वातोऽपि । उदाहरणम्—

कद्धिष्ण्यासु वृधसानो अग्ने कद्वाताय प्रतवसे[18] शुभंये[19] ।
परिज्मने नासत्याय[20] क्षे ब्रवः[21] कदग्ने रुद्राय नृघ्ने[22] ॥

वामदेवस्यार्षम्[23] । कत्-कदा[24] । धिष्ण्यासु-धिष्ण्येषु स्वेषु स्थानेषु । वृधसानः-प्रथमासमानाधिकरणे[25] शानचो गुणाभावो व्यापत्तिश्च मकारस्य सकारेण[26] । दैव्ये होतृत्वे वर्तमानो[27] वर्धस इत्यर्थः । हे अग्ने ! कत्-कदा[28] वाताय । किंविशिष्टाय ? प्रतवसे[29] प्रकृष्ट-

---

१–०त्वाद्यप्राधान्यान्ना० D. २–गौः D.
३–ततोऽस्योदा० B. ४–०निद्स्पद० B. C.
५–०नीध्यः B. C. ६–महोदराये चिन्त० B.
७–[ऋ० ६।१।२] 'अधा होता न्यसीदो यजी० अनुग्मन्' इत्येव प्रतीकम् D.
८–यसीद निषण्णः B. C.
९–जीयात् B. C. १०–ग़ुदा B. C.
११–स्थाने: पद्याख्ये C.
१२–इषयन् D. १३–इच्छन् D.
१४–चतुर्थ्यां D. १५–रायये D.
१६–चिन्तयन्तो जानन्तः B.
१७–०श्रयती० C.
१८–प्रतपसे B. मतवसे C. १९–शुभये C.
२०–न सत्याय B. २१–ब्रवः B.
२२–रुद्रानृगे B. [ऋ० ४।३।६]
२३–०देवार्षम् D. २४–कदारिति B.
२५–प्राथमानाधिकरणे शानच गुणभावो C. [cf. पा० ३।२।१२४]
२६–'प्रथमासमा०' इत्यारभ्य 'सकारेण' इत्यन्तः पाठस्त्रुटितो भाति D.
२७–वमानो B. २८–रहु B. कदपात० C.
२९–प्रतपसे B. मतवसे C.

घलाय। शुभंये-शुभंयवे[1] इति प्राप्ते शुभंयुशब्दस्यायं छान्दस[2] उकारलोपः, ततश्चतुर्थी। सर्वभूतानां कर्तव्यत्वेन[3] शुभेन तद्वते। परिज्मने-सर्वतो गन्त्रे। नासत्याय-सत्यायैव[4]। क्षे-'क्षि हिंसायाम्'[5] इत्यस्य उप्रत्यये[6] टिलोपे चतुर्थ्यामेतद्रूपम्। भौमानां[7] रसानां हिंसित्रे[8] शोषयित्रे इत्यर्थः। एवंगुणविशिष्टाय[9] घातस्यार्थाय तेनोपध्यायमानः[10]। ब्रवैः[11]-ब्रवीषि, कदा[12] प्रज्वलयिष्यसीत्यर्थः[13]। कत्-कदा। रुद्राय[14] नृम्णे[15]-शत्रुमनुष्याणां[16] हन्त्रे। एवंगुणविशिष्टाय रुद्राय वाताय[17] चैवंगुणविशिष्टाय[18], एवंगुणविशिष्टं वातं रुद्रंश्च[19] यष्टुमित्यर्थः। स्तुतिर्वा[20]। कदा ब्रवैः[21] ब्रवीषि कथयिष्यसि[22]।

अथवा[23] दैव्ये होतृत्वे व्यवस्थितोऽग्निराशास्यते[24]। कदा स्वेषु स्थानेषु वर्धमानो[25] हे भगवन्! अग्ने! उक्तगुणाय वाताय[26] रुद्राय[27] च। प्रदर्शनार्थं चैतत्। अन्याभ्योऽपि देवताभ्यो मुख्य[28]यजमानस्यैतानि[29] हवींषि इति ब्रवः ब्रवीषि[30] कथयसि। दैव्ये होतृत्वे वर्तमानस्तुतीर्वा[31] कदा ब्रवीषि। कदा[32]ऽस्माकमयं[33] मनोरथः सम्पद्यत इत्यभिप्रायः।

तथाऽन्तरिक्षमपि। उदाहरणम्—

यस्तस्तम्भ सहसा वि ज्मो[34] अन्तान् बृहस्पतिस्त्रिषधस्थो रवेण।
तं प्रत्नास ऋषयो दीध्यानाः पुरो विप्रा दधिरे मन्द्रजिह्वम्[35] ॥

१–शुभंजवे D.
२–'शुभंयुशब्दस्याय छान्दस उकारलोपः' इत्यस्य स्थाने 'उकारलोप आर्षः' इत्येव पाठः D.
३–कर्त्तव्येन B. C. ४–नासत्यायैव D.
५–[धा० ५।३०] हिंसायाम् C.
६–षप्रत्यये C, उत्प्रत्यये D.
७–भौमरसानां B. C. ८–हंसि त्रे D.
९–०शिष्ट धाता० D.
१०–०पधायमा० C. ०पध्मायमा० D.
११–ब्रुवः B. 'ब्रवः' इति नास्ति D.
१२–कदिति कदा D.
१३–०सीत्येर्थः C. 'इत्यर्थ' इति नास्ति D.
१४–रुद्रा रुद्राय B.
१५–नृफेन B. नृहेन C. निम्ने D.
१६–शत्रूणां नृणां D. १७–पाताय B.
१८–'एवंगुणविशिष्टाय' इति द्विधा लिखितम् C.
१९–रुद्रश्चं B. रुद्रश्चं C. २०–श्रुतिर्वा D.
२१–ब्रुवः B. C.
२२–'कथयिष्यसि' इति नास्ति D. २३–अथा B. C.
२४–व्यवस्थिरोऽग्नि० B.C., ०त्वेष्यग्निरवस्थितोऽग्नि D.
२५–वद्धमानो B. C. २६–वाताय B. C.
२७–'रुद्राय' इति त्रुटितम् D.
२८–दुष्य० B. मुष्य० C. २९–०तानि B.
३०–'ब्रवीषि' इति नास्ति B. C. ३१–स्तुतिर्वा B.
३२–तदा D. ३३–०स्मातम० B.
३४–त्रिज्मो C.
३५–[ऋ० ४।५०।१] 'यस्तस्तम्भ० मन्द्रजिह्वम्' इत्येव प्रतीकम् D.

वामदेवस्यार्षम्[1]। यैः[2] तस्तम्भ-विष्कम्भितवान्, बद्धवान्, घनघटाभिर्[3]वेष्टितवानित्यर्थः। सहसा बलेन माहात्म्यातिशयेन। ज्मोऽन्तात्-अन्तरिक्षस्य प्र[4]देशात्। बृहस्पतिस्त्रिषधस्थः-त्रिषु स्थानेषु सह स्थाता। रवेण शब्देन[5] द्युवियद्[6]वनीनां गर्जितध्वनिना[7] पूरयितेत्यर्थः[8]। तं प्रत्नासः-पुराणा[9] ऋषयो मरीच्यादयः। दीध्यानाः-अत्यर्थं[10] ध्यायन्तः। किम्? सामर्थ्यात् वर्षेदिति। पुरः-अग्रे सर्वकर्मणामादावेवेत्यर्थः। किं कारणम्? अन्न[11]स्थितिकारकत्वाद् भूतानाम्, तस्य च[12] वर्षहेतुत्वात्[13]। आह च-'अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः[14]' इति। विप्रा-मेधाविनो दधिरे-शुद्धोऽप्ययं दधातिरवपूर्वो[15] द्रष्टव्यः। अवधारितवन्तः, सर्वकर्माणि[16] तत्पुरस्सराणि ज्ञातवन्त इत्यर्थः। ऐतिहासिकपक्षेण वा पुरो दधिरे पुरोहितं स्थापितवन्त इत्यर्थः। इन्द्रस्य राज्याभिषेकसमये कृतवन्तो ब्रह्माधिपत्यार्थमित्यर्थः[17]। ज्म इति च दिवोऽन्तरिक्षस्य पृथिव्याश्चेति[18] द्रष्टव्यम्। रवेणा (व्यापरेण शब्देन दीध्यानाः, सामर्थ्यातिशय[19]समन्वितोऽयमिति योज्यम्। मन्द्र[20]जिह्वम्-जिह्वेति वाङ्[21]नाम। गर्जितलक्षणा इतरा वा मन्द्रा कल्याणी वाग्[22] यस्य तम्। एवमुक्तव्यतिरिक्तानामपि सर्वशब्दानां समानश्रुतित्वात् सन्देहा भवन्ति, तेषु सर्वत्र निगमपदेऽन्त[23]-) रसम्बन्धसामान्यादर्थे[24]ऽपि निश्चयोऽपेक्ष्यत[25] इति।

तानि चेद्गागादीनि समान[26]कर्माणि समानक्रियाणि समान[27]निर्वचनानि यथैकं तथान्यान्यपि नानाक्रियाविषयाणि। यथा गोशब्दः पृथिव्यां पशौ[28] गमनात्, तथा ग्मा

१—०देवार्षम् D. २—वि B. C.
३—०घनाभिर्वे० D. ०घनादिभिर्वे० C. ०घटाभिर्वे० D.
४—'प्र' इति नास्ति B.
५—गोशब्देन D.
६—द्युवय० B. द्युवयदपनी० C.
७—वर्हित D. ८—०यते० B.
९—०पक्ष० D. १०—विवरणम् D.
११—अणस्थिति० C. अन्तस्थितिकरत्वात् D.
१२—'च' इति नास्ति D.
१३—०हेतुकत्वादाह D.
१४—[भ० गी० ३।१४]
१५—दधातिः B. धातिः C.
१६—सर्वाणि तत् D.
१७—०पत्यर्थ० B. ०त्यार्थमित्यार्थमि० C.
१८—पृथिव्यश्चे० C. १९—०तिशयः स० C.
२०—मन्त्र ० C. २१—'म' इति त्रुटितम् C.
२२—वा यस्य B. वागस्य C.
२३—( ) एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः D.
२४—०र्थे विनि० C.
२५—०श्चये यावपेक्ष्य इति B. ०श्चयो पेक्ष्यत इति C.
२६—'समानकर्माणि' इति नास्ति B. C.
२७—समानानि निर्व० B.
२८—०व्यां गौगि० B. C.

गमनादिति। तथा क्ष्मा[3]द्रूपः। क्ष्मा क्षि[1]-(यतेः। तथा पुष्यतीति पूर्वा[2]ः पृथिवी। रश्मि-
पोपमित्यादिभ्यः नानाकर्माणि नानाक्रियाणि चेक्षन्ता[4]। न[5]ैवं निर्वक्तव्यानि, ग्मा ज्मा क्ष्मा[6]
इति[7]। यथार्थम्[8]-अर्थानुरूपेण वाक्यप्रकरण[9]-) सामर्थ्यान्निर्वाच्या[10]नि।

[11]इतीमान्येकविंशतिः पृथिवीनामधेयान्यनुक्रान्तानि।

इतीमानी[12]त्यादि। इति श[13]ब्दः प्रकारार्थः। एतेन[14] प्रकारेण 'एकविंशतिः पृथिवी-
नामधेयानि' इति प्रदर्शनम्, न[15] परिगणनम्, रसाधराधरण्यादीनां दर्शनात्, लिङ्गाच्च
पृथिवीनामधेयानीत्य[16]पठिताभिधानात्।

सन्देहा विद्य[17]न्त इत्युक्तस्य सन्देहस्य स्वयमेव प्रदर्शनार्थमाह—

तत्र निर्ऋतिर्निरमणाद् ऋच्छतेः कृच्छ्रापत्तिरितरा। सा पृथिव्या सन्दिह्यते।
तयोर्विभागः। तस्या एषा भ[18]वति।

तत्र तेषु पृथिवीनामसु निर्ऋतिः पठ्यते। सा च प्रलयाधिदेवता तुल्यश्रुति-
त्वात् पृथिव्या सन्दिह्यते। तयोः पृथिवीन्द्रियप्रलयदेवतयोर्यो विभागोऽर्थभेदाश्रयस्तं
दर्शयति-पृथिवी निर्ऋतिः, निर[19]मणात् नियमेन रमणात्। निश्चलत्वेनावस्था[20]नादित्यर्थः।
रमन्ते वा[21]ऽस्यां भूतानीति। ऋच्छतेः- कृच्छ्रं दुःखं तदापत्तिरितरा[22] मृत्योरधिदेवता।
अस्याः पृथिव्या वा एषा निर्वाचिका[23] ऋक्[24]।

[इति सप्तमस्या-(द्वितीयस्या-)ध्यायस्य
सप्तमः खण्डः।]

---

१-ची० B. C.
२-पुषा: C.
३-'नानाकर्माणि' नास्ति C. ४-चेक्षना B.
५-अत्र 'न' इत्यधिकं भाति।
६-क्ष्मा B. C. ७-क्ष्मा इ इति B.
८-यथा यथार्थं अर्था० C.
९-( ) एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः D.
१०-'०र्वाच्या' इत्येव D.
११-दुर्गाचार्यस्तु 'इति' इति पदं 'निर्वक्तव्यानि' इत्यनेन पूर्वपदेन सह पठति समाप्त्यर्थकम्।
१२-०स्यामि C. १३-इतिः प्रका० D.
१४-तेन D. १५-'न' इति त्रुटितम् D.
१६-०यानित्य० C. १७-सन्देहो विद्यत D.
१८-हस्तलिखितपुस्तकेषु 'तत्र निर्ऋतिरित्यादि' इत्येव प्रतीकमवतरणिकायाः प्रागेव लिखितम्।
१९-नीरम० C. अयमपि पाठः B.
२०-'ना' इति त्रुटितम् C.
२१-'वा' इति नास्ति D.
२२-०तरात् मृ० D.
२३-अत्र 'वा' इत्यधिकं वर्तते B.
२४-हस्तलिखितपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति।

## [ अथ अष्टमः खण्डः । ][1]

य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात् ।
स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमा विवेश ॥[2]

दीर्घतमस आर्षम् । यः कामार्तः[3] पुत्रार्थी वा । ईमिति[4] पदपूरणः । एवं गर्भं चकार-करोतेः किरतेर्वा लिट् । करोति विक्षिपति वा, तत्कारणभूतरेतोविक्षेपद्वारेण[5] । न सोऽस्य तत्त्वमिति शेषः । द्वितीयार्थे वा[6] षष्ठी । एतं गर्भं न वेद । कुतो वा कथं वा केन वा[7] प्रयोजनेनेत्येवमध्यात्मदृष्ट्या यदज्ञानं तदभिप्रायमिदं न[8] वेदेति वचनम् । योऽप्येनं मातुरुदरस्थमुदरवृद्ध्या[9]ऽथापत्याऽनुमानेन वा ज्ञातं[10] सन्तं प्रत्यक्षेण दर्शयति[11] । हिरुक्-अन्तर्हितनामैतत् । अन्तर्हितो यो गर्भस्तस्मादपि । सोऽप्येनमध्यात्मज्ञानाभावान्नैव जानातीत्यर्थः । अजानंश्च सः[12] स्वस्या[13] मातुर्योना-योनौ स्थितः । अन्तः-मध्ये । परिवीतः-जरायुवादिभि[14]र्व्याप्त इत्यर्थः[15] । यथाकालं जायते[16] । बहुप्रजाः-बहुप्रजननः आत्मज्ञानाभावा[17]न्मोक्षमप्राप्नुवन् संसारे पुनः पुनर्जायमान इत्यर्थः ।

अथवा पुत्रः प्रजा अपत्यानि[18] । बह्वपत्यश्च[19] प्रथमं मातुर्योनौ स्थितो जातश्च बह्वपत्यतामापन्नः सन्नित्यर्थः । गर्भवासकृतमपत्य[20]पोषणकृतश्च निर्ऋत्यभिधानं प्रलयं दुःखमाविवेश-आविशति प्राप्नोतीत्यर्थः । एष परिव्राज[21]कानामात्मविदां दर्शने चा[22]स्या ऋचोऽर्थः ।

नैरुक्तानां तु[23]-य एनं वर्षलक्षणमुदकसंस्त्याय[24]ं पूर्ववत् करोति किरति[25] वा[26] । न सो अस्य वेद ( वर्षस्य तत्त्वं न वेद, कुतोऽप्येतदुदकम[27]भ्यागच्छति, यन्मया विसृज्यते,

---

१–हस्तलिखितपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति।
२–[ ऋ० १।१६४।३२ ] 'य ईं चकार० विवेश' इत्येव प्रतीकम् D.
३–कामार्थः C. ४–'मिति' इति त्रुटितम् D.
५–०भूतेरेतो० D. ६–'वा' इति त्रुटितम् D.
७–'वा' इति त्रुटितम् D.
८–'वे' इति त्रुटितम् B. C. 'द्वे' इति त्रुटितम् D.
९–०दर्पा० B. १०–जात सन्तं B. C.
११–दर्शयिष्यति B. C. १२–सा B. C.
१३–स्वस्यां D.
१४–जरायादि० C.
१५–'इत्यर्थः' इति नास्ति D.
१६–'यथाकालं जायते' B. C.
१७–०भावा मो० C.
१८–समानार्थानीति शेषः ।
१९–बह्वत्यश्च C. २०–०मपपत्य० D.
२१–०जकना० B. C.
२२–'च' इति नास्ति D.
२३–च B. C. २४–०संस्त्यदयं C.
२५–'कि' इति त्रुटितम् B. C.
२६–वा न वा D.
२७–अत्र 'अपि' इत्यधिकं भाति ।

किञ्चोदकस्य तत्त्वमिति, केवलं त्वसौ विसृजत पयोदकम् )। कः पुनरसौ ? मध्यमो[2] वायुर्मेघो वा। मेघोऽपि[3] हि मध्ये भवत्वाद् भवति मध्यमः। यस्त्वेनं ददर्श[4], यदासावा[5]दित्यो न्यङ्[6]रश्मिभिरावर्तते, तदादित्येनोपहितं मेघस्योदरे स्थितमुदकसंघातं, हिरुक्[7] अन्तर्हितमपि[8] सन्तं[9] तस्मात्-प्रथमार्थे पञ्चम्येषा[10]। ददर्शेत्येतच्चानुपक्तव्यम्[11]। य एनं[12] मेघहननसमये[13] प्रत्यक्षं पश्यति, अन्तर्हितमपि स पश्यतीत्यर्थः। कः पुनरसौ ? इन्द्रः[14]। स हि मेघहननकाले तस्यमुदकसंस्त्यायं[15] प्रत्यक्षानुमानाभ्यामुभयथा[16] पश्यति। किञ्च य[17] उदकसंस्त्यायः[18] पूर्वं सर्वभूतानां[19] निर्मातुरन्तरिक्षस्यावयवभूते[20] योनौ अन्तः योनिस्थाने तस्य मध्ये परिवीतः परिगतो वायुना व्याप्तः। बहुप्रजाः-बहुप्रजननोऽपर्यन्तधारात्मना व्यवस्थित इत्यर्थः। अथवा जनिरन्तर्नीतण्यर्थः[21]। बहूनां धाराणां सस्यानां[22] वा, सस्यनिष्पादनद्वारेण[23] प्राणिनां प्रजनयिता[24]। निर्ऋतिं भूमिमाविवेश[25] आविशतीत्यर्थः।

अथैकपदनिरुक्तम्। करोतिकिरती[26] रूपेऽर्थे वा निश्चयहेत्वभावात् सन्दिग्धौ[27] वर्षकर्मणेत्युक्तम्। यो हि वर्षं करोति किरत्यप्यसौ[28], यश्च किरति करोत्यप्यसौ[29]। सन्देहोपदेशश्च[30] न धातुविकल्पार्थः। किन्तर्हि ? रूपार्थभेदादेव। निर्मीयन्तेऽस्मिन्नवकाशं[31] ददति सन्ति भूतानि[32] प्राणिनः। उदकनाम चैतत्[33]। उदकानि योनिरन्तरिक्षं[34] माताऽन्तरिक्षमिति यद्यु-

---

१-(    ) एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः B.C.
२-भूता मध्य० B. C.  ३-वि C.
४-'दर्श' इत्येव B. C.  ५-यदा वासौ० B. C.
६-न्न्यरश्मि० B. न्यरश्मि० C.
७-'रुक्' इति त्रुटितम् B. C. उदकं धात्य हित्त् D.
८-अन्तरि हित० C.  ९-सन्ततं B.
१०-'एषा' इति नास्ति D.
११-दृशे त्येत वा ( चा C. ) नुपंक्तव्यं B. C.
१२-एन B. C.
१३-मेघनन० C.
१४-इन्द्रं B. न्द्रे C.  १५-'दक' इति त्रुटितम् C.
१६-०यथा B.  १७-स C. नास्त्येव D.
१८-०स्त्यायं D.  १९-पूर्वसमूतानां D.
२०-०मं तर० B
२१-०र्नीतण्यर्थः C. ०रन्तान्तर्हितण्यर्थः D.
२२-संस्थानानां D.  २३-०ण वा प्रा० D.
२४-०जयि० D.
२५-०वेशेति समस्तार्थः D.
२६-०किरति B. ०तिर्हि किरति D.
२७-प्रसन्दि० B. C. ०ग्धो D.
२८-०त्येव्यसौ C.
२९-'यश्च किरति करोत्यप्यसौ' इति त्रुटितम् D.
३०-०न्देहाप० D.
३१-०यते D.
३२-०नि च प्रा० B.
३३-'च' इति नास्ति D.
३४-०रिक्षमाता B. C.

अयमन्तरिक्ष[१]म्, मातुरिति षष्ठ्[२]यनुपपत्तिः, व्यतिरे[३]काभावात् ? उच्यते, माताऽन्तरिक्षमिति सामान्यवचनम्। योनिरन्तरिक्षमिति उपाधिभेदात्। तस्यैव मह[४]ानवयवः परिवीतो वेष्टितो वायुना उदकाश्रयमेघावृतः कश्चिदुच्यत इत्यदोष[६]ः ।

[ अयमपीतरो योनिरेतस्मादेव, परिवृतो भवति । ][७]

अयमपीत्यादि । इत[८]रः स्त्रीयोनिरेतस्मादेव रूपसामान्यात् प्रसक्तो निरुच्यते । नानाकर्मत्वाच्च निर्वचना[९]न्यत्वम् । पूर्वं चेतेर्व[१०]का[११]रस्योकारः । सचेकारात्परः तस्मिन्नीकारस्य यणादेशः[१२] । इतरो यौतेः[१३] । उभयोर्नि[१४]नामकरणः । वायुनैकः परिवे[१५]ष्टितः । इतरः[१६] प्रजननेन मिश्रीयते, मिश्रितो वा रक्तमांसादिभिः । स्त्रीयोनेरुदाहरणम्—

विष्णुर्योनिं कल्पय[१७]तु त्वष्टा रूपाणि पिंशतु ।
आ सिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते[१८] ॥

त्वष्टुर्विष्णोर्वा आर्षम् । सीमन्तोन्नयनेऽस्या विनियो[१९]गः । विष्णुर्व्या[२०]प्तः क्षेत्रज्ञः। स योनि-तात्स्थ्या[२१]देव तच्छब्दम् । योनिश्च [२२]कार्यकारणं भोग्यमात्मानं कल्पयतु आविशतु [२३]अधितिष्ठतु । त्व[२४]ष्टा शिल्पी अवयवरूपाणि पिं[२५]शतु विस्तारयत्वित्यर्थः । आसिञ्चतु आप्याय[२६]यतु प्रजापतिः प्रजानां पाता अशि[२७]तपीतरसप्रदानद्वारेण । धाता गर्भं दधातु ते त[२८]व ।

१–रिक्षमातु० B. C.

२–षष्ठ्यनु० C.

३–भेदाभावादित्यर्थः । सति हि भेदे षष्ठी सम्भवति नान्यथेति भावः । व्यतिरेकाभावार्थः D.

४–महावयवः D.

५–'वायुना उदकाश्रयमेघावृतः' इति नास्ति B. C.

६–इत्यदेषः C.

७–हस्तलिखितपुस्तकेष्विदं मूलवाक्यं नास्ति ।

८–इतर B. C, इतरत्र D.

९–०च न ना० C.

१०–पूर्वं ( वें C. ) चैते प्रकारस्यो० B. C. वेतिः

११–सत्वे का० D.

१२–तस्मीन्नीकारस्य यणः D.

१३–[ धा० २।२३ ]

१४–उभयोनि नमि करणः B, उभयो निर्नामकरणः C.

१५–पुरी वे० B. C.

१६–इतः D.

१७–कल्पतु B.

१८–[ ऋ० १०।१८४।१ ]

१९–ति योगः B. C.

२०–विष्णु व्याप्तः C.

२१–तां समोदत्र D.

२२–काय का० B. कल्पयतु का D.

२३–आधि० C.

२४–०ष्टा च शि० D.

२५–विंशतु C. विशतु D.

२६–आप्यायतु C. आप्यायेव D.

२७–अशीतपीतरसदान० B. अशीतपीत० C.

२८–तव D.

लिङ्गात् देवतासत्त्वं[1] दुर्ज्ञानम्, लिङ्गस्यानैकान्तिकत्वात्[2]। अतस्तदधिगतये[3] यत्नः कर्तव्य इत्येवमर्थं पुराकल्पं पठन्ति—

शाकपूणिः सङ्कल्पयाञ्चक्रे[4]। [सर्वा देवता जानामीति। तस्मै देवतोभयलिङ्गा प्रादुर्बभूव। तां न जज्ञे। तां पप्रच्छ-विविदिषाणि त्वेति। सास्मा एतामृचमादिदेश-एषा मद्देवतेति[5]।]

अस्यार्थस्य पूर्वं[6] व्याख्यातस्यापि दार्ढ्यार्थं पुनरुपन्यासः। 'याज्ञ दैवतेन' इति व्याख्यातस्य[7]। शाकपूणिर्नैरुक्ताचार्यः। संकल्पयाञ्चक्रे-संकल्पितवान्। किं तत्[8]? सर्वा देवता मन्त्राणां जानामीति। तत्तस्य ज्ञानोत्सेधमाक्षिपन्ती काचिदभिमानिनी देवता स्त्रीलिङ्ग-

---

१–सतत्त्वं B. C.

२–०स्यानैकत्वात् D.

३–अतस्ते द० B. C. ०धिगम य० D.

४–C. D. पुस्तकयोः 'शाकपूणिः संकल्पयांचक्रे' इति पाठो नास्ति। B. पुस्तके तु अयं पाठः 'पुराकल्पं पठन्ति' इत्यस्यानन्तरमेव नास्ति, किन्तु 'अस्यार्थस्ये-' त्यादि 'व्याख्यातस्ये'-त्यन्तस्य पाठस्य पश्चाद् वर्तते। अस्माभिस्त्वर्थानुसार्येव क्रम आदृतः।

५–कोष्ठकान्तर्गतः पाठो हस्तलिखितपुस्तकेषु नास्ति।

६–[ निरु० १।१७ ] द्रष्टव्यम्।

७–व्याख्यातस्या B. C.। 'व्याख्यातस्य' इति पदानन्तरं केवल D. पुस्तके दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते। स चेयम्:—
"दुर्गवृत्तौ–'नैरुक्तानां वै ('नि' मु. पा.) ऋतिशब्देन भूमिरुच्यते, परिज्ञानकानां कृच्छ्रापत्तिः। तदेवं मन्त्रेषु शब्दगतिविभुत्वाद उभयमप्युपपद्यत एव। तद्यथा–'दधिक्राव्णो अकारिषम्' [ ऋ. ४।३९।६ ]·········'इत्याग्नीध्रे दधि भक्षयन्ति' [ आश्व० सू० १२।१२ ] इति दधिभक्षणे। तथा चाश्वमेधे 'दधिक्राव्णो अकारिषमित्युत्थितायां सर्वा जयन्ति' इत्यश्वसन्निधावेतत् ( 'तं' मु. पा. ) पत्न्यो जपन्ति महिष्यामुत्थितायाम्। तत्रैवं सति प्रतिविनियोगमस्यान्येना-( '०स्यान्येनान्येना' इति वीप्सापि मुद्रितपुस्तके ) र्थेन भवितव्यम्। त एते वक्त्रभिप्रायवशादर्थान्यत्वमपि भजन्ते मन्त्राः। न ह्येतेष्वर्थस्येयत्तावधारणमस्ति। महार्था ह्येते दुःखप-( 'दुष्प' मु. पा. ) रिज्ञानाश्च। यथाश्वारोहवैशिष्ट्या- 'रोष्या' इत्यपि मु. पा. ) दश्वः साधुः साधुतरश्च वहत्येवमेते वक्तृवैशिष्ट्यात् साधून् साधुतरांश्चार्थान् स्रा-( स्र-) वन्ति। तत्रैव सति लक्षणोद्देशमात्रेणैवं ( ०'मात्रमेवं' मु. पा. ) तस्मिन् शास्त्रे निर्वचनमेकैकस्य क्रियते। क्वचिचाध्यात्माधिदैवाधियज्ञोपदर्शनार्थम्। तस्मादेतेषु यावन्तोऽर्था उपपद्येरन् अधिदैवाध्यात्माधियज्ञाश्रयाः सर्व एव ते योज्याः। नात्रापराधोऽस्ति। एत-( 'व' मु. पा. ) मेव सन्देहावि-( 'धि' इत्यपि मु. पा. ) कारमुपजीव्याह' एव दुर्गः"।

८–'किं तत्' इति त्रुटितम् D.

पुलिङ्गयुक्तौ[1], मन्त्रे स्त्रीपुंलिङ्ग[2]शब्ददर्शनादेवं[3]मुच्यते। अथवा मध्यमं[4]पुरुषाने[5]लिङ्गयोगा-दुभयलिङ्गत्वमुच्यते। प्रादुर्भूतौ[6] स्वप्ने प्रत्यक्षं वा तौ[7] न ज्ञातवान्। अतस्तामेव देवतां पृष्टवान्[8]-वेदितुमिच्छामि त्वामिति। सा[9] देवतास्मै वक्ष्यमाणामृचमादिष्टवती-एषा मद्दे-घतेति। तव च देवताज्ञानाभिमानः, मां जानीहि अनयेति।

[ इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
अष्टमः खण्डः[10]। ]

---

१–युक्तां C.
२–'लिङ्ग' इति त्रुटितम् D.
३–०देवोच्यते D.
४–०मं पु० B. C.
५–०नस्य लि० D.
६–प्रादुर्भूता C.
७–पातान्न B. C.    ८–पृष्ट्वा C.
९–ता C.
१०–हस्तलिखितपुस्तकेष्वत्र खण्डस्य समाप्ते-निर्देशो नास्ति।

## [ अथ नवमः खण्डः । ]

अयं स शिङ्क्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता ।
सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवन्ती प्रति वव्रिमौहत ॥[2]

दीर्घतमस आर्षम् । माध्यमिका वागत्र देवता । सा चैश्वर्ययोगात् शरीरेणैवोभयलिङ्गा, एतस्यां ऋचि उभयलिङ्गैः शब्दैरादिश्यमानत्वात्, आह-अयं स येन इत्येते पुंलिङ्गाः शब्दाः । अभिवृतेत्यादयः स्त्रीलिङ्गाः । तैश्च सर्वैर्माध्यमिका वाग् निर्दिश्यते । कुत एतत्[3] ? उच्यते । शिङ्क्ते मिमाति मायुमिति च सर्वेषां [ स्तनयित्नुलक्षणेनाभिसम्बन्धः, स्तनयित्नु करणं मध्यमस्थानं वा कर्तृत्वात् । अथ चोभयलिङ्गेति मध्यमोत्तमलिङ्गेत्यभिप्रेते न नपुंसकस्त्रीलिङ्गे । विद्युद्भवन्तीत्येवमन्तं हि[4] ] स्तनयित्नुलक्षणेनाभिसम्बन्धादत्र मध्यमलिङ्गम् । प्रतिवव्रिमौहतेति रसादानसम्बन्धादुत्तमलिङ्गम् । कथं पुनरेकस्या देवताया उभयलिङ्गैः शब्दैर्निर्देशो येन गौरभीवृता[5]ेति च भेदेनापदेशो[6] न विरुध्यते ? उच्यते[7] । लिङ्गव्यत्ययाश्रयणा[8]दधिष्ठात्रधिष्ठेयभेदा[9]-[[10] च । अयमित्यादिभिः स्तनयित्नुकरणसम्बन्धात् सर्वैर्माध्यमिका वाङ् निर्दिश्यन्ते ] इत्युक्तम् । न[11] च अयं स येनेत्येतेषां[12] स्त्रीलिङ्गत्वमन्तरेण माध्यमिक[13]वाग्निर्देशार्थत्वं सम्भवति, अतो लिङ्गव्यत्यय आश्रीयते; इयं सा यया इति । सर्वदेवतानां चैते[14] अधिष्ठात्रात्मानः, अन्ये कर्तात्मानः[15], इति । वक्ष्यति हि[16]-'अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युः'[17] इति । अतो[18]ऽधिष्ठात्रधिष्ठेयलक्षणभेदाद्[19] भेदेनाप्यपदेशो[20] न विरुध्यते । इयं सा शिङ्क्ते या माध्यमिकाया[21] वाचोऽधिष्ठात्री देवता स्तनयित्नुलक्षणं शब्दं करोति । यया गौः वाङ्नामैतत्[22] । वाङ्

---

१–हस्तलिखितपुस्तकेष्वत्र खण्ड प्रारम्भस्य निर्देशो नास्ति ।
२–[ ऋ० १।१६४।२९ ]
३–'दीर्घतमस आर्षम्' इत्यारभ्य 'कुत एतत्' इत्यन्तः पाठस्त्रुटितः B. C.
४–[ ] एतत्कोष्ठकान्तर्गतः पाठो नास्ति C. B.
५–०रभि वृ० D. ६–०देनो प० D.
७–'उच्यते' नास्ति D.
८–०त्ययभवणा० B. ०त्यये ना श्रय० D.
९–०ष्ठेतिय० C. ०ष्ठेयलक्षणभे० D.
१०–[ ] एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः D.
११–स न च D. १२–०नेत्येषां D.
१३–०मिका D. 'वाग्' इति त्रुटितम् B.
१४–चैके D.
१५–'कर्मात्मानः' इति पाठ उचितः । 'अन्ये कर्तात्मानः' नास्ति B. C.
१६–'हि' इति नास्ति D. १७–[ निरु० ७।७ ]
१८–'अतः' इति नास्ति B. C.
१९–भेदान् C. D. २०–भेदानाप्यप० C.
२१–मध्यमि० B. C. २२–वाङ्नामामै० D. C.

अन्तरिक्षनामान्युत्तराणि षोडशेत्यादि । खं[1] नभ इत्यादीनि चापठितानि । पठितानि अम्बरबर्हि[2]रादीनि च वस्रदर्भादिषु । अन्तरा म[3]ध्ये सर्वभूतानां क्षान्तं शान्तं स्थि[4]तं निष्क्रियं वा[5] शान्तमब्यूह[6]म्, निष्कम्भस्थानात्मकत्वात् । अन्तरा इ[7]मे रोदस्यौ द्यावापृथिव्यौ क्षियतीति वा । अन्तरा इ[8]मे क्षोण्याविति वा क्षौ[9]न्तम् । एवमनेकविकल्प[10]मुत्तरपदम्, अन्तराशब्दात् पूर्वपदम् । शरीरेष्वित्यादि-अन्तराशब्दात् पूर्वप[11]दम्, अक्ष[12]यशब्दादुत्तरपदमिति वि[13]शेषः । विनाशिष्वप्यविनाशीत्यर्थः ।

तत्र समुद्र इत्येतत्पार्थिवेन समुद्रेण सन्दि[14]ह्यते ।

तत्रेत्यादि निगदव्याख्यातम् । अम्बरादिषु अम्बुमद्ध्र[15]वतीत्यादिष्वपि तुल्यश्रुतित्वादविशिष्टे सन्देहपदत्वे किञ्चित्प्रदर्शनीयमिति समुद्रशब्दः प्रदर्शितः-समुद्द्रवन्त्यस्मादाप इत्यादि । संहता ऊर्ध्वं द्रवन्त्यस्मादापोऽन्तरिक्षात्पार्थिवाश्च, रश्मिभिराकृष्यमाणा[16] वायुना प्रेर्यमाणा इत्युभयत्र तुल्यमपादानसाधनत्वम् । संहता वाभिर्द्र[17]वन्त्येनं नदनदीभावेन पार्थिवं भौमर[18]सलक्षणा वायुना प्रेर्यमाणा आदित्यमण्डलाद्वा [19]वर्षाकाले रश्मिभिः पर्या[20]वर्त्यमाना अन्तरिक्षलक्षणमापः । अत्रापि कर्मसाधनत्वमविशिष्ट[21]म् । संमोदन्तेऽस्मिन् जलचराणि भूतानि, इतरत्रान्तरिक्षचराणि । अ[22]थवा समुद्रको भवति । [23]समेकीभावे, उदकानु-

१–ब B.

२–बर्हिकादी० C. अम्बरं वियत् व्योम बर्हि० D.

३–'मध्ये' इति नास्ति D.

४–स्थितिं B. नास्त्येव D. ५–भ D.

६–०मप्यूह्म् B. C.

७–अन्तरालमेत्रोदस्य न ( दस्यौ C. ) क्षियतीति वा B. C.

८–अन्तरालमेक्षो० B. C. ९–क्षन्तम् C.

१०–०कल्पादुत्त० B. ०कल्पउत्त० D.

११–'पदम्' इति त्रुटितम् D.

१२–अक्षरश० D. १३–'वि' इति त्रुटितम् D.

१४–इदं मूलवाक्यं नास्ति C. B.

१५–'अम्बुमद्ध्रवतीत्यादिषु' नास्ति B. C. 'अपि' शब्दस्य 'पि' इत्यपि त्रुटितम् B.

१६–०माण वा० D.

१७–संहताभिद्रव्य तेन B. संहतापि द्रवन्त्येन C.

१८–भौमल० B. तामरसल० D

१९–वर्षाका० B.

२०–०वर्तमा० D.

२१–०मवशि० B. C.

२२–'अथवा' इति नास्ति D. । 'अथवा' इत्यस्मात् पूर्वं केवलं D. पुस्तके दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते । स चेत्थम्–"दुर्गवृत्तौ–'समुद्रवन्त्यस्मादापो वीचीतरङ्गसीकरादिभावेन । समभिद्रवन्त्येनमापः, सर्वा एव ह्यापो निम्नानुसारित्वात् समुद्रमेवाभिमुख्येन द्रवन्ति, स हि निम्नो भवति ।' एवं दुर्गः" ।

२३–समेतिभावे B.

च्छन्दो रो मत्वर्थे। एकीभूतमुदकमस्मिन् विद्यत इति समुद्रः । वर्षास्वन्तरिक्षेऽपि तुल्यम । समुन्नतीति[1] वा, एको लीलया भुवं क्लेदयति, अपरो[2] वर्षेणेति ।

तयोर्विभागो यस्मिन्मन्त्रे तत्र सुखप्रतिपत्त्यर्थ[3]मितिहासमाचक्षत आचार्याः । निदानभूतम्-इति ह एवमासीत्-यः कथ्यते स इतिहासः । देवापिश्चेत्यादि । आर्ष्टिषेण इति भविष्यद्वृत्त्या व्यपदेशो[4] भूतवृत्त्या च । देवापिः शन्तनुश्च कौरव्यौ[5] कुरुवंशप्रभवौ भीमसेनपुत्रौ भ्रातरौ बभूवतुः[6] । स शन्तनुः कनीयान् ज्यायसि[7] देवापौ सति आत्मानं राज्ये[8] प्रजाभिरभिषेचितवान् । देवापिस्त्वग्दोषा[9]पदेशेन राज्याध्य[10]वरोपितो वैराग्यात्तपः प्रतिपेदे । स[11] च किल च्यवननामापरनाम्नि[12] ऋष्टिषेणे ब्रह्मचर्यमुवास । स गुर्वनुग्रहात्तेनैव शरीरेण वीतहव्यवद्[13] विश्वामित्रवच्च[14] ब्राह्मणो बभूव । ततोऽस्मिन्नन्तरे[15] शन्तनो राज्ये द्वादशवर्षाणि देवो न ववर्ष[16] । तमूचुः[17] मौद्गल्य[18]प्रमुखा ब्राह्मणाः । किमूचुः[19] ? अधर्मस्त्वयाचरितः, ज्येष्ठं भ्रातरमन्तरित्य[20] अतिक्रम्या[21]भिषेचितम्,[22] अभिषेचनमात्मनः कारितमित्यर्थः । तस्मात् ते देवो न वर्षतीति[23] । स शन्तनुरेवमुक्तो देवापिं[24] शिशिक्ष । शिक्षतिर्दानकर्मा । तेन चात्र याच्ञापूर्वकत्वाद्दानस्य[25]

१–समुगत्ती B. समुनतिति C.
२–अरो C.
३–'सुखप्रतिपत्त्यर्थं' इति नास्ति D. अत्र B. C. पुस्तकयोरित्थं पाठो वर्तते–'तत्र सुख (खं C.) प्रतिपत्यर्थमिति भासीदितीति पत्यर्थमिति गासीदितीतिहासमिति पुराणविद आचक्षते–देवापिश्चे (विदवे C.) इत्यादि' इति ।
४–व्यपदे० C. पदे० D.
५–'कौरव्यौ' इति नास्ति B. C.
६–०वता C.
७–०सी देवापौ C.
८–राज्यप्रजा० B. C.
९–स्वदोषा० B. त्वडोषा० C.
१०–राज्यायग्रयध्य० B. C.
११–दि स च B. 'स च' इति नास्ति D.
१२–'च्यवनापरनाम्नि इति पाठ उचितः । नाम्न्यार्ष्टि० B. नाम्न्यार्ष्टि० C.
१३–'ह' इति त्रुटितम् C.
१४–०मित्रममित्र व० B. ०मित्रमित्र व० C.
१५–ऽन्तरेण B.
१६–न वर्ष D.
१७–ते ऊचुः B.
१८–मौल्य D.
१९–किमुचुः D.
२०–भ्रातरित्य D.
२१–अदि क्र० C.
२२–०म्याति ( भि C. ) हेचत B. C.
२३–देवा न वर्षन्तीति D. 'इति' नास्ति C.
२४–देवार्पि शिक्ष C.
२५–याहा पू० C.

स्वकारणभूता[1] याञ्चा लक्ष्यते[2] सामर्थ्यात्[3]। तेनैतदुक्तं[4] भवति-शिशिक्ष याचितवान्। किम्? प्रकरणसामर्थ्याद् वर्षहेतुकं प्रजानां शर्म राज्योपादानेन, भगवन्! एतत्ते[5] राज्यं प्रशाधीति। एवंवादिनं[6] वीक्ष्यापन्नं लब्धोत्तमवर्णः[7] स्वजात्यनुरूपमुवाच देवापिस्तम् किं[8] नो राज्येन। पुरोहित इत्यादि। शान्तिकपौष्टिकाद्यर्थं वार्षिके च कर्मणि आर्त्विज्य तव[9] करोमीति। तस्य देवापेरेतद्[10] वर्षकामस्य सूक्तम्। तत्रेयमन्तरिक्षपार्थिवसमुद्रप्रविभागप्रदर्शनाय ऋग्[11] भवति।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
दशमः खण्डः[12]। ]

---

१-'णभूता' इति त्रुटितम् D.
२-लभ्यते D
३-सामर्त्यात् C.
४-तेवर्ण तदु॰ B. C.
५-एतन्ते C.
६-'एवं' नास्ति D.
७-वर्णो B.
८-॰त्याभि C.
९-तप C.
१०-॰वापरेतिद् C.
११-'ऋग्' इति त्रुटितम् B. C
१२-हस्तलिखितपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो नास्ति।

# [ अथ एकादशः खण्डः । ][1]

आर्ष्टिषेणो होत्रमृषिर्निषीदन्[2] देवापिर्देवसुमतिं चिकित्वान् ।
स उ[3]त्तरस्मादधरं[4] समुद्रमपो दिव्या असृजद्वर्ष्या अभि[5] ॥

आर्ष्टिषेणः-ऋष्टिसेनस्य पुत्र ऋ[6]षिः। होत्रम्-कर्तुमिति शेषः। चतुर्थ्यर्थे वा द्वितीया, होत्राय निषीदन्। देवा[7]पिः-दा[8]स्यामोऽस्मै वृष्टिमित्येतां शोभनां मतिं[9] चिकित्वान् जानन् । स इति श्रुतेः यच्छब्दोऽध्याहर्त[10]व्यः । योऽर्त तेऽ[11]पि कल्पं आसीदिति शेषः । स[12] उत्तरस्मादन्तरिक्षलक्षणात्समुद्रात् । कुत एतत् ? अधरं समुद्रमित्यधरश[13]ब्दस्य समुद्रविशेषणत्वेनोपादानसामर्थ्यात् त[14]दुत्तरोपि द्वितीय[15]समुद्र एवाभिप्रेत इति गम्यते। तेनाधरं पार्थिवं समुद्रमभि [16]प्रतीत्यर्थः । अपो दिव्याः-दिवि भवाः। असृजत्[17]-विसृष्टवान् वृष्टि[18]रूपं देवस्य स्तुतिद्वारेण स एव पातितवानित्यर्थः। वर्ष्या-व[19]र्षप्रभवा व[20]र्षलक्षणा इत्यर्थः । आ[20]र्ष्टिषेणः-ऋष्टिषेणश्च्यवन इहाभिप्रेतो यथा तथा पुरस्तादुप[21]वर्णितम्, इतिहासस्मृते प्रामाण्यात् । अतोऽन्तेवासी पुत्रो[22]ऽत्रा[23]भिप्रेतः । ऋष्टिप्रधाना सेना यस्य, इषिता वा सेना शत्रून् प्रति प्रेषिता नित्यं सेना यस्य, का[24]न्ता वा इष्टा सेना यस्य। तस्य[25] च राजपुत्री सुकन्या भार्या, तत्सम्बन्धादुपपन्नः सेनया[26] सम्बन्धः । अथवा ऋ[27]ष्टिः रेषणा हिंसा च कामादीनाम्, अन्तश्चरश्शत्रूणां सेना समुदायः, स चेन्द्रियाणाम् ।

---

१-हस्तलिखितपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो नास्ति ।
२-निषेदन् C.
३-उर० C.
४-०दध्वरं C.
५-[ ऋ० १०।९८।५ ] 'आर्ष्टिषेणो० अभि' इत्येव प्रतीकम् D.
६-'ऋषिः' इति नास्ति B. ७-देवापि C.
८-दामो B. C.
९-०नामतिश्चिकित्वान् C. १०-०दाध्याहारः D.
११-'अपि' इति नास्ति D.
१२-'स' इति नास्ति D.
१३-०धरस्य D.
१४-'तद्' इति नास्ति D.
१५-'द्वितीय' इति नास्ति B. C.
१६-'प्रति' इति नास्ति D.
१७-०जन् C. ०जत्सृष्ट० D. १८-सृष्टि० D.
१९-वृष्टि० D. २०-आष्टि० C.
२१-०वर्णित० C.
२२-'अत्र' इति नास्ति B. C.
२३-०'अधा' इत्येव पाठः B. C.
२४-कान्ती इवा B. अत्र कान्तया इति कान्तायै इति वा युक्तः पाठो भवेत् ।
२५-तस्याश्च B. C. तस्य-च्यवनस्येत्यर्थः ।
२६-सेनायाः D.
२७-ईर्ष्टिः B. इषिः C. ऋषिः D.

एतदुक्तं भवति-विषयाभिलाषवैमुख्यात् कामादिचित्तमलरेषणप्रधाना सेना इन्द्रियग्रामो यस्य, दूषिता वा प्रेषिता वा गता पराङ्मुखीभूता प्रत्याहारेण विषयेभ्य इन्द्रियसेना यस्य।

सम्प्रति प्रसिद्धं सेनाशब्दं निराह। सेना सह इनेनेश्वरेण। तेन हि विना गणं उच्यते। समानं वा साधारणं विजयाख्यं प्रयोजनमुद्दिश्य गतिर्यस्याः। समानशब्दात् पूर्वपदम्, गतेरुत्तरपदमित्यर्थः।

पुत्रः पुरु त्रायत इत्यविभक्तिको निर्देशः। पुरुणो दद्यादानुश्रविकाच्च दुःखात् त्रायत इति पुरुत्रः सन् द्विवर्णलोपेन पुत्रः। 'नापुत्रस्य लोकोऽस्ति' इति श्रुतेः। 'अयं परश्चेति तस्मादनुशिष्टं पुत्रमालोक्यमाहुः' इति च। निपरणाद्वा। निपरणं पिण्डपितृयज्ञश्राद्धादौ पिण्डदानम्, तेन त्रायते शास्त्रसामर्थ्यात् पितॄन्, अकरणप्रत्यवायपरिहारेण चात्मानम्। पृणातेः पूर्वपदम्, त्रायतेरेवोत्तरपदम्। पुंनरक ततस्त्रायत इति। तथा च स्मृतिः—

पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः।

पुत्र इति पुच्छब्दात् पूर्वपदमिति भेदः।

ऋषिर्दर्शनात्; देवापिरस्यैव सूक्तस्य। सामान्येनैतामृषिवचनम्। स्तोमांस्त्रिवृदादीन् ददर्श इति विशिष्टमन्त्रदर्शनादेवेत्यौपमन्यवो मन्यते। ब्राह्मणमप्यस्मिन्नर्थे सामान्येन दर्शयति-तद्यदेनान् मधुच्छन्दःप्रभृतीन् तपस्यमानान्, तस्यैव तपसोऽनुभावात्, ब्रह्म स्वयंभ्वभ्यानर्षत्, त ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते। ऋगादि:-

१–०लक्षण B. C. २–इपितता वा C.
३–'वा' इति नास्ति B. C.
४–भूता B. C ५–'प्रति' इति त्रुटितम् D.
६–हण C. ७–सामान C.
८–० यं स्यात् B. ९–शब्दस्य D.
१०–एतेद० B C. ११–इत्यर्थ'। विभ० B.
१२–०क्तिका नि० B. ०क्तिक नि० D.
१३–०द्यात् प्रवि० D.
१४–पुरुण' सन् विव० B. पुरुणस्त्रः सन् विव० C.
१५–[ ऐ. ब्रा० ३३।१ ]
१६–पुत्र स्रो० B. C.
१७–[ अनुपलब्धमूलमिदं वचनम् ]
१८–वा D. चानिवरणा० C.
१९–श्राद्धादौ D. २०–०वायेन परि० D.
२१–पृणाते C.
२२–०ते तदेवो० B. ०ते तरेवो० C.
२३–पुन्नर० B.
२४–[ मनु० ९।१३८ ]
२५–०न्येतमैनं नि० C.
२६–'दीन्' इति त्रुटितम् B.
२७–०देतन् D. ०देना C.
२८–०भृतय' D.
२९–नचस्यमा C. ०माना C.
३०–'ऋगादि' इत्येव B. C.

सामाख्यं, स्वयंभु[1] अकृतकं नित्यं पूर्वाधीत[2]मिवाम्यानर्षेत्[3], 'ऋ गतौ'[4]...
आगतमाविर्भूतमित्यर्थः । तदृषीणामृषित्वमिति विज्ञायत[5] इति[6] । ... तत्र भवत्याख्या-

देवापिः-देवानामाप्त्या[7] व्याख्या । केन ? स्तुत्या च प्रदानेन च हविषाम्, देवः शिष्टो मन्त्रः
मतिं कर्तुं[8] जानन्, यथा ते तुष्यन्ति[9] तथा जानानः[10] ।

उत्तरः-उद्धततरः, हन्तिर्गत्यर्थः, उद्गततर इत्यर्थः । गतिरात्मसद्य्गतेरेवत्[11] । अध रेभुं[7] वा
रोमत्यर्थे, अधोमानित्यर्थः । अध ऋच्छतीति[12] चातेरधरः । अधः[13] पुनर्न धावतीति ... गा-
ऊर्ध्वगतिः[15] प्रतिषिद्धा । तस्यैवैकस्यैवार्थस्य[16] उत्तरा ऋक् भूयसे बहुतराय निर्वचनाय,
निर्विविच्य वचनाय[17] । भूयसश्च[18] पौरोहित्यार्त्विज्याभ्युपगमलिङ्गभूतवृष्टचर्थयाग्[19]-
लोभादिना[20] ।

[ इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
एकादशः खण्डः[21] । ]

---

१–०भू C.    २–०धीनमि० B. C.
३–०नर्षे C. ०नर्षत् तान् D.
४–[धा० ११९८३] 'इष गतौ' [धा० ४।१९] B.C.
५–लटि B.
६–[तै० आ० २।९]
७–०प्त्या व्याप्त्या C. D. ०प्त्या प्राख्याल्या B. अत्र कदाचित् ०'प्त्या प्राप्त्या' इति पाठः स्यात् ।
८–कुर्वन् D.
९–ऽनु ( तिष्ठन्ति ) B. तुष्ठन्ति C.
१०–जानन् D.
११–०गतित्व० B. C.
१२–च्छा (रा ?) तीति B. ऋच्छन्तीति C.
१३–अधम C.
१४–मन्द्रा C.
१५–ऊर्ध्व B.
१६–०वैतस्या० D.
१७–निर्विविच्य वचनाय' इति नास्ति B. C.
१८–'च' इति नास्ति D.
१९–०र्थभूतवा० B.
२०–०लाहादि० B. C.
२१–आदर्शपुस्तकेष्वत्र खण्डसमाप्ति र्न निर्दिष्टा ।

## [ अथ द्वादशः खण्डः । ][1]

[illegible]पिः शन्तनवे पुरोहितो होत्राय वृतः कृपयन्नदीधेत्[2] ।
[illegible]र्श्रं[illegible] देवश्रुतं वृष्टिवनिं रराणो बृहस्पतिर्वाचमस्मा अयच्छत्[3] ॥

यत्[4] यदा यस्माद्वा देवापिः शन्तनवे[5] शान्तन्वर्थं पुरोहितः सन् होत्राय वृतः वार्षिके[6] कर्मणि, [illegible]न् कृपायमाणः । अनावृष्टिहतं[7] लोकमनुकम्पमानः । अदीधेत्-अन्वध्यायत् ध्यातवान् । किम् ? सामर्थ्याद् वृष्टिम्[8], मनोरथैः प्रार्थितवानित्यर्थः । पुरस्ताच्चेच्छब्द[9]श्रुतेस्तच्छब्दोऽध्याहार्यः[10] । तदा[11] तस्माद्वा[12], देवश्रुतं-देवैः[13] श्रुतम, वृष्टिवनिम् 'वनु याचने'[14], चतुर्थ्यर्थे चोभयत्र द्वितीया, देवैः श्रुताय वृष्टिवनये वृष्टियाचिने । रराणः-रातेः । 'व्यत्ययो बहुलम्'[15] इति शपः श्लुः, ददद् वृष्टिमित्यर्थः । तस्मिन्नेव[16] कर्मणि ब्रह्मत्वेनावस्थितो बृहस्पतिर्वाचमस्मा अयच्छत् दत्तवान्[17], यया देवान् स्तुत्वाऽसौ वृष्टिं लब्धवान् । बृहस्पतिर्ब्रह्मासीदि[18]ति भाष्यानुरोधादेवं व्याख्यायते । मन्त्राक्षरणां तु-बृहस्पतिर्मध्यमस्थाने[19] स्तनयित्नु[20]लक्षणां वाचम, तयापि समृद्ध्या[21]द् वर्षं लब्धवानित्यर्थः ।

शन्तनुः-कस्मात् ? शं सुखं हे तनो ! दुर्बल ! तवास्तु-इत्येवमसौ कारुणिकत्वादाशास्ते । शमस्मै तन्वै शरीराय वास्तु-इति वा, इति रोगिणं[22] कञ्चिद्[23] दृष्ट्वा एवमाह, स च तद्वैवारोगः सम्पद्यते । पुरोहितः-पुर एनं[24] शान्त्यर्थं राजानो दधति कुर्वत इत्यर्थः । शान्तिकपौष्टिकाभिचारिकेषु कर्मसु पुर एनं दधति राजानः पुरस्कुर्वन्तीत्यर्थः[25] । तथा च मन्त्रः-'स इत्क्षेति सुधित ओकसि स्वे'[26] इति । स निगदव्याख्यातो मन्त्रः । बृहदुप[27]-

---

| | |
|---|---|
| १-आदर्शपुस्तकेष्वत्र खण्डप्रारम्भो नैव निर्दिष्टः । | १२-स्माद्वान् B. 'वा' इति नास्ति D. |
| २-०न गीधेत् C. | १३-देवे श्रु० C. १४-[ धा० ८।८ ] |
| ३-[ ऋ० १०।९८।७ ] अयश्चन् C. 'यद्देवापिः अयच्छत्' इत्येव प्रतीकम् D. | १५-[ पा० ३।१।८५ ] १६-अस्मि० B. C. |
| ४-अथ D. ५-'शन्तनवे' इति नास्ति D. | १७-'दत्तवान्' इति नास्ति D. १८-सन C. |
| ६-वार्षे B. C. ७-गतं B. C. | १९-०स्थान B. C. २०-सनयि० C. |
| ८-दृष्टि B. C. | २१-०न्धान् C. २२-रोहिणं B. C. |
| ९-'शब्द' इति नास्ति D. | २३-कश्चिद् B. C. |
| १०-०हर्तव्यः B. | २४-एते B. C. |
| ११-कदा C. तद B. | २५-शान्तिकेत्यादिवाक्यं नास्ति B. C. |
| | २६-[ ऋ० ४।५०।८ ] २७-०दुपाख्या० D. |

तस्य सम्बोधनं हे तनो ! शं तुभ्यमस्त्विति ह्लादकत्वा[1]देतत्[2] । स्तनयित्नुव्याजेनार्थं घद्‌ति[3] वा-शमस्यै तन्वा इति । तनुशब्दोऽन्तर्वर्तित[4]वीप्सार्थः अस्मै शरीराय[5] शरीरायेत्यर्थः । पुरोहितः पूर्वमेनं दधति वैद्युत[6]मरुदादयः । वृष्टियाचिनमिति याच्ञया[7] तत्पूर्वकत्वाह्वानं लक्ष्यत इति भाष्यकाराभिप्रायः । तथा च मन्त्रो व्याख्यातः । बृहस्पतिर्ब्रह्माणं[8] करिष्यन्नेवं[9]व्यापार आसीत् ।

अथवा कश्चिद्राजा[10] जायमानो[11]ऽनावृष्ट्या[12] क्षतसेन ऋष्टिषेण[13] उच्यते[14] । तस्य[15] स्वभूत ऋत्विगार्ष्टिषेणः । कौरीयादौ[16] तु होत्रं कर्तुमृषिर्निषीदन् इत्यादि समानं पूर्वेण ।

यद्देवापिः । यदा देवानामाप्त ऋत्विक्, शन्तनवे-शं सर्वशरीरिणामस्त्वित्येवमर्थं वृष्टिप्रसाधने कर्मणि प्रवृत्तस्य च[17] यजमानस्यार्थाय[18] विद्वत्तया[19]ऽग्रे वृतो होत्राय वृतः[20] तदा देवै[21]श्रुतायेत्यादि समानं पूर्वेण ।

एवमाख्यान[22]स्वरूपाणां मन्त्राणां[23] यजमाने नित्येषु च पदार्थेषु योजना कर्तव्या । एष शास्त्रे सिद्धान्तः । तथा च वक्ष्यति-'तत्को वृत्रः ? मेघ इति नैरुक्ताः[24]' इत्यादि । 'मध्यमश्च माध्यमिकाश्च वाचम्'[25] इति नैरुक्ताः[26] 'रात्रिरादित्यस्योदयेऽन्तर्धीयत' इति । औपचा[27]रिको मन्त्रेष्वाख्यानसमयः । परमार्थेन तु नित्यपक्ष इति सिद्धम् ।

इति स्कन्दस्वामिकृते[28] निरुक्तभाष्ये
सप्तमस्या-[ द्वितीयस्या-[29] ] ध्यायस्य
तृतीयः पादः ।
[ द्वादशश्च खण्डः समाप्तः[29] ]

---

१–ह्लादि० B.C. ह्लाद० D. २–नयि अ B. पतत् C.
३–व B. C. ४–०व्दो वर्तित विप्सार्थः D.
५–'शरीराय' नास्ति D.
६–०तं D. 'मरुदादयः' त्रुटितम् B.
७–याज्ञया C. याच्छया D.
८–०तिब्रह्मार्थं C. ०तिब्रह्मानर्कां D. ९–०व्यानमेवं B.C.
१०–श्चवि० D. ११–यजमा० D.
१२–'वृष्ट्या' इति द्विर्लिखितम् D. १३–ऋष्टितमेन D.
१४–'उच्य' इति त्रुटितम् B. १५–यस्य D.
१६–कारियादौ D. १७–'च' नास्ति D.
१८–०स्यार्थं B. अग्रे त्रुटितम् । ०स्याचाय D.
१९–०त्तया० B. 'विद्व' इति त्रुटितम् ।
२०–कुतः B. कृतः C.
२१–तदेव श्रुत्यादि B. तदेव श्रुतायेत्यादि C.
२२–० स्यात० D. २३–'मन्त्रणां' नास्ति D.
२४–'क्ता इत्या' त्रुटितम् B. [ निरु० २।१६ ]
२५–०नि ये नै० B. C.
२६–रात्र त्रि० C. [cf. निरु० २।१९] २७–अप चा० D.
२८–०कृतौ सप्त० D. इति सप्तमस्य तृतीयः C.
२९–आदर्शपुस्तकेष्वयं कोष्ठकान्तर्गतः पाठो नास्ति ।

# [[1] अथ चतुर्थः पादः ।

## त्रयोदशः खण्डः ]

लोकक्रमादाह[2]-साधारणानीत्यादि[3]। एकोऽनेकस्मिन्नविरुद्ध[4]स्तत्क्रियः[5] साधारण उच्यते[6]। तस्यैकत्वमसति व्यभिचारे तत्त्वेन प्रत्यभिज्ञानात्[7]। तच्च प्रत्यभिज्ञानं भिन्नार्थेषु संविज्ञात[8]-पदेषु तुल्यश्रुतिषु तुल्यनिमित्तेषु च शब्देषु[9]। गोसमुद्रादिष्वत्रापि[10]-'अथापि पशुनामेह[11] भवत्येतस्मादेव[12]' 'समुद्रवन्त्यस्मादापः[13]' अश्नोतेरक्षः[14], इत्येवं तुल्यनिमित्तत्वम्[15]। अत एव-मादयः[16] साधारणशब्दाः। यस्तु क्रियासाम्येऽपि क्वचिदर्थे रूढोऽन्यत्र[17] योगात् प्रवर्तते, नासौ साधारणशब्दः। किन्तर्हि? प्रतीतिविप्रकर्षात्तत्र गौणमुख्यव्यपदेशः[18]। यथा-अग्नि र्माणवकः, सिंहो देवदत्तः, अग्निमीळे पुरोहितम्[19] इति च, श्येनो वज्र[20] इति च[21]। पुरोहितर्त्विक्शब्दावग्नौ[22], श्येनादयोऽपि गुणात्[23] शत्रुबाधनसाधनत्वसामान्यादभिचारयोगेषु[24]।

यत्रापि निमित्तभेदः। यथा निर्ऋतिशब्दस्य देवतायां पृथिव्यां च, कृच्छ्रते[25]-र्निरमणाच्च[26]। यथा योनिशब्दस्य[27] वेदेऽन्तरिक्षादौ[28] स्थानविशेषे[29] स्त्रीन्द्रिये च, वेतेर्यौतेश्च निर्वचनात्। तत्रावयवभूतधात्वर्थभेदानुविधानेन[30] शब्दस्याभिधानलक्षणव्यापारभेदाद्[31][32]-भेद एव न[33] साधारणशब्दत्वम्[34], पूर्वोत्तरयोरुत्पादविनाशदर्शनात्। प्रदीपज्वालावद्रूप-

---

१—आदर्शपुस्तकेष्वयं कोष्ठकान्तर्गतः पाठो नास्ति।

२—०दित्याह D. ३—'नीत्यादि' इति त्रुटितम् D.

४—'कस्मिन्नवि० इति त्रुटितम् B. ०न्नवरु० C.

५—स्वरिति यः B. स्तक्रियः C. ६—शब्दाः C.

७—अस्य वाक्यस्य स्थाने C. पुस्तके—'यस्तु क्रिया-साम्येपि क्वचिदर्थे रूढोऽन्यनात्' इति पाठो वर्तते। वस्तुतोऽयमग्रिमः पाठोऽत्र भ्रमादागतः।

८—सन्नवित C. 'सन्न' इत्येव B. अग्रे त्रुटितम्।

९—'शब्देषु' इति नास्ति B. १०—०त्रवि B. C.

११—०शूनामेव B. ०'नाम' इत्येव D.

१२—[ निरु० २।५ ]

१३—[ निरु० २।१० ] ०'स्माद' इत्येव B. अग्रे 'पः,' अ इति त्रुटितम्।

१४—[cf. निरु० ५।३] श्नोतो B. श्नोते C.रक्षः D.

१५—०मित्तम् D. १६—०मादा० C.

१७—०रूढ्यान्य०B.०रूढ्योन्य०C.१८—गौणादिमु०D,

१९—०हितं यज्ञस्य देवमृत्विजमिति च D. [ऋ० १।१।१]

२०—'ज्र'इति त्रुटितम् D. २१—'च'इति नास्ति B.D.

२२—०ब्दादग्नौ B. C. २३—गुणाः B.

२४—०भिधारेषु यो० D.

२५—०तेभि० B. ०तेधि० C. २६—'च' नास्ति B.C.

२७—०ब्दस्तु B. C. २८—'वेदन्त' इति त्रुटितम् B.

२९—०निवेशस्त्वीन्द्रिये चेति यौ० D.

३०—०भेदेनानु० B. C. ३१—०धाने ल० B. C.

३२—०दान् C.

३३—'न' इति त्रुटितं भाति B. C. ३४—०त्वात् B.

सामान्यात् तत्त्वेन यः प्रत्यभिज्ञाप्रत्ययोऽस्मिन्[1] विषये ऽसौ भ्रान्तिः[2], शब्दभेदात्, हेतो[3]रुक्तत्वात् ।

तदेतत् केचिदननु[4]मन्यमाना आहुः-विषम उपन्यासः । युक्तं[5] यत् प्रदीपा[6]दिषु प्रत्यक्षेणैव बलीयसा प्रमाणेन[7] प्रत्यभिज्ञाप्रत्ययस्य बाधनम् । इह त्ववयवभूतधा[8]त्वर्थभेदानुविधानेन काल्पनिको भेदः शब्दस्य । प्रत्युत प्रत्यक्षेण तत्त्वप्रत्ययेन बाध्यते । एतदुक्तं भवति-शब्दविषयेऽनेकार्थप्रतीत्यन्यथा[9]ऽनुपपत्त्या एकस्यानेका[10]र्थाभिधानसामर्थ्यातिशयः कल्प्यते । स च न यौगपद्येन । किन्तर्हि ? प्रयोक्त्रभि[11]प्रायेण योऽर्थोऽभिधित्सितस्तदानुगुण्येनैवावयवार्थकल्पनम् । ततश्च भिन्ननिमित्तोऽपि साधारण[12]शब्द एवेति सिद्धा[13]न्तः । अर्थप्रकरणादिना च[14] सर्वसाधारणशब्देषु विशेषाध्यवसाय इत्यल[15]मतिप्रसङ्गेन ।

प[16]शुवर्णविशेषाद्यन्यार्थसाधारण्य[17]प्रसङ्गनिवृत्त्यर्थं स्वरादीना[18]माह-दिवश्चादित्यस्य च, नामानीति शेषः । यानि त्वस्य आदित्य[19]स्य प्राधान्येन मन्त्रेषु सूक्तहविर्भाञ्जि सवितृसूर्यादीनि तान्यु[20]परिष्टात् दैवते[21] काण्डे व्याख्यास्यामः । स्वरादीनि तु षडपि उभयोर्हवि[22].सूक्तभाञ्जि भवन्ति, अतो नैघण्टुके[23] प्रकरणे इह व्याख्यास्य[24]न्ते ।

आदित्य. कस्मात् ? आदत्ते रसान् भुवो[25] रश्मिभिः । आदत्ते[26] भासम्, तदुदयेऽन्तर्धानादादानव्यपदेशः । ज्योतिषां चन्द्रनक्षत्रग्रहादीनाम् । तथा च ब्राह्मणम् । 'उद्यन्तं वा आदित्यमग्निरनु[27]समारोहति तस्माद्धूम एवाग्नेर्दिवा[28] ददृशे[29]' इति । उभयत्र[30] ददातेरादित्यः । आदीप्तो

---

१-एव कस्मिन् B. C. २-भ्रान्तिः D.
३-धातो० B. C.
४-०दनुमान्य० D. ५-उक्तं B. C.
६-प्रतिपा० C. ७-'न' इति त्रुटितम् C.
८-'धात्व' इति त्रुटितम् B.
९-०थ्यसथा अप० C. १०-०काद्याभि० C.
११-०क्तृ''''''यणार्थे B. ०ये णोऽर्थो० C. ०ण योन्यो भि० D.
१२-०णः श० B. ०णो श० C.
१३-सिद्धम् B. सिद्धः C. १४-'च' नास्ति D.
१५-०त्ययम० B. C. १६-अप इ षण् D.
१७-०रणप्रसंगेन नि० D. ण्या B. अग्रे 'प्रसंगनि' इति त्रुटितम् ।
१८-०रादीना० D.
१९-'आदित्यस्य' इति द्विर्लिखितम् C. ०स्य प्रा० B.
२०-तौन्यु० C. नान्यु० D.
२१-[ निरु० १२।१८ ]
२२-दिवश्चादित्यस्य चेत्यर्थः । 'हविः सूक्त' इति त्रुटितम् B.
२३-नैघण्ट० C. २४-०स्यते B.
२५-भुवा D. २६-'आदत्ते' इति द्विर्लिखितम् D.
२७-०ग्निमनु० C. D. २८-०दी० B C. ०वो D.
२९-[ अनुपलब्धमूलमिदं वचनम् ]
३०-०त्रादाने० D.

भासा[1] इति वा, ज्योतिरन्तरापेक्षया[2] दीप्तः। भासां ज्योतिषाम् इति, आदीप्तो भातीति वा पाठान्तरम्। ज्योतिर्मण्डलात्मनि[3] प्रकाशत इत्यर्थः। अदितेः पुत्र इति वा[4]। 'दित्यदित्यादित्य'[5] इति ण्यः। तथा च ब्राह्मणम्-"अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो[6] ब्रह्मौदन[7]मपचत्...तस्यै[8] चत्वार आदित्या अजायन्त' इत्युपक्रम्य 'ततो विवस्वानादित्योऽजायत' इति। एतद्युक्त[9]मुत्पत्त्यभिप्रायेण। शाकल्यात्रेयप्रभृतिभिर्नावगृहीतम्[10], पूर्वनिर्वचनाभिप्रायेण। गार्ग्यप्रभृतिभिरवगृहीतमिति, तदेव कारणम्[11]। विचित्राः पदकाराणामभिप्रायाः। क्वचिदुपसर्ग[12]विपर्ययेऽपि नावगृह्णन्ति। यथा शाकल्येन 'अधिवासम्'[13] इति नावगृहीतम्। आत्रेयेण तु 'अधि वासम्' इत्यव[14]गृहीतम्। तस्मादेवं[15]ग्रहोऽनवग्रह इति। यदेतदुक्तमादित्यशब्दे व्युत्पत्तिनिमित्तकारणम्[16]-अदितेः पुत्रम्-इति। एतन्निर्वचननिमित्तमेव शब्दान्तरमेव[17]मर्थम्। आदितेयमिति वेदे प्रयुक्तं दृश्यते किन्त्वल्प[18]प्रयोगविषयोऽस्य। तुशब्दो[19] विशेषणार्थः[20]। अस्य-आदित्यस्य, एतद्[21]-वक्ष्यमाणमभिधानम्। क्व? आर्चाभ्याम्नाये[22] ऋचां समूह आर्चम्[23], अभ्याम्नायत इत्यभ्याम्नायः[24], ऋच एवं[25] यजुषा ब्राह्मणेन च मिश्रा[26] आम्नायन्ते आभिमुख्येन[27] यस्मिन्नसावार्चाभ्याम्नायः[28], तस्मिन् ऋग्वेद[29] इत्यर्थः। अन्ये ऋचा[30]भ्याम्नाय इति पठन्ति। तेषामल्पप्रयोगमेतदभिधानम्, यत एकै[31]वर्चा प्रदर्श्यते[32]। आम्नाय

---

१–हासा C.
२–०रापेक्षयाभीद्धो C. राभीद्धो D.
३–ज्योति मण्डलमात्मनि D.
४–'इति वा' इति त्रुटितम् B.
५–[ Fragment of पा० ४।१।८५ ] दित्य इत्यादित्ये B. दित्या दित्ये C.
६–'देवेभ्यो' इति नास्ति D.
७–ब्रह्मोद० C. ब्रह्मोनम० D.
८–[ तै० सं० ६।५।६ ]
९–०द्युत्पत्त्य० C. एत व्युत्प० D.
१०–'भिः नावगृही' इति त्रुटितम् B.
११–तदेतदाकारण C. तदेत का० D.
१२–०र्ये वि० C. १३–अधी० D.
१४–इत्यत्राव D.
१५–०दर्थाव० B. अग्रे 'ह इति। य' इति त्रुटितम्। ०ह्रो नाव० D.
१६–'निमित्त' इति नास्ति D. १७–०मेवार्थम् B.
१८–०जग विविध० C. किन्त्वल्पः प्रयोग० इत्युचितम्।
१९–तुश० D.
२०–विषयाविशेषार्थः B. ०ब्द विशेषार्थः C.
२१–एव D. २२–'क्व? आर्चाभ्या' इति त्रुटितम् B.
२३–आर्च्यः D.
२४–य इत्यभ्याय: D. ०त्याम्नाय B.
२५–एव द्र य० B. C. २६–मन्त्रा D.
२७–'न' इति त्रुटितम् D. २८–०म्नायः B. C.
२९–ऋवेद B. ३०–ऋचामभ्या० D.
३१–एतयै D.
३२–'प्रदर्श्यते' त्रुटितम्। प्रदृश्यते य C.

एवाभ्याम्नाय इति वेद उच्यते, सर्ववेदेष्वित्युक्तं[1] भवति। सूक्तभाग्भवति, सूक्तं स्तुतिः, तामेव[2] भजते। क्व? 'सूर्यमादितेयम्'[3] इति। न हविर्भाक्, सूर्यपदसामानाधिकरण्यादेतद् गम्यते[4]। गुणाभिधानमेतत्, नानेन नाम्ना[5] हविश्चोदना क्वचिदस्तीति। 'यद्देदेनमदधुर्यज्ञियासो दिवि'[6] इत्यत्र व्याख्यास्यते[7]।

अन्ये ऽल्पप्रयोगमित्यादित्यस्यैव वेदे[8] एकवचनान्तस्या[9]दित्यादिविषयस्याल्पप्रयोगतां सूक्तभाक्त्वं चाहुः। यजुर्वेदे ब्राह्मणे चान्तो[10] नास्त्येकवचनबहुवचनान्तानाम्[11]। न केवलमस्यैवादित्यशब्दस्य[12], आदितेयशब्दस्यापि एकस्यामेव ऋचि, 'सूर्यमादितेयम्' इति। सूक्तभागेव वेति[13]। आदितेयमिति[14], 'अपवादविषये क्वचिदुत्सर्गो दृश्यते'[15] इति ण्यविषये[16] ढक्। 'प्रदीयतां दाशरथाय मैथिली' इति[17] यथा। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते'[18] इति वा ण्यविषये[19] ढक्।

आदित्यशब्दस्य प्रसङ्गेनान्यत्रापि[20] क्वचिदाख्यायते[21]ऽदितेः पुत्रत्वेन[22]। एवमनेन[23] प्रकारेणान्यासामपि देवतानाम्[24]आदित्यशब्देन प्रवादा आदित्यशब्देन स्तुतयो भवन्तीत्यर्थः। तद्यथैतन्मित्र[25]स्येत्यादि, 'इमा[26] गिरः' इत्यत्र[27] व्याख्यास्यते।

---

१–सर्व C. २–त्वामे॰ B. C.
३–[ ऋ॰ १०।८८।११। निरु॰ ७।२९ ]
४–उच्यते D. ५–'ना' इति त्रुटितम् C.
६–[ ऋ॰ १०।८८।११ निरु॰ ७।२९ ]
७–॰स्यन्ते C.
८–वेदमेक॰ B.
९–॰न्तं स्या॰ B.
१०–चान्तो नास्त्येक B. C. अत्र B. पुस्तके 'स्ये' इति 'स्ये' इति वा त्रुटितम्।
११–प्रयोग इति शेषः।
१२–'शब्दस्य आदितेय' इति त्रुटितम् D.
१३–'वा' इति नास्ति D. १४–॰दित्येय॰ B. C.
१५–'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते' [ प॰ शे॰ ५८ ] 'अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते' [ पात॰ व्या॰ महा॰ ७।४।८२ ]
१६–न्य वि॰ C. शुभ्रादेः [ पा॰ ४।१।१२३ ]
१७–[ अनुपलब्धमूलमिदं वचनम् ] 'इति' नास्ति B. C. 'यथा' इति द्विर्लिखितम् B. C.
१८–[ प॰ शे॰ ३५ ] 'वा छन्दसि सर्वे विधयो भवन्तीति' [ पात॰ व्या॰ महा॰ १।४।९ ] 'बहुलं छन्दसि सर्वे विधयो भवन्तीति' [ पात॰ व्या॰ महा॰ ३।१।८५ ]
१९–यावण्य वि॰ B. लावण्य वि॰ C. 'इति ढक्' इत्येव D.
२०–प्रशंसेन C.
२१–॰ब्दे प्रसंगेन नान्यत्रापि क्वचिदाख्यापनेऽदि॰ D.
२२–प्रयोग इति शेषः। २३–॰नेक प्र॰ D.
२४–॰नामित्यादि॰ D. २५–॰स्यादि तु B.
२६–[ ऋ॰ २।२७।१ निरु॰ १२।३६ ]
२७–॰यते D.

पृथगर्थमिदं दर्शयति-अथापि मित्रावरुणयोः, आदित्य[1]शब्देन हि स्तुतिः । आदित्या दानुनस्पती-दा[2]नपती ।

ता सम्राजा घृतासुती आदित्या दानुनस्पती । सचेते अनवह्वरम्[3] ॥

गृत्समद[4]स्यार्षम् । ता[5]-तौ मित्रावरुणौ, सम्राजा-सम्यग्दीप्तावी[6]श्वरौ, घृतासुती-आसुतिर[7]शनं रसो वा घृताशनौ घृतरसौ वा, यद्वा-आसुति[8]रासवः, घृतमेवासवो ययोरित्यर्थः । आदित्या-अदितेः पुत्रौ । दानुनस्पती-दा[9]नुर्दानम्, 'दाभाभ्यां [10]नुः' बहुलवचनाद् भावे । तस्याधिपती, अत्यन्तदातारावित्यर्थः । सचेते- लोडर्थे लेट्[11], सचेताम्-सेवेताम्[12] । किम् ? सामार्थ्यादस्मद्यज्ञम् । कीदृशम् ? अनवह्वरम्, अवपूर्वस्य ह्वरते[13]रत्तिकर्मणः । अवह्वरो भक्षः[14] । अनवभक्षितं अनव[15]हिंसितं रक्षोभिरित्यर्थः । अथवा घृतमुदकं वृष्टिलक्षणं तथा[16] वा सुवाते प्रेरय[17]तस्तौ घृतासुती, वृष्टिप्र[18]दानद्वारेण सचेते सर्वान् प्राणिनः । अनवह्वरम्-'ह्वृ कौटिल्ये'[19] अकुटिलमृजु, अशाठ्येनेत्यर्थः ।

अथापि मित्रस्यैकस्यादित्यप्रवादा स्तुतिः—

प्र स मित्र मर्तो अस्तु प्रयस्वान् यस्त आदित्य शिक्षति व्रतेन ।

न हन्यते न जीयते त्वोतो नैनमंहो अश्नोत्यन्तितो न दूरात्[20] ॥

विश्वामित्र आह-सः हे मित्र ! मर्तः-मनुष्यः प्रास्तु प्रकर्षेण भवतु प्रयस्वान्-अन्नवान् यस्तु[21]भ्यं हे आदित्य ! अदितेः पुत्र ! शिक्षति ददाति । किम् ? सामर्थ्यात् हविः, व्रतेन कर्मणा यागाख्येन । किञ्च न हन्यते केनचित्, न च[22] जीयते त्वोतः-त्वया ऊ[23]तो रक्षितः, न चैनमंहः

---

१-'त्य' इति त्रुटितम् B.
२-'दानपती' इति नास्ति C. D.
३-[ ऋ० २।४१।६ ] 'ता सम्राजा० ह्वरम्' इत्येव प्रतीकम् D.
४-०दार्षम् D. ५-'ता' नास्ति B. D.
६-०विश्वरौ C.
७-०ती शेनं B. ०तिशेनं C. ८-०ती आस० D.
९-दानुर्दनुर्दा० B. दानुर्दानुर्दा० C.
१०-[ उणा० ३।३२ ] ददात्या ( दादाभ्या C. ) नुन् बहुवच० B. C.
११-लेट् D. १२-सेवताम् C. सवताम् D.
१३-[ धा० १।९७८ ] परमयं कौटिल्यार्थः । ह्वरतेरत्ति० B. C. १४-अनवह्वरोऽभक्षः D.
१५-'अनवहिंसितं' नास्ति D.
१६-तथावासु ( सु C. ) वा० B. C.
१७-०येते घृतौ घृतासुतौ B. ०त घृतौ घृ० C.
१८-प्रधान० C.
१९-[ धा० १।९७८ ] ह्वृकौटिल्ये B.
२०-[ ऋ० ३।५९।२ ] 'प्र स मित्र मर्तो अस्तु० न दूरात्' इत्येव प्रतीकम् D.
२१-ये तुभ्यं C. २२-'च' इति नास्ति D.
२३-'त्वया ऊतो रक्षितः' इति त्रुटितम् B.

पापमश्नोति व्याप्नोति, अन्तितः समीपात् नापि दूरात्। स्वगतं सम्बन्धिगतञ्चेत्यर्थः। अथवा सन्निकृष्टकाले विप्रकृष्टकाले च, इदानीं कालान्तरे चेत्यर्थः।

अथापि वरुणस्यैकस्य। 'अथा वयम्'[1] इति नियमः।

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय।

अथा वयमादित्य व्रते तवानागसो अदितये स्याम[3]॥

शुनःशेपो यूपे बद्धो वरुणमाह-उत्तमं पाशं हे[4] वरुण! अस्मद-स्मत्तः, उच्छ्रय[5] निस्सारयेत्यर्थः। अवाधमं-अधः[6] पाशमित्यर्थः, अवश्रथयः-अवपातयेत्यर्थः[7]। विमध्यमं-मध्येवस्थितं विश्रथय विमुञ्चेत्यर्थः। अथानन्तरं वयं हे आदित्य! अदितेः पुत्र! व्रते यागाख्ये कर्मणि, तव त्वत्सम्बन्धिनि[8] त्वद्देवत्य इत्यर्थः। अनागसः-अपापाः, अदितये-अदितिरिति वाङ्नाम[9], वाचे[10] त्वत्स्तुतिलक्षणाये स्याम भवेम[11] त्वां स्तुमो यजेमेत्यर्थः। भेदपक्ष एतत्सर्वं विचार्यते।

नैरुक्तपक्षे तु-अदितिर्द्यौः[12], तस्याः पुत्रः साहचर्याद् रसाहरणाद्वा[13] द्युस्थानो वरुणः। शुनःशेपोऽपि यज्ञमातः सन्नाह। उत्तमम् उत्कृष्टम्, उत्तमे वा वयस्युपजातम्, हे वरुण! दुरितकर्म[14]पाशमस्मत्त उच्छ्रय उन्मोचयेत्यर्थः। ऊर्ध्वं एव वयसि श्लथय। अधमं दुरितपाशं बाल्ये वयस्युपजातं तथैवा[15]धमे वयसि। मध्यमश्च[16] मध्यमे वयस्युपजातं निर्मोचय। अनन्तरं वयं हे अदितेः पुत्र! कर्मणि तव त्वद्देवत्ये, अनागसः, त्वयैव क्षपितकल्मषाः, अदितये वयं स्यामेत्याशास्महे[17]।

निगमप्रज्ञादाह-व्रतमिति कर्मनाम, वृणोतीति। कर्तरि सेत[18] इति कृतेत्या[19]ख्यानम्। तद्धि शुभमशुभं वा वृणोति वध्नाति कर्तारम्। तथा च श्रुतिः-'तं विद्याकर्मणी[20] सम-

१-वा D. २-वयव० C.
३-[ ऋ० १।२४।१५ ] 'उदुत्तमं वरुण० स्याम' इत्येव प्रतीकम् D.
४-भो D. ५-श्रयाय B.
६-अधः पा० B. C.
७-'अवश्रथय-अवपातयेत्यर्थः' इति पाठस्त्रुटितः B.
८-०बन्धनि D.
९-वाद नाम ( मा B. ) B. C. १०-वोचे B.
११-इवेम C.
१२-अदियौः C.
१३-रसहर० D.
१४-'कर्म' इति नास्ति D.
१५-'तथैव य' इत्येव B.
१६-'मध्यमश्च' इति नास्ति D.
१७-अदीनत्वा व० B. अदीनत्वाय वयस्यो मे० C.
१८-स इति B. C.
१९-०त इति ख्या० D.
२०-०कर्मणि C.

न्वारभेते पूर्वप्रज्ञा चेति[1]' । इदमपीतरद्व्रतम्-गुड[2]लवण[3]स्त्र्यादिविषयनिवृत्तिरूपं कर्म । एत-स्मादेव रूप[4]सामान्यात् । प्रसक्तं व्रतं निरुच्यते[5]-वारयतीति सतः, निवृत्तिरूपो हि कल्पस्त-दतिक्रम्य प्रमादात् प्रवर्तमानं[6] पुरुषं वारयतीति सत इत्यन्येषां पाठोऽर्थश्च । व्रतमिति कर्मनाम, निवृत्तिकर्मनाम[7] वारयतीति सत इति । व्रतं कर्मोच्यते । कस्मात्[8] ? वारयतेः । तद्धि संकल्पपूर्वकं[9] प्रवृत्तिरूपमग्निहोत्रादि कर्म प्रत्ययार्थं वारयतीति पुरुषः प्रवर्तमानो निवर्तमानश्च प्रकृतेनाभिसम्बन्धः, तेन व्रतेन निवार्यत इति व्रतस्यैव प्राधान्यात् हेतु-कर्तृत्वेन विवक्षा । भोजनमपि[10] व्रतं क्षुदानिवारणात् ।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
त्रयोदशः खण्डः[11] । ]

---

१-[ बृ० उ० ४।४।२ ]
२-शुक्र० B. C.
३-०स्त्रियादि० C. ०णादि० D.
४-निवृत्ति सा० D.
५-'०निरु०' इति द्विर्लिखितम् C.
६-०मानां पुरुषः C.
७-०र्मणामा B. 'निवृत्तिकर्म नाम' इति नास्ति D.
८-कस्मादात् C. तस्मात् D.
९-०र्वकां C
१०-०जनाम० D.
११-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

पापमश्नोति व्याप्नोति, अन्तितः समीपात् नापि दूरात्। स्वगतं सम्बन्धिगतञ्चेत्यर्थः। अथवा सन्निकृष्टकालं विप्रकृष्टकालं च, इदानीं कालान्तरे चेत्यर्थः।

अथापि वरुणस्यैकस्य। 'अर्या वयम्[2]' इति नियमः।

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय।
अर्था वयमादित्य व्रते तवानागसो अदितये स्याम[3]॥

शुनःशेपो यूपे बद्धो वरुणमाह-उत्तमं पाशं हे[4] वरुण! अस्मद्-स्मत्तः, उच्छ्रथय[5] निस्सारयेत्यर्थः। अवाधमं-अधः[6] पाशमित्यर्थः, अवश्रथयः-अवपातयेत्यर्थः[7]। विमध्यमं-मध्येवस्थितं विश्रथय विमुञ्चेत्यर्थः। अथानन्तरं वयं हे आदित्य! अदितेः पुत्र! व्रते यागाख्ये कर्मणि, तव त्वत्सम्बन्धिनि[8] त्वद्देवत्य इत्यर्थः। अनागसः-अपापाः, अदितये-अदितिरिति वाग्नाम[9], धेंचे[10] त्वत्स्तुतिलक्षणायै स्याम भवेम[11] त्वां स्तुमो यजेमेत्यर्थः। भेदपक्ष एतत्सर्वं विचार्यते।

नैरुक्तपक्षे तु-अदितिर्द्यौः[12], तस्याः पुत्रः साहचर्याद् रसाहरणाद्वा[13] द्युस्थानो वरुणः। शुनःशेपोऽपि यजमानः सन्नाह। उत्तमम् उत्कृष्टम्, उत्तमे वा वयस्युपजातम्, हे वरुण! दुरितं[14]कर्मपाशमस्मत्त उच्छ्रथय उन्मोचयेत्यर्थः। ऊर्ध्वं एव वयसि श्लथय। अधमं दुरितपाशं बाल्ये वयस्युपजातं तथैवाधमे[15] वयसि। मध्यमं[16]च मध्यमे वयस्युपजातं निर्मोचय। अनन्तरं वयं हे अदितेः पुत्र! कर्मणि तव त्वद्देवत्ये, अनागसः, त्वयैव क्षपितकल्मषाः, अदितये वयं स्यामेत्याशास्महे[17]।

निगमप्रज्ञादाह-व्रतमिति कर्मनाम, वृणोतीति। कर्तरि सत[18] इति कृत[19]व्याख्यानम्। तद्धि शुभमशुभं वा वृणोति बध्नाति कर्तारम्। तथा च श्रुतिः-'तं विद्याकर्मणी[20] सम-

---

| | |
|---|---|
| १–वा D २–वयव॰ C. | १२–अदिद्यौः C. |
| ३–[ ऋ॰ १।२४।१५ ] 'उदुत्तमं वरुण॰ स्याम' इत्येव प्रतीकम् D. | १३–रसहर॰ D. |
| ४–भो D. ५–श्रथाय B. | १४–'कर्म' इति नास्ति D. |
| ६–अधः पा॰ B. C. | १५–'तथैव य' इत्येव B. |
| ७–'अवश्रथय-अवपातयेत्यर्थः' इति पाठस्त्रुटितः B. | १६–'मध्यमथ' इति नास्ति D. |
| ८–॰बन्धनि D. | १७–अदीनत्वा व॰ B. अदीनत्वाय वयस्यो मे॰ C. |
| ९–वाद नाम ( मा B. ) B. C. १०–वोचे B. | १८–स इति B. C. |
| ११–हवेम C. | १९–॰त इति व्या॰ D. |
| | २०–॰कर्मणि C. |

न्यारभेते पूर्वप्रज्ञा चेति[1]। इदमपीतरद्व्रतम्-शुद्ध[2]लवणस्त्र्या[3]दिविषयनिवृत्तिरूपं कर्म। एतस्मादेव रूप[4]सामान्यात्। प्रसक्तं व्रतं निरुच्यते-वारयतीति सतः, निवृत्तिरूपो हि फलपरस्तदतिक्रम्य प्रमादात् प्रवर्तमानं[5] पुरुषं वारयतीति सत इत्यन्येषां पाठोऽर्थश्च। व्रतमिति कर्मनाम, निवृत्तिकर्मनाम[7] वारयतीति सत इति। व्रतं कर्मोच्यते। कस्मात्[8]? वारयतेः। तद्धि संकल्पपूर्वकं[9] प्रवृत्तिरूपमग्निहोत्रादि कर्म प्रत्यवायं वारयतीति पुरुषः प्रवर्तमानो[6] निवर्तमानश्च प्रकृतेनाभिसम्बन्धः, तेन व्रतेन निवार्यत इति व्रतस्यैव प्राधान्यात् हेतुकर्तृत्वेन विवक्षा। भोजनमपि[10] व्रतं क्षुदानिवारणात्।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
त्रयोदशः खण्डः[11]। ]

---

१-[ बृ० उ० ४।४।२ ]
२-शुक्ल० B. C.
३-०स्त्रियादि० C. ०णादि० D.
४-निवृत्ति सा० D.
५-'०निरु०' इति द्विर्लिखितम् C.
६-०मानां पुरुषः C.
७-०र्मणामा B. 'निवृत्तिकर्म नाम' इति नास्ति D.
८-कस्मादात् C. तस्मात् D.
९-०र्वकां C
१०-०जनाम० D.
११-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति।

# [ अथ चतुर्दशः खण्डः । ]

उक्तं प्रासङ्गिकम्। प्रकृ[2]तमभिधीयते-स्वरादित्यः। कस्मात्? सु अरणं गमनं[3]म्, तत्सुखाय हिताय वा[4] शोभनं यस्य। सुखप्रतिप[5]त्त्यर्थो विसन्धिपाठः[6]। सर्वत्र शोभनं वा[7] प्रेरणं तमसां यस्य। सुष्ठु वा ऋतो गतो रश्मिभि रसानादातुम्[8], भासं[9] वा ज्योतिषां नक्षत्रादीनाम्। स्वृतो[10] भासेति, कर्मणि क्त इति वि[11]शेषः। पूर्वत्र[12] कर्तरि। एतेन द्यौर्व्याख्याता। तुल्यनिमित्तत्वात्। तानि चेत् समानकर्माणि समाननिर्वचनानि इत्यस्याः परिभाषाया उदाहरणान्येतानि, अल्पत्वात् स्वयमेव प्रदर्शयति-सो[13]ऽपि सुष्ठु गता शोभनं वा[14] अरणमस्यां शोभनैर्वा[15] पुण्यकृद्भिरर्यं[16]तेऽस्यां सुष्ठु वा पुण्यकृत[17] ईर[18]यतीति। तत्र गमनाय स्वृतो[19] रसैः, कर्मणि क्तः, स्वृता[20] भाभिर्ज्योतिषां स्वयमेवा[21]दीप्ता।

दिव उदाहरणम्—'भूर्भुवः स्वः[22]' इति।

आदित्यस्य तु[23]—

एभिर्नो अर्कैर्भवा नो अर्वाङ् स्व१र्णज्योतिः।
अग्ने विश्वेभिः सुमना अनीकैः[24] ॥

वामदेवस्या[25]र्षम्। एभिर्नः-अस्माकं स्वभूतैरर्कैः स्तूयमान इति शेषः। भवा नः-भव नः-अस्माकम्[26], अर्वाङ्[27]-प्रसादाभिमुखः प्रसादपर इत्यर्थः। स्वर्णज्योरिति[28], आदित्या-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति।
२–ऋतम॰ B.
३–मुद्रितमूले पुल्लिङ्गपाठः।
४–'वा' नास्ति D. ५–॰पत्त्यै B.
६–पां D.
७–'वा' नास्ति D.
८–॰दातुर् B. C. ९–महसां B. महासे C.
१०–स्वस्तृतो C. ११–'वि' इति त्रुटितम् D.
१२–'त्र' इति त्रुटितम् D.
१३–सा वि C. नास्त्येव D.। साऽपि द्यौरपीत्यर्थः।
१४–॰भना वा आ॰ B.
१५–'वा' इति नास्ति B.
१६–॰र्द्रियंते स्या B. ॰राप्यते D.
१७–॰कृतां B. C.
१८–'र' त्रुटितम् B. 'य' त्रुटितम् C.
१९–स्मृतो B C.
२०–स्मृता B. C.
२१–॰व दी॰ D.
२२–[ य॰ वा॰ सं॰ ३।५,३७ ]
२३–'तु' नास्ति D.
२४–[ ऋ॰ ४।१०।३ ] 'एभिर्नो अर्कैः ॰अनीकैः' इत्येव प्रतीकम् D.
२५–॰वार्षम् D.
२६–'अस्माकम्' नास्ति D.
२७–अवङ् D.
२८–'इति' नास्ति C. D.

ण्यमिव भास्वर इत्यर्थः । हे अग्ने ! विश्वेभिः सर्वैरनीकैर्ज्वालाख्यैर्मुखैरुपेतैः[2][3] इत्यर्थः । सुमनाश्च[4] भवेत्यनुषङ्गः । अतियाच्ञया[5] खेदं मायासीरित्यर्थः ।

पृश्निरादित्य[6] इत्यादि । प्राश्नुत एनं शुक्लो वर्णः । संप्रष्टा[7] रसान्, तृणन्तोऽयम्[8] । ततश्च 'न लोकाव्यय' इति षष्ठीप्रतिषेधाद् द्वितीयैव, आदाता रसानित्यर्थः । कृतव्याख्यानमन्यत्[9] ।

अथ द्यौः संस्पृष्टा व्याप्ता ज्योतिर्भिः पुण्यकृद्भिश्च । 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि'[10][11] इति श्रुतेः ।

आदित्यस्योदाहरणम्-'अयं वेनश्चोदयत्'[12] इति व्याख्यास्यते[13] । दिवः—

अरा इवेदचरमा अहेव प्र प्रजायन्ते अकवा महोभिः ।
पृश्नेः पुत्रा उपमासो रभिष्ठाः[14] स्वया मत्या मरुतः सं मिमिक्षुः ॥[15]

श्यावाश्वो मरुतः स्तौति । अरा इव-यथा अराश्चक्रस्य तुम्बस्य वा तद्वत् । अचरमाः-चरमः[16] पश्चिमः स[17] येषां[18] नास्ति ते अचरमाः । पश्चिमाभावादेवाग्रिमस्याप्यभावः[19], अनग्रिमपश्चिमा इत्यर्थः । अहा इव[20]-अहानीव च[21] संवत्सरस्य सहजातत्वाद्धि[22] तुल्यकाला मरुतः, नैषामग्रिमो[23] न पश्चिमोऽप्यस्ति[24] कश्चित् । प्र[25] प्रजायन्ते-एकः प्रशब्दः 'प्रसमुपोद' इति पादपूरणः, अपरः प्रकर्षार्थः, प्रकृष्टा जायन्ते प्रतिदिवसं वर्द्धमानाः प्रकृष्टा भवन्तीत्यर्थः । अकवाः[26]-अकुत्सिताः । महोभिः-स्वैर्माहात्म्यैः[27], पृश्नेः-दिवः पुत्राः, उपमासः[28]-उपमाभूता[29] सर्वस्य ।

---

१–०रमित्य० D. २–०रनेकै० D.
३–'उपेत' इति नास्ति D. ४–'च' नास्ति B.
५–०याशया C. ६–वृद्नि० C.
७–संस्पृष्टा C. ८–तृणं तोयं B.
९–[ Fragment of पा० २।३।६९ ]
१०–०ल्यमेतत् D.
११–च न० B. C. [ अनुपलब्धमूलमिदं वचनम् ]
१२–[ ऋ० १०।१२३।१। निरु० १०।३९ ]
१३–'ख्या' इति द्विर्लिखितम् D. '०स्यते । दिवः' इति त्रुटितम् B.
१४–ष्ठाः B. C.
१५–[ ऋ० ५।५८।५ ] 'अरा इवेदचरमा० मिमिक्षुः' इत्येव प्रतीकम् D.
१६–परमः C. १७–'स' इति नास्ति B.
१८–एषां B. C.
१९–०ग्रीमस्याप्यभा० C. ०ग्रमस्या० D. ०मस्य स्वभावः B.
२०–अहाव C. 'इ' इति त्रुटितम् ।
२१–'च' नास्ति D. २२–०जाति त्वा० D.
२३–'म' इति त्रुटितं भाति B. C.
२४–०भो नास्ति B. C.
२५–'प्र' इति त्रुटितम् । 'प्रजायते' इत्येव B.
२६–अकपाः C. २७–'महात्म्यैः' इत्येव D.
२८–०मानाः D. २९–०माहुता C.

अथवा-उपमा इत्यन्तिकनाम, दिवः[2] पुत्रा[1]: सन्निकृष्टाश्चेत्यर्थः । रभिष्ठाः-अतिशयेन वेगवन्तः, स्वया मत्या प्रज्ञया. मरुतः संमिमिक्षुः मिक्षतेर्[3]गतिकर्मणः । एतद्रूपं संगच्छते । यादृश्येषां योग्या[4] प्रज्ञा परानुग्रहात्मिका तादृश्येषामुत्पद्येत[5] इत्यर्थः ।

अथवा मन्यतेरर्चतिकर्मणो मतिः स्तुतिस्तया संगच्छन्ते स्तोतृभिः स्तूयन्त इत्यर्थः ।

नाक आदित्यो भवति । नेता प्रापयिता भासामात्मीयानां सर्वत्र, ज्योतिषां प्रणयो नायक इत्यर्थः । अथवा नेता भासां ज्योतिषां चेति सिद्धम्[6] । अतः[7] प्रणयः-प्रणाशकः, अन्तर्धातेत्यर्थः ।

अथ द्यौः । कमिति सुखनाम, तत्प्रतिषिद्धमकं[8] दुःखं, पुनः प्रतिषिध्यते, सुखमेवेत्यर्थः । सुखस्थानत्वाच्च[9] सुखमित्युच्यते । प्रतिषेधद्वयोपनिपाते प्रकृत एव गम्यत[11] इति । अस्मिन्नर्थे ब्राह्मणं पठित्वा व्याचष्टे[12]—

'न वा अमु लोकं जग्मुषे किंचनाकम्[13] । नैवा[14] अमुं लोकं गवतते किंचनासुखमिति[15] । कुतः[16] ? पुण्यकृत एव यस्मात्तत्र गच्छन्ति । न च पुण्यकृतां[17] दुःखभवनं युक्तम् । ननु च यत्र सुखं दुःखेनापि[18] तत्र भवितव्यम् । तथा च श्रुतिः-'न ह[19] वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति[20]' इति ? उच्यते । सुखबाहुल्याद्दुःखं नास्तीत्युच्यते । नावेदविद[21]स्मिन् ग्राम इति यथा । उदाहरणम्-'नाकस्य[22] पृष्ठे' इति व्याख्यातम् । 'तस्मिन्नहं नि दधे नाके अग्निम्[23]' इत्यादि ।

---

१-'पुत्राः' इति नास्ति B. C.
२-असं मि० B. C.
३-मक्षते० B. म्यक्ष्यतिरिति गतिकर्मसु निघण्टौ पठितः । धातुपाठे नास्त्ययं धातुः ।
४-'योग्या' नास्ति D. ५-०मुपलभ्यत B.
६-प्रसिद्धः D.
७-इत्थं प्रकाशोन्तर्धातेत्यर्थः D.
८-'अकं' नास्ति B.
९-'सु' इति त्रुटितम् B.
१०-०निवाने C.
११-गत B.
१२-द्व्याचष्टे B. दाचष्टे C. अत्र 'तद्व्याचष्टे' इति पाठो भवेत् ।

१३-[ काठ० स० २१।२ ] इदं मूलवाक्यं नास्ति C. D. cf. तै० सं० ५।३।७।१ सुवर्गो वै लोको नाको'''नास्मा अकं भवति । cf. मै० सं० ३।३।१ नाकं ह्वा अस्मा'''न वै तत्र किंचन जग्मुषेऽकम् ।
१४- न वास्यं लोकं C. १५-नो सु० B. C.
१६-'कुतः' इति नास्ति D. १७-०कृताः C.
१८-तत्र दुःखेन नापि D. १९-भू D.
२०-[ छा० उ० ८।१२।१ ]
२१-'विद' इति त्रुटितम् C.
२२-[ऋ० १।१२५।५]
२३-[य० वा० सं० १५।४९ ॥ तै० सं० ४।७।१३।३] अग्निम् C.

गौरादित्यो भवति[1]। गमयति रसान् मण्डलं प्रति रश्मिभिः। गच्छति वा मध्यमस्थाने। अथ[2] द्यौः। यत्पृथिव्या उपरि दूरं गता। 'उमादः पुरुषं'[3] इत्यादित्यस्योदाहरणम्। दिवः-'गवा-मसि गोपतिः'[4] इति।

विष्टबादित्यो भवति। आविष्टो रसान्[5]। विष्टबादित्यः[6] पृथिव्या रसानादातुमाविष्टोऽभि-निविष्ट[7] इत्यर्थः। एवमेव भासां ज्योतिषाम्। भासा वा व्याप्तः। द्यौरप्येवम्। 'गोदो[8] ब्रध्न-स्य विष्टपम्'[9] इत्युदाहरणम्।

नभ आदित्यः। नयतेः। अपि वा भनं[10] एव स्याद्विपरीतः। भासनः सन्[11] ओकारस्य ह्रस्वत्वेन सलोपेन च भनैः[12]; भनैः[13] सन् नभः। न न भातीति वा, नकारलोपेन नभः। न न भाति भात्येवेत्यर्थः[14]। एतेन द्यौर्व्याख्याता। 'ज्योतिष्मती प्रतिमुञ्चते नभः'[15] शुक्र[16] ऋतुभिः[17] नभसा इत्युदाहरणम्[18]।

इति स्कन्दस्वामिकृतायां निरुक्तटीकायां

सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य

चतुर्थः पादः[19]।

---

[ चतुर्दशश्च खण्डः
समाप्तः[20]। ]

---

१–गौरादिः C. 'भवति' इति नास्ति D.
२–'अथ द्यौः' इति त्रुटितम् D.
३–[ अनुपलब्धमूलमिदं वचनम् ] 'उमादः' नास्ति D
४–[ ऋ० ७।९८।६ ] हवामसि C. B.
५–इदं मूलवाक्यं नास्ति C. D.
६–०वश्वादि० C. ७–०भिन वि० C.
८–द्वासा C. 'भासा' इत्यत आरभ्य 'इत्युदाहरणम्' इत्यन्तः पाठो नास्ति D.
९–[ ऋ० ९।११३।१० ] 'गोदो' इत्यस्य स्थाने वेदे 'यत्र' इति पाठः।
१०–दन B. C. ११–सन् भास्वलेन D.
१२–नभः B. C. D. १३–नभः B. C.
१४–०त्येवे वेत्ये० D.
१५–[ तै० सं० ४।३।११।२ मै० सं० २।१३।१०। का० सं० ३९।१० ]
१६–उत B. उक्र C. १७–यम भाभानभ्रभसा B.
१८–ज्योतिष्मतीत्यादिरयं पाठो D. पुस्तकेऽत्र नास्ति प्रत्युत 'गौरादित्य' इति प्रकरणे 'एवमेव भासां ज्योतिषां' इत्यतः परस्ताद् विद्यते। तत्रत्यश्चो-चितः पाठस्तत्र नास्ति।
१९–अत्र D.C. पुस्तकयोः पादादिसमाप्तिनिर्देशो नास्ति
२०–आदर्शपुस्तकेषु खण्डसमाप्तिनिर्देशो नास्ति।

# [ अथ पञ्चमः पादः ।

## पञ्चदशः खण्डः ।[23] ]

रश्मिनामानि साधारण्यप्रसङ्गादाह-खेदय इत्यादीनि पञ्चदश । रश्मिर्यमनादित्यर्थ-कथनमेतत्[1], न धातुप्रदर्शनम्[2] । रशेरेव रश्मिः । रशना[3] रश्मिरिति कतिपयप्रयोग[4]-विषय एवायं रशिः, रहेत्यादिवत्, न सर्वत्र, बन्धनप्रतीतेर्यमनादित्याह-एकत्रोदर्कस्या[6]-परत्रादर्शनाम्[7] । तेषामाद्यौ साधारणानि पञ्चादवारश्मिभिः । प्रदर्शनश्चैतत् । अभीशु-दीधिति-शब्दावङ्गुलिभिः । एवमन्येषामपि[8] द्रष्टव्यम् ।

आदित्यसम्बन्धित्वेनैव[9] दिङ्नियमादाह-दिङ्नामान्युत्तराण्यष्टौ[10] । दिशतेः[11] । आदिश्यन्ते[12] हि ता[13] आदित्येन । अतिसृष्टा वा तं समर्थं प्रति आशदनाद्वा[14], शदिर्गत्यर्थः[15] । अभ्यशनाद्वा व्यापातनाद्वा[16] । दिशतेरेवार्थनिदर्शनमिति केचित्[17] ।

तत्र काष्ठा इत्येतदनेकस्यापि[18] द्रव्यस्य वाचकं[19] भवति । दिशस्तावत्, क्रान्त्वा सर्वमतीत्य स्थिताः, आकाशवत्[20], व्यतिरेकपक्षे । अव्यतिरेकेऽपि त एव शब्दादयः सर्वत्र सन्ति संस्थिताश्चेति[21] । उपदिशो ऽप्येवमेव, अव्यतिरेकेऽपीतरेतरापेक्षया परत्वापरत्ववत्[22] सर्वत्र व्यवहारास्तित्वम् । आदित्योऽप्युदयगिरेः क्रान्त्वास्तगिरावदर्शनात् स्थित

---

१–०ना एवमदि० C.
२–धातु शब्द प्र० B. C.
३–रशेन B.
४–प्रय प्रयो० B. C.
५–ह्रत्या० D.
६–०दास्या० B. C.
७–०श्याना० C.
८–'एवम्' नास्ति C. अस्य वाक्यस्य स्थाने B. पुस्तके 'एवमादीन्येषामपि द्रव्यस्य वाचकं भवति द्रष्टव्यम्' इति पाठो वर्तते ।
९–०बन्धत्वे० B. C.
१०–वाड् D.
११–अतिसर्जनार्थस्य दिशः तैः B.
१२–आरयन्ते B.
१३–एताः C.
१४–आदश ( 'सद' इत्यपि B. ) नाद्वाद B. C.
१५–शनिर्ग० B.
१६–'व्यापातनाद्वा' नास्ति D.
१७–कश्चित् D.
१८–०तदपरत्वादने० B.
१९–मुद्रितपुस्तकेषु 'द्रव्यस्य वाचकं' इत्यस्य स्थाने 'सत्वस्य नाम' इति पाठो वर्तते ।
२०–०शाद्व्यति० B.
२१–'सं' इति नास्ति D.
२२–'वत्' इति त्रुटितं भाति C.
२३–आदर्शपुस्तकेषु पादखण्डारम्भनिर्देशो नास्ति ।

उच्यैते[1] । आज्यन्तैः[2] शरपथपर्यैन्तः[3] काष्ठोच्यते । अतै[4] एवापोऽपि द्विप्रकाराः काष्ठाः । स्थावरौस्तावत्[5]-गत्वा जलाशयं समुद्रादि स्थिता भवन्ति । सर्वैत्र[6] निगमा द्रष्टव्याः । अयनसन्धयौप्रकर्षादि[7]षु[8] चास्थावराणां न क्वचित्तिष्ठन्तीति काष्ठाः । निगमः ।

[ इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
पञ्चदशः खण्डः[9] । ]

---

१—इत्युच्यते D.
२—आदित्यः D. अजस्रतद्दर० C.
३—०र्यान्तः B.
४—अक ए० C.
५—०रां स्ता० B. ०रा स्था० C.
६—०त्र हि नि० D.
७—स्यसा C.
८—०दिला स्था D.
९—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

## [ अथ षोडशः खण्डः । ][14]

अतिष्ठन्तीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरम् ।
वृत्रस्य निण्यं वि चरन्त्यापो दीर्घं तम आशयदिन्द्रशत्रुः ॥[1]

हिरण्यस्तूपस्यार्षम्[2] । चलत्वाद्[3] तिष्ठन्तीनां बहुत्वादनिवेशनानां काष्ठानामपां मध्ये स्थितानामिति शेषः । बहिर्निहितं शरीरं वृत्रस्य मेघस्य निर्ण्यं[4] निर्णामं यतोऽधो नीचैर्नमति तं बिलमित्यर्थः । विचरन्ति विजानन्ति, सर्वे गत्यर्था ज्ञानार्थाः, आपः । सोऽपि निर्गच्छन्तीस्ताः प्ररुरुत्सन्[6], दीर्घन्तमः-धूमनीलं मेघशरीरम्, आशयत् आशेते आतिष्ठति[7] । दीर्घेण तमोरूपेण कृत्स्नं नभो[8] व्याप्नोतीत्यर्थः । इन्द्रशत्रुः-इन्द्रस्य शत्रुः शातयितव्यः[9] । शरीरं सामान्येन निराह शृणातेः, हिंस्यते हि तत् । शॄम्नातेर्वा[10][11], शाम्यति हि तत् कालेन । दीर्घम्-द्राघतेर्वृद्ध्यर्थस्य । तमस्तनोतेः[12], विस्तीर्णं हि तदात्मना । शमयिता[13] शानयिता वेति धात्वन्यत्वमात्रम्, अर्थस्तु[14] भयत्र मारणमेव ।

---

१–[ ऋ० १।३२।१० ] 'अतिष्ठन्तीना० इन्द्रशत्रुः' इत्येव प्रतीकम् D.

२–०पार्षम् D. ३–पल० C.

४–हिरण्यं C. ५–बल० B.

६–अवरु० C.

७–'चलत्वादति०' इत्यारभ्य 'आतिष्ठति' इति पर्यन्तः पाठस्त्रुटितः D. पुस्तके । अस्य स्थाने दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते । स चेयम्-"दुर्गवृत्तौ-'न तिष्ठन्तीत्यतिष्ठन्त्यः । तासामतिष्ठन्तीनां मेघोदरान्तर्गतानामपाम् । ता हि मेघे गच्छति गच्छन्त्येव तदाधारत्वात् । अनिवेशनानामनिविशमानानाम् । न हि ताः क्वचिन्-( नि- ) विशन्ते यावज्जलाशयं नाप्नुवन्ति । तासामेवंविधानां काष्ठानां मध्येऽवस्थितानां बाध्यतो मेघाख्यं निहितमवस्थापितं धात्रा शरीरमात्मनापस्तासामेव गुप्तये । ताः पुनर्वृत्रस्य मेघस्य निर्ण्यं निर्णामं येनासौ नीचैर्नमति तं प्रदेशं विजानन्ति ( 'न्तीव' मु० पा० ) यतस्तेन प्रदेशे ( न ) विचरन्ति । निम्नानुसारिण्यो हि ताः । असावपि वृत्रस्तासु प्रक्षरन्तीषु तत्प्रक्षरणनिरोधं चिकीर्षुः स्वशरीरवृद्ध्या दीर्घन्तमः । स हि तमः स्वत एव धूमादिप्रभवत्वात् । यावत्ते प्रदेशं निम्नं बिलमनुसरन्त्यः मेघस्य त (?) निःसरन्ति । ततो बहुतरमसौ वर्धते तदवरु-( रु ) त्सया । एवं दीर्घं तम आशयत् आशेते' एवं दुर्गः।"

८–भा B. C. ९–०तव्यम् B.

१०–हिंसार्थस्यैव [धा० ४।९२] । वस्तुतस्त्वयं नैघण्टुको धातुः । शम्नातिर्वधकर्मसु निघण्टौ पठितः ।

११–[ धा० १।११७ ]

१२–विस्तारार्थस्य [ धा० ८।१ ]

१३–'शमयिता' नास्ति D. १४–०स्तु यत्र D.

१४–आदर्शपुस्तकेषु खण्डारम्भनिर्देशो न विद्यते ।

वृत्रशब्दस्य[1] निगमप्रसक्तस्याभिधेयं प्रति विप्रतिपत्तिः[2], तन्निर्णि[3]नीषया प्रदर्शयति[4] तद् को वृत्र इति । त्वाष्ट्रोऽसुर[5] इत्यैतिहासिकाः । सर्वे इतिहासाश्चार्थवादमूलभूताः[6]। ते चान्यपरा विधिप्रतिषेध[7]शेषभूताः । अतस्ताननादृत्य स्वयमविरुद्धं नित्यदर्शन[8]मुपोद्बलयन्नाह मेघ इति नैरुक्ताः । कथं तर्हि मन्त्रेषु ब्राह्मणेषु च सलिलसंघातमात्रात्मकेन वृत्रेण सह युद्धप्रवादाः ? उच्यते, अपाञ्चेत्यादि । अपां रश्मिभिराहृतानां घनीभूतानां[9] वायुनाविष्ट्यानाम[10]भिहन्यमानानां परस्परसंघर्षे तरुशाखयोरिवाग्निरुपजायते, ततस्ते[11]नोपतप्ता[12]नां विलयनं[13] भवति । तासां ज्योतिषश्च वैद्युतस्योद्भूतवृत्तेः[14] प्रतिद्वन्द्विभावान्मिश्रीभूतयोस्तत[15] एव मिश्रीभवनकर्मणो वर्षकर्म विलयनाज्जायते[16], न[17] ह्यविलीनमुदकं[18] स्रवति । न च तेजोऽन्तरेण विलयनमस्ति । तत्र मुख्ययुद्धसम्भवाभावादौपचारिकी उपमालक्षणार्थेन युद्धवर्णना[19] । किं सादृश्यम् ? संघर्षः[20] । तस्मादसति युद्धे कल्पनैषा[21] । तथा च कल्पितरूपा मन्त्रवर्णा मन्त्रलिङ्गाः[22] ।

रूपं रूपं मघवा बोभवीति[23] ।

मायेत्सा ते यानि युद्धान्याहुः[24] ।

इन्द्रो दिवः[25] ।

यद्याव इन्द्र ते शतम्[26] । इति

तेषामेको निरुक्तेन व्याख्यातव्यः[27] । स व्याख्यायते—

---

१–॰न्नच्छन्द॰ C.

२–'विप्रति' इति द्विर्लिखितम् C.

३–॰'र्णि' इति त्रुटितम् D.   ४–प्रस्न इति B, C.

५–'इति त्वाष्ट्रोऽसुर' इति त्रुटितम् B.

६–॰मूलाः B. C.

७–'॰पेध' इति त्रुटितम् D.

८–निदर्श॰ B. C. 'स' इति त्रुटितम् ।

९–सघातीनां घनीभू॰ D.

१०–विष्टम्बाना॰ D.

११–॰स्तानो॰ C.

१२–॰ल्मा॰ B.

१३–विलयं D.

१४–'वैद्युतस्योद्भूतवृत्तेः' नास्ति B. C.

१५–॰द्वन्द्व एवाग्नि॰ B. द्वन्द्वीभावाग्नि॰ D.

१६–'वि' इति नास्ति B. C.

१७–ना ( न C. ) ह्यवि॰ B. C.

१८–'उदकं' त्रुटितं भाति B. C.

१९–॰वर्णनां B. C.

२०–वर्षस॰ D.

२१–॰देलेनै॰ B. C.

२२–'मन्त्रलिङ्गाः' नास्ति B. C.

२३–[ ऋ॰ ३।५३।८। ]

२४–[ ऋ॰ १०।५४।२ ]

२५–[ ऋ॰ १०।८९।१० )

२६–[ ऋ॰ ८।७०।५ ]

२७–व्याख्यातः B. C.

यदचरस्तन्वा वावृधानो बलानीन्द्र प्र ब्रुवाणो जनेषु।
मायेत्सा ते यानि युद्धान्याहुर्नाद्य शत्रुं ननु पुरा विवित्से[1] ॥

बृहदुक्थस्य वामदेवस्यार्षम्[2]। यदचरः-चरसि[3], तन्वा शरीरेण, वावृधानो वर्धमानः[4], बलानीन्द्र स्वसामर्थ्यानि प्रब्रुवाणः कथयन्निव जनेषु, चतुर्थ्यर्थे सप्तमी, जनेभ्यः। माया, इदिति पदपूरणः, सा ते तव अनृतं तदित्यर्थः। यानि युद्धान्यैतिहासिका आहुः, तान्यपि मायैव। यतो नाद्य इदानीम्, शत्रुं प्रथमार्थे द्वितीया, तच्छुतेश्चास्तीति[5] शेषः। शत्रुर्नास्तीत्यर्थः। नापि पुरा यानि[6] युद्धान्यैतिहासिकाः[7], तान्यपि पुरातनश्च[8] त्वमपि विवित्से वेत्स्येव न[9] केवलोऽहम्।

अथवा, विवित्से इति विदेर्लाभार्थस्य[10] रूपम्, नेदानीं शत्रुं लभसे, नापि पुरा। ततश्च केन सह युद्धमिति। किं वृत्रवदेव ? न[11], अहिवत्तु-अहिशब्देनापीत्यर्थः[12]। मन्त्रवर्णा[13] ब्राह्मणवादाश्च भवन्ति—

अहन्नहिमन्वपस्ततर्द[14]। तथा—

अभिवृत्राणि[15]। इति।

ऐतिहासिकपक्षे एको वृत्रः, कुतो बहुत्वम् ? नैरुक्तपक्षे त्वदोषः। विवृद्ध्या शरीरस्येत्यादि, निगदव्याख्यातम्[16]। ब्राह्मणमपि चास्मिन्नर्थे दृश्यते-'स इषुमात्रं[17] विष्वङ् वर्धत'[18] इति। एतदर्थाभिवादिनी एषा ऋग्भवति।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
षोडशः खण्डः[19] ]

---

१–[ ऋ० १०।५४।२ ] 'यदचरस्तन्वा० विवित्से' इत्येव प्रतीकम् D.
२–०स्य वार्षम् C.
३–चरसी C.
४–'वर्धमानः' त्रुटितम् D.
५–तच्छ्रुतं ना० ( र्ना० C. ) B. C.
६–यापि B. C. यान D.
७–आहुरिति शेषः।
८–०तत्रस्थ B.
९–'न के' इति त्रुटितम् B.
१०–[ धा० ६।१३८ ]
११–'एव ? न' त्रुटितम् D.
१२–आदिश० D.
१३–मन्त्रा ब्रा० B. C.
१४–[ ऋ० १।३२।१]
१५–[ ऋ० ६।१६।३४ ]
१६–०व्यानम् D.
१७–'इषुमात्रं' इति द्विर्लिखितम् C. 'विष्वङ्' इति नास्ति D. विस्पन्द व० C.
१८–[ तै० सं० २।५।२।२ ]
१९–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।




## [ अथ सप्तदशः खण्डः । ][1]

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥[2]

हिरण्यस्तूपस्यार्षम्[3] । दासः कर्मकरः श्रान्त उपक्षीणशक्तिः, तं धीतश्रम[4]व्यावृत्तिकरणेन[5] पालयन्तीति[6] दासपत्न्यः । अथवा-दासो मेघः, तस्य पालयित्र्यः, ताभिर्हि मेघो[7] भवति, तत्कृतं तस्य मेघत्वमित्यर्थः[8] । अहिगोपाः-अहिर्मेघो गोपायिता यासां ताः । अतिष्ठन्-तिष्ठन्ति, तेन निरुद्धा आपः पणिनेव वणिजेव विक्रयार्थं वीथ्यादौ[10] गावः, तासामपां निर्गम-बिलम्, अपिहितं घट्टितं[12] यदासीत्, वृत्रं मेघं जघन्वान्, अपतद्ववार अपावृतवान् तदिन्द्रः ।

दासो दस्यतेः, उपदासयति कर्माणि उपक्षयति कर्माणि । क्षय आन्तं गमनम् । एवं हि तत् क्षीणं भवति । यद्यन्तं नीतम्[13], अर्थार्थत्वात् प्रवृत्तेः[14] । अन्यथा पुनः प्रवर्तत एव । अहिरयनात्-गमनात्, एति गच्छत्यन्तरिक्षे । अयमपीतरोऽहिः सर्प एतस्मादेव[15] एतेः । असावपि हि भूम्यामेति[16] । यद्वा आहन्ति भोगेनेत्याहिः[17] सन् उपसर्गह्रस्वत्वेन अहिः । पणिर्वणिगित्यभिधेयवचनम् । पणनादिति शब्दनिर्वचनम् । क्रयविक्रयव्यवहारः पणनम् । पर्याय[18]प्रसङ्गादाह वणिग् वन्यं वननीयं[19], पण्यं नेनेक्ति शोधयति, क्रयविक्रयः स्यादिति । बिलं भरं बिभर्तेः बिलं[20] बिभर्ति हि तदुदकादि । वृत्रो वृणोतेराच्छादनार्थस्य[21], आच्छादयति ह्यसौ शरत्सं

---

१-आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२-[ ऋ० १।३२।११ ] 'दासपत्नी० ववार' इत्येव प्रतीकम् D.
३-०पार्षम् D.
४-०श्रम० D.
५-०करेण D.
६-'इति' नास्ति D.
७-०र्भिर्मेघो D.
८-०र्थः त्व० B.
९-गामतः D. C.
१०-०यर्थे C. ०यार्थे D.
११-वीह्यादौ B. C.
१२-उद्घटितं D. अत्र 'अनुद्घटितं' इति युक्तः पाठो भवेत् ।
१३-०न्तर्वा० B.
१४-प्रवृत्तिः D.
१५-एकस्मा० C.
१६-मि B.
१७-०त्यादि स० D.
१८-'पर्याय' इति त्रुटितम् D.
१९-ननयीयं D.
२०-भरं यत् वि० B.C.
२१-[ धा० ५।८ ]

नभः। वर्ततेर्वा गत्यर्थस्य, गच्छति ह्यसौ नभः। वर्धतेर्वा वृद्ध्यर्थस्य। ब्राह्मणदृष्टास्त्रयोऽपि निर्वचनप्रकारा इति दर्शयति-'यदिमाँल्लोकानावृणोत् तद्वृत्रस्य वृत्रत्वमिति विज्ञायते। यथा यदवर्तयत् तथा इषुमात्रमवर्धत' इति।

इति स्कन्दस्वामिकृतायां निरुक्तवृत्तौ
सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
पञ्चमः पादः।

[ सप्तदशः
खण्डः ]

१–निघण्टौ वर्ततिर्गतिकर्मसु पठितः।
२–गर्थस्य B.
३–[ धा० १।७९६ ]
४–०णं दृष्टवास्त्रयो० D.
५–"विज्ञायते' नास्ति B. C.  ६–तथा D.
७–[ cf. तै० सं० २।५।२।२ ]
८–टीकायां D.
९–आदर्शपुस्तकेषु खण्डसमाप्तिनिर्देशो न विद्यते

# [ अथ षष्ठः पादः।

## अष्टादशः खण्डः।[19] ]

रात्रिनामान्युत्तराणि द्विङ्नामभ्यस्त्रयोविंशतिः। आदित्यनिमित्तत्वसम्बन्धात्। दिनसम्बन्धैः[1] श्यामवर्णा। श्यावीत्यादि प्रतिनामै[2] निर्वचनम्। ऊधरिति सन्दिग्धेषु, निर्णयोदाहरणम्-'धो अस्मै प्रैस'[3]। इति। अहःसाहचर्यादर्थसामान्याच्च रात्रिरिति गम्यते। एवं[4] सर्वत्र। अर्थादेशप्रसक्तं निर्वचनम्-रात्रिः कस्मात्? इति। प्ररमयति प्रक्रीडयेति[5] भूतानि नक्तञ्चराणि कौशिकपिशाचादीनि। उपरमयति कर्मभ्य इतराणि दिवाचराणि। ध्रुवीकरोती-त्यर्थवचनम्। प्रोपविप्रस्य[6] रमेः[7] रात्रिः। रातेर्वा[8] दानार्थस्य स्यात्। अत्र हि रूपसिद्धिला-घवमर्थपौष्कल्यञ्च[9]। प्रदीयन्तेऽस्यां मध्यमेन[10] अवश्यायाः[11], अवश्यमायन्तीत्यवश्यायास्तुषारा[12] इत्यर्थः, ते हि रात्रौ निपतन्ति[13]। रातेर्दानार्थोपपत्तिवचनम्[14]।

रात्रिसम्बन्धादुषोनामानि षोडश, विभावरीत्यादीनि। उषाः कस्मात्? उच्छतीति सत्याः। उच्छेर्तिर्विवासे[15], विवासनादुषाः। रात्रेरपरः काल इत्यभिधेयकथनम्[16]। नास्मात्परं रात्र्यवयवोऽस्ति पञ्चदशो मुहूर्तः। तत्र[17] केचिदहर्भागं मन्यन्ते। केचिद्रात्रिभागम्। केचिदुभयसाधारणम्। केचिदुभयव्यतिरिक्तम्[18]। यथा चायं रात्रेरपरस्तथैव एषा ऋगभवति।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
अष्टादशः खण्डः।[19] ]

---

१-दिसम्ब० D. ०म्बन्धा B.
२-०नामानि B. C. ३-[ ऋ० ५।३४।३ ]
४-एव एवं B. C. ५-'ड' इति त्रुटितम् D.
६-०विप्रस्य D. अत्र 'प्रोपवप्रस्य' इति समी-चीनः पाठो भवेत्।
७-रामे B. C.
८-[ धा० २।४८ ] ९-० त्यन्वात् D.
१०-०यने B. C. ११-'मध्यमेन' नास्ति D.
१२-०श्यायविप्रुषः B. C.
१३-अवश्यमायन्तीत्यादिरयं निपतन्तीत्यन्तः पाठो न दृश्यते B. C.
१४-०नार्थस्य पत्ति० D.
१५-उच्छ विवासे C. D. 'तिर्' इति त्रुटितं स्यात्। धातुपाठे तु 'उच्छी विवासे' [ धा० १।२३१ ] इत्येवं दृश्यते। १६-वचनम् D.
१७-तात्र B. तत्र C. १८-०तिरेकम् D.
१९-आदर्शपुस्तकेष्वत्र खण्डप्रारम्भसमाप्तिनिर्देशो नास्ति।

## [ अथैकोनविंशः खण्डः । ][1]

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक्[2] ॥

कुत्सस्यार्षम् । उत्तरा च । इदं श्रेष्ठम्-अतिशयेन प्रशस्तम्[3], ज्योतिषां ग्रहनक्षत्रा[4]दीनां [5]मध्ये, ज्योतिः-उप आख्यम्, आगात्-उद्गतम् । आदित्यो हि तापकः प्रकाशकश्च, चन्द्रमास्तु शीतः प्रकाशकश्च । इदं पुनर्नात्युष्णं नातिशीतं प्रकाशकञ्चेत्येवमादित्यादीनामिदमेव श्रेष्ठमागच्छती[6]त्यर्थः । उदिते च तस्मिन् चित्रः[7]-चायनीयः पूजनीयो दर्शनीयो वा[8], प्रकेतः-प्रज्ञानं प्रकाशाख्यम्, अजनिष्ट-जातम् । विभ्वा-विभु[9]तमम्, इदमतिमहत्त्वाद्विभूतमं[10] विस्तीर्णतमम्, इतराणि परिच्छिन्नतराणि ज्योतींष्यपेक्ष्य[11], सर्वव्या[12]पीत्यर्थः । किञ्च यथा प्रसूता उत्पन्ना सवितुः सकाशात् स्वयमेव रात्रिः । सविता ह्यस्त[13]मयेन रात्रिं जनयति, तेन सा [14]तत उत्पन्नेत्युच्यते । सवाय एवा[15]-एवं, रात्री[16]-रात्री[17]ः, उषसे-उषसोऽ[18]र्थाय, सवाय-सवो जन्म तदर्थमित्यर्थः । योनिम्-स्थानमात्मैकदेशम्, अपररात्र्याख्यम् । आरैक्-आरेचितवती कल्पि[19]तवतीत्यर्थः ।

एतदुक्तं भवति-यथा आदित्योऽस्तं गच्छन्नात्मनस्तिरोभावेन रात्रेरवकाशं ददाति, एवं रात्रिरुषसे । अथवा-यथा प्रसूते[20]त्युषा उच्यते न रात्रिः, सवितुरित्येतदपि सवायेत्येतेन सम्ब[21]ध्यते, यथा प्रसूता[22] उत्पन्ना उषाः सवितुः सवाय जन्म[23]ने, उषसो ह्युत्पत्य-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति ।
२–[ ऋ० १।११३।१ ] 'इदं श्रेष्ठं० मारैक्' इत्येव प्रतीकम् D.
३–०येन श्रेष्ठं प्रशस्यं B. C. ४–०त्राणां B.
५–D. पुस्तके 'मध्ये' इति पदं 'ग्रहनक्षत्रादीनां' इत्यस्मात्पूर्वं विद्यते ।
६–'आदित्यो हि तापकः' इत्यादिः 'आगच्छतीत्यर्थः' इत्यन्तः पाठो नास्ति B. C. दुर्गवृत्तावप्ययं पाठो दृश्यते । ७–चित्र B. चित्रं C.
८–'चायनीयः पूजनीयो दर्शनीयो वा' इति पाठस्त्रुटितः B. C. लिङ्गभेदेन दुर्गवृत्तावप्ययं पाठो वर्तते । ९–विभृत० D.
१०–'विभुतमं' 'विभूततमं' इति वा पाठो युक्तः स्यात् ।
११–'इदमतिमहत्त्वात्' इत्यारभ्य 'अपेक्ष्य' इत्यन्तः पाठो नास्ति B. C. एतदानुपूर्वीकः पाठो दुर्गवृत्तावपि वर्तते । १२–सव्यापी० C. ०र्वव्यापी० D.
१३–०ग्यास्त० C. १४–तत्र D.
१५–'एवा' त्रुटितम् D. १६–'रात्री' त्रुटितम् D.
१७–रात्री: C. 'रात्रिः' इति पाठ उचितः ।
१८–अरैक् C. १९–'कल्पितवती' त्रुटितम् C.
२०–०त्युषतेत्यु० D. २१–०म्बन्ध्य० D.
२२–'प्रसूता' नास्ति D. २३–०न्मनो ह्युत्प० D.

नन्तरं सविता जायते, तेनेयं तदर्थमेवोत्पन्ना इत्युच्यते । एवमेव रात्रिः प्रसूता उपसे, उपसो जन्मार्थमुत्पन्नेत्यर्थः[1][2] । यतः स्थानमस्या रेचितवती ।

अथवा-यथाश्रुत एव सम्बन्धः । यथा प्रसूनोत्पन्ना । क्वासौ[3] ? अपरभागा रात्रिः सवितुरादित्यस्य सवाय[4] जन्मने, एवमेव विनापरभागेन उप आख्येन रात्रिस्तस्यैवापरभागस्य उप आख्यस्य जन्मने बहुलतमोरूपात्मोपसंहारेण स्थानं रेचितवतीत्यर्थः । एवमत्र रात्रेर्मन्दतमप्रकाशात्मकोऽपरभाग[5] उपा इति सिद्धम् । रात्रिरादित्यस्य[6] सकाशाद्दिति शेषः प्रथमे व्याख्याने । द्वितीये तु व्याख्याने रात्रिरादित्यस्येति तदेकदेशभूता[7] उपा उच्यते । शिष्टं भाष्यं मन्त्रव्याख्यानेनैव गतम् ।

योनिशब्दस्योक्तनिर्वचनस्यापि स्थितिर्व्यसम्बन्धेन[8] लिङ्गान्तरत्वख्यापनार्थमाह अभियुतः[9], अनीत्य[10] स्थितो वेनां योनिं स्त्रिया गर्भ इति । योनिशब्दो मन्त्र उभयलिङ्गो दृष्टः ।

समुद्रे वा प्र हिणोमि स्वां योनिम्[11] ।
अयं ते योनिर्ऋत्वियः[12] ।

तदुभयप्रदर्शनार्थमुभयया[13][14] निरुक्त इति । तस्या[15] एवोक्तविभागाया उपस एवापरा, अतन्तरा ऋग्भवति ।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
एकोनविंशः खण्डः । ][16]

---

१–उपार्थं उप॰ D. २–'थमुत्पनेत्य' इति त्रुटितम् B C.
३–क्वासौ सा D. ४–'सवाय' नास्ति D.
५–॰न्दता प्र॰ D. ६–॰त्रि आदित्यसका॰ D.
७–॰देशं माता D. ८–॰ति न स॰ B. C.
९–अति॰ B. C. १०–हि इत्यस्थि॰ D.
'अभीत्य' इति पाठः स्यात् अभिव्याप्येत्यर्थः ।
११–[ अथ॰ १०।५।२३। वेदे तु 'वा' इत्यस्य स्थाने 'वः' इत्येव पाठः । १२–[ ऋ॰ ३।२९।१० ]
१३–॰भया प्र॰ B. १४–'उभयथा' त्रुटितम् D.
१५–अत्र केवलं D. पुस्तके दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते । स चेत्थम्—
"दुर्गवृत्तौ-'यथा प्रसूता प्रकर्षेण सूता प्रसवमनुप्राप्ता । सूतिशब्दः प्रसवार्थः । रात्रिरादित्यस्य प्रसवाय आदित्योत्सृष्टे देशे जायते, एवमेव रात्रिरुपसोऽपि जन्मार्थं योनिं स्थानमवकाशम्-उपस आत्मलाभायारेक् आरेचयति ददातीत्यर्थः । यथोपा आदित्यस्य जन्मनो हेतुस्तदनन्तरत्वादेवं रात्रिरुपसो जन्मनो हेतुरित्येवमस्याभूचि रात्रेरेवापरः काल उपःसंज्ञित इति गम्यते । स्थानं योनिशब्देनोच्यते । यद्धि यस्मिन्निधीयते तत्तेन साकं युतं भवति । मिश्रीभूतमित्यर्थः । इयमपीतरा स्त्रीयोनिरेतस्मादेव । किं कारणम् ? अभियुतो हि गर्भं एनो भवति । आमिश्रीभूतमि- ('त इ' मु॰ पा॰) त्यर्थः' एवं दुर्गः ।"
१६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

# [ अथैकोनविंशः खण्डः । ][1]

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।

यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥[2]

कुत्सस्यार्षम् । उत्तरा च । इदं श्रेष्ठम्-अतिशयेन प्रशस्तम्[3], ज्योतिषां ग्रहनक्षत्रादीनां[4] मध्ये[5], ज्योतिः-उष आख्यम्, आगात्-उद्गतम् । आदित्यो हि तापकः प्रकाशकश्च, चन्द्रमास्तु शीतः प्रकाशकश्च । इदं पुनर्नात्युष्णं नातिशीतं प्रकाशकश्चेत्येवमादित्यादीनामिदमेव श्रेष्ठमागच्छतीत्यर्थः[6] । उदिते च तस्मिन् चित्रः[7]-चायनीयः पूजनीयो दर्शनीयो वा[8], प्रकेतः-प्रज्ञानं प्रकाशाख्यम्, अजनिष्ट-जातम् । विभ्वा-विभुतमम्[9], इदमतिमहत्त्वाद्विभूतमं[10] विस्तीर्णतमम्, इतराणि परिच्छिन्नतराणि ज्योतींष्यपेक्ष्य[11], सर्वव्याप्यपीत्यर्थः[12] । किञ्च यथा प्रसुता उत्पन्ना सवितुः सकाशात् स्वयमेव रात्रिः । सविता ह्यस्तमयेन[13] रात्रिं जनयति, तेन सा तत[14] उत्पन्नेत्युच्यते । सवाय एवा[15]-एवं, रात्री[16]-रात्रीः[17], उषसे-उषसोऽर्थाय, सवाय-सवो जन्म तदर्थमित्यर्थः । योनिम्-स्थानमात्मैकदेशम्, अपररात्र्याख्यम् । आरैक्[18]-आरेचितवती कल्पितवतीत्यर्थः[19] ।

एतदुक्तं भवति-यथा आदित्योऽस्तं गच्छन्नात्मनस्तिरोभावेन रात्रेरवकाशं ददाति, एवं रात्रिरुषसे । अथवा-यथा प्रसूतेत्युषा[20] उच्यते न रात्रिः, सवितुरित्येतदपि सवायेत्येतेन सम्बध्यते[21], यथा प्रसूता[22] उत्पन्ना उषाः सवितुः सवाय जन्मने, उषसो ह्युत्पत्त्य-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति ।

२–[ ऋ० १।११३।१ ] 'इदं श्रेष्ठं० मारैक्' इत्येव प्रतीकम् D.

३–०येन श्रेष्ठं प्रशस्तं B. C. ४–०त्राणां B.

५–D. पुस्तके 'मध्ये' इति पदं 'ग्रहनक्षत्रादीनां' इत्यस्मात्पूर्वं विद्यते ।

६–'आदित्यो हि तापकः' इत्यादिः' आगच्छतीत्यर्थ.' इत्यन्तः पाठो नास्ति B. C. दुर्गवृत्तावप्ययं पाठो दृश्यते । ७–चित्र B. चित्रं C.

८–'चायनीयः पूजनीयो दर्शनीयो वा' इति पाठस्त्रुटितः B. C. लिङ्गभेदेन दुर्गवृत्तावप्ययं पाठो वर्तते । ९–विभूत० D.

१०–'विभुतम' 'विभूततमं' इति वा पाठो युक्तः स्यात् ।

११–'इदमतिमहत्त्वात्' इत्यारभ्य 'अपेक्ष्य' इत्यन्तः पाठो नास्ति B. C. एतदानुपूर्वीकः पाठो दुर्गवृत्तावपि वर्तते । १२–सव्यापी० C. ०र्वस्यापी० D.

१३–म्यास्त० C. १४–तत्र D.

१५–'एवा' त्रुटितम् D. १६–'रात्री' त्रुटितम् D.

१७–रत्री: C. 'रात्रिः' इति पाठ उचितः ।

१८–अरैक् C. १९–'कल्पितवती' त्रुटितम् C.

२०–०सूयतेत्यु० D. २१–०म्बन्ध० D.

२२–'प्रसूता' नास्ति D. २३–०न्मनो ह्युत्प० D.

नन्तरं सविता जायते, तेनेयं तदर्थमेवोत्पन्ना इत्युच्यते । एवमेव रात्रिः प्रसूता उषसे, उषसो जन्मार्थमुत्पन्नेत्यर्थः । यतः स्थानमस्या रेचितवती ।

अथवा-यथाश्रुत एव सम्बन्धः । यथा प्रसूतोत्पन्ना । कासौ ? अपरभागा रात्रिः सवितुरादित्यस्य सर्वाय जन्मने, एवमेव विनापरभागेन उप आख्येन रात्रिस्तस्यैवापरभागस्य उप आख्यस्य जन्मने बहुलतमोरूपात्मोपसंहारेण स्थानं रेचितवतीत्यर्थः । एवमत्र रात्रेर्मन्दतमप्रकाशात्मकोऽपरभाग उषा इति सिद्धम् । रात्रिरादित्यस्य सकाशादिति शेषः प्रथमे व्याख्याने । द्वितीये तु व्याख्याने रात्रिरादित्यस्येति तदेकदेशभूता उषा उच्यते । शिष्टं भाष्यं मन्त्रव्याख्यानेनैव गतम् ।

योनिशब्दस्योक्तनिर्वचनस्यापि स्थितिर्त्वसम्बन्धेन लिङ्गान्तरत्वख्यापनार्थमाह अभियुतः, अतील्वं स्थितो वेनां योनि स्त्रिया गर्भ इति । योनिशब्दो मन्त्र उभयलिङ्गो दृष्टः ।

समुद्रं वा प्र हिणोमि स्वां योनिम् ।

अयं ते योनिर्ऋत्वियः ।

तदुभयप्रदर्शनार्थमुभयथा निरुक्त इति । तस्या एषोक्तविभागाया उपस एषापरा, अनन्तरा ऋग्भवति ।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
एकोनविंशः खण्डः । ]

---

१—उषार्थं उप० D. २—'थैमुत्पन्नेत्य' इति त्रुटितम् B.C. ३—कासौ सा D. ४—'सवाय' नास्ति D. ५—०न्दता प्र० D. ६—०त्रि आदित्यसका० D. ७—०देशं माता D. ८—०ति न स० B. C. ९—अति० B. C. १०—हि इत्यस्थि० D. 'अभील' इति पाठः स्यात् अभिव्याप्येत्यर्थः । ११—[ अथ० १०।५।२३। वेदे तु 'वा' इत्यस्य स्थाने 'वः' इत्येव पाठः । १२—[ ऋ० ३।२९।१० ] १३—०भया प्र० B. १४—'उभयथा' त्रुटितम् D. १५—अत्र केवलं D. पुस्तके दुर्गवृत्तिनाम्ना कथन पाठ उद्धृतो वर्तते । स चेत्थम्—

"दुर्गवृत्तौ-'यथा प्रसूता प्रकर्षेण सूता प्रसवमनुप्राप्ता । सूतिशब्दः प्रसवार्थः । रात्रिरादित्यस्य प्रसवाय आदित्योऽस्ते देशे जायते, एवमेव रात्रिरुषसोऽपि जन्मार्थं योनिं स्थानमप्रकाशम्-उषस आत्मलाभार्थं आरेचयति ददातीत्यर्थः । यथोषा आदित्यस्य जन्मनो हेतुस्तदनन्तरत्वादेवं रात्रिरुषसो जन्मनो हेतुरित्येवमस्याम्रचि रात्रेरेवापरः काल उषःसंज्ञित इति गम्यते । स्थानं योनिशब्देनोच्यते । यद्धि यस्मिन्निधीयते तत्तेन साकं युतं भवति । मिश्रीभूतमित्यर्थः । इयमपीतरा स्त्रीयोनिरेतस्मादेव । किं कारणम् ? अभियुतो हि गर्भ एनां भवति । आमिश्रीभूतमि- ('त इ' मु० पा०) त्यर्थः' एवं दुर्गः ।"

१६—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

# [ अथ विंशः खण्डः ।][28]

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने[1] ॥

सूर्य उपसो वत्स उच्यते, साहचर्याद्रसहरणाद्वा[2] । यथा[3] हि वत्सो मात्रा सह चरत्येवं सूर्य उपसा सह[4] । यथा वा वत्सो मातुरूधसः पय आख्यं रसं पिबन्[6]नपहरति, एवं सूर्य उपसोऽवश्यायाख्यं रसमुदितो रश्मिभिः शोषयन्नपहरति । अतोऽसावस्या वत्स उच्यते । रुशद्वत्सा-रुशन्[7] दीप्तः सूर्याख्यो[8] वत्सो यस्याः सा, रुशती दीप्यमाना, श्वेत्या-उपसो[9] नामैतत्, उषा[10] आगात् उद्गता[11], आरैक्[12]-आरेचितवती, उः पदपूरणः । कृष्णा-तमः-सम्बन्धात् कृष्णवर्णा रात्रिः, सदनानि स्थानानि, अस्याः-उपसः । नह्यनारेचितस्थानायाः सम्भवत्यस्या उदयः । उत्तरोऽर्धर्चः सहेते[13] स्तौति-समानबन्धू, समानो[14] बन्धुर्ज्ञातिः[15] सूर्यो ययो रात्र्युपसोः, रात्रेः पिता जनकत्वात्, उपसः पुत्रो जन्यत्वात्[16] । अथवा-बन्धनाद्बन्धुः सूर्यः[17],तेन ह्यस्तमयेन रात्रिर्बद्धा[18] संश्लिष्टा[19], उदयेनोषाः । अतस्ते[20] तेन समानबन्धने । अमृते-अमरणधर्माणौ, न हि ते म्रियेते[21] । अनूची-अनुगते[22] परस्परवशा[23]वर्तिन्यौ संपद्धे[24] चेत्यर्थः । द्यावा-द्योतते[25]र्द्योतनार्थस्येदं रूपम्, स्वेन[26] स्वेन तेजसा दीप्ते[27] । अथवा-द्यावेति द्विवः

१-[ ऋ० १।११३।२ ]
२-०र्याद्रु ( द्र C. ) पह० B. C.
३-ह C. 'हि' नास्ति B. ४-'सह' नास्ति B. C.
५-मार्थः C. 'ऊधसः' नास्ति C. D.
६-पय अ० D. ७-रुशती D.
८-सूर्या सो B. C.
९-उषा ना० B. उषो ना० C.
१०-'उषाः' नास्ति D. ११-शुभ्रगता D.
१२-'आरैक्' त्रुटितम् B. आरैकरे C.
१३-सहेते B. १४-समानव० D.
१५-जातिः B. C.
१६-'उपसः पुत्रो जन्यत्वात्' त्रुटितम् B.
१७-'सूर्यः' द्विर्लिखितम् D. १८-बन्धू B.
१९-'संश्लिष्टा' नास्ति B. C. २०-अतिस्नेहेन D.
२१-'नहि ते म्रियेते' नास्ति B. C. म्रीयेते D.
२२-०गत D. २३-'वश' त्रुटितम् D.
२४-बन्धे D. २५-[ धा० ४।४२ ]
२६-'स्वेन' त्रुटितम् D.
२७-अत्र केवलं D. पुस्तके दुर्गवृत्तिनाम्ना कश्चन पाठ उद्धृतो वर्तते । स चेत्थम्—
"दुर्गवृत्ती-'एवं रात्र्युषसे ( 'सी०' मु० पा० ) द्यावौ द्योतनात्, उषा हि स्वेन प्रकाशेन द्योतते । रात्रिरपि स्वेन तमोवीर्येण नक्षत्रगणेन वा स्वं स्वमधिकारं प्रति द्योतते । एवं हि द्यावेति द्विवचनम्' एवं दुर्गः ।"
२८-आदर्शपुस्तकेषु खण्डारम्भनिर्देशो न विद्यते ।

पर्यायस्[1]तृतीयैकवचनान्तः, तच्छ्रुतेश्च क्रियापदाध्याहारः, दिवा सह महत्[2]त्वादिना स्पर्धमानेऽनुगृह्यमाणे वा[3] स्वात्मनि तमसो ज्योतिषश्चावकाशप्रदानेन, वर्णं कृष्णं शुक्लं[4] चरतः प्राप्नुत इत्यर्थः । आमिनाने-आङी[5]षदर्थे मिनोतिर्हिंसाकर्मा, ईषद् हिंसन्त्यावित्यर्थः । किम् ? सन्निधे[6]र्वर्णमेव परस्परस्याः[7], रात्रिर्हि[8] कियता[9]प्यनुगतेन स्वेन[10] तमसा वर्णेन ईष[11]दुषसो वर्णं[12] हिनस्ति, एवं[13] उषा अपि रात्रेः स्वेन ज्योतिषा ।

अथवा-आमिनाने इत्याकारोऽप्यर्थे, मिनोतिरपि करोत्यर्थे । वर्णं विकुर्वाणे । कस्य ? प्रकृत[14]त्वादिव[15] एव, परस्परस्य वा । श्वेत्या श्वितेः, श्वेतो वर्णं[16] इति वर्णसामान्यम्, सामर्थ्याद्दीप्तिमच्छुक्लवर्णविशेषविषयं द्रष्टव्यम् । उषसि कथा[17] दर्शनात् । कृष्यतेरपकर्षार्थस्य ।

उषः सम्बन्धादनन्तरमहर्नामानि वस्तोरित्यादीनि[18] द्वादश । वस्तोरितीदृशमेवेदं[19] नाम, न विभक्त्यन्तम्[20] । 'दोषावस्तोर्हविष्मती'[21] 'दोषावस्तोर्वहीयसः प्रपित्वे'[22] इति च[23] समस्तस्यापि दर्शनात् । वस्तोः-ज्योतिरिति वस्तोः । द्योतत इति द्योः[24] । एवं सर्वत्र । उपाहरन्त्यनुतिष्ठन्त्यस्मिन् कर्माणि, न तु[25] रात्रावपि कुर्वन्त्येव कर्मकाराः[26] । अत एवोभयत्र रूढिं[27] दर्शयति, न चायं रूढिषु दोषः । 'अह्नानीव सूर्यो'[28] इति दिवसवचनं रात्र्या सहैव[29] निर्दिश्यते । तस्याहःशब्दस्यैव निपातो[30] नैघण्टुकत्वेन वैश्वानरदेवतायामृचि । प्रसङ्गाच्चोभयवृत्तिरयं दर्शितं भवति । अर्थादिनोश्च[31] विभागः ।

[ इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
विंशः खण्डः[32] ]

---

१-'पर्यायः' नास्ति D. २-महत्त्वात् D.
३-'वा' नास्ति B. C. ४-शुक्लं कृष्णं D.
५-आनीष C. ६-स हि घेर्वं० B. C.
७-०रस्य D. ८-'हि' नास्ति B. C.
९-क्रियता० B. C. १०-न्वेन B. C.
११-'ईषद्' नास्ति D. १२-०र्णं हि हि० B. C.
१३-एवं उषा B. । C. पुस्तके त्रुटितम् ।
१४-'वर्णं विकुर्वाणे । कस्य- ? प्रकृत' इति पाठस्त्रुटितः B.
१५-त्वादीव B.
१६-श्विता व० B. C.
१७-तथा D. १८-०त्यादिनि C. ०त्यादि D.
१९-०रिति मृगमे० B. ०दृशं नामैवेदं नाम तद्धि० D.
२०-त्यन्तः B. C. २१-[ ऋ० ७।१।६ ]
२२-[ ऋ० १।१०४।१ ] २३-'च' नास्ति D.
२४-द्योतत इति उपद्योम B. २५-ते D.
२६-'कर्मकाराः' नास्ति B. C.
२७-रुहि C. रूढितं D.
२८-[ ऋ० ८।४८।७ ] २९-०वेति D.
३०-०पाततो D. ३१-अर्थादिना च B. C.
३२-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

# [ अथैकविंशः खण्डः । ][२६]

अहश्च[१] कृष्णमहरर्जुनञ्च वि वर्तेते रजसी वेद्याभिः ।

वैश्वानरो जायमानो न राजावातिरज्ज्योतिषाग्निस्तमांसि ॥

भरद्वाजस्यार्षम् । आद्यो[२]ऽत्राहःशब्दो रात्रिवचनः । कुत एतत् ? कृष्णमिति विशेषणात्[३] । रात्रेश्च तमः[४]सम्बन्धात् कृष्णत्वम् । अहरर्जुनञ्चेति, अर्जुनशब्दो रूपनाम, कृष्णप्रतियोगित्वेनोपादानात्[५] । शुक्लमत्र रूपमाह न यत्किञ्चित् । शुक्लपर्याय एव [६]वार्जुनशब्दः । कृष्णश्चाहः शुक्लञ्च, रात्रिश्च दिवसश्चेत्यर्थः । किं कुरुतः[७] ? उच्यते, विवर्तेते-विशब्दोऽत्र विविधवचनः[८], असहायार्थो वा । विविक्ते वर्तेते, उपजायेते क्रमेण वा न सह । यदा[९] रात्रिर्न तदाहः, यदाहर्न[१०] तदा रात्रिः । रजसी-यथाकालं स्वेन तमसा ज्योतिषा च[११] रञ्जके भूतानाम् । वेद्याभिः[१२]-स्त्रीलिङ्गनिर्देशात् प्रवृत्तिभिरिति वाक्यशेषः, तृतीयानिर्देशाच्च युक्ते[१३] इति । वेदितव्याभिः प्रवृत्तिभिर्युक्ते । कस्य प्र[१४]वृत्तिभिः ? सामर्थ्यादनयोरेव । कथं पुनरेतत् प्रवृत्तीनां वेदितव्यत्वम् ? उच्यते, आनन्त्याद्[१५] वैचित्र्याद्वा । अवश्यं तदेकरूपत्वं[१६] विदितत्वा[१७]च्च वेदितव्यम् । यत्त्वनन्तं विचित्रं वा तदेक[१८]स्मिन् विदिते[१९]ऽन्यदविदित[२०]मस्त्येवेति सर्वदैव[२१] वेदितव्यम् । अहोरात्रयोश्च[२२] प्रवृत्तयोऽनन्ता[२३] विचित्राश्च । अतस्ता वेदितव्याः ।

अथवा-शुभेषु[२४] कर्मसु याः प्राणिनां प्रवृत्तयः, ता अत्र शोभनत्वाद् वेद्या इत्युच्यन्ते[२५] । सहयोगलक्षणा च तृतीया । वेदितव्याभिः प्राणिप्रवृत्तिभिः सह विवर्तेते इति । सूक्तस्य

---

१–[ ऋ० ६।९।१ ] 'अहश्च कृष्ण० तमांसि' इत्येव प्रतीकम् D  २–०ध्यात्रा० C.
३–'कृष्णमिति विशेषणात्' त्रुटितम् D.
४–त्रम B.  ५–०रूप० D.
६–'वा' नास्ति B. C.
७–०रुते B. 'किं कुरुतः' त्रुटितम् D.
८–विवि० C.
९–यदा रात्रिस्तदा न तदा- ( द C. ) हः B. C. य रात्रिः तदाहः D.
१०–यदा B.  ११–'च' नास्ति B. C.
१२–वैद्याहि C.  १३–युक्तेति B. युक्ततति C.
१४–'प्र' त्रुटितं भाति C.  १५–अनन्त्या० C.
१६–पर्यन्तवदेकरूपं तत् B. C.
१७–वानवदितत्वा० D.  १८–०तस्मि० D.
१९–०तेश्चद० B. C.  २०–'दि' त्रुटितम् D.
२१–सर्वदि० C.
२२–०रात्रश्च B. 'च' नास्ति D. 'अहोरात्रस्य च' इति पाठ उचितः ।  २३–०यो ऽश्च B.
२४–इहैषु B. इहेषु C.  २५–'इति' नास्ति D.
२६–आदर्शपुस्तकेषु खण्डारम्भनिर्देशो न विद्यते ।

वैश्वानरीयत्वात् केवलस्य चार्धर्चस्य वैश्वानरस्तुत्यर्थस्यासम्भवात् । उत्तरार्धर्चेनैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ । ये[1] शुक्लकृष्णे अहनी[2] विवर्तेते[3], तयोर्द्वयोरपि वैश्वानरो जायमानो न[4] राजा । जन्मात्रो[5]दयोऽभिप्रेतः । राजेति आदित्यार्थ उच्यते, सर्वभूतानां राजा आदि[6]त्यः, दीप्तत्वात् सर्वेषां ज्योतिषामधिपत्याच्च । उद्यन्नित्यादित्यार्थः । अवातिर[7]त्-अवतिर[8]तिर्वधकर्मा, अपहन्ति अपनयति, स्वेन ज्योतिषा[9] तमांसि[10] दिवा, एवमग्निः रात्रौ अपहन्ति[11] ।

अहोरात्राधारत्वादनन्तरं मेघनामान्यु[12]त्तराण्यहर्नामभ्यस्त्रिंशत्-अद्रिः, ग्रावा, इत्यादीनि । [13]मेहति सिञ्चति । आ उपर उपल इत्यादि, आङभिविधौ मर्यादायामित्यन्ये[14], विनोपरोपलाभ्यां साधारणानीत्यर्थः । आ उपरादी[15]नीति वक्तव्ये उभयोरुपादानं रलयोरविशेषत्वप्रदर्शनार्थम् । एकयोगक्षेमश्चाङ्गीकृत्याह-उपर[16] उपलो मेघो भवतीति । वक्ष्यमाण-

१–ये च शुक्ले० D.

२–अहनि C.

३–'वि' त्रुटितम् B. ४–इवोव B.

५–जन्ममात्रो० D.

६–'सर्वभूतानां राजा आदित्यः' त्रुटितम् B. C.

७–०वा तिर० C. ८–०तीर० C.

९–अत्र० D.

१०–०षामिस्त० B. C.

११–'दिवा, एवमग्निः रात्रावपहन्ति' त्रुटितम् B. C.

१२–०न्युत्तराण्य० C.

१३–इत आरभ्याखण्डसमाप्तेः B. C. पुस्तकयोः पाठो D. पुस्तकाद्भिन्न एव । D. पुस्तकपाठो दुर्गवृत्तिपाठानुपूर्वीकः । दुर्गवृत्तेरत्र नामासत्त्वेऽपि स पाठस्तस्या एवेति तत्पाठाद्गम्यते । स चेत्थम्–"अद्रिः-आदारयितव्यो भवति ह्यगावुदकार्थमित्यद्रिः ।·········। मेहति सिञ्चति । एवं कर्तरि कारके सतोऽस्यैतदभिधानं भवति मेघ इति । तेषां मेघनाम्नाम् आ उपर उपल इति प्राक् उपर उपल इत्येताभ्यां यानि नामानि साधारणानि तानि पर्वतनामभिः । तदेषां प्रकरणोपपदाभ्यां विशेषोऽवधार्यः । आ उपर इत्येतस्मादिति वक्तव्ये आ उपर उपल इत्येताभ्यामुक्तम् । उभावपि ह्येतौ समाननिर्वचनौ शब्दावेकस्मिन् निरुक्ते निरुक्तौ भविष्यत इति रलोश्चाविशेषख्यापनार्थः ('र्थम्' मु० पा० ) । उपर उपलो मेघो भवति । उपर इति च उपल इति च मेघ उक्तो भवति । उपरशब्दादारभ्य मेघनामान्येव न पर्वतनामानि । आह । उपरः कस्मात् ? उच्यते । उपगम्योपगम्यारमन्तेऽस्मिन्नभ्राणि । अथवा उपगम्यास्मिन् रता आपो भवन्तीत्युपरः उपलोऽप्येतस्मादेव रलोरविशेषेण । आह········ । तेषां मेघानामुपरशब्दवाच्यत्वे विशेषलिङ्गवाचिका एषा ऋक् ।"

१४–०न्ये पि B. १५–०दीनिति D.

१६–'उपर' त्रुटितम् C.

निगमापेक्षायोपलशब्दस्य च पाषाणे प्रसिद्धतरत्वात् 'एषामुपरः स्थविष्ठो मध्यमः' इति तत्संघातश्च सर्वत उपलशब्दवाच्यत्वेन प्रसिद्ध एवेति मेघग्रहणं कृतम । मर्यादापक्षस्य च मेघग्रहणमेव लिङ्गमिति, उत्तराणि मेघस्यैवेति। यद्वा पर्वतस्तदा-उपेत्य रमन्तेऽस्मिन्ग्रैणीति। मेघपक्षे-आप इति अभिविधिपक्षे इदं निर्वचनमिति भाष्यकाराभिप्रायः। इतरत्र वृष्टयभावादेव रश्मिश्च तिष्ठत्यर्थे, तिष्ठन्ति संहन्यन्ते वा । तेषां मेघानामुपरशब्दवाच्यत्वे एषा ऋक् । पर्वतनामत्वेऽन्वेष्या ।

[ इति सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
एकविंशः खण्डः। ]

---

१–[ अनुपलब्धमूलमिदं वचनम् ]
२–नक्षत्राणि B.
३–अपि B.
४–०धिक्षेपेदं B. C.
५–०प्रायम् B. C.
६–मुपश० B.
७–०त्वेन्येषाम् B. C.
८–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ द्वाविंशः खण्डः । ][27]

देवानां माने प्रथमा अतिष्ठन् कृन्तत्रादेषामुपरा उदायन्।

त्रयस्तपन्ति पृथिवीमनूपा द्वा बृबूकं वहतः पुरीषम्[1] ॥

वसुक्र आह-देवानां दानादिगुणयुक्तानां[2] माने निर्माणकाले सृष्टावित्यर्थः[3]। प्रथमाः[4]-सर्वस्यान्तरेण अतिष्ठन् स्थिताः, प्रथमं तावदेते[5] प्रजापतिना[6] सृष्टा इत्यर्थः। के? मेघाः। कुत एतत्? यस्मिन् पादे तेषामन्वादेशात्। भाष्ये मेघा[7] एव 'माध्यमिका देवगणाः'[8] इत्युक्ताः[9]। कस्मात् कारणात् प्रथमं सृष्टाः? उच्यते। यस्मात् कृन्तत्रात् कर्तनात्[10], एषामुपराः-षष्ठ्यर्थे प्रथमा, एषामुपराणां मेघानाम्, उदायन्-उद्गच्छन्ति। कानि[11]? सामर्थ्याद् वृष्टिलक्षणान्युदकानि, तदधीना च सृष्टानां देवादीनां[12] स्थितिरिति स्थित्यर्थं प्रथमं मेघाः[13] सृष्टाः।

अथवा[14]-देवानामिति निर्धारणे[15] षष्ठी। निर्माणमपि सृष्टं[16] गृह्यते, तिष्ठतिरपि[17] व्यापारार्थे। 'राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः'[18] इति। यथा देवानां मध्ये ये प्रथमा उत्कृष्टा माध्यमिका[19] देवगणा मरुदादयः, ते वृष्टेर्निर्माणे उत्पादने अतिष्ठन् तिष्ठन्ति व्याप्रियन्त इत्यर्थः[20]। व्याप्रियमाणेषु[21] च तेषु कृन्तत्रादेषाम्-'कर्तृकर्मणोः कृति'[22] इत्येवमेषा कर्तरि षष्ठी। एतत्कर्तृकं यद् विकर्तनं[23] तस्माद्धेतोः, उपराः-मेघाः[24], उदायन्-एतेरन्तर्नीतण्यर्थस्येदं[25] रूपम्, उद्गमयन्ति-उदकं जनयन्तीत्यर्थः[26]।

जनिते च तस्मिन् त्रयः-पर्जन्यो वायुरादित्यः-इत्येते स्वेन स्वेन व्यापारेण-पर्जन्यो

---

१-[ ऋ० १०।२७।२३ ] 'देवानां माने० पुरीषम्' इत्येव प्रतीकम् D.
२-'दानादिगुणयुक्तानां' नास्ति B. C.
३-०ष्ट इत्य० D. ४-प्रथमं B. प्रथमां C.
५-'एते' नास्ति D.
६-'प्रजापतिना' नास्ति B. C. ७-मेघो C.
८-[ निरु० २।२२ ]
९-०क्ताम् C. १०-कर्तृकर्त० D.
११-तानि C. १२-देवानां B. C.
१३-घाः C. मेघो D. १४-'वा' त्रुटितम् B.
१५-[ पा० २।३।४१ ] १६-सृष्टे० D.
१७-०रत्र D. १८-[ चा० नी० १।१२ ]
१९-'माध्यमिका' इति नास्ति D.
२०-'व्याप्रियन्त इत्यर्थः' त्रुटितम् D.
२१-व्याप्रियेषु D.
२२-[ पा० २।३।६५ ] २३-विकर्त० B. C.
२४-मेघाः C. मेघा उपरा D.
२५-०न्तर्णिनस्य० C. ०न्तर्हिताण० D.
२६-०यति उदकं जनयन्ती० B. C.
२७-आदर्शपुस्तकेषु खण्डसमाप्तिनिर्देशो न विद्यते।

वर्षेण, वायुः शीतेन, आदित्य उष्णेन तपन्ति संतापयन्ति पाचयन्तीर्थः। पृथिवीम्-तात्स्थ्या-त्ताच्छब्द्यम, पृथिवीस्था[२] ओषधीः, अनूपाः-आनुपूर्व्येण ये वपन्ति प्रकिरन्ति वर्षादीनि ते अनूपाः, पाचितासु च[३]ौषधीषु द्वौ[४] द्वौ वाय्वादित्यौ वृकमुदकं आदित्यमण्डलं प्रति षहतः[५] प्रापयतः, वायुः शोषयन्[६], आदित्यो रश्मिभिराददानः। पुरीषम्-प्रीणनं[७] पूरणसमर्थं वा वह्नित्यर्थः[८]। प्रतमैः[९] प्रकृष्टतमैः।

सारूप्यप्रसक्तमनूपशब्दं निराह-अयमपीत्यादि । इतरो नदीकक्षः[१०] समुद्रकक्षो वा देशविशेषोऽनूप उच्यते। वपेरेव, अनूप्यतेऽनु[११]प्रकीर्यतेऽनुगृह्य[१२]ते उदकेन । अपि वा भूयोऽवयवानुग्रहादनुपूर्वादाप्नोतेरनूपः । स[१३] ह्यनुसंव्याप्यत उदकेन । आप्नोतेश्च क्विपि[१४] अन्नाप्, अच्प्रत्ययः. अन्वावेव शब्दोपजनेनानूपः, यथा प्राक्[१५] एव शब्दोपजनेन प्राचीनः। वैयाकरणानां तु[१६] अनूपशब्दः 'ऊदनोर्देशे'[१७] इति समासान्तव्युत्पत्त्या। प्रागित्यश्चेर्लुक् प्राचीनमिति। 'विभाषाञ्चेरदिक्स्त्रियाम्'[१८] इति खः प्रत्ययः[१९] । त्रयाणां मध्ये द्वयोर्व्यापारातिरेकः कथ्यते । द्वौ वाय्वादित्याविति । पठ्यमानस्यैव व्युत्पत्तिः। प्रवीतेः[२०] शब्दार्थस्य । तद्विपतत्[२१] साकारशब्दं करोति। भ्रंशतेर्वा[२२], तदावरणत्वात् । उभय-स्माद्वा, मेघेभ्यो भ्रश्यते शब्दवश्चेति। उपजनादयो[२३]ऽपि द्रष्टव्याः । प्ररयतेर्वा[२४]-इति धातु-भेदमात्रम् ।

इति स्कन्दस्वामिकृतायां निरुक्तटीकायां
सप्तमस्या-( द्वितीयस्या- ) ध्यायस्य
षष्ठः पादः।[२५]

---

१-'से' नास्ति B. C.
२-०स्थान B. C.
३-'च' नास्ति D. ४-'द्वौ' नास्ति D. द्वौ B. C.
५-अवगत: C. ६-०यणादि० B, C.
७-नीण समर्थ C. ८-०त्यर्थ वा D.
९-०तमम् C. १०-नरवक्षः B. C.
११-'अनु' नास्ति D १२-०नु प्रह० D.
१३-सं B. C. १४-क्विपि B.C. पत्रापि D.
१५-'प्राक्' द्विर्लिखितम् D. १६-'तु' नास्ति D.
१७-[ पा० ६।३।९८ ]
१८-[ पा० ५।४।८ ]
१९-क्विप् B. 'प्रत्यय.' नास्ति D.
२०-[ धा० २।३५ ]
२१-विपत् B. विद्यानन्वात् D.
२२-०र्वा भ्रश्यते ति तदा० D. [ धा० ४।११५ ]
२३-व्यापजना० B. C. व्याप्त इत्युपजाना D.
२४-आयतेर्वा D.
२५-'इति सप्तमस्य षष्ठः पादः' इत्येव B. C.

# [अथ सप्तमः पादः ।

## त्रयोविंशः खण्डः ।][24]

वाङ्नामानीत्यादि-उत्तराणि सप्तपञ्चाशत्, श्लोकः[1] [2] इत्यादीनि । उच्यतेऽनेनेति वागिन्द्रि[3]यम् । तत्कार्यं[4] शब्दोऽपि-उच्यते[5] इति वाक्[6] । उच्यतेऽनेनार्थ[7] इति वा[8] वाक् । स्तनयित्नुलक्षणा माध्यमिका सापि उच्यत इति वाक् । तदधिष्ठात्र्यपि देवता वागिष्यते । सर्वस्याश्च तस्या मेघहेतुत्वात् मेघनामभ्यः[9] पराणि सप्तपञ्चाशत् श्लोकः[10] इत्यादीनि नामानि[11] । सा च[12] कस्माद् धातोर्वाक्[13] ? वच[14] धातोः, यथोक्तसाधना ।

तत्र तेषु वाङ्नामसु सरस्वती इत्येतदभिधानम्, तस्य नदीवद् देवतावच्च[15] निगमाः[16] । 'तत्र तस्येव'[17] इति वतिः[18] । प्रसिद्धनदीलिङ्गयोगात् नद्या इव, प्रसिद्धदेवतालिङ्गयोगाच्च कश्चिद्देवताया इव निगमा दृश्यन्ते । अर्हे वा[19] वतिः । नदीमर्हन्ति, तल्लिङ्गयुक्ता इत्यर्थः । एवं देवतामर्हन्तीति । सोऽयमुभयसाधारणः सरस्वतीशब्दः । तस्य यद्देवतावन्निगमजातं[20] तदुपरिष्टात् द्वादशे[21] 'पावका नः सरस्वती'[22] इत्यत्र व्याख्यास्यामः । अथैतन्नदीवत्[23] । अथैतदनन्तरं नदीवत् ।

[ इति सप्तमस्या- ( द्वितीयस्या- ) ध्यायस्य त्रयोविंशः खण्डः ।[24] ]

---

१-'श' त्रुटितं भाति C. २-श्लोका B, श्लोशा D.
३-वागी० C. ४-तत्तार्यं C, ०कार्यः D.
५-'च्य' इति त्रुटितम् D.
६-अत्र 'उच्यते वाक्' इत्यधिकः पाठः B.
७-०तेनार्थ D. ८-'वा' नास्ति D.
९-मेघेनाभ्यः B. १०-श्लोका B.
११-'नामानि' नास्ति D. १२-'च' नास्ति B. C.
१३-हेतोः D. १४-वचने C, वचेः D.
१५-०च्चेति D.
१६-नियमाः B.
१७-[ पा० ५।१।११६ ] तस्येव C. D.
१८-वेति B.
१९-[ See पा० ५।१।११७ ] वा वतिः B, अर्हो वा वतिः C.
२०-यस्य यद्देवतं निग० D.
२१-अत्र 'एकादशे' इति युक्तः पाठः । अयं मन्त्रो निरुक्तस्यैकादश [ ११।२६ ] एवाध्याये व्याख्यातः ।
२२-[ ऋ० १।३।१० ]
२३-'अथैतन्नदीवत्' नास्ति C, D.
२४-आदर्शपुस्तकेष्वत्र पादखण्डारम्भसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ चतुर्विंशः खण्डः । ][३१]

इयं शुष्मेभिर्बिसखा इवारुजत् सानु गिरीणां तविषेभिरूर्मिभिः ।
पारावतघ्नीमवसे सुवृक्तिभिः सरस्वतीमा विवासेम धीतिभिः ॥[१]

भरद्वाजस्यार्षम् । यद्यपि चेयं सारस्वतस्य[२] पशोः पड्क्चे[३]। 'आ नो दिवो'[४] 'पावीरवी'[५] 'इमा जुह्वाना'[६] 'यस्ते स्तनः'[७] 'सरस्वत्यभि नो नेषि'[८] 'इयं शुष्मेभिः'[९] इत्युत्तमा याज्या[१०] पठिता, तया[११] देवता इज्यते । तथापि चोदना[१२]प्रकरणात् देवतात्वम्, ऊर्मिभिः पारावतघ्नीम्-इति नदीरूपै[१३]र्बलिङ्गात् । प्रकरणाच्च लिङ्गं बलवत्-इति भाष्यकाराभिप्रायः । अतो नदी-रूपेणानेन सरस्वती स्तूयते-इयम्-सरस्वती, शुष्मेभिः-बलै[१४]र्नामैतत्, सामर्थ्याच्चा[१५]न्तर्नीतमत्वर्थम्, ऊर्मिविशेषणम्[१६]-बलवद्भिः । बिसखा इव-यथा बिसानां खादको मृदुत्वात् हिनस्ति, एवमियम्[१७]अरुजत्-रुजो भङ्गे, भनक्ति । किम् ? सानु गिरीणाम्-समुच्छ्रितं प्रदेशं पर्वतानाम्, शिखरमित्यर्थः । केन[१८] ? तविषेभिर्महद्भिरूर्मिभिः[१९], उदकस्य चैवंरूपत्वम्[२०] । तां पारावतघ्नीम्-परस्यावरस्य[२१] च कूलस्य[२२] हन्त्रीम् । अवसे-उदकेन तर्पणाय[२३] पालनाय[२४] वात्मनः । सुवृक्तिभिः-वृजी[२५] वर्जने, सुष्ठु वर्जिताभिर्दोषैः । सरस्वतीमाविवासेम-विवासतिः परिचर्यायाम्, परिचरेम । धीतिभिः-कर्मभिः स्तुत्याख्यैः स्तुतिभिरित्यर्थः[२६] ।

परस्य सांयोगिकं[२७] विशेषयति[२८] उपक्षपयतीत्यर्थः[२९] । बिस्यति[३०]र्गतिकर्मसु पठ्यते तस्येदं

---

१–[ ऋ० ६।६१।२ ] 'इय शुष्मेभिर्बि० धीतिभिः' इत्येव प्रतीकम् D.
२–सर० D. । 'सारस्वतीं धेनुवरीमालभेत' [ मैत्रा० सं० २।५।४ ]
३–पङ्क्चः D. ४–[ ऋ० ५।४३।११ ]
५–[ ऋ० ६।४९।७ cf. ऋ० १०।६५।१३ ]
६–[ ऋ० ७।९५।५ ] ७–[ ऋ० १।१६४।४९ ]
८–[ ऋ० ६।६१।१४ ]
९–अयं मन्त्रोऽत्रैव व्याख्यायते ।
१०–०त्युत्तमाज्यापतो B. ११–'या' त्रुटितम् B. C.
१२–देवता D. १३–पूरत्वं D.
१४–बलम् C.
१५–०न्तर्णीतमर्थत्वं C. ०र्थ्यात् अन्त हितमर्थः D.
१६–०पाश्च C. १७–'इयम्' नास्ति D.
१८–तेन B. १९–'ऊर्मिभिः' त्रुटितम् D.
२०–०यव D. २१–'०स्यावर०' इत्यपि पाठः B.
२२–कुलस्य हन्त्री D. २३–अवनाय D.
२४–पावनाय D. २५–[धा० २।१९] वृजि B. C.
२६–'इत्यर्थः' नास्ति D.
२७–सांयौ C. D.
२८–विगोपय D. अत्र 'विशोपयति' इति युक्तः पाठो भवेत् ।
२९–०क्ष एती० D. ३०–विष्यति० B. C.
३१–आदर्शपुस्तकेषु खण्डारम्भनिर्देशो न विद्यते ।

भेदनार्थस्य रूपम्, अथेदं हि तद्[1] भिद्यतेऽनेन भक्षणेन[2]। वर्धयति वा[3] पुष्णाति तद् भक्षयितारम्। सानु समुच्छ्रितम्-इति अन्तर्भूत[4]क्रियं निर्वचनम्, समुद्[5]इत्युपसर्गेऽध्यायम्, समो मकारस्यात्व[6]मुदो व्यत्ययेन दकारस्य[7] नकारः। क्रियाविशेषस्तूपसर्गाभ्यामेवोपात्तः[8]। समुन्नमिति[9] वा-नुदेः[10] प्रेरणार्थस्यान्तमत्रि[11] इत्यर्थः। संहत्योर्ध्वं श्रितं प्रेरितश्चे[12]त्यर्थः। अपारमपरं[13] कूलमवरं सदर्थ[14]तम्, रेफस्य तकारापत्त्या। एवं सर्वत्र[15]नदीरूपेणाभिधानम्। यदा लिङ्गादपि वि[16]नियोजकश्रुतिबलीयस्त्वात् याज्ञिक[17]पक्षे देवताभिधानम्, तदा नद्या[18] अधिष्ठात्री सरस्वतीत्युच्यते। तुल्यं निर्वचनम्। माध्यमिकाभिधानपक्षे-गिरयो मेघाः, ऊर्मयः स्तनयित्नवः, पारावतेन[19] द्यावापृथिव्यौ। हन्तिर्गतिकर्मा। गमनेन पूरणं लक्ष्यते। द्यावापृथिव्यौ शब्देन पूरयित्रीम्। शेषं समानम्। विभूनामत्र पदानाम्[20]नेकाभिधानसामर्थ्ये सति प्रकरणशो[21]ऽर्थविभागः कल्प्यः।

मेघेभ्यो वाक् तदनन्तरमुदकमिति वाङ्नामभ्य उत्तराण्युदकनामानि एकशतम्। अर्णः क्षोद इत्यादीनि। उन्दे[22]रुदकम्[23]।

उदक[24]सम्बन्धादेभ्य उत्तराणि नदीनामानि सप्तत्रिंशत्, अवनयो यह्व्यः-इत्यादीनि। नदन्तीति नदनाः, अस्यार्थोपपत्तिवचनम्, शब्दवत्य इति प्रसङ्गेनोच्यते, मन्त्रस्वभावकथनार्थम्। बहुलं प्रायेण, आसां नदीनाम्, नैघण्टुकं वृत्तं प्रयोगदर्शनं निगमेषु[25] आश्चर्यमिव प्राधान्येन-यथाऽन्यदाश्चर्यमनित्यं कादाचित्कत्वात्, एवं प्राधान्येन दर्शनमासां प्राधान्यमन्त्रोदाजिहीर्षया।

---

१–'तद्' नास्ति D.

२–॰क्षितेन C. नेदविवक्षितेन D. अत्र 'अनेन भक्षकेण' इति युक्तः पाठो भवेत्।

३–वा B. च C.

४–॰त श्रितयं D. ५–'समुद्' त्रुटितम् B. C.

६–मस्यात्वं D. ७–दस्य नः D.

८–॰वोक्तः D. ॰वोपत्त C.

९–समुन्नमति वा B. C. १०–[ धा॰ ६।२ ]

११–॰णस्यार्थ॰ C. १२–॰तश्चे॰ B. C.

१३–अपारमपरं B. C. १४–॰देव॰ D.

१५–सवम॰ B. C. १६–'वि' नास्ति D.

१७–पक्षे B. १८–तदधानदस्याधि॰ B.

१९–परावते B. पराव C.

२०–विभूतनामात्र पादाना॰ D.

२१–'शः' त्रुटितम् D.

२२–क्लेदनार्थस्य

२३–अस्य वाक्यस्य स्थाने D. पुस्तके दुर्गवृत्त्यानुपूर्वीक एव पाठो वर्तते। स चेत्थम्-"उदकं कस्मात्? उनत्तीति। तद्धि यत्र गच्छति तत्रोनत्ति क्लेदयति। मेघाश्रया हि वाक्, मेघोत्थं चोदकं स्तनयित्नुशब्दपूर्वकञ्च।" अत्र दुर्गवृत्तेर्नामनिर्देशो नास्ति।

२४–'उदक' नास्ति C.

२५–नियमेषु B. C.

तत्सम्बन्धार्थमाख्यानं तावत् प्रस्तौति-विश्वामित्र ऋषि[१]रित्यादि[२], निगदव्याख्यातम्। ऋषावभिधेये विश्वामित्रे 'मित्रे चर्षौ'[३] इति दीर्घत्वम्। सर्वमित्र[४] इत्यर्थकथनम्। सर्वशब्दनिर्वचनमे[५]-सर्व संसृतं संगतम्, अपृथग्भूतमित्यर्थः। सुदाः[६]-सुष्ठु पात्रेभ्यो ददाति। पिजवनः[७]-सम्पदा जव[८]स्य शैघ्र्येण च[९] स्पर्धनीयजवः। अथवा न मिथीभावो गतेः, अतिशयवतः शैघ्र्यात् तस्य, न केनचित्सह गतः पूर्वम्[१०]। स विश्वामित्रः पौरोहित्येन लब्धधनः, वित्त[११]मिति धननाम, धनं गृहीत्वेत्यर्थः।

अथवा-स इति पैजवन[१२]स्य निर्देशः। पौरोहित्येन वृतं[१३] विश्वामित्रं गृहीत्वेत्यर्थः[१४]। संभेदं संगमं तयोरेव, सिन्धुशा[१५]र्योभिर्वा नदीभिः सह। इतरे-धनस्य वोढारो विश्वामित्रस्यानुचराः, तस्करा वा। पिजवनपक्षे सैनिकाः। गाधोर्वै[१६]को भवतेत्येवमर्थं[१७] द्विवदपि बहुवदपि तुष्टाव। अर्हे[१८] यतिः। राजवद् राजसिंहस्य इति यथा। द्विवदुपरिष्टाच्चतुर्दशो[१९] 'प्र पर्वतानाम्'[२०] इत्यत्र व्याख्यास्यामः। अनन्तरं बहुवत्।

[ इति सप्तमस्या- ( द्वितीयस्या- ) ध्यायस्य
चतुर्विंशः खण्डः।[२१] ]

---

१-'ऋषिः' नास्ति B.
२-०त्यादी D.
३-[ पा० ६।३।१३० ]
४-सर्वमित्यर्थ० B. ०मित्यत्र इत्य० D.
५-'सर्वशब्दनिर्वचनं' द्विर्लिखितम् D.
६-सदा B. C.
७-पैज० B.
८-जवः अन्य B.
९-'च' नास्ति D.
१०-पूर्वः C. नास्त्येव D.
११-व्रतमिति B C.
१२-०वननि० D.
१३-वृत्यलं D.
१४-'इत्यर्थः' नास्ति B. C.
१५-अर्घा त्रिर्वा B. अर्घाभिर्वा C.
१६-भव भवते० B. C.
१७-०मर्थे B.
१८-[ cf. पा० ५।१।११७ ]
१९-[ निरु० ९।३९ ]
२०-[ ऋ० ३।३३।१ ] 'प्र' त्रुटितं भाति B.
२१-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति।

# [ अथ पञ्चविंशः खण्डः । ][1]

रमध्वं मे वचसे सोम्याय ऋतावरीरुप मुहूर्तमेवैः ।
प्र सिन्धुमच्छा बृहती मनीषावस्युरह्वे कुशिकस्य सूनुः ॥[2]

उपोपसर्गो रमिणा सम्बध्यते, तत्पूर्वकश्च रमिरुपसंहारे[3] वर्तते । उपरमध्वं महतो वेगाद्[4] गाधोदकाश्च । मे वचसे-मम[5] वचसः, सोम्याय[6]-सोमसम्पादिनोऽर्थाय[7] । उत्तीर्य पश्यतो[8] मम सोमसम्पादि[9]वचनं यथा स्यादित्येवमर्थमित्यर्थः । ऋतावरीः-आमन्त्रितविभक्तेः स्थाने[10] द्वितीया, ऋतमुदकं तेन तद्वत्यः, भूम्नि मतुप्[11], हे बहूदका इत्यर्थः । कियन्तं कालम् ? मुहूर्तमेवैः-अवतेर्[12] गत्यर्थस्य रक्षणार्थस्य[13] चेदं[14] रूपम्, एवैः-मदीयैर्गमनैः रक्षणैर्वा निमित्तभूतैः, मम[15] गमनार्थं वेत्यर्थः ।

सामान्येन[16] नदीषूच्यमानासु समीहितं प्रयोजनमकुर्वतीषु प्राधान्याद् विशेषेण सिन्धुमाह-प्राह्वे[17], अच्छ[18] अभेः स्थाने, प्राभिह्वयामि[19] । सिन्धुम्[20] । केन[21] ? बृहती मनीषा, मनस ईश्वरैस्तुतिः[22] प्रज्ञा वा, ततस्तृतीयायाः पूर्वसवर्णः[23], बृहत्या मनीषया मनस ईषया मनःपूर्विकया महत्या[24] स्तुत्या वा[25] । अवस्युः-अवः पालनं तदात्मन इच्छतीति क्यच्[26] । 'क्याच्छन्दसि'[27] इति उः, पालनकामः कुशिकस्य सूनुः-पितुरपि गौरवान्मम गौरवमेताः कुर्युरिति, अहं विश्वामित्रः ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति ।
२–[ ऋ० ३।३३।५ ] 'रमध्वं मे वचसे० सूनुः' इत्येव प्रतीकम् D.
३–०पहारे C.
४–०गानगा० B. C. 'गाद्' इति 'दगा' इति वा त्रुटितम् D.
५–'वचसे मम' नास्ति D.
६–'सोम्याय' नास्ति D.
७–०दिनेऽर्था० B.
८–पजतो B.
९–०रावो दि० C.
१०–स्तान D.
११–'तदस्यास्त्यस्मिन्निति मतुप्' [पा० ५।२।९४ ] इति सूत्रे–
'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥'
इति भाष्यकारवचनम् ।
१२–[ धा० १।६३१ ]
१३–रक्षार्थ० D.
१४–०र्थस्येदं B. ०स्येवेदं C.
१५–मम D.
१६–'न' त्रुटितम् C.
१७–'प्राह्वे' नास्ति D.
१८–अच्छाह्वे स्था० B. C.
१९–'प्र' त्रुटितम् B. C.
२०–'सिन्धुम्' नास्ति B.
२१–'केन' नास्ति B. C.
२२–०दरगस्तु B. C.
२३–'बृहती मनीषा' इत्यत आरभ्य 'पूर्वसवर्णः' इत्यन्तः पाठो नास्ति D. ०वर्णाः B.
२४–'मनीषया मनस ईषया मनःपूर्विकया महत्या' इति पाठस्त्रुटितः B. C.
२५–ह C.
२६–[ Cf. पा० ३।१।८ ]
२७–[ पा० ३।२।१७० ]

ऋतमित्युदकनाम, प्रत्यृतं भवति । निम्नं प्रदेशं प्रति गतं भवति । मुहूर्तशब्दनिर्विवक्षयाह-मुहुर्ऋतुरिति । प्रविभागार्थं विग्रहप्रदर्शनम, उकारेण ऋकारस्य व्यापत्तिः, रपरत्वश्च । इदानीं विग्रहप्रसक्तमृतुं निराह-अर्तेर्गतिकर्मणः । ऋच्छत्यसावित्यृतुः कालः । मुहुः शब्दं निराह[2]-मूढ इव कालः, अल्पत्वान्न शक्य उपलक्षयितुम[3]हरादिवदिति । यावदभीक्ष्णमिति तावन्मुहुरिति पर्यायवचनम् । अभीक्ष्णमाह[4]-अभिक्षणं भवतीति शब्दसमाधिः । क्षणमात्र[5]मपि[6] व्यापीत्यभिक्षणम्[7] । [8]क्षणः पुनः क्षिणोते[9]र्हिंसार्थस्य । तदर्थः क्ष्णौतिना[10] प्रदर्श्यते[11], प्रक्ष्णुतस्तनुः, सूक्ष्मोत्पन्नत्वात् क्षीण इव लक्ष्यते । कालः पुनः वेलयते[12]र्गत्यर्थस्य । गमयत्यसौ सर्वतो भूतानि[13] विनाशयतीत्यर्थः ।

कुशिको राजा-इत्यभिधेयवचनम् । क्रोशतेः[14] शब्दार्थस्येति निर्वचनम् । विहितं कुरुत[15] प्रतिषिद्धं माकार्ष-इत्येवं सर्वदा शब्दं करोत्यनुशास्ती[16]त्यर्थः । क्रशतेर्वा प्रकाशयत्यर्थस्य, विख्यातो ह्यसौ[17] । न च क्रंशतिरस्मिन्नर्थे दृष्टः, एतदनेनाचष्टे-शब्दानुरूप्येणापि निरुक्तधातवोऽर्थप्रविभागार्थं विकल्पयन्त[18] इति स्थाने दधत्[19] । साधुविक्रोशी[20] विक्षेप्तार्थानाम्[21] । अथवा न्यायेन विविधार्थानां संचयो विक्रोशः[22], तेन तद्वान् । वाह्यार्थानां विक्रोशयिता[23] । इत्थं प्रधानस्तुति[24]र्नदीनाम् । ता एवमुक्ता नद्यस्तं प्रत्यूचुः ।

[ इति सप्तमस्या- ( द्वितीयस्या- ) ध्यायस्य
पञ्चविंशः खण्डः[25] । ]

---

१–'अवस्युः-अवः पालनं' इत्यारभ्य 'ऋतुं निराह' इत्यन्तः पाठस्त्रुटितः B. C.

२–मुहूर्तः शब्दमाह D.

३–'ल' त्रुटितम् D. ४–अभिक्ष्ण० C.

५–०मात्रं B. ६–०त्यपिलक्ष० D.

७–क्षणं B. ८–अतः D.

९–[ धा० ८।३ ] 'क्षणोतेः' इति पाठो युक्तः स्यात् । धातुपाठे तूभयथापि वर्तते ।

१०–क्षौति० C. ११–प्रदृश्य० C.

१२–वेल कालोपदेशे । काल इति पृथग्धातुरित्येके । [ धा० १०।३३४ ]

१३–०तानीति D.

१४–[ धा० १।९०९ ]

१५–कुरुते B. C.

१६–०शास्तित्य० C.

१७–०तो ह्यसौ B.

१८–कल्प्यत B. C. १९–०धन् D.

२०–वीकोशी C. २१–०सावर्था० C.

२२–विक्रोशः B. 'कोशः' इत्येव D.

२३–वागुच्छानाद्वा विक्रोशयिताः B. वागच्छानात् वापि कोशयिता C. 'बह्वर्थानां' इति स्यात् ।

२४–०स्तुतिर्नि० C.

२५–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ षड्विंशः खण्डः । ][1]

इन्द्रो अस्माँ अरदद् वज्रबाहुरपाहन् वृत्रं परिधिं नदीनाम् ।
देवोऽनयत्सविता सुपाणिस्तस्य वयं प्रसवे याम उर्वीः[2] ॥

इन्द्रोऽस्मानरदत्-अखनत्[3] । वज्रबाहुः-बाहुनात्र[4] हस्तो लक्ष्यते, वज्रहस्तः । कथमखनत्[5] ? उच्यते, अपाहन् वृत्रं-हतवान् मेघम् । परिधिं नदीनाम्-सर्वतो निहितं[6] शब्दकारिणीनामपाम् । तस्मिन् हते आपः पतिताः[7], ताभिर्गच्छन्तीभिर्वयं खाताः[8] । एवं मेघहननद्वारेणास्मानखनत् । न चाखनदेव केवलम्[9] । किन्तर्हि ? देवो मेघहननद्वारेणानयदपि[10] । सविता-सर्वस्याभ्यनुज्ञाता । सुपाणिः-सुहस्तः । यत एवमस्माकं खनिता समुद्रं नेता च[12], अत उत्पत्तेः स्थितेश्च कर्तृत्वात्तस्य वयं प्रसवेऽभ्यनुज्ञायां वर्तमाना इति शेषः । तेनानुज्ञाता इत्यर्थः । यामो गच्छामः[13] । उर्वीः-उर्व्यो[14] विस्तीर्णा । न तव वचनादुपरमामहे[15] । प्रगृह्य पाणी संयतौ कृत्वा[16] इत्यञ्जल्यभिप्रायः[17] । उर्व्यो विभक्तिविपरिणामात् । ऊर्णोतेरित्यादि शब्दनिर्वचनम् । वृणोतेरिति धात्वन्तरवम् । छादनार्थत्वश्च विशिष्टम् ।

इत्थं प्रत्याख्याय तद्[18] विश्वामित्रवचः[19] ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो नास्ति ।
२–[ ऋ० ३।३३।६ ] 'इन्द्रो अस्मानरदत्० उर्वीः' इत्येव प्रतीकम् D.
३–'अखनत्' त्रुटितम् C. ४–'बाहु' त्रुटितम् C.
५–'कथमखनत्' त्रुटितम् B. ०महन० D.
६–निधानमित्यर्थः । 'सर्वतो निहितं' नास्ति D. अस्य स्थाने दुर्गवृत्त्यानुपूर्वीक एवेत्थं पाठो वर्तते- "परिधारयितारं नदीनां नदनानामपाम् । स हि निपतन्तीरप ( पो ) निरुणद्धि ।"
७–'ताः' त्रुटितम् D.
८–याताः D.
९–'अस्मान' नास्ति B. C.
१०–'न चाखनत्' त्रुटितम् D.
११–०दपि B. C.
१२–'यत एवास्माकं खनिता समुद्रं नेता च' अयं पाठस्त्रुटितः B. C.
१३–'गच्छामः' नास्ति D.
१४–'उर्व्यः' नास्ति D.
१५–न स वचना उपयामहे B. 'र' त्रुटितम् C. 'मा' त्रुटितम् D.
१६–अत्र केवलं D. पुस्तके दुर्गवृत्त्यानुपूर्वीक एवेत्यधिकः पाठो वर्तते-"वयं यामो गच्छामस्तानि तानि देशान्तराण्यभोगिभिः।"'सो ऽस्माकमीश्वरः। स एवास्मानाज्ञापयितुमर्हति । न त्वमर्हसी- ('अर्हसि' नास्ति मुद्रितपुस्तके ) त्यभिप्रायः ।"
१७–'संयतौ कृत्वा' नास्ति B. C.
१८–'तद्' नास्ति B. C.
१९–०वासयम् D.

## [ अथ सप्तविंशः खण्डः । ][1]

आ ते कारो शृणवामा वचांसि ययाथ दूरादनसा रथेन ।
नि ते नंसै पीप्यानेव योषा मर्यायेव कन्या शश्वचै ते ॥[2]

आशृणवाम-आभिमुख्येन[3] शृणुमः कुर्म[4] इत्यर्थः । हे कारो ! स्तोतः, ते तव[5] वचांसि । ययाथ, दूरात्-दूरत आगतोऽसि, यतो दूरं[6] वा यावद्गृहमित्यर्थः । यद्वा दूरं निनमतेति[7] सम्बन्धात् सुनमघ्यम । कुत एतत् ? पूर्वस्यामृचि-'नि षू नमध्वं भवता सुपारा अधो अक्षाः' इति तद्विशेषणश्रुतेः । अवियुक्तेनैव[8] अनसा शकटेन लब्धस्य धनस्य पूर्णेन रथेन च[9] यानेनात्मनः, नि ते नंसै-नमेरिदं लोटि रूपम्[10] । लोटि नास्ति सि[11] बाहुलकत्वात् । अतो भाष्यकार आह-निनमाम[12] इति । एकवचनश्चात्र बहुवचनस्य स्थाने । ते तवार्थाय, नीचैर्नमाम । अवियुक्तेन वानसा यातुं प्रह्वीभवाम[13] मन्दवेगा गाधोदकाश्च भवामेत्यर्थः । पीप्यानेव योषा-यथा स्तनं पाययन्ती[14] स्त्री पुत्रं तस्यार्थाय प्रह्वीभवति । यथा वा मर्यायेव मनुष्यस्य पितुर्वाऽर्थाय[15], कन्या-कुमारी कन्यला[16], शश्वचै ते-ष्वजेरेतद्[17] रूपम्, परिष्वजनार्थं प्रह्वीभवेत् तथा[18] वयमपीति । ते तवार्थायेत्युक्तार्थम् ।

नित्यपक्षे प्रावृषि प्राप्ति[19]तोभयकूला नदीः सर्वमित्रो भगवानादित्योऽप्येवतीव-रूपं म इत्यादि । देशप्लवनं माकार्ष्टं, यज्ञानां संवयवहार्यो[20] भवतेति[21] जगतः पालनकामः[22] । कुशातेः, औरसः प्रकाशः[23] कुशिकः, कुशिकस्य[24] प्रकाशस्य सूनुरहमादित्यः[25], तस्य पुत्र-स्थानीय इत्यर्थः ।

---

१-आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२-[ ऋ० ३।३३।१० ] 'आ ते कारो० चैते' इत्येव प्रतीकम् D.
३-आभिमुख्येन शृणवाम शृणुमः D.
४-कर्मत्य० B.
५-'तव' नास्ति B. ते घचयांसि C.
६-यो C. यत आगतोऽसि दूरं वा D. अत्र 'यतः' स्थाने 'इतः' इति पाठो युक्तः स्यात् ।
७-०नमते० D. ८-अत्रयु० B. C.
९-चा B. C. १०-रूपं लोटि D.
११'सि' नास्ति B. १२-निनमा B. C.
१३-०भावा D. १४-०न्तीति D.
१५-०र्वा भ्रातुर्वा मर्याय D. १६-कन्या B. D.
१७-[ धा० १।१०२५ ] ०चै ते तथा वयमपीति स्तने० D.
१८-तद्वदित्यर्थः D. १९-प्रापितो D.
२०-०हारार्थे B. २१-०वर्तीति B. C.
२२-पावन० B. C. २३-०कारो B. C.
२४-कुलिक० B. C. २५-०त्यर्थः D.

एवमुक्ता नद्यस्तं प्रत्यूचुः-इन्द्रो अस्मानिति । समानं[1] पूर्वेण । एवं प्रावृषि प्रवृद्धोदकाः प्रत्याख्यायैनं तद्दर्शानामन्ते वर्षाणां शरदि प्रत्यहं तारतम्येन क्षीयमाणोदका आशुश्रुवुः, तद्दर्शानां[2] कृतवत्य इत्यर्थः । आ ते कारो यथाय इति मध्यमः प्रथमपुरुषस्य स्थाने, यान्तु[3] सर्व एव जनाः[4] । निनमाम ते तवार्थाय । शिष्टं समानम् ।

अप्सु जातो योनिर्वा अश्व इत्यप्सम्बन्धेनैव नदीनामभ्य पराण्यश्वनामानि[5] षड्विंशतिः । तेषां मध्ये अष्टावुत्तराणि बहुवचनान्तानि-अव्यथय इत्यादीनि[6] । तत्त्वकथनमसन्देहार्थम् । तानि चेत् समानकर्माणीत्याद्यनुसन्धेयम्[7] । श्येनादयोऽप्यर्थान्तरे दृश्यन्ते ।

अश्वं निराह-अश्नोतेः, व्याप्नोति ह्यध्वानमन्येभ्यः शीघ्रम् । महाशनो वा । तत्र तेष्वश्वनामसु दधिक्रा इत्येतद्देवतया सन्दिह्यते । तद्विवेकार्थं[8] किञ्चिद् विनष्टधातुप्रातिपदिकावयवप्रदर्शनार्थञ्चोपन्यस्तम्[9] । अस्य निर्वचनम् दधत् धारयन् सादिनं साधीयः क्रामति । दधत् क्रन्दति हृर्पात् हेषारवं करोति । दधदाकारी[10] भवति-प्रधिष्ठित ईषदवनतमध्यभोगः[11], उद्धृत[12]कन्धरः[13], कुञ्चितघोणः[14], स्तिमितचक्षुः, कर्णशुक्तिरेकारो[15] भवति ।

तस्याश्ववद्देवतावच्च निगमा भवन्ति । उक्तो यस्यार्थः। तद्देवतावत् तत्र पञ्चदशो[16] व्याख्यास्यामः, 'आ दधिक्राः'[17] इत्यत्र । अनन्तरमेतदश्ववद् व्याख्यायते ।

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य
सप्तविंशः खण्डः ।[18] ]

---

१-'०निति, समानं पू०' त्रुटितम् B. C.
२-स्थानं B. तदस्थानां C.
३-यात B. C.
४-जनः B. C.
५-०श्वानां मानि C.
६-०दिनि B.
७-'आदि' नास्ति D.
८-तद्विकार्थं B. C.
९-०वयवे B. C.
१०-०षद्रा का० B. C.
११-०ष्ठित ईषदवनमध्यमभाग D.
१२-ध्विष्यत D.
१३-कद्वाः B. C.
१४-किश्चिघोणः D.
१५-'कर्णशुतिश्चाकारो भवति' इति पाठोऽर्थानुसारी युक्तो भाति ।
१६-[ निरु० १०।३१ ]
१७-[ ऋ० ४।३८।१० ]
१८-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथाष्टाविंशः खण्डः । ][1]

उत स्य वाजी क्षिपणिं तुरण्यति ग्रीवायां बद्धो अपिकक्ष आसनि ।
क्रतुं दधिक्रा अनु संतवीत्वत्पथामङ्कांस्यन्वापनीफणत् ॥[2]

वामदेवस्यार्षम्[3] । अपि स वाजी-वेजनवान् कम्पनवान्[4], कम्पिता वा स्वयं कम्पयिता वा[5] परेषामित्यर्थः । क्षिपणि-क्षेपणं प्रेरणम् । द्वितीयाश्रुतेः कर्मप्रवचनीयोऽनुशब्दोऽध्याहार्यः । प्रेरणमनु अश्वारोहण[6]पाष्ण्यां प्रेरितः सन्नित्यर्थः । तुरण्यति-त्वरते । किञ्च ग्रीवायां बद्धो कक्षच्चक्रेण[7] । अपिकक्षे-अपीति संसर्गमाह, कक्षेण यः संसृष्टः प्रदेशः सोऽपिकक्षः । कक्षस्य[8] समीपस्तस्मिंश्च कक्ष्यया । आसनि-आस्ये च खलीनेन । क्रतुं-कर्म आत्मीयं शीघ्रगतिलक्षणम्, प्रज्ञां वाऽश्वारोहस्य[10] । अनुसन्तवीत्वत्-तनोतेः, तैवतेर्वा[11] वृद्ध्यर्थस्येदं रूपम् । अनुसन्तनोति अनुसंवर्धयति[12] वा । पथामङ्कांसि अनुशब्दो[13]ऽत्राप्यर्थे । अङ्किः[14] कौटिल्ये । पथां मध्ये ये कुटिलाः पन्थानस्तानपि । आपनीफणत्-फणतिर्[15]गतिकर्मा, अत्यर्थं गच्छन् ।

ग्रीवा-गिरत्याहारमनयेति गिरतेः । शब्दं वा गृणातेः । गृह्यते वास्यामिति गृह्णातेः । अपिकक्ष आसनीति व्याख्यातं निगदेन । अनुसन्तनोतीति अनुमन्तैवतेः[16] । तनोतिनार्थप्रदर्शनम् । अनुसन्तनोति वेगमविच्छिन्नं सम्पादयति । तैवैतेः पूर्वया-'पूर्वोऽभ्यासः'[17] इत्याभ्यासलक्षणया प्रकृत्या सह, साभ्यासस्य निगम इत्यर्थः । 'तनोतेः' इति तु पाठे बहूत्प्रेक्ष्यम् । अङ्कांसि-अङ्किः[18] कौटिल्ये, कुटिलानीत्यर्थः । पन्थाः-पततेः पद्यतेर्वा वर्णव्यापत्त्या आकारो नामकरणः । पन्थतेः सादृश्यभूयस्त्वम् । सर्वे[19]ऽपि गत्यर्थाः । अङ्कोऽञ्चतेः[20] कौटिल्यार्थस्येति

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ ऋ० ४।४०।४ ] 'उत स्य वाजी॰ फणत्' इत्येव प्रतीकम् D.

३–॰वार्षम् D.

४–कम्पनवान् वेजनवान् D. ५–'वा' नास्ति D.

६–॰रोपण॰ B. C. ॰पाष्ण्यं D.

७–'च' त्रुटितम् D. ८–'कक्ष गर्भाने च' इत्येव D.

९–खलि॰ C. १०–॰हणस्य D.

११–'तुरस्तुशम्यमः सार्वधातुके' [ पा० ७।३।९५ ] इति सूत्रे 'तु' इति सौत्रो धातुर्गतिवृद्धिहिंसासु' इति भाष्यकारः ।

१२–॰सं वै वर्धयन्ति C.

१३–'शब्दः' नास्ति D. ॰ब्दोप्यार्थे C.

१४–[ धा० १।८२९ ] अति C. D.

१५–[ धा० १।८७३ ]

१६–अयं सौत्रो धातुः [ पा० ७।३।९५ ]

१७–[ पा० ६।१।४ ]

१८–[ धा० १।८२९ ] १९–॰भिग॰ D.

२०–कौटिल्यार्थस्त्वञ्चतिर्धातुपाठे न दृश्यते।

नैरुक्ताः[1]। आपनीफणत्[2]-'फण गतौ'[3] इत्यस्य चर्करीतवृत्तं यङ्लुगन्तमिति, क्रियाभ्यासविषयमित्यर्थः।

अश्वसम्बन्धेनोच्यते[4]-दर्शितेभ्यो[5] उत्तराण्यादिष्टोपयोजनानि। आदिष्टा निर्दिष्टा[6], उपयुज्यन्तेऽस्मिन्ननेन वेत्युपयोजनम्, इन्द्रादिर्देवताविशेषोऽनिर्दिष्टसम्बन्धीत्यर्थः। किं प्रयोजनम्? अनिर्दिष्टदेवतेषु[7] मन्त्रेषु साहचर्येण[8] सम्बन्धिनो ज्ञानाय। इतिहासपक्षे नैरुक्तपक्षेऽपि पूर्वपक्षापरपक्षौ, आहोरात्रे वा। हरी इन्द्रस्य, सोमपानादिक्रिया[9]साधनभूतत्वात्[10]। रोहितोऽग्नेः।

नित्यपक्षे ज्वाला अश्वाः, व्याप्तिमत्यः, हरितवर्णाः प्रातरादित्यस्य। अश्विनोः[11] काले रासभवर्णौ, तत्कालोचितेन श्यामलेन वर्णनोपदेशः[12]। अजाः-अजनात्, पूष्णः काले रश्मयो गच्छन्ति सर्वतः, प्रावृषि पृषत्यो[13] विचित्रा मेघमाला मरुताम्। उसयः काले तमोरूपा रश्मिमाला[14] गन्त्र्यः। सवितुः[15] काले श्यामवर्णा भवन्ति। 'छन्दांसि वै विश्वरूपाणि'[16] इति बृहस्पतेः। वायोः प्रवृत्तौ तृणपर्णपांस्वादेः सञ्चरणान्मिश्रणान्नियुतः।

ज्वलनमैश्वर्यम्, तद्वद्देवादर्शाद्यभिसम्बन्धेन[17] ज्वलत्यर्था भ्राजत इत्यादय उत्तरे धातव आख्यातशब्दा एकादश।

तावन्त्येवोत्तराणि जमदित्यादीनि[18] ज्वलतो दीप्तिमतः[19] सत्त्वस्य नामधेयानि। दीप्त्या भक्षयदिव[20] जमत्। अपकालितुमलं[21] कल्मलीकिनम्। जैनं[22] पराभावयति शोभयति शब्दानुकरणं[23] वा जञ्जणाभवन्। तमः पापादिमलं मलभावान्नयतीति मल्मलाभवन्[24]।

---

१–'आपनीफणत्-फणतिर्गतिकर्मा' इत्यारभ्य 'नैरुक्ताः' इत्यन्तः पाठस्त्रुटितः B. C.
२–अवनीहणन् C. ॰पणीफ॰ D.
३–[ धा॰ १।८७३ ]
४–॰श्वत्वं व॰ B. श्वर्थे व॰ C.
५–शौकेभ्य B. ॰शौत्येभ्य C.
६–'निर्दिष्टा' नास्ति B. C.
७–॰देवनेषु मन्त्रेण D. ८–॰ण च स॰ D.
९–॰क्रियया B. १०–'भू' त्रुटितम् C.
११–अश्व॰ C. १२–॰नोप॰ B. C.
१३–प्रस्त्यः B. वृस्त्यः C.
१४–॰मागालस्त्र्यः B. C.
१५–'सवितुः' त्रुटितम् B. C.
१६–[ अनुपलब्धमूलमिदं वचनम् ]
१७–॰द्यपि स॰ B. १८–दित्यादि D.
१९–'म' त्रुटितम् D.
२०–॰यादि॰ B. C. 'य' त्रुटितम् D.
२१–॰लितमल्पं C.
२२–रपरा॰ B. रा परा॰ C.
२३–॰कारं B. C.
२४–॰भवनं B. ततः पापादिमंगलभावं नयन्तीति मंमंगलाभवत् D.

पूर्ववद्धानुकरणम्[1] । मलमलायत्तेऽग्निरिति[2] । यथाप्रसिद्धमर्चिरादयः[3] शृङ्गाणोति ज्वाला एवोच्यन्ते । अध्यायपरिसमाप्तिसूचनाय सर्वत्राभ्यासः श्रुतौ तथा दर्शनात् ।

इत्याचार्यमहेश्वरकृतायां महेश्वरकृतायां

निरुक्तभाष्यटीकायां

सप्तमोऽध्यायः[4]

---

[ इति सप्तमस्या-( द्वितीयस्या-) ध्यायस्य

सप्तमः पादः ][5]

---

[ इत्याद्याविंशः खण्डः सम्पूर्णः । ][5]

---

१–'व' त्रुटितम् C.   २–रीति C.

३–०द्वः अ० C, ०द्धा अ० D.

४–इत्याचार्यमहेश्वरकृतायां निरुक्तभाष्यटीकायां सप्तमोऽध्यायः C.

इति निरुक्तटीकायां सप्तमोऽध्यायः D.

५–नास्ति हस्तलिखितपुस्तकेषु ।

# अथ तृतीयोऽध्यायः[1]।

## [ तत्र प्रथमः पादः । ][2]

ज्वलनकर्मसम्बन्धादाह-कर्मनामान्युत्तराण्येभ्यः षड्विंशतिः । अपः, अप्न इत्यादीनि । क्रियत इति कर्मणि कारक इत्यर्थः । अनाश्रितविशेषाणाश्च कर्मणां नामानि सति साधारण्ये, साधारणानि च निर्णेतव्यानि वाक्यार्थवशात् ।

कर्मणो हि प्रधानं दृष्टादृष्टार्थत्वादपत्यलक्षणं फलम्, अतस्तदनन्तरमपत्यनामान्याह पञ्चदश तुगादीनि । साधारणत्वाच्चेषां स्त्रीपुंससाधारणेनैवापत्यशब्देनाह-अपत्यं कस्मात् ? अपेत्य शरीरात् ततम्[3], शरीरात्मैकदेश इत्यर्थः । अपेत्यर्थमिति[4] क्रियामाक्षिप्य प्रवृत्तः प्रादेशानि विपरिलिखन्तीति यथा ततोतेर्यो नामकरणः । तच्चैतदौरस एव सम्भवति । नानेन पततीति वा-हेतौ तृतीया । 'प्रजाभिरग्ने अमृतत्वमश्याम्[5]' इति मन्त्रलिङ्गात् । 'प्रजया पितृभ्यः[6]' इति ऋणविमोकश्रवणात्[7] । एतच्च क्षेत्रजातिष्वपि संभवतीत्युत्तरः प्रपञ्चः ।

किं कृतककृत्रिमकानीन[8]सहोढादिभिर्न पतति, उत औरसेनैवेति[9] ? उभयथा स्मरणात् सन्देहः । तत्रान्यपरेण[10] मन्त्रद्वयेन निर्णिनीषया आह-तदथेत्यादि । तदिति[11] वाक्योपन्यासे । यथा जैनेयितुः[12] प्रजा नान्यस्येत्येवमर्थीये ऋचावुदाहरिष्यामः ।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य
प्रथमः खण्डः । ][2]

---

१–अत्र तृतीयाध्यायारम्भ एव केवलं D. पुस्तके, विश्वामित्रार्षस्य नदीस्तुतिरूपस्य त्रयोदशर्चस्य सूक्तस्य [ ऋ० ३।३३।१-१३ ] सर्वस्यापि व्याख्यानमुल्लिखितमस्ति । तच्च व्याख्यानं सायणीयमेव । व्याख्यानान्ते लेखकेन-'इति क्षेपः। माधवीयवेदार्थप्रकाशगतोऽप्यत्र लिखितः' इत्येतत् प्रकटीकृतम्। स च लेखो ग्रन्थानङ्गीभूतत्वादनावश्यकत्वाच्चास्माभिरत्र नोद्धृतः । ग्रन्थारम्भात्प्रागेव-'नमः साम्बसदाशिवाय गुरवे। नमो गंगायै ।' इति पाठो वर्तते D. पुस्तके ।

२–आदर्शपुस्तकेषु खण्डारम्भसमाप्तिनिर्देशो न विद्यते ।

३–'शरीरात् ततम्' त्रुटितम् C. ४–०मेति B. C.

५–[ ऋ० ५।४।१० ] ०मपश्याम् C.

६–अज्ञातमूलमिदं वचनम्। ७–इत्य ऋणवो वि० C.

८–०कानिन० B. C. अत्र वाक्यादौ पठितस्य 'कृतक'-पदस्य स्थाने 'क्रीतक' इति पाठोऽर्थानुसारी युक्तो भाति ।

९–'औ' त्रुटितम् B. १०–०त्राप्य० D.

११–'तदिति' त्रुटितम् C. १२–यीतुः C.

## [ अथ द्वितीयः खण्डः । ][1]

परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम ।
न शेषो अग्ने अन्यजातमस्त्यचेतानस्य मा पथो वि दुक्षः ॥[2]

वसिष्ठस्यार्षम्[3] । पुरा[4] वसिष्ठो हतपुत्रः पुत्रं याचमानः[5] कृतकादीनामन्यतमं[6] पुत्रं कुर्वित्यग्निनोक्त[7]स्तं प्रत्याह-हिशब्दो[8] यस्मादर्थे । परिषद्यम्-सर्वतः सादनीयं नापत्यत्वेनाङ्गीकर्तव्यम् । किं तत् ? उच्यते-अरणस्य-अरण इत्यसम्बन्ध[9] उच्यते, स ह्यपाणो भवति अपगतो[10] ऋणादित्यर्थः । 'पुत्रो हि ऋणमस्मिन् संनयति'[11] इति श्रुतेः । पितुर्यद् ऋणं तस्य प्रतिगृहीता[12] जायमान एव नापगतः[13] । ऋणादसम्बन्धस्त्वपगतः[14] । अतोऽसावपार्णत्वाद[15]रणस्तस्य । रेक्णः-धनमपत्याख्यम् । तस्मान्नित्यस्य रायो[16] धनस्य औरसपुत्राख्यस्य पतयः स्वामिनः, स्याम-भवेमेत्याशास्महे । कस्मात् ? यस्मात्[17] न शेषो नापत्यमन्यजातमस्ति भवति । अचेतानस्य-अस्तीत्येतदनुपक्तव्यम् । अविदुषः परिचर्यादिनाराधितस्य इह[18] लोके प्रीत्यादिमात्रं फलं भवति न पुत्र इत्यर्थः । एतज्ज्ञात्वा नो[19]ऽस्माकं मतान्[20] पितृपितामहादि-

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ ऋ० ७।४।७] 'परिषद्यं ह्यरणस्य० वि दुक्षः' इत्येव प्रतीकम् D.

३–०स्यार्षः C. ४–पुरा न B, C.

५–या ( चा B. ) चमानः B. C.

६–०तमत् C. 'पुत्रं' त्रुटितम् B. 'कृतक' इत्यस्य स्थाने 'क्रीतक' इति पाठो युक्तः ।

७–०त्यग्निनो० C. ८–हिर्यस्मा० D.

९–'सम्बन्ध' इति द्विर्लिखितम् C.

१०–०दीत्य० C. अपगत ऋणादिरित्यर्थः D.

११–पुत्रो ह्यृणं स्मिं संनमयति B. पुत्रो ह्य ऋणमस्मिं संनमयति C. [ cf. ऐ० ब्रा० ३३।१ ]

१२–०गृही० B. १३–क्रीतकादिरित्यर्थः ।

१४–अत्र 'असम्बन्ध' पदे बहुव्रीहिः–न विद्यते सम्बन्धो यस्यैवंभूतोऽसावपगतः क्रीतकादिरित्यर्थः । अपगतस्य क्रीतकादेः, पितुर्ऋणेन सह सम्बन्धो न भवति, अपितु जायमानस्यैव पुत्रस्येत्यभिप्रायः ।

एतत्पदानन्तरं चात्र D. पुस्तके मनुनाम्ना पद्यमेकमुद्धृतं वर्तते । तच्चेत्थम्—

"क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥"
[ मनु० ९।१८० ]

१५–०वपर्णत्वा० B. पवर्णत्वा० C.

१६–'रायो' नास्ति D.

१७–'यस्मात्' द्विर्लिखितम् C. नास्त्येव D.

१८–'इह' इति B. पुस्तके 'ह' इति C. पुस्तके च त्रुटितम् ।

१९–'नः' नास्ति D.

२०–ताः B.

## [ अथ तृतीयः खण्डः । ][1]

न हि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।
अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः ॥[2]

न हि प्रभाय[3]-प्रहेरार्यः[4] कृतार्थे व्यत्ययकृत्[5]। न हि ग्रहीतव्य[6] इत्यर्थः। अरणः-असम्बन्धः। सुशेवः-परिचर्यादिना सुसुखोऽपि[7]। अन्योदर्यः-ऋ गतौ[8], उद्गम्यमानत्वादुदुरसामीप्याद्वा[9]। रेतोऽत्रोदरमुच्यते, अन्यरेतसो जातो मनसा[10] मन्तवै-मनसापि[11] न मन्तव्यो ममायं[12] पुत्र इति शेषः। अधा चित्-यतो यदस्य[13] ओकः-स्थानं स्वगोत्राख्यम्, तदेव पुनः पिण्डदानसन्तानोत्पादनादिना[14], स एति गच्छति, आकार एतिनापरेण[15] सम्बध्यते। अतश्च[16] नः अस्मत्, वाजी-बली, उद्वेजनस्वभावकः कम्पयिता[17] वा दायादानाम्[18]। अभीषाट्[19]-अभिभविता च[20] सपत्नानाम्, त्वत्प्रसादात् एतु-आगच्छतु, नव्यः-नवजातः, औरसः पुत्र इत्येनद् वयमाशास्महे।

अथैकपदं[21]निरुक्तम्। ओक इति निवासनाम, उच्यतेरिति[22] पाठान्तरम्। आह च 'ओक उचः के[23]' इति। तदेतदग्नेरभिधानमधिष्ठात्रभिप्रायम्[24]। अथवा कर्माङ्गत्वेन[25] सगुणत्वार्थं मन्त्रे प्रावयदभिधानं कर्मात्मन एव भविष्यति[26]। सर्वथान्यपरे[27] मन्त्रे जनयितुरपत्यमित्येतत्[28] सूच्यते। एतावता चात्र प्रयोजनम्। एवञ्च सति-अपेत्य ततः, नानेन एततीत्युभयथापि निर्वचनमौरसाभिप्रायम्। तच्च स्त्रीपुंसलक्षणमुभयं किमपत्यमुत[29] पुंरूपमेवेति विप्रतिपत्तेः, मन्त्रेषु चोभयथा[30] दर्शनादपत्यकार्याणां[31],

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति।
२–[ ऋ० ७।४।८ ] मन्त्रप्रतीकं नास्ति D.
३–न भप्रहायं C. न हि प्रहाय D.
४–नभेरायं B. C. [ धा० ९।६१ ]
५–कृतोऽर्थस्य त्य० D. अत्र 'कृत्यार्थे व्यत्ययेन कृत्' इति पाठो युक्तो भाति।
६–गृही० C. ०कृत, स ही०D. ७–असुसो० C.
८–[ cf. धा० १।९८३,३।१६] ९–०दुपरि० D.
१०–'मनगा म' B. 'म' C. पुस्तके त्रुटितम्।
११–'न' त्रुटितम् C. १२–०मायः C.
१३–'यद' त्रुटितम् D. १४–०पादिना० D.
१५–'अपरेण' नास्ति D. १६–चानः D.
१७–०यित्वा B. C. १८–०दीनाम् B. C.
१९–०पात् C. अयमपि पाठः B. २०–यः B. C.
२१–पाद० B. २२–उचतेः C. अयमपि पाठः B.
२३–[पा० ७।३।६४] २४–०दन्येर० B.
२५–०ह्गं तेन D. २६–भवति D.
२७–०ग्रान्य० D. २८–०तुः पगमित्येतदुच्यते D.
२९–'किम्' नास्ति B. ३०–०थापि D.
३१–कार्येण D.

अपत्यपरिविचिकित्सया कार्यं विचारयिष्यते[1] आपादपरिसमाप्तेः।

अथेनां[2] दुहितृदायाय उदाहरन्ति[3] । दायः[4] पैतृकं रिक्थम्, दायमादत्त इति दायादः, तद्भावो दायाद्यम् । एतां वक्ष्यमाणामृचं दुहितुर्दायादस्य उदाहरन्ति केचिदाचार्याः । अथवा दायस्यादानं[5] दायादः, तमर्हतीति दायाद्यम्, दुहितापि दायस्यादानमर्हतीति । एतस्मिन्नर्थे[6] पुत्रदायाय इत्येके ।

[ इत्यष्टमस्या-( तृतीयस्या- ) ध्यायस्य
तृतीयः खण्डः । ][7]

---

१–अपत्यपरि वि॰ D.

२–॰ष्यन्त B. C.

३–'अथेनामित्यादि' C. D.

४–दायं D.

५–दायादस्यादानं दायादं तदर्हे॰ B. C. ॰स्यदा॰ D.

६–॰र्थे तु प्रदा॰ B.

७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ चतुर्थः खण्डः ।[1] ]

शासद्वह्निर्दुहितुर्नप्त्यं गाद्विद्वाँ ऋतस्य दीधितिं सपर्यन् ।
पिता यत्र दुहितुः सेकमृञ्जन्त्सं शग्म्येन मनसा दधन्वे[2] ॥

विश्वामित्रस्यार्षम्[3] । 'न जामये[4]' इति च । शासत्-शास्ति आचष्ट इत्यर्थः[5] । वह्निः-पिता जातमात्राया उत्सङ्गेन दानकाले च[6] जामातारं प्रति वोढृत्वात् वह्निरुच्यते । स[7] दुहितुः पुत्रमिति शेषः । नप्त्यं नप्तारं पौत्रम्, गात्-शुद्धोऽपि सामर्थ्याद् गमिरत्रपूर्वार्थे[8] द्रष्टव्यः, अवगच्छति । कर्म[9] ? सामर्थ्यात् पुत्रं[10] दौहित्रमित्यर्थः । विद्वान् जानन्[11], ऋतस्य-यज्ञस्य प्रजननाख्यस्य, दीधितिम्-कर्मविधानं यत् गर्भाधानकाले मन्त्रवन्नियमवद्य स्मृतिकारैरुक्तम् । सपर्यन्-पूजयन् तदनुष्ठानेनानु[12]तिष्ठन्नित्यर्थः ।

अथवा-ऋतस्येति, ऋतशब्देन योनौ गतं रेत उच्यते, तस्य विधानं गर्भोत्पत्तौ व्यापारः । कलला[13]द्युत्तरोत्तरावस्थापत्तिरूपः । तं विद्वान् पूजयन्नित्यर्थः । कथम् ? अविशिष्टं हि विधानमनुष्ठानञ्च प्रजननयज्ञस्य रेतसो वा दुहितरि पुत्रे चेत्यर्थः । तदविशेषाद्दुहिता

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ ऋ० ३।३१।१ ] 'शासद् वह्निर्दुहितुः ०दधन्वे' इत्येव प्रतीकम् D.

३–०र्षम् D. ४–[ निरु० ३।६ ]

५–अत्र केवलं D. पुस्तके माधवीयमेतदृचो व्याख्यानमुद्धृतं वर्तते । तथाहि-"श्रीमाधवीये-'कुशिकः प्रमहान् कश्चित् शास्त्रार्थे ब्रूते, अपुत्रो यः पिता कन्यामन्यकुले प्रापयति स वह्निरित्युच्यते, स पिता शासन्–

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥

स्मृत्युक्तमनुशासनं कुर्वन् दुहितुः पुत्रिकाया नप्त्यं नप्तृभावं पिण्डदानादिकं कर्तव्यतया गात् गच्छति । किं कुर्वन् ? विद्वान्, अस्यां दुहितरि जातः पुत्रो मम स्वधाकारी भविष्यतीति जानन् । ऋतस्य पुत्रोत्पादनेन सत्यस्य समर्थस्य रेतसः । दीधितिं धर्तारं सपर्यन् वस्त्रालङ्कारादिना पूजयन् पिता नप्तृभावं गच्छति । यत्र यस्या दुहितुः पिता पालकः पतिजा (पत्न्या ?) सेकं तस्यां रेतःसेकं ऋञ्जन् प्रसाधयन् यः शग्म्येन केवलं सुखनिमित्तेन मनसा स्वशरीरं दधन्वे धत्ते न तु पुत्रनिमित्तेन मनसा' एवं माधवः ।"

६–या D. ७–'स' नास्ति D.

८–०त्रथमि० B. C.

९–कर्म B. C.

१०–पौत्रं C. D.

११–'विद्वान् जानन्' त्रुटितम् D.

१२–०दनुतिष्ठा० D. ०नुष्ठित इ० B. ०नुष्ठि० ष्ठे० C.

१३–कल्लाद्यु० D. कुलाद्यु० B.

[अपि पुत्रवद्दायादा चेति भाष्यकार आह-मिथुनाः-स्त्रीपुंरूपाः, पुत्रा दायादा इति ।

दुहिता दुहिता, तत्रैव श्वसुरकुले पितृकुले वा सुलभापवादत्वेन बहूपद्रवत्वात् दूरे वा सती हिता । यावदेव स्याद्विप्रकृष्टत्वाद्विनष्टं किञ्चिन्न श्रूयते तावदेव हिता ]। दोग्धेर्वा, सुखितापि सती सर्वदा दोग्धि वस्त्रालङ्कारादि पितृकुलम । भर्तरि रेतः । अङ्गादित्यादि-भाष्यं वक्ष्यमाणव्याख्यानतुल्यमित्युपेक्षितम् ।

उक्तस्यैवार्थस्य द्रढिम्नः कारणमाह-तदेतदृचा श्लोकेन चाभ्युक्तमिति ।

अङ्गादङ्गात् सम्भवसि हृदयादधि जायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥

अङ्गादङ्गात् सर्वाङ्गेभ्य इत्यर्थः । सम्भवसि । कथम ? अन्नपानमभ्यवहृतं द्वेधा पच्यते साररूपेण किट्टरूपेण च । तत्र योऽसौ स्वच्छः सारभूतहृदयायतनो रसः, तस्माच्छोणितं मांसम, मांसान्मेदः, मेदसः स्नावा, स्नाव्नोऽस्थीनि, अस्थिभ्यो मज्जा, मज्जातो रेतः, तदिदं योनौ रेतः सिक्तं पुरुषः सम्भवतीति । इत्थं सर्वाङ्गेभ्यः सम्भवः । हृदयात्-हृदयायतन आत्मात्र हृदयम, तदिच्छया गुणतो विषयानुभववुद्ध्या जायसे स्वमित्यर्थः । आत्मैव पुत्र-नामासि भवसि । स जीव शरदः शतम्-शरदि व्याधिबाहुल्यात् दुर्जीवत्वात् तच्छतमाशास्यते नत्वन्तरसम्बन्धेन ।

अविशेषेण पुत्राणां दायो भवति धर्मतः ।
मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत् ।

अविशेषेण पुत्राणां दायस्यादौ न भवति । धर्मतः शास्त्रतः । मिथुनानाम्-स्त्रीणां पुंसाश्च । विसर्गादौ सृष्ट्यादौ मनुः स्वायम्भुव एतदुक्तवान् ।

---

१-०वसाया० C. २-'दा' दुहितम् B.
३-०वता तद्द्रू० B. ४-समी B.
५-[ ] एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः D.
६-[ cf. पा० ४।१४ ]
७-दुहिता B. C. ८-सखी B.
९-दोग्ध्री B. ०ग्धिवत् D. १०-'न' नास्ति D.
११-[ शत० ब्रा० १४।९।४।८। गो० गृ० सू० २। ८।२१ ] 'अङ्गादङ्गात्० शतम्' इत्येव प्रतीकम् D.
१२-'इत्यर्थः' नास्ति B. C. १३-स्वक्षः D.
१४-०दयत० D.
१५-'मेदसोऽस्थीनी' इत्येव B. C.
१६-'अत्र' नास्ति D.
१७-०सीभव० C. 'भवसि' नास्ति D.
१८-ध० C. १९-०र्जीयत्वात् कुत आशा० D.
२०-तन्वन्तर स० D.
२१-[ cf. मनु० ९।१३३,१३९ ]
२२-'नर्म ( धर्मः )' इत्यधिकः पाठः B.
२३-'सृष्ट्यादौ' नास्ति D,

अथ यदुक्तं 'पुत्रदायाद्य इत्येके' इति, तं पक्षमाश्रित्येदानीं 'शासद् वह्निः' इत्ये-तस्यार्धर्चस्य, 'अविशेषेण पुत्राणाम्' इत्यस्य च, अभ्रातृमती[1] या[2] दुहिता तद्विषयत्वं[3]-प्रतिपादनार्थं 'न दुहितर' इत्यादिविचारस्तावत् क्रियते । शासद्वह्निरित्युत्तरोऽर्धर्चो[4] न व्याख्यायते । दुहितरो दायं नार्हन्ति[5] । कस्मात्[6] ? अपत्यकार्याभावात् । अनपत्या[7] एव स्त्रिय इति । कथम् ? श्रुतिलिङ्गादन्यपरे वाक्ये ।

तस्मात्[8] पुमान् दायादोऽदायादा[9] स्त्रीति विज्ञायते । स्थालीरेचनदारुमया[10] रेचनपरे[11] वाक्ये इदमुक्तम् । पश्येति[12] स्थाली न दारुमयानिति[13] । तस्मात् पुमान् दायादो दायार्हः[14], अदायार्हा[15] स्त्रीत्येतस्मिन्[16] ब्राह्मणे विचार्यमाणे ज्ञायते । तथा च पराश्रुतिः-परा स्थालीरस्यन्त्युद्वाय[17]-व्यानि[18] हरन्तीति वायव्यानि दारुमयानि[19] सर्वसोमपात्राण्यभिप्रेतानीति[20] । तत्र हवने[21]-साधने विधेये-अर्थे[22] यत् स्थालीं[23] परास्यन्ति हवनकर्मणो न तया जुह्वति, न दारुमयं परास्यन्ति[24] हवनकर्मणो दारुमयेनैव[25] जुह्वति, तस्मात्[26] कारणात् स्त्रियं[27] जातां परास्यन्ति परस्मै ददति न पुमांसम्, तस्मात्[28] पुमानेव पैतृकस्येष्टे न दुहिता[29] ।

किञ्च स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः । दानं[30] ब्राह्मणविवाहे[31] । विक्रयो वैवा-

१-'म' त्रुटितम् B. २-'या' त्रुटितम् D.
३-'त्व' नास्ति B. C.
४-०त्युत्तरस्योत्तरो० D.
५-दुहिता यो दायं नार्हति D.
६-तस्मात् B. C. ७-०त्या याया ए० D.
८-कस्मात् B. C. ९-'दायादा' त्रुटितम् B. C.
१०-रेव च दारुमतया D.
११-'रेचनपरे' द्विर्लिखितम् D.
१२-यं वेति D.
१३-स्थाली त दारुमयानीति D. । दारुम्मयानीति C.
१४-दाहार्हः D. १५-अदया० B.
१६-स्त्री ते तस्मिन् B. C. इदं द्विर्लिखितम् C.
१७-रस्य० D. १८-०व्यानी D.
१९-०याणि D.
२०-'सर्व' नास्ति B. C.
२१-भवन० D.
२२-अथ B. C.
२३-स्थालं B. C.
२४-'हवनकर्मणो न तया जुह्वति, न दारुमयं परा-स्यन्ति' अयं पाठस्त्रुटितः B. C.
२५-०णो न दारु० D.
२६-कस्मात् B. C.
२७-स्त्रियां C.
२८-तस्मात् C.
२९-अत्रोद्धृत इमे श्रुती द्रष्टव्ये [ cf. मैत्रा० सं० ४।६।४, ४।७।९ cf. तै० ब्रा० ६।५।११ cf. काठक सं० २०।९। ]
३०-दोनं B. C.
३१-'ब्राह्मविवाहे' इति युक्तः पाठो भाति । ब्राह्मा-भिधे विवाहे शुल्कादिनिषेधात् ।

[अपि पुत्रवद्दायादा चेति भाष्यकार आह-मिथुनाः-स्त्रीपुंरूपाः, पुत्रा दायादा इति।
दुहिता दुर्हिता, तत्रैव श्वसुरकुले पितृकुले वा सुलभापवादत्वेन बहूपद्रवत्वात् दूरे वा सती हिता। यावदेव स्याद्विप्रकृष्टत्वाद्विनष्टं किञ्चिन्न श्रूयते तावदेव हिता ]।दोग्धेर्वा, सुखितापि सती सर्वदा दोग्धि वस्त्रालङ्कारादि पितृकुलम्। सतेर्वा रेतः। अङ्गादित्यादि-भाष्यं वक्ष्यमाणव्याख्यानतुल्यमित्युपेक्षितम्।
उक्तस्यैवार्थस्य द्रढिम्नः कारणमाह-तदेतदृचा श्लोकेन चाप्युक्तमिति।

अङ्गादङ्गात् सम्भवसि हृदयादधि जायसे।
आत्मा वै पुत्रनामासि स जीव शरदः शतम्॥

अङ्गादङ्गात् सर्वाङ्गेभ्य इत्यर्थः। सम्भवसि। कथम्? अन्नपानमभ्यवहृतं द्वेधा पच्यते मारूपेण किट्टरूपेण च। तत्र योऽसौ स्वच्छः सारभूतहृदयायतनो रसः, तस्माच्छोणितं मांसम्, मांसान्मेदः, मेदसः स्नावा, स्नाव्नोऽस्थीनि, अस्थिभ्यो मज्जा, मज्जातो रेतः, तदिदं योनौ रेतः सिक्तं पुरुषः सम्भवतीति । इत्थं सर्वाङ्गेभ्यः सम्भवः । हृदयात्-हृदयायतन आत्मात्र हृदयम्, तदिच्छया गुणतो विषयानुभवबुद्ध्या जायसे त्वमित्यर्थः। आत्मैव पुत्र-नामासि भवसि। स जीव शरदः शतम्-शरदि व्याधिबाहुल्यात् दुर्जीवत्वात् तच्छतमाशास्यते नत्वन्तरसम्बन्धेन।

अविशेषेण पुत्राणां दायो भवति धर्मतः।
मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत्॥

अविशेषेण पुत्राणां दायस्यादानं भवति। धर्मतः शास्त्रतः। मिथुनानाम्-स्त्रीणां पुंसाञ्च। विसर्गादौ सृष्ट्यादौ मनुः स्वायम्भुव एतदुक्तवान्।

---

१-०वसाया० C. २-'दा' त्रुटितम् B.
३-०वता तद्दू० B. ४-सती B.
५-[ ] एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः D.
६-[ cf. धा० २।४ ]
७-दुहिता B. C. ८-सखी B.
९-दोग्धी D. ०श्चिवर D. १०-'न' नास्ति D.
११-[ शत० ब्रा० १४।९।४।८। गो० गृ० सू० २। ८।२१] 'अङ्गादङ्गा० शतम्' इत्येव प्रतीकम् D.
१२-'इत्यर्थः' नास्ति B. C. १३-स्वक्षः D.
१४-०दयत० D.
१५-'मेदसोऽस्थीनी' इत्येव B. C.
१६-'अत्र' नास्ति D.
१७-०सीभव० C. 'भवसि' नास्ति D.
१८-ध० C. १९-०र्जीयत्वात् कुत आशा० D.
२०-तन्वन्तर स० D.
२१-[ cf. मनु० ९।१३३,१३९ ]
२२-'नमे ( धर्मः )' इत्यधिकः पाठः B.
२३-'सृष्ट्यादौ' नास्ति D.

अथ यदुक्तं 'पुत्रदायाय इत्येके' इति, तं पक्षमास्थायेदानीं 'शासद् वन्हिः' इत्येतस्यार्धर्चस्य, 'अविशेषेण पुत्राणाम्' इत्यस्य च, अभ्रातृमती[1] या[2] दुहिता तद्विषयत्वे[3]-प्रतिपादनार्थं 'न दुहितर' इत्यादिविचारस्तावत् क्रियते । शासद्वन्हिरित्युत्तरो[4]र्धर्चो न व्याख्यायते । दुहितरो दायं नार्हन्ति[5] । कस्मात्[6] ? अपत्यकार्याभावात् । अनपत्या[7] एव स्त्रिय इति । कथम् ? श्रुतिलिङ्गादन्यपरे वाक्ये ।

तस्मात्[8] पुमान् दायादोऽदायादा[9] स्त्रीति विज्ञायते । स्थालीरेचनदारु[10]मया रेचन[11]परे वाक्ये इदमुक्तम् । [12]पश्चेति स्थाली न दारुमया[13]निति । तस्मात् पुमान् दायादो दायार्हः[14], अदायार्हा[15] स्त्रीत्येतस्मिन्[16] ब्राह्मणे विचार्यमाणे ज्ञायते । तथा च पराश्रुतिः-परा स्थालीरस्यन्त्युद्वाय[17]-व्यानि[18] हरन्तीति वायव्यानि दारुमयानि[19] सर्व[20]सोमपात्राण्यभिप्रेतानीति । तत्र हवने[21]-साधने विधेये-अर्थ[22] यत् स्थालीं[23] परास्यन्ति हवनकर्मणो न तया जुहति, न दारुमयं परास्यन्ति[24] हवनकर्मणो दारुमयेनैव[25] जुहति, तस्मात्[26] कारणात् स्त्रियं[27] जातां परास्यन्ति परस्मै ददति न पुमांसम्, तस्मात्[28] पुमानेव पैतृकस्येष्टे न दुहितरो[29] ।

किञ्च स्त्रीणां दानविक्रयातिसर्गा विद्यन्ते न पुंसः । दानं[30] ब्राह्मणविवाहे[31] । विक्रयो वैवा-

---

१–'म' त्रुटितम् B. २–'या' त्रुटितम् D.
३–'त्व' नास्ति B. C.
४–०त्युत्तरस्योत्तरो० D.
५–दुहिता यो दायं नार्हति D.
६–तस्मात् B. C. ७–०त्या याया ए० D.
८–कस्मात् B. C. ९–'दायादा' त्रुटितम् B. C.
१०–रेव च दानुमतया D.
११–'रेचनपरे' द्विर्लिखितम् D.
१२–यं वैति D.
१३–स्थालीं त दारुमयानीति D. ०दारुम्मयानीति C.
१४–दाहार्दः D. १५–अदया० B.
१६–स्त्री ते तस्मिन् D. C. इदं द्विर्लिखितम् C.
१७–रम्य० D. १८–०व्यानी D.
१९–०यानि D.
२०–'सर्व' नास्ति B. C.
२१–भवन० D.
२२–अथ B. C.
२३–स्थालं B. C.
२४–'हवनकर्मणो न तया जुहति, न दारुमयं परास्यन्ति' अयं पाठस्त्रुटितः B. C.
२५–०णो न दारु० D.
२६–कस्मात् B. C.
२७–स्त्रियां C.
२८–तस्मात् C.
२९–अत्रोद्धृते इमे श्रुती द्रष्टव्ये [ cf. मैत्रा० सं० ४।६।४, ४।७।९ cf. तै० ब्रा० ६।४।११। cf. काठक सं० २०।९। ]
३०–दानं B. C.
३१–'ब्राह्मविवाहे' इति युक्तः पाठो भाति । ब्राह्माभिधे विवाहे शुल्कादिनिषेधात् ।

हिकेन शुल्केन । 'नाल्पो वा बहुर्वा पुत्रे विक्रयः । तावदेवै[1] सः[2]' इति स्मरणात् । तथा[3] [4]'या पत्युः क्रीता सत्य[5]न्यथान्यै[6]श्चरति'[7] इति च लिङ्गात् । अतिसर्गः-स्वयंवरादौ गान्धर्वे [8]च विवाहे । एतदप्यै[9]दायादत्वे लिङ्गं स्त्रियाः ।

एतदनेकान्तयन्नाह-पुंसो ऽपीत्येके । शौनःशेप आख्याने[10] दर्शनात् । दानं तावत् 'अनेन त्वा यज्ञा'[11] इति । विक्रयो 'अनेन[12] आत्मानं निष्क्रीणा'[13] इति[14] । अतिसर्गो ऽपि[15] विश्वामित्रेण कृतः श्रूयते ज्यायांसो मधुच्छन्दसः[16], असमञ्जसश्च सगरेण[17] । एवमन्यपरश्रुतिलिङ्गदर्शनमनेकधोपन्यस्य पूर्वोक्तस्य 'शासद्वह्निः' इत्यादेः, अभ्रातृकाविषयत्वं[18] व्यवस्थापयति । शासद्वह्निरित्यत्र आभ्रातृकाविषयमेतत् न सर्वविषयमेतदिति दुहितुः पुत्रभावं शास्तीत्युच्यते । यदि तु मिथुनाः पुत्रा[19] एव किमाशास्यम ? अतः शासनवचनात् अभ्रातृकाविषये पुत्राभावे[20] तत्स्थाने ऽप्यपि[21] पुत्रः स्यादित्याशास्यमं[22] । तथा च स्मृतिः ।

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्[23] ॥ इति ॥

यदि च [24]दुहितापि पुत्रः, समानवचनता[25] नोपपद्यते । कथम् ? अन्य[26]मिति च अभ्रातृकाविषयं दर्शयति न सर्वविषयम् । सा चाभि[27]सन्धाय दीयमाना पुत्रिका[28]

१–०वदेव D.
२–'सः' नास्ति B C. इत्थमिदं पद्यम्–
'विक्रयं चाप्यपत्यस्य मतिमान्कोऽनुमंस्यते ।
स्वल्पो वाथ बहुर्वापि विक्रयस्तावदेव सः ।'
'प्रदानमपि कन्यायाः पशुवत् कोऽनुमन्यते ।
विक्रयं चाप्यपत्यस्य कः कुर्यात् पुरुषो भुवि ॥'
[ म० भार० १।१७।५=१।२४५।५ ]
३–यथा B. C. ४–'या' नास्ति D.
५–सेपथथा० B. सत्यथथा० C.
६–०थानैश्च० D. ७–[ मैत्रा० सं० १।१०।११ ]
८–०र्वादि वि० D. ९–व्यसदा० B. C.
१०–शुनःशेपाख्यानम्-ऐतरेयब्राह्मणस्य सप्तमपञ्चिकायां त्रयस्त्रिंशत्तमे ऽध्याये [अ० ३३। ख० १-५], महाभारते च [अनु० ६।६ भाग० ९।७] द्रष्टव्यम् ।
११–[ ऐ० ब्रा० ३३।३ ]
१२–'ने' त्रुटितम् D. १३–[ ऐ० ब्रा० ३३।३ ]
१४–इत्यादि B. C. १५–'अपि' नास्ति D.
१६–'ज्यायांसो' इत्यस्य स्थाने 'ज्यायसो' इति पाठ उचितः । मधुच्छन्द आख्यानम् [ ऐ० ब्रा० ३३।६ ] स्थले द्रष्टव्यम् ।
१७–असमञ्जस आख्यानं रामायणे [ १।३८ ] [ म० भार०, वन० १०५-१०७ ] द्रष्टव्यम् ।
१८–विषयं D. १९–पुत्र D.
२०–पुत्रभावे D. २१–स्यापि D.
२२–०शास्या B. ०शास्यां C.
२३–[ मनु० ९।१३० ] २४–रहिता० C. B.
२५–'न' त्रुटितम् D. २६–अन्य इ० D.
२७–'भि' त्रुटितम् D. २८–पित्रा D.

भवतीति स्मृतौ कृतविचारः। अस्मिन्नर्थे पक्षे निगममपि दर्शयति।

अमूर्या यन्ति जामयः सर्वा लोहितवाससः।

अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः॥

अयमाथर्वणे वेदे मन्त्रः। स्त्रीणां लोहितवाहकव्याधिव्यावृत्त्यर्थे कर्मणि विनियुक्तः। अमूः-एता लोहितधाराः सिरा वा, यान्ति-अस्ति सुष्ठु वहन्तीत्यर्थः। जामयः-भगिन्यः, एकस्माद् स्त्रीयोनिप्रदेशाज्जातत्वात्। ताः सर्वा लोहितवाससः-लोहितस्य वर्णस्य वासयित्र्यः, लोहितवर्णा इत्यर्थः। यथा अभ्रातृका योषाः, याः उत्पन्नास्तत्रैव पितृकुले सन्तानकर्मणे पिण्डदानाय च तिष्ठन्ति, तद्वत्तिष्ठन्त्वनेन कर्मणा। हतवर्त्मनः-हतवहनमार्गाः सत्यास्तु, मा वाक्षुरित्यर्थः। अभ्रातृकाया अनिर्वाहे अवहिर्गमने औपमिक उपमाप्रयुक्तः। तयोस्तरा भूयसे। पुंस एतीत्यर्थे भूयस्त्वम्।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य
चतुर्थः खण्डः। ]

---

१-अस्तिश्च C.
२-इतीव B. C.
३-[ cf. अथर्व० १।१७।१ ] '०वर्त्मसः' इत्यपि पाठः B. ०वर्त्मसः C. अमूर्या यान्ति० हतवर्त्मसः D.
४-०णवे० D. ५-०वाहे D.
६-'व्याधि' द्विर्लिखितम् C. D.
७-'सिरा' द्विर्लिखितम् C.
८-'या' नास्ति D. 'यायन्ति' इति भाति।
९-एतस्मा० B. C. १०-०स्वाद D.
११-आच्छादयित्र्य इत्यर्थः। वसित्र्य B. वसित्र्यं C. विविक्त्र्यो D.
१२-यत B. C.
१३-अत्र वाक्य एकवचनान्त एव पाठः। D.
१४-वर्मसः C. वर्त्मसः D.
१५-'न' त्रुटितम् D.
१६-वहु० D.
१७-०प्रयत्तः B.
१८-एधीत्यर्थः B. C.
१९-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्न निर्दिष्टा।

## [ अथ पञ्चमः खण्डः । ][१]

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः[२] ॥

कक्षीवत आर्षम् । यथा[३] अभ्रातृका स्त्री[४] येभ्य उत्पन्ना, तानेव पुंसः पितॄन्, एति[५]-गच्छति, सन्तानकर्मणे पिण्डदानाय च । एवमुषा यत उत्पन्ना तमेवादित्यं गच्छति, तत्रैव प्रलीयते[६] इत्यर्थः । प्रतीची-प्रत्यग्गामिनी, गर्तारुगिव[७]-यथा[८] दक्षिणापथे क्वापि प्रदेशे अपुत्रा अपतिका वा अपस्मारा[९] रोहिणी स्त्री, सनये लाभाय, धनानाम्, भर्तुः स्वभूतानां, सर्वलोकप्रकाशभास्फारं[१०] गच्छति तद्वत् । जायेव पत्ये-द्वितीयार्थे चतुर्थी, पतिम् । उशती-कामयमाना, सुवासाः-निर्विशङ्क्या[११] परया प्रीत्या युक्ता गच्छति तद्वत् । किञ्च[१२] हस्रेव-यथा हसनशीला स्वदन्तान् निरिणीते-रिणातिर्गतिकर्मा, निः[१३] प्रकर्षे, अन्तर्नीत[१४]ण्यर्थश्चायम्, प्रकर्षेण गमयति प्रकाशयति ज्ञापयतीत्यर्थः । एवमुषा निरिणीते[१५] । किम् ? अप्सः-रूपं कृत्स्नस्य जगतः ।

गर्तारोहिणीति ताच्छील्ये क्विप् 'अन्येभ्योऽपि दृश्यन्ते[१६]' इति । गर्तारोहिणीति भाष्ये ताच्छीलिकेनार्थप्रदर्शनात् । दक्षिणाजी[१७]-दक्षिणां दिशं देशं या अजिता गता जाता या तत्र दक्षिणाज्ञी, तस्या अपत्यं स्त्री दाक्षिणाजी । दक्षिणेन[१८] या कितवानां गच्छतीति । गर्तः-सभास्थाणुरित्यभिधेयकथनम्[१९], अक्ष[२०]निवपन[२१]पीठः[२२] । सभास्थानमिति पाठान्तरम् । सभा च द्यूतसभा कितवस्थानम् । गृणातेरिति[२३] निर्वचनम् । सत्यसंगर इति[२४] धात्वर्थोप-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो न निर्दिष्टः ।

२–[ ऋ० १।१२४।७ ] 'अभ्रातेव० अप्सः' इत्येव प्रतीकम् D.

३–यत्र D. ४–स्त्रि C.

५–'एति' नास्ति D. ६–प्रतीय० C.

७–कर्त्ता D. ८–'यथा' त्रुटितम् D.

९–आस्मारो रो० B. C.

१०–०स्फारं B. ०स्मारं D.

११–०शंकया D.

१२–'किञ्च' नास्ति D.

१३–'निः' त्रुटितं भाति D. अग्रे 'प्रकर्षेण' इति पाठः ।

१४–०र्णीत० C. ०र्हित० D.

१५–इदं वाक्यं नास्ति D.

१६–[ पा० ३।२।७५ ]

१७–दक्षिणा० B. C. १८–०क्षिणो वा D.

१९–'न' त्रुटितम् D. २०–अन्तरिक्ष० B. C.

२१–०नवी C. २२–राहा० B. C.

२३–[ धा० ९।२८ ]

२४–०रो भवति D.

पत्तिवचनम्। सत्यं[१] हि तत्र[२] संगीर्यते। कथम्? पुन[३]र्देविष्यामिति कृतमा[४]लूहस्तग्रहणादिना कृत[५]शपथोऽपि[६] व्यसनेनैवाकृष्यमाणो गी[७]त्य शपथं खा[८]दयित्वा दीव्यत्येव कितवः, सङ्कर इत्यन्ये पठन्ति, संकीर्यन्ते हि तत्र सत्यमनृतेनानेव विधेन। तं गर्तं तत्र या[९] अपुत्रा अपतिका सारोहति। दक्षिणापथे किलै[१०]वं क्वचिद्देशधर्मः। कितवानां दक्षिणत आस्पा[११]रे तिष्ठति। तत्राक्षै[१२]राघ्नन्ति, सा रिक्थं लभते पतिबन्धुभ्यः। यो वा तां प्रथममाहन्ति स वैनां गृह्णा[१३]ति। सा च धनं लभत इति।

शब्दसारूप्यात् प्र[१४]सक्तमाह-श्मशानसंचयोऽपि गर्त उच्यते गुरतेरपगूर्णो भ[१५]वति। श्मशानसञ्चयोऽपि गर्तः, गु[१६]रतेरपगूर्णो भीषणः। यद्वा अमङ्गलत्वात्तं प्रत्युद्य[१७]मनं गम[१८]नं न भवत्यतोऽपगूर्णो गमनवर्जित इत्यर्थः। श्मशानं श्मशयनम्, य[१९]कारलोपेन सवर्णदीर्घत्वेन च श्मशब्दस्याभिधेयमाह-श्मं[२०] शरीरम्, तत् शृ[२१]णातेरर्थपौष्कल्यात्। शं[२२]म्नातेर्वा यदा कदाचित् शाम्यति हि तत्। प्रसङ्गादाह-श्मश्रु लोमेत्यर्थक[२३]थनम्, श्मनि शरीरे श्रितमिति निर्वचनम्। लोम-लुनातेः[२४], लूयते हि तत्। लीयते[२५]र्वा श्लिष्टं हि तत्। श्मशानस्य गर्तवाच्यत्वे निगमः।

'नोपरस्याविष्कुर्याद् यदुपरस्याविष्कुर्याद् गर्तेष्ठाः स्यात्।
प्रमायुको यज[२६]मानः' इत्यपि निगमो भ[२७]वति॥

यूपस्यार्त[२८]प्रदेश उपर उच्यते। तमेव[२९] प्रदेशं पांसुभिराच्छादयन्नास्य किञ्चित् प्रकटं कुर्यात्। यदि कुर्याद् गर्तेष्ठाः श्मशानप्रतिष्ठ इत्यर्थः। पुरा आ[३०]युषः प्रमायुको मरण-

१—स हि D. C. २—तत् D.
३—०नस्ते वि० D. ४—०मात्र० B.
५—'कृत' द्विर्लिखितम् C.
६—०थो हि अनेनै० D. ७—गीत्या D.
८—०यमु D. ९—ता D.
१०—०लैव D. ११—आस्फारे D.
१२—०प्राक्षेणा० C. १३—गृणाति D.
१४—'प्र' इति मुद्रितम् B. C.
१५—इदं मूलवाक्यं नास्ति C. D.
१६—[ cf. धा० ६।११७ ]
१७—०द्युद्गमन० D.
१८—'गमनं' नास्ति B. C.
१९—यलोपेन D. २०—'श्म शरीरम्' मुद्रितम् D.
२१—[ cf. धा० ९।१८ ]
२२—[ cf. धा० ४।९२ ] शम्नाते० D. C.
२३—०त्यर्थः। कथं B.
२४—[ cf. धा० ९।१३ ]
२५—[ cf. धा० ४।३१ ]
२६—[ cf. मैत्रा० सं० ३।९।४ cf. काठकसं० २६।६ ]
२७—इदं मूलवाक्यं नास्ति C. D. 'नोपरस्येत्यादि' इत्येव प्रतीकम् D.
२७—०स्यानट० B. C. २९—तमपदे पां B. C.
३०—पुरुषः D.

धर्मा यजमानः स्यात् । प्रसङ्गादाह-गर्तोऽपि गर्त उच्यते, गृणातेः[1] स्तुत्यर्थस्य, स्तुततमोऽ[2]श्वादिभ्यो यानेभ्यः सुखगमनेन । 'वनस्पते वीड्वङ्गः'[3] इत्यादौ स्तुतत्वात्[4] । उदाहरणम् ।

हिरण्यरूपमुषसो व्युष्टावयः स्थूणमुदिता सूर्यस्य ।
आ रोहथो वरुण मित्र गर्तमतश्चक्षाथे अदितिं दितिं च[5] ॥

श्रुतर्विद[6] आत्रेय । हिरण्यरूपमुषसो व्युष्टौ व्युच्छनवेलायाम्[7], अयःस्थूणम्-अयोमयी स्थूणा[8] अतिस्थूला[9] वा यस्य तम्[10] । उदिता-उदयवेलायाम्[11] । सूर्यस्य आरोहथो युवां हे वरुण ! हे[12] मित्र ! गर्तं रथमात्मीयम् । अतश्चानन्तरमिति शेषः । चक्षाथे-पश्यथः । अदितिं दितिश्च[13] । दीङ्[14] क्षये, क्षीणमक्षीणश्च[15] कर्म । अथवा अदितिं दितिं चेति ददातेरेते[16] रूपे, अदातारं दातारं च हविषाम् । लोकपालौ[17] हि मित्रावरुणौ, यश्च यत् करोति शुभमशुभं वा तत्सर्वं पश्यथः । अस्मिन् मन्त्रे चतस्र उपमाः । अभ्रातृकाविषयस्यैव द्रढिम्न.कारणमाह-नाभ्रात्री[18]मुपयच्छेत गृह्णीयात्, यस्मात्तोकमपत्य[19]मस्याः[20] पितुरेव तद् भवति न गन्तुर्भर्तुः ।

अथवा नाभ्रात्रीमुपयच्छेत[21], अपत्यलिप्सया । उक्तकारणत्वाद्[22] दृष्टार्थत्वेन[23] प्रतिपिद्यते । एवं प्रतिपेधःप्रत्यक्षः । पितुश्च पुत्रभावः । पूर्वश्चोभयमानुमानिकम्[24] । एवम्-अभ्रातृको वाद इत्यपरे-इत्येतद्दर्शनमवस्थितम् । ततश्च 'शासद् वह्निः' इत्ययमर्धर्चोऽभ्रातृमतीविषय एव व्याख्येयो न दुहितृमात्रविषय इति निश्चयः ।

इदानीमस्मिन् दर्शन उत्तरार्धर्चो[25] व्याख्यायते । कदा पुनर्दौहितुः पुत्रभावं शास्ति नप्तारं चावगच्छति तस्याः पुत्रं[26] उच्यते । पिता यत्र-यस्मिन् काले, दुहितुः सेकम्-सेक्तारं

१-[cf. धा० ९।२८ ]
२-०ममरत्वा० B. ०तमस्वा० C.
३-[ ऋ० ६।४७।२६ निरु० ९।१२ ]
४-स्तुतवान् D.
५-[ ऋ० ५।६२।८ ] पूर्वार्ध एव प्रतीकत्वेन निर्दिष्टः D.
६-०विदार्थ० B. C. ७-व्युष्टन० D.
८-०मयी स्थूणां B. ९-'अति' द्विलिखितम् B
१०-त B. C. ११-उदित० D.
१२-'हे' नास्ति B. C.
१३-'दितिं' त्रुटितम् C.
१४-[ धा० ४।२६ ] उन्दि क्षये B दीङ् क्षिक्षये C.
१५-क्षिणमक्षि० C. १६-[ cf. धा० ३।९ ]
१७-०पालनौ B. १८-नाभान्निमुभ० C.
१९-'अपत्य' नास्ति B. २०-अस्यै B. C.
२१-०मुभय० C.
२२-प्रकरणत्वा B. C.
२३-अत्र सर्वेष्वादर्शपुस्तकेषु 'दृष्टार्थ न प्रतिपिद्यते' इत्येव पाठः । परमर्थविरुद्धत्वात्सोऽस्माभिर्नादृतः ।
२४-०नुभाविक० B. C.
२५-०त्तरार्ध० D.
२६-अत्र 'पुत्रः' इत्यस्य स्थाने 'पुत्रम्' इति पाठो युक्तः

रेतसः, ऋजन्[1]-अर्जैरिदं रूपम्, प्रार्जयति[2] जामातरं प्रतिगृह्णातीत्यर्थः। समित्युपसर्गो दधन्वे[3] इत्याख्यातेन सम्बध्यते[4]। तदेवं[5] व्यावृत्तानपत्यदुःखत्वात्, शग्म्येन[6] सुखतमेन मनसा[7] संदधन्वे[8] जामात्रा सह। अभ्रातृकामिमां तुभ्यं दास्यामि, अस्यां यो जनिष्यते गर्भः स[9] मम स्वधाकर इत्येवं रूपमात्मनः सन्धानं करोमि। यतश्चाभ्रातृकाविषयं दायादत्वम्, अत एवैतां वक्ष्यमाणामृचं जाम्या भगिन्याः स्त्रियाः सामान्येन भगिनीमात्रस्य रिक्थ[10]प्रतिषेधे अदायादत्वे उदाहरन्ति। अतोऽपि गम्यते पुत्रिकैव दायादेति। प्रथमकृतायां तु पुत्रिकायां यद्यौरस[11] उत्पद्येत, तदा[12] तत्रापि ज्येष्ठांशभागित्वं पुत्रिकाया इत्येके स्मरन्ति।

पुत्रिकायां कृतायां तु यदि पुत्रोऽनुजायते।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः[13]॥

इत्यन्ये।

[इत्यष्टमस्या-(तृतीयस्या-)ध्यायस्य
पञ्चमः खण्डः।[14]]

---

१–[ धा० ११।८९ ] ऋजे० B. अर्ज० C. अजे० D.
२–प्राजय० C. प्राजयन् D.
३–'न्वे' नास्ति B. दधनु C.
४–'सम्बध्यते' नास्ति D.
५–तदेव B. C.
६–शग्यान्ये० D.
७–'मन' त्रुटितम् B.
८–०धन्वे D.
९–'स' नास्ति D.
१०–रिक्त० C.
११–यद् यौर० C.
१२–तदा नास्ति B. C.
१३–[ मनु० ९।१३४ ]
१४–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति।

# [ अथ षष्ठः खण्डः । ]

न जामये तान्वो रिक्थमारैक् चकार गर्भं सनितुर्निधानम् ।
यदी मातरो जनयन्त वह्निमन्यः कर्ता सुकृतोरन्य ऋन्धन् ॥

न, जामये-भगिन्यै, तान्वः-तनुभवः औरसः पुत्र इत्यर्थः । रिक्थं-पित्र्यं धनम्, आरैक्-प्रारिचत् प्रादात् ददातीत्यर्थः। किन्तर्हि ? चकार-करोत्येनाम्, गर्भम्-षष्ठ्यर्थे द्वितीया। गर्भस्य निधानं स्थानं सनितुः संभक्तुः, तस्या एव स्वभूतस्य भर्तुरित्यर्थः । कुतः ? उच्यते, यदि-शुद्धोऽप्ययमपिशब्दसहितस्यार्थे द्रष्टव्यः, यद्यपि मातरः-'पिता मात्रा' इति पितुः शेषे प्राप्ते छान्दसो मातुः शेषः, द्विवचनस्य स्थाने बहुवचनम्, मातापितरौ जनयन्त जनितवन्तौ । वह्निम्-वोढारं स्वभार्यायाः पुमांसं स्त्रियश्चेति शेषः । तथा चाह भाष्य-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो नास्ति ।

२–[ ऋ० ३।३१।२ ] 'न जामये० ऋन्धन्' इत्येव प्रतीकम् D. एतत्प्रतीकानन्तरं केवलं D. पुस्तके व्याख्यारम्भात्प्रागेव माधवीयमेतदृचो व्याख्यानमुद्धृतं वर्तते । तथाहि—

"श्रीमाधवीये-अभ्रातृकादुहितुः पुत्रिकाकारणात् सा रिक्थभाक्, इत्युक्ताभ्रातमत्यास्तस्या रिक्थभाक्त्वं नास्तीति ब्रूते । तान्वस्तनूज औरसः पुत्रो जामये भगिन्यै रिक्थं पित्र्यं धनं नारैक् प्रेरयति न प्रददाति । किन्तर्हि ? सनितुरेनां भजमानस्य भर्तुः गर्भं षष्ठ्यर्थे द्वितीया गर्भस्य निधानं रेतः सेकनिधानीं चकार पाणिग्रहणेन संस्कृतामेनां करोति, न तु तस्यै रिक्थं ददातीत्यभिप्रायः ।

'असंस्कृता च संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः । भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकम् ॥' इति याज्ञवल्क्यस्मरणात् । स्त्रीपुंसलक्षणस्याप-त्यस्यैकोत्पाद्यत्वात् पुमपत्यस्य को (?) विशेषं दर्शयति-यदि यद्यपि मातरो मातापितरौ वह्निः । अवह्निः स्त्री । वह्निः पुमान् । स्वभार्याया वोढृत्वात्, अवह्निश्चावह्निः (?) तादृशं स्त्रीपुंसलक्षणमपत्यं जनयन्त जनयत तथापि तयोर्मध्येऽन्यः पुंलक्षणः सुकृतः शोभनस्य पिण्डदानादेः कर्मणः कर्ता भवति । अन्यः स्त्रीलक्षण ऋन्धन् वस्त्रालंकारादिना ऋध्यमान एव भवति । पिण्डदानादिकर्तृत्वात् पुत्रो दायादा (?) हः । दुहितुस्तथात्वेपि न दायार्हता । सा तु केवलं परस्मै दीयते ॥ एवं माधवः ॥"

३-अरे प्राक् B. आरे प्रात् C.

४–प्रारिजत् B. C. ५–न ददा० D.

६–'यदि' त्रुटितम् D.

७–'शब्द' नास्ति D. ०ब्दः स० B. C.

८–दृश्यते D. ९–[ पा० १।२।७० ]

१०–चने बहु० D.

११–०यन्तु B. C.

कारः-वह्निं पुत्रमवह्निश्च स्त्रियमिति । तथाप्यन्य एकः कर्ता[1]-सन्तानकर्मणः, तयोः सुकृतोः शोभनस्य कर्मणः कर्त्रोः । कतरः ? पुमान्, ततश्च स दायार्हः[2] । अन्यः-परस्तु[3], ऋन्धन्-वस्त्रालङ्कारादिदानेनाराध्यते[4] च, न च केवलं दीयते परस्मै । कतरः ? स्त्री । ततश्च सा न दायार्हा[5] । अतोऽस्या अनर्हत्वान्न ददाति । जामिः कस्मात् ? अन्ये असगोत्रा अस्यां जनयन्तीति[6] जामिः । जीनं[7] क्षीणं पुत्रिकापेक्षयाऽपत्यं जामिः । जमतेर्वा[8] स्याद् गत्यर्थस्य । निर्गमनप्राया हि सा भवति[9] । प्रायर्वचनं[10] पुत्रिकाभिप्रायम्, सा हि न निर्गच्छति । पितृकुलप्यावतिष्ठत इति ।

इति महेश्वरविरचितायां निरुक्तभाष्यटीकायां
अष्टमस्या-( तृतीयस्या- ) ध्यायस्य
प्रथमः पादः[11] ।

[ इति षष्ठः खण्डः[12] ]

---

१–कर्ता B.
२–दायादार्हः B.
३–अपरस्तु D.
४–०ने दापयने B. C.
५–दयादार्हा B.
६–'न' त्रुटितम् B. C.
७–जानं D.
८–[ धा० १।४९९ अयमद ] नार्थः । निघण्टौ जमतिर्गतिकर्मसु पठितः ।
९–निर्गमप्राया भवति D.
१०–अत्र 'प्रायोवचनं' इति युक्तः पाठो भवेत् ।
११–'इत्यष्टमस्य प्रथमः पादः' इत्येव D.
१२–नास्त्यादर्शपुस्तकेषु ।

# [ अथ तृतीयोऽध्यायः ।

## द्वितीयः पादः । ][21]

अपत्यसम्बन्धादाह-मनुष्यनामान्युत्तराणि पञ्चविंशतिः-मनुष्या नरे इत्यादीनि । विशो हरय इत्यादिषु साधारणश्रुतिषु[2] लिङ्गात् मन्त्रवाक्यपदान्तरसम्बन्धसामर्थ्यान्निर्णयः[3] कर्तव्य इत्युक्तम् । धातुजत्वप्रतिपत्त्यर्थमाह-मनुष्याः कस्मादिति । मत्वेत्यादि, मतेः सिवेश्च[4][5][6] द्विधातुजत्वं प्रदर्शयति । ज्ञात्वा-अनेनेदमिति-साध्यसाधनभावं कर्माणि सीव्यन्ति तन्वन्ति[7][8] न यथा पश्वादयः । मनस्यमानेन वा प्रजापतिना सृष्टाः । मनस्यतिः कस्मिन्नर्थे इत्याह-मनाधी-[9][10][11] भावे । प्रशंसायां मत्वर्थीयः । प्रशस्तं मनः प्रसन्नं सत्त्वप्राधान्यात् । अतः प्रसन्नमनस्केन[12] सृष्टा इत्यर्थः । तथा च श्रुतिः-'स पितॄन् सृष्ट्वाऽमनस्यत् तदनु मनुष्यानसृजत'[13] इति । नित्यपक्षेऽप्यसति स्रष्टरि, कार्ये सौमनस्यं दृष्ट्वा कारणमनुमास्यते, कारणानुविधायि-[14] त्वात् कार्यस्य । 'मनोर्जातौ'[15] इति वैयाकरणाः । जातिश्च प्रत्ययान्तोपाधिः । मनोरपत्यं जातिश्चेत्येतौ । अपत्यमात्रविवक्षायामणेव-मानव इति ।

मनुषो वा षकारान्तमेव प्रातिपदिकमस्ति, एतदन्तादुद् व्युत्पादयति, न प्रत्ययसन्नि-[16][17] योगेन षुगिति स्मरणान्तरम् । विनापि प्रत्ययेन षकारान्तत्वप्रयोगदर्शनात् । 'समिद्धो[18][19] अद्य मनुषो दुरोणे'[20] इति व्याख्यास्यते मन्त्रः ।

१—नरा B. C.

२—०रणा श्रु० D.

३—०न्धासाम० D.

४—०तु तत्व० D.

५—[ धा० ४।६७,८।५ ] मतेः D.

६—[ धा० ४।२ ] सिवेश्च D.

७—०तु त्वं दर्श० D.

८—मं तन्व० D.

९—'न' त्रुटितम् D.

१०—मन्यस्य० C.

११—'कस्मिन्' द्विलिखितम् D.

१२—शस्तः म० D.

१३—[तै० सं० २।३।८।३ cf. 'स...पितॄनसृजत... स देवानसृष्ट्वामनस्यतेव तेन मनुष्यानसृजत' मै० सं० ४।२।१ ]

१४—०स्यवः क्षप्य० D. ०प्यति स० D.

१५—मनोर्जातावञ्यतौ षुक् च [Fragment of पा० ४।१।१६१ ]

१६—षान्त० D.

१७—अतदन्ताद् C. अतस्तदन्तं D.

१८—'स्मरणम्' इत्येव B. C.

१९—षान्त० D.

२०—[ ऋ० १०।११०।१ निरु० ८।५ ]

२१—नास्त्यादर्शपुस्तकेषु ।

तत्र पञ्चजना इत्येतस्य[1] सन्दिग्धस्य विवेकार्थं निगमाः । सन्देहश्च मनुष्यमात्रनामसु[2] पाठात् । पञ्चशब्दश्च[3] जनशब्देन समानाधिकरणः[4] । तत्र यदि देवदत्तादिमनुष्यविषयः स्यात्[5], गन्धर्वादिपञ्चकविषयो वा, न मनुष्यमात्रनामविषयताऽस्य स्यात् । मनुष्यमात्रनाम[6]तदित्याचार्यमतम्, तत्सिद्ध्यर्थं मतान्तरप्रदर्शनाय पदद्वयमिदं मनुष्यपदार्थे वर्तत इति वैचित्र्यप्रदर्शनार्थ उपन्यासः ।

ननु मनुष्य[7]मात्रनामत्वे पञ्चशब्दस्य परिमाणावधृतसंख्येयविशेषविषरता प्रसिद्धा वाध्येत[8] ? उच्यते । अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयस्त्वात् अश्व[9]कर्णादिवत् वासायामन्य[10]दोप औपमन्यवदर्शनेन पञ्चजन[11]शब्दो न समानाधिकरणो[12] मनुष्यसन्ततिविषयोऽन्वर्थ[13]प्रायो मनुष्यनामत्वेन च द्रष्टव्यः । एकीयमतेन चाष्टौ[14] देवनिकाया उच्यन्ते । तत्र पक्षे नागानां गन्धर्वेषु, यक्षाणामसुरेषु, पिशाचानां रक्षस्स्वन्तर्भावाद्दृष्टत्वाविरोधः ।

[ इत्यष्टमस्या-( तृतीयस्या-)[15] ध्यायस्य
सप्तमः खण्डः । ]

---

१–इत्यस्य D.
२–मनुं मनु० B.
३–०ब्दस्य B.
४–सामानाधिकरण्यः D.
५–०यन्वात् स्यात् B. C.
६–०ष्यनाममात्रना० B. C.
७–'ष्य' त्रुटितम् D. C.
८–वाध्यते B.
९–अजकर्णायमन्यादि D.
१०–वाधादिया० C, वाधोयम० D.
११–'जन' त्रुटितम् D.
१२–०करणे D.
१३–०न्वर्थं प्रा० D.
१४–'च' नास्ति B. C.
१५–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्न निर्दिष्टा ।

# [ अथ अष्टमः खण्डः । ][1]

तदद्य वाचः[2] प्रथमं मसीय[3] येनासुराँ अभि देवा असाम ।
ऊर्जाद उत यज्ञियासः पञ्च जना मम होत्रं जुषध्वम् ॥

सौचीकस्याग्नेर्विदेवैर्वा देवानां संवादः । होतृजपश्चायम् । तदद्य-अस्मिन् कर्मणि, वाचो मध्ये, प्रथममुत्कृष्टं स्वरसौष्ठवार्थसतत्त्वदेवतादिविशिष्टम् । मसीय[4]-जानीयाम, येन[5] ज्ञानेनासुरान् यज्ञविघ्नं कुर्वतः, हे देवाः ! अभ्यसाम अभिभवेम । किञ्च यूयमपि हे ऊर्जादः ! अन्नादाः ! उत-अपि, यज्ञियासः-यज्ञस्य सम्पादयितारः । पञ्चजनाः-आचार्यस्य[7] मतेन ऋत्विङ्मनुष्याः । औपमन्यवस्य निषादस्थपतिः[8], इष्टौ[9] निषादानां यज्ञसम्पादित्वमस्ति । शूद्रस्याप्योदनसवे-'आयुरसि'[10] इति शूद्राय[11] प्रयच्छति, 'तत्ते प्रयच्छामि'[12] इति शूद्रः प्रतिगृह्णातीत्येवमादि । तथा 'दासी[13] पिनष्टि[14] पत्नी[15] वा' इत्यादेर्व्यापारादस्त्येव[16] यज्ञियत्वम्[17] । एकीयमतेन पञ्चयज्ञाङ्गभूता देवगन्धर्वादयः साधनभावेन यज्ञसम्पादिनः । अत उच्यते, मम होत्रं-होतृकर्म, [ जुषध्वम्-सम्पादयतेत्यर्थः । अन्ये मन्यन्ते-यदेकीयमतं यच्चौपमन्यवस्य तदुभयमप्याचार्यस्येति । तथा च मन्त्रव्याख्यानम् ऊर्जादो ब्राह्मणादयः, यज्ञिया देवगन्धर्वादयः सर्वेऽपि मम होत्रं स्वेन स्वेन व्यापारेण सेवध्वमिति । असुरा असुरताः स्थानेषु[18] ] स्वेषु, उत्कृष्टोत्कृष्टतरस्थानान्तरलिप्सायामसंपद्यमानायाम् । अस्ता वा क्षितौ[20]:

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो न निर्दिष्टः ।

२–[ ऋ० १०।५३।४ ] 'तदद्यवाचः प्रथमं० जुषध्वम्' इत्येव प्रतीकम् D.

३–वाच C. वाचं D.

४–मसिय B. C.

५–'नेन' त्रुटितम् C.

६–'ज' त्रुटितम् C. ७–'स्य' नास्ति D.

८–निषादस निषादस्य प्रति B. निषादस्य पति C.

९–ष्टौ B. ष्टौ C. अष्टौ D. अत्रार्थानुसारित्वात् 'इष्टौ' इत्येव पाठोऽस्माभिरादृतः । D. पुस्तके 'स्थपतिरष्टौ' इत्थमानुपूर्वी वर्तते । तत्र रेफे इकारमात्रा लेखकप्रमादामष्टा स्यादिति सम्भावयामः । B. C. पुस्तकयोस्तु 'रि' इत्येव नष्टं स्यात् ।

१०–[ अथर्व० २।१७।४ । तै० ब्रा० २।७।७।७ ] आसि B. C.

११–शूद्रप्राय B. C.

१२–[ तै० ब्रा० २।७।७।७ ] पृच्छामि B. C.

१३–दासि विन० B. C. १४–पत्ती D.

१५–[ अनुपलब्धमूलमिदं वचनम् ]

१६–दस्त्वेव B. C. १७–यज्ञीयं० D.

१८–[ ] एतत्कोष्ठकान्तर्गतः पाठस्त्रुटितः B. C.

१९–'तर' त्रुटितम् D.

२०–क्षित्याः D.

स्थानेभ्यो लोकेभ्यः । 'ते देवा असुरान् प्राणुदन्त' इति श्रुतेः । अस्यन्त इत्यसुराः 'असेरुरन्'[2] औणादिककर्मसाधनः । अपि वा असुरिति प्राण उच्यते, स ह्यस्तः[3] शरीरे[4], रो मत्वर्थीयः, भूम्नि चायम्[5] । अत आहुतेन तद्वन्त इति ।

सम्प्रति ब्राह्मणोक्तं निर्वचनं प्रदर्शयति-सोः[6] प्रशस्ताद्देशात् देवानसृजत तत्सुराणां[7] सुरत्वम् । 'मुखाद्देवानसृजत'[8] इति विज्ञायते । एवम्, असोः-अप्रशस्ताद्देशा[9]दसुरान् । 'जघनादसृजत' इति विज्ञायते[10] । ऊर्ध्वं च नाभेः पुरुषस्य मेध्यत्व[11]स्मरणात् ।

ऊर्गित्यन्ननामसु पठितमपि[12] निर्विवक्षयाह-ऊर्जयति[13] बलं करोतीति, सतः फलैरि पक्वमिति वा पकारलोपं कृत्वा शब्द[14]व्यत्यस्य वकार[15]स्योठि कृते रुगागमे च ऊर्गिति भवति । सुप्रवृक्ण[16]मिति वा, प्रश्चेर[17]शब्दलोपे कृते संयोगादिलोपे च वकारस्योठि[18] रुकि कृते च ऊर्गिति[19] भवति । सुच्छेदं हि तद् भवति, मृदुरसात्, सुसंस्कृततरत्वात् । निषादः कस्मात् ? निषद्य हन्तीति निषादः, प्राणिवधजीवकः, प्रतिलोमजन्मा कश्चित् । निषण्ण[20]म्, निः शब्दः[21] प्रकर्षे, प्रकर्षेण सन्नं[22]गतं व्यवस्थितं पाप[23]केमिति नैरुक्ताः । सौधन्वना रथकारा निषादशब्दवाच्या इत्यन्ये । 'वर्षासु रथकारः[24]' 'एतया निषादस्थपतिं याजयेत्'[25] इत्येवमादि-

---

१-[ cf. ताण्ड्य० ब्रा० ९।२।११ असुरा वा एषु लोकेष्वासँस्तान् देवा ऊर्ध्वसद्मनेभ्यो लोकेभ्यः प्राणुदन्त । ]

२-[ उणा० १।४३ ]

३-अस्तः क्षिप्त इत्यर्थः ।

४-'रे' त्रुटितम् D.

५-चायम् B. । मतुबर्थनिरूपणावसरे—
'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
*संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥*
इति मतुप् [ पा० ५।२।९४ ] सूत्रे भाष्यकारः ।

६-'सोः' त्रुटितम् D. ७-'सुरा' द्विर्लिखितम् B.

८-[ तै० ब्रा० २।२।९।७ ]

९-'देशात्' नास्ति D.

१०-[ cf. तै० ब्रा० २।२।९।४ स जघनादसुरानसृजत ] 'विज्ञायते' नास्ति D.

११-'त्व' त्रुटितम् C. मध्येत्व० D.

१२-०मपीति B. C. १३-०यति बलं जेति D.

१४-शब्दव्यत्ययश्च D.

१५-'वकारस्य' नास्ति D.

१६-सुवृक्णमिति व्या० D. १७-वृत्तेश्चेरकश० D.

१८-वस्योठि D. १९-ऊर्गिरिति B. C.

२०-निषन् B.

२१-'शब्दः प्रकर्षे' त्रुटितम् D.

२२-सन्नं D. गगतं B. २३-पापमि० D.

२४-द्रष्टव्यम्-पूर्वमीमांसाशाबरभाष्ये [ ६।१।४४-५० ] का० श्रौ० कर्कभाष्ये [ १।१।९ ] ऋभूणां त्वेति रथकारस्य [ cf. तै० ब्रा० १।१।४।८ ]

२५-[ का० श्रौ० १।१।१२ ] स्थले कर्कभाष्ये द्रष्टव्यम् । योज० D.

दर्शनात् । 'सौधन्वना ऋभवः' इति मन्त्रवर्णात् ।

सम्प्रत्यसाधारणं मनुष्यमात्रनामत्व एव निगमं दर्शयति ।

यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत ।
अस्तृणाद् बर्हणा विपो३र्यो मानस्य स क्षयः ॥

प्रगाथस्यार्धम् । यत्-यदा,-पाञ्चजन्यया-पञ्चजनेषु मनुष्येषु भवया विशा, स्त्रीलिङ्गनिर्देशो जात्यपेक्षः, मनुष्यजातेरित्यर्थः । अथवा-ब्राह्मणादीनि चत्वारि मनुष्यजातीनि, निषादः सर्वापसदोपलक्षणार्थः । एतावन्तश्च मनुष्याः । अतः पञ्चस्वपि मनुष्यजातिषु भवया विशेति, पञ्चभिरपि मनुष्यजातिभिरित्यर्थः । इन्द्रे-वृष्टयर्थं वर्षं भट्टारकदेवेत्येवमादयो घोषाः-शब्दाः, असृक्षत-सृज्यन्ते, तदा अस्तृणात-स्तृणाति आच्छादयति कृत्स्नं जगत्, बर्हणा-परिवृढेन वर्षेण । विपः-मेधाविनामैतत्, मेधावी । अर्यः-ईश्वरश्चेन्द्रो यतः, मानस्य गर्वस्य पूजायाः, क्षयः-निवासः । एवञ्चाकुर्वतः कीदृशो गर्वः कुतो वा पूजा ।

अथवा-मानं निर्माणं तस्य निवास आश्रयः कारणमिन्द्रः । स चासति वर्षे न शक्तः किञ्चिदपि निर्मातुम् । पञ्च-इति निर्वाच्यम्, पृक्ता-इति निर्वचनम्, संख्या इति विषयकथनम्, सम्बन्धात् सर्वलिङ्गैरित्याह-लिङ्गत्रययोगेऽप्यविशिष्टेति ।

ननु षडादीन्यप्यविशिष्टानि ? उच्यते, प्रत्ययोपात्तरुढ्यर्थसम्बन्धस्वार्थाभिधानाददोष इत्युक्तम् । अपि च न या पृक्ता सा पञ्चेति, किन्तु या पञ्च सा पृक्तेति ।

---

१-[ ऋ० १।११०।४। cf. ३।६०।४ ]
२-०वर्णाः B.
३-[ ऋ० ८।६३।७ ] 'यत्पाञ्चजन्यया विशेन्द्रे इ (क्ष) यः' इत्येव प्रतीकम् D.
४-प्रमाथस्या० D. ५-विशा B.
६-'रि' त्रुटितम् B. C. अत्र ०'जातैः' इति तृतीयान्तपाठो युक्तः स्यात् ।
७-०जातानि B. C.
८-०पशदो० B. C. ०पशब्दो० D. अयं 'अपसद' शब्दः संकरजातिपर्यायः [ See मनुः १०।८ ] अधमपर्यायो वा दन्त्यमध्य एव दृश्यते । अतस्तालव्यमध्योऽस्माभिर्नादृतः ।
९-भवया D. १०-०जातेरि० D.
११-०र्थे च व० D. १२-इहार D.
१३-सृज्यते B. C.
१४-'स्तृणाति' त्रुटितम् D.
१५-विपर् B.
१६-गन्धर्वस्य D.
१७-संक्षयः B.
१८-गन्धर्वः D.
१९-वर्षेण B. वर्षेण न D. २०-हि ऋच्यम् B. C.
२१-पृक्ता इति B. ०क्ता इति C.
२२-पृक्ता B.
२३-पृक्तेति B.

मनुष्यसम्बन्धादुच्यते[1]-अर्थे[2] बाहुनामान्युत्तराणि द्वादश आयती, च्यवाना, इत्येवमा[3]दीनि। सन्दिग्धविचार्या[4] निगमोऽस्योपेक्ष्या[5][6]: । प्रबाधते-निष्ठां गमयत्याभ्यां कर्माणीति बाहुः ।

एतत्सम्बन्धादेवाङ्गुलिनामान्युत्तराणि द्वाविंशतिः, अग्रुवः-अण्व्यः-इत्येवमादीनि[7] । अग्रगामिन्यः-अग्रे गच्छन्तीति[8], हस्तस्य पूर्वं वा कर्मसु[9] व्यापारं गच्छन्ति । अग्रशब्दाद् काररेफावाद्यन्तौ[10] कृत्वा गमेराद्यन्तविपरीतस्य मकारगकारौ[11] मध्ये उपधाव्यापत्त्या अकारस्योकारः, रेफस्य लत्वम् , इकारो नामकरणस्तच्छोल्ये इति रूपसिद्धिः । उत्तरेष्वपि निर्वचनेषु वर्णाक्षरलुप्त्यो[12]र्यथार्थं योजनीया । अग्रेण गालयन्त्युदकानि[13] । प्रथमं वा कार्याणि कुर्वन्ति । अङ्कना वा-अङ्का लेखा[14]दिस्ताभिः क्रियते । धान्यराशिर्वाङ्क्यते[15] । अञ्चतेरङ्कना[16]ः, अञ्जतेर्वा[17], अभ्यञ्जनादेव, सममन्धकारेऽपि अभ्यञ्जते[18], ताभिः स्पृश्यत इति शेषः ।

उक्तमनेकनिर्वचनप्रयोजनमादावेव शास्त्रस्य । तासामेषा । किमर्थम् ? अवनिशब्दस्य नदीपृथिव्योः, कक्ष्याशब्दस्य रज्ज्वाम्, योक्त्रशब्दस्य[19] योजनशब्दस्य चाध्वपरिमाणे, अभीशुशब्दस्य च बाह्वोः, एवमर्थान्तरप्रसिद्धानामिहाङ्गुल्यर्थतां प्रदर्शयन्नाह[20] ।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य

अष्टमः खण्डः ।[21] ]

---

१-०थादित्युच्य० D.
२-'अथ' नास्ति C. D.   ३-०मादि D.
४-विकारा B. C.   ५-०राश्चेत्यापे D.
६-उपेक्ष्या विचारणीया अन्वेषणीया वेत्यर्थः ।
७-इत्यादीनि D.   ८-'इति' नास्ति D.
९-'वा कर्मसु' नास्ति B. C.
१०-'न्तौ' त्रुटितम् C.   ११-मगौ D.
१२-वर्णान्तर D.
१३-अग्रेणाल० B. C.
१४-लेखादिः B. 'दि' त्रुटितम् C.
१५-वाश्यते C. वाश्यते D.
१६-[ धा० १।२०३, ९१५ ]
१७-[ धा० ७।२१ ]
१८-म्यञ्जिष्यते B. C.
१९-'रज्ज्वाम्, योक्त्रशब्दस्य' त्रुटितं भाति D.
२०-'प्रदर्शयन्ती आह' इति युक्तः पाठो भवेत् । अस्य हि कृदन्तक्रियापदस्य, वाक्यादावेव पठितं 'तासामेषा'-इत्यत्र 'एषा' इति कर्तृपदम् । अन्यथा वाक्यानन्वयापत्तेः । इदानीं तु तासामङ्गुलीनां प्रतिपादिका एषा ऋक् अवन्यादीनां नद्यादिनामभिः सन्दिग्धानामङ्गुल्यर्थतां प्रदर्शयन्ती आह इत्यन्वयः संगच्छते ।
२१-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्न निर्दिष्टा ।

## [ अथ नवमः खण्डः ।[1] ]

दशावनिभ्यो दशकक्ष्येभ्यो दशयोक्त्रेभ्यो दशयोजनेभ्यः ।
दशाभीशुभ्यो अर्चताजरेभ्यो दश धुरो दश युक्ता वहद्भ्यः[2] ॥

ग्रावस्तुतिरेषा । अर्बुदस्यार्षम् । दशावनयोऽङ्गुलयो ग्राहकत्वेन सम्बन्धिन्यो येषामभिपवग्राव्णां[4] ते दशावनयः । ता एव दशकक्ष्यास्थानीया योक्त्रस्थानीया योजनस्थानीया, अभीशवो रश्मयः, तत्स्थानीयाश्च तत्कार्यकरत्वात्तादृश[5]कक्ष्यादिशब्दैरुच्यन्ते । सर्वत्र चतुर्थी द्वितीयार्थे, तान्[6] अर्चत स्तुत । अजरेभ्यः-जरावर्जितान् । कियन्तः[7] ? उच्यते[8] दश ।

ननु[9] अभिषवग्रावाणः पञ्च[10], दशशब्देन बहुत्वमात्रप्रतिपादनपरेणावयवलक्षणया पञ्च प्रतिपाद्यन्ते । किं कुर्वतः ? उच्यते, धुरो दश, प्रथमा तृतीयार्थे, धूःस्था[11]नीयाभिर्दशभिरङ्गुलीभिः[12] । युक्ताः[13]-प्रथमा द्वितीयार्थे, युक्तान् । वहद्भ्यः[14]-वहतः, स्वकर्मण्यभिषवाख्ये व्याप्रियमाणानी[15]त्यर्थः ।

अवनयोऽङ्गुलयः, अर्वन्ति[16] गच्छन्ति कर्माणि प्रति । कक्ष्याः प्रकाशयन्ति-अनुष्ठानेन फलेन वा कर्माणि । ख्यातेः[17] कक्ष्या इत्युक्तनिर्वचनम् । योक्त्राणि योजनानीत्यादि निगदव्याख्यातम्[18] । अभीशवो हि व्याप्नुवन्ति[19] कर्माणि । धूः-धूर्वतेर्[20]वधार्थस्य । ध्वरति धूर्वति इति[21] वधकर्मसु पाठात् । धूर्वन्ति घ्नन्ति उपक्षेपयन्ति[22] कर्माणीत्यर्थः । इयमपीतरेति-सारूप्यप्रसङ्गा[23]दाह, युगादि-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो न निर्दिष्टः ।
२–[ ऋ० १०।९४।७ ] 'दशावनिभ्यो दशकक्ष्येभ्यः० वहद्भ्यः' इत्येव प्रतीकम् D.
३–'एव' त्रुटितम् B.
४–०क्षावस्था० D.
५–०त्तादृश० B. ६–ताः C.
७–क्रियन्ता B. 'कियतः' इति युक्तः पाठः ।
८–उच्यन्ते B. C.
९–न तु D. १०–सप्रपञ्च B. प्रपञ्च C.
११–भू D.
१२–०लिभिः D.
१३–युक्तान् D.
१४–वहन्तः B. C.
१५–०णानित्य० C.
१६–[ cf. धा० १।६३१ ]
१७–[ cf. धा० २।५१ ] ख्यायतेः D.
१८–०ख्यानम् D.
१९–भिव्या० D. 'व्या' त्रुटितम् C.
२०–[ निघ० २।१९ ]
२१–'इति' नास्ति D.
२२–०क्षेप० D. 'प' त्रुटितम् B.
२३–'प्र' त्रुटितम् B. C.

सम्बन्धीनि[1]। विहन्ति वहं स्कन्धमनडुहो ऽश्वस्य वा । धारयतेर्वा[2] धूः, धार्यते हि सा[3] बलीवर्दैः । अङ्गुल्योऽपि धार्यसुवर्णनवोपलादीनि[4] धारयन्तीत्युभयप्रकारेण निर्वचनम्[5]।

कान्तमप्यङ्गुलीभिरेव[6] क्रियत इत्याह-कान्तिकर्माण इच्छार्था धातव आख्यातान्यष्टादश, वश्मि-उश्मसि-इत्यादयः।

काम्यानां प्रथममन्नमित्याह[7]-अन्ननामान्युत्तराण्यष्टाविंशतिः, अन्धः-वाजः-इत्यादीनि । वाजः पय आदीनामन्यसाधारणानामर्थाद्[8] विशेषाध्यवसायः। अन्नमानतं जातमात्रेभ्यो भूतेभ्य उपनतं कर्मवशात्। आनमेर्निर्ह्रसितोपसर्गस्यान्नम्[9] । [10]अत्तेर्वा, अद्यतेऽत्ति च तस्मादन्नम्।

तदन्नसम्बन्धादेव-अत्तिकर्माणो धातवो दश, आवयति भर्वतीत्यादयः । अन्न-वंध्याम्[11]-इति पृथक्पाठे प्रयोजनं मृग्यम्।धात्वन्तराभिप्रायं वा।धातूनामधातुजत्वात्[12]सर्वत्र प्रश्नानुपपत्तिः।

अन्नसम्बन्धाद् बलनामान्युत्तराण्यष्टाविंशतिः, ओजः-पाजः-इत्यादीनि[13] । बलं[14] बिलेन व्याख्यातम्। बिलशब्दश्च[15] सप्तमे निरुक्तः[16]-'बिलं भरं भवति बिभर्तेः'[17] इति।

बलवतां धनसम्बन्धादाह-धननामान्युत्तराण्यष्टाविंशतिरेव।पूर्वैस्तुल्यसंख्यात्वादेवकारः। मघं रेक्ण इत्यादीनि। सर्वधनाभिप्रायञ्चैतत्[18], हिरण्यस्य विशेषेणोक्तत्वात् । [19]धिनोति प्रीणयति हि सद् दृश्यमानमपि किमङ्ग पुनर्भुज्यमानम्।

धनविशेषत्वाद् गवामाह-गोनामान्युत्तराणि नव[20], अघ्न्या-उस्रा-इत्यादीनि । निरुक्तत्वाद्[21] गोशब्दस्य प्रश्नाभावः[22]।

---

१–०न्धीनी C.
२–[ cf. धा० १।९४८ ] ३–स C. सा च D.
४–'र्ण' त्रुटितं भाति C. ०सवर्णनलोपलादि D.
५–'म्' त्रुटितम् C. ६–०लिभि० C.
७–'आह' नास्ति D. ८–'नाम' त्रुटितम् B. C.
९–अनमेर्निर्हृ० C. अनमेर्निर्गिलोपसर्जस्या० D.
१०–[ धा० २।१ ] 'अद्यतेऽत्ति च भूतानि, तस्मादन्नं तदुच्यते' [ तै० उ० २।२ ]
११–वन्ध्याम B. C. १२–धातुना० B. C.
१३–इत्यादि D. १४–चल D.
१५–शब्दस्य B.
१६–०क्तम् B.
१७–[ निरु० ३।१७ ] इदं निर्वचनवाक्यं नास्ति D.
१८–०र्वधाभि० B. ०र्वधाभि० C.
१९–हिनोति प्रण० D.
२०–'नव' नास्ति D.
२१–[ निरु० २।५ ]
२२–प्रश्नभावः B.

गोमिनां धनवतां च क्रोधः सम्भवतीत्याह-क्रुध्यतिकर्माणो धातवो दश,-रेळते-हेळते-इत्यादयः।

क्रुध्यतिसम्बन्धात् क्रोधनामान्युत्तराण्येकादश, हेळः हरः-इत्यादीनि । इच्छानिमित्तश्चेतसः कालुष्यं क्रोधः, स च सत्वभूतः, अतो नामानीत्याह।

क्रोधः प्रायेण गमनहेतुरित्याह-गतिकर्माण उत्तरे धातवो द्वाविंशं शतम्, वर्तते अयते-इत्यादयः, चलनदेशान्तरप्राप्तिसामान्याद् गमिनात्रोपदिश्यन्ते । तथाहि-वर्तते चक्रम्, लोटते कुसूलम्, कसति पयः, सर्पति गोधा, स्रवत्युदकम् इत्यादीनां शब्दमाहात्म्यनिबन्धनो भेदः।

चलनस्यैव प्रतीतिः प्रायेण क्षिप्रगत्यादिगुणत्वादेवाह-क्षिप्रनामान्युत्तराणि षड्विंशतिः, नु मङ्क्षु-इत्यादीनि । गुणस्य चैतानि क्षिप्रस्य, तद्वतो वा सत्वस्य । तथा च 'भुरण्युः शकुनिः' इति वक्ष्यति । क्षिप्रं संक्षितोऽल्पीकृतः, विकर्षो दूरचिरत्वलक्षणः, चिरकालसाध्यमल्पेन क्रियते यत् तत् क्षिप्रम्। क्रियावयवानां द्रुतकारणत्वात्।

क्षिप्रसम्बन्धादन्तिकत्वस्याह-अन्तिकनामान्युत्तराण्येकादश,तळित्,आसात्-इत्यादीनि। अन्तिकमानीतमिव, तरसन्निकृष्टत्वात्।

सन्निकृष्टानामेव संग्रामो भवतीत्याह-संग्रामनामानि षट्चत्वारिंशत्, रणः, विवाक्, विखादः-इत्यादीनि । संग्रामः संगमनात्, एकीभवन्ति तत्र सैनिका युध्यमानाः कचाकचि । संगरणाद्वा-नामगोत्रादेः संशब्दनात् । संगतौ ग्रामौ समूहौ सैनिकानामिति । ग्रामशब्दः

१-'दश' नास्ति D.
२-भूतमतो B. 'त अ' त्रुटितम् D.
३-चलनं B.
४-प्राप D.
५-०मिमात्रावादि० B. ०नात्रोप० C.
६-०त्यादीनि B.
७-०त्वादाह B.
८-अत्र 'पाके' इत्यधिकः पाठः B.C. किञ्च C. पुस्तके 'नु' स्थाने 'उ' पाठः।
९-हिप्रस्य D.
१०-सवस्य D.
११-[ निरु० १२।२२ ]
१२-'चिरकाल' त्रुटितम् D.
१३-०ल्पेनि B. C.
१४-द्रुत० B. C.
१५-०त्वस्यह B. ०त्वस्याह D.
१६-आरात् B.C.
१७-०क नामानित० B.
१८-पाकः C. 'विवाक्' इत्यस्याग्रे 'जवतुः' इत्यधिकः पाठोऽस्ति D.
१९-'ना' त्रुटितम् C.

समूहवचनः, वणिग्ग्रामादिप्रयोगदर्शनात् । वाजसाता[1]वित्यादीनामन्नसदनोदका[2]दि-साधारणानां प्रदर्शनार्थमाह-नत्र खल इत्येतस्य सञ्चयस्थाने प्रसि[3]द्धस्य संग्रामविषयत्वेन निगमा भवन्ति । तेष्वपि प्र[4]दर्शनार्थं कश्चिदुदाह्रियते ।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य
नवम खण्डः । ][5]

---

१-०समादीना० C. B.

२-'द' त्रुटितम् D. ०दकारादि० B. C.

३-प्रसिद्धया D.

४-प्रथमार्थे D.

५-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्न निर्दिष्टा ।

# [ अथ दशमः खण्डः । ][1]

अभीदमेकमेको अस्मि निष्पाळभी द्वा किमु त्रयः करन्ति ।
खले न पर्षान् प्रति हन्मि भूरि किं मा निन्दन्ति शत्रवोऽनिन्द्राः ॥[2]

इन्द्रो[3] वैकुण्ठः[4] स्वसामर्थ्यमाचष्टे । अभिराख्यातेन[5], अभ्यस्मि-अभिभवामि, इदं सर्वमहम् । कथम् ? एकस्तावदेक एव । निष्षाट्-निःशब्दोऽत्र प्रकर्षे[6], निःशुक्लो नीरक्त[7] इति यथा । सहिरभिभवे[8], प्रकर्षेणाभिभविता सपत्नानाम् । अभी[9] द्वा-अभिभवामि द्वावप्येवम् । किमु त्रयः करन्ति किं मे त्रयोऽपि कुर्वन्ति । त्रीनप्येक एवाभिभवामीत्यर्थः । खले न[10] पर्षान्[11]-यथा खले पर्षान्, 'पॄ पालनपूरणयोः'[12] इत्यस्येदं रूपम् । कर्षस्य पूरयितॄन् गोधूमादीन् बलीवर्दः पादैः, एवं प्रतिहन्मि भूरि बहूनपि, ईदृशं सन्तं किं मा निन्दन्ति शत्रवोऽनिन्द्राः, अ[13]विद्यमानो ज्ञेयतया[14] इन्द्रो येषु ते, ममेन्द्रस्याज्ञातार इत्यर्थः । मत्तो[15] वा इन्द्राद[16]न्ये, अन्यस्येन्द्रत्वा[17]भावादेव[18], मत्तो न्यूना इत्यर्थः । अथवा अनिन्द्राः-अनायकाः ।

एवन्तु व्याख्यायमाने घोटा[19]रूढस्य विस्मृतो[20] घोट[21] इत्येतदापद्यते । खलशब्दस्य संग्रामवचनस्य निगमप्रतिज्ञानात् सस्यसंचयस्थानवचनस्य च दृष्टान्तत्वेनोपन्यासात् पूर्वमुत्त[22]रेण न संगच्छते । अतोऽन्यथा व्याख्यायते-अभिभवामीदं शत्रुसैन्यमेकमेव, युद्धैकरसमित्यर्थः । एकोऽहमसहाय एव । कथम् ? निषा[23]ट्-निष्षहमाणः, सहिरभिभवे, तेन चात्र तत्पूर्वकत्वाद् वधो लक्ष्यते, निष्कृष्य घ्नन् । अभी[24] द्वा-अस्मीत्यनुषङ्गः, द्वेधाभूता[25]नपि सैनिकान् घटा[26]द्वयसन्निवेशेन व्यूढ[27]सैन्या[28]नपि अभ्यस्मि, किमु[29] त्रयः-किञ्च मम

१-आदर्शपुस्तकेष्वत्र खण्डारम्भो न निर्दिष्टः ।
२-[ ऋ० १०।४८।७ ] 'अभीदमेक० निन्द्राः इत्येव प्रतीकम् D.
३-'ऐन्द्रः' इत्यपि पाठः B.
४-देवकुण्ठ C.
५-'अस्मि इत्यनेन सम्बध्यते' इति शेषः ।
६-०प्रादक० C.
७-निरुक्त० B.C.
८-सहातिभ० B. सहा० C.
९-अभि B.C.
१०-'न' त्रुटितम् C.
११-वर्षान C.
१२-[ धा० ३।४ ]
१३-'अ' त्रुटितम् D. ०माने B.
१४-'यत' त्रुटितम् B.
१५-उक्तो D.
१६-०दन्यो D. ०न्द्रान्ये C.
१७-इन्द्रस्ये० B.
१८-०भवा० C.
१९-घोडा० C.
२०-विस्तृतो B. C.
२१-योट B. घोड C.
२२-'वैमु' त्रुटितम् C.
२३-निष्पद् D.
२४-अभि B. C.
२५-०तानभि D.
२६-घाद्व० C. पटाद्व० D.
२७-व्यूह० D.
२८-न्यान्यपि C.
२९-किर B.C.

त्रयोऽपि[1] कुर्वन्ति । बहुधापि व्यूहरचनावरिथिनाः[2] किं मां कुर्वन्ति । दर्पादाक्षिपन्नित्थं मम रोमाण्युत्पाटयितुं न शक्नुवन्तीत्य[3]भिप्रायः । खले न-सम्प्रत्यर्थे नकारः संग्रामे । पर्वानिति पर्वच्छब्दस्य संघातवाचिनो विकृतनिर्देशश्छान्दसत्वात् । संघातान् प्रति हन्मि, भूरि बहून्[4]पीत्यादि समानम् ।

आचार्यस्यायमभिप्रायः-न शब्दः सम्प्रत्यर्थे नोपमायाम् । यत आह-खल इति संग्रामनामेति । प्रसङ्गाद्धान्यार्थप्रदर्शनम्-अयमपीतर इति । यत्तु-खल इव पर्वान्[5]-इति वचनम्, न[6] तदुपमानप्रदर्शनार्थम् । किन्तर्हि ? प्रसिद्धसम्प्रत्यर्थेनैव[7] शब्देनास्त्युपमार्थस्य सम्प्रत्यर्थे प्रयोगः । इहेव निधेहीति यथा, इति[8] सम्प्रत्यर्थे प्रदर्शयितुम् । तथा 'सुचिदु-रिच'[9] इति वाक्यपूरणत्वेन प्रयोगः । लोकेऽपि[10] च-क इव दीपः-इति । तस्मादुपक्रमोपसं-हारंगत[11]मेवपद्यमेतद् व्याख्यातम् ।

पूर्वत्रापि व्याख्याने ग्रन्थ[12]मित्थं नैयन्ति[13]-तत्र खल इत्येतस्य संग्रामनाम[14]सु पठि-तस्यान्यत्रापि निगमा भवन्ति । अन्यत्र चेदमुदाहरणमभिहितम् । खल इति संग्राम-वचनस्य तान्निर्वचनम्[15] । अयमपीतर इति, इतरस्यान्यस्य धान्यखलस्येति । तदेतद् यदि संगच्छते, तथाऽस्तु[16] ।

एकपदनिरुक्तम्-एक इता संख्या, इतेति निर्वचनम्, संख्येत्यभिप्रायवचनम् । इता अनुगता उत्तरां संख्याम् । एकत्वप्रत्ययमात्रं हि द्वित्वादिसंख्या । द्वौ द्रुततरा इतरेतरे-त्यर्थः, एकस्याम्[17] । त्रयस्तीर्णतमा, द्वावेकं चापेत्य ।

सम्प्रति प्रसङ्गादाह-चत्वारश्चलिततमा, पूर्वपिक्षया । पञ्च व्याख्याता[18]-पृक्ता संख्येति ।

---

१-'अपि' नास्ति B.C.
२-व्यूह स्थिताः D.
३-'इति' नास्ति B.C.
४-०मर्वान्या० B.C.
५-अस्मादर्शपुस्तकेषु 'वर्पान्' इत्येव पाठः, परमस्मा-भिरसंगतत्वादुपेक्षितः ।
६-'न' त्रुटितम् भाति B.C.
७-०नैव० B.C.
८-इहि B. C.
९-[ ऋग्० मं० ८।३।८।११ निरु० ११।१७ ] सुदानवः । सुचिदुरिति वा B.
१०-लोपि च ( प B. ) B. C.
११-०गंतार० D.
१२-ग्रन्थ० D. मन्त्र० C.
१३-नयति B.C.
१४-वचनसु B.
१५-वार D.
१६-नयाम्न ( स्य C. ) B. C.
१७-एकस्मात् C. D. अत्र 'एकस्याः' इति पुस्त-कान्ते संदेहः ।
१८-[ निरु० ३।८ ]

षट् सप्त च व्याख्यास्यति । 'षट् पुनः सहतेः, सप्त सृप्तौ'[1] इति । अत एतावुत्सृज्य अष्टा-[2] वश्नोतेः[3] । व्याप्नोति हि[4] सा पूर्वाः[5] संख्याः । नव-न वननीया, असंभजनीया[6],अमङ्गल्या हि सा, यतो लोकस्तां परिहरति । नावाप्ता वा, दश संख्यां न प्राप्तेत्यर्थः[7] । नव वननीयेति, पूर्वापेक्षया बहुत्वात् स्तवनीयेत्यर्थः । दश दस्ता[8], उपक्षीणा, दशान्तैव हि संख्या यतः[9] । एकाद्युपचयेन दश संख्यायाः[10] एवावृत्तेरेकादशादिसंख्योपजनः । विंशत्यादयश्च दशावृत्तिरूपा एव दृष्टार्था वा, सर्वत्र [11]एषैव दृश्यते उत्तरासु । ततश्च पश्यतेर्वा[12] दश, दंशयतेर्वेत्यर्थः[13] ।

विंशतिः-द्विर्दशभिः । द्विरावृत्तैर्दशभिर्विंशतिः । द्विर्दशदिति पाठान्तरम् । द्विरावृत्तो दशवर्गो[14] विंशतिः । द्विर्दशत इत्यपि पाठान्तरम्[15], दशतो दशवर्गस्य द्विरावृत्तिरिति ग्रन्थयोजना । अर्थस्तु स एव । द्विर्दशेति तु समञ्जसम्[16] । शतं दशदशतः, दशदशवर्गः[17] शतम् । सहस्रं सहस्वत् सहो बलं तत्संख्येये दृष्टं संख्यायामध्यस्यते । अभिभवति हि सहस्रं पूर्वसंख्याः । अयुतमित्यादि, तत्तत् सहस्रादि दशकृत्वोऽभ्यस्तम्[18] । कुत एतत् ? शते दशकृत्वोऽभ्यासस्य दर्शनात्, दशसंख्यायाश्च दृष्टार्थत्वात्, तदुपचयमात्रात्मकत्वाच्चायु[19]तादीनाम् ।

सम्प्रत्यर्बुदशब्दनिर्विवक्षया सारूप्यादम्बुदशब्दं[20] निराह-अम्बुदो मेघो भवति । अरणमम्बु [21]अर्तेः, [22]धुर्नामकरणः, तस्मिन् गुणे रपरत्वे च रेफस्य मकारः, तद्दः । अम्बरो मेघ इति पाठे अम्बुरा[23]शुकारस्याकारः, रातेश्चार्थे ददातिना दर्शयति, तद्ददातीत्यर्थः । सारूप्यादेवाम्बर[24]शब्दमन्तरिक्षवचनं निराह । निरुक्तस्य च प्रयोजनम्-यज्ञासत्या परा-घति । यद्वाम्बोऽध्यम्बर[25] इति नानात्मकत्वान्निर्वचनभेदः । अम्बुमेद्रातीति[26] वा, राजतेरर्थे

---

१-[ निरु० ४।२७ ]  २-[ निरु० ४।२६ ]
३-[ धा० ५।१८ ]  ४-'हि' नास्ति D.
५-पूर्वसंख्या: B. C.
६-'असंभजनीया' नास्ति B. C.
७-'प्रा' त्रुटितम् C.  ८-'द' त्रुटितम् C.
९-पयतः B.  १०-यथा वृ० B. C.
११-'एषा' नास्ति B.
१२-[ cf. धा० १।१०३७ ]
१३-[ cf. धा० ४।१०४ ]
१४-'व' त्रुटितम् B, C.
१५-०न्तरे B. C.  १६-०ञ्जसः C. D.
१७-'दश' त्रुटितम् B.  १८-०त्वो न्यस्तः D.
१९-'य' 'यु' इति त्रुटितम् C.
२०-'शब्द' नास्ति B.
२१-[ cf. धा० ११९८३ ]
२२-त्रुनाम० D.
२३-रात्युका० D.
२४-०वान्तर० D.
२५-'अधि' नास्ति B. मध्यम्बर D.
२६-०वद्रा० C. D.

भातिनाऽऽचष्टे । स्वच्छस्तिमितसरोऽम्बुवदवभासते, कलितोपमानं[1] चैतत् । यथा—

पुञ्जीकृतमिव ध्वान्तमेष भाति मतङ्गजः ।
सरः शरत्प्रसन्नाम्भो नभःखण्डमिवोज्झितम्[2] ॥

परमार्थतः स्वरूपमवकाशम् । अम्बुमद्[3] भवतीति वा, रो मत्वर्थे, सः अम्बुदोऽम्बरो वा स्वेनावयवेन यथा[4] महान् क्रमेणोपचीयमानो बहुला व्यापी अपर्यन्तधारात्मना[5] भवति वर्षन्, तद्वदर्बुदं[6] क्रमेणोपचीयमानं महद् व्याप्तृ च, पूर्वसंख्यानां[7] संख्येयधर्मेणायमपदेशः[8] ।

खल इति संग्रामनाम, खलतेर्वा मथनार्थस्य[9], मथ्यन्ते हि तत्र योधाः, स्खलतेर्वा, स्खलन्ति हि[10] तत्र योधाः । अयमपीतरथादि, एतस्मादेव खलतेः । तत्रापि हि संमथ्यन्ते[11] क्षुद्यन्ते सस्यानि । स्खलन्तीति[12] वा, स्खलन्ति त्वरमाणास्तत्र कर्षकाः[13] । समास्कन्न इति निर्वचनान्तरम् । संग्रामो ह्यसौ[14] मृद्यमानो[15] धान्यकणैः[16] । इतरस्मिन्नपि दुर्जने समानम् । स[17] हि साधून् मथ्नाति, स्खलयति वा दोषदर्शिपरत्वात्[18] । अन्यथा सन्तमर्थमन्यथा भाषमाणः श्रेयसो वा प्रस्खलति[19] मृद्यते[20] । समास्कन्नो वा पापेन ।

संग्रामे परस्परं व्याप्तेः व्याप्तिकर्माण उत्तरे धातवो दश, इन्वति नक्षत्यादयः[21] । शाकपूणेरतिरिक्ता एते—पिप्याक विव्याच[22] उरुव्यचाः विप्रे[23] इति व्याप्तिकर्माणः । तेषु द्वे नामनी आख्यातशङ्का व्यावृत्त्यर्थमाह—आछाणः, आपानः एतयोरर्थमश्विना आपिना चाचष्टे शान-ज्नेन क्रमेण—आसुवान आप्नुवान इति ।

तत्र व्याप्तानां वध इति वधकर्माणो धातवस्त्रयस्त्रिंशत्, दम्नोति दनयतीत्यादयः । तेषु वियात इत्येतन्नाम इति शेषः । तस्य शब्दसमाधिमर्थं चाचष्टे—वियातयेत[24] इति वा वियात-येति वा, विविधं याति शत्रूनिति वियाता[25], तस्य सम्बोधनम् । विपूर्वस्य यातयतेर्वा श्रे

---

१—कल्पितोपमं D.
२—[ अनुपलब्धमूलमिदं वचनम् ]
३—०मद् B. C.    ४—यदा D.
५—'धारा' द्विलिखितम् B.
६—०दम्बुदं B, D.    ७—पूर्वं० D.
८—०संख्यान D.
९—[धा० १।०।२८] खले मथनार्थः । मथनेः B. C.
१०—'हि' नास्ति D.    ११—क्षुद्यन्ते D.
१२—०स्खल० D.    १३—कर्षकाः B. C.
१४—'हि' नास्ति D.    १५—मृद्यमानो B. C.
१६—धरणैः B. C.    १७—'स' त्रुटितम् D.
१८—'पर' नास्ति B. C.    १९—०लयति D.
२०—दृश्यते भस्यते D.
२१—नक्षन्त्या० B. C.
२२—विव्याच D.
२३—विप्र D.
२४—'यत' त्रुटितम् D. ०यातेति वा B. C.
२५—'ता' त्रुटितम् B.

प्रत्यये वियातरिति[1]। वियातयेति वा वियातरिति चेति[2] पाठान्तरम् । यथा चायमेवं तडिदा[3]खण्डलशब्दावपि नामनी। तत्राखण्डलशब्दस्यात्र वक्तव्यस्य तडिच्छब्दात् पूर्वं निगमेन नामत्वं दर्शयति।

शाचिगो शाचिपूजनायं रणाय ते सुतः।
आखण्डल प्र हूयसे[5]

इरिम्बिठेरार्षम्। शचीति कर्मनाम[6], तत्रभवा शाची। गौः-स्तुत्याख्या वाक्, शाची गौर्यस्य[7] स शाचिगुः। छान्दसत्वात् पुंभावो[8] ह्रस्वत्वञ्च[9]। तयैव[10] शाच्या यैः[11] पूज्यते[12] स शाचिपूजनः[13], तत् सम्बोधनं हे शाचिगो! हे शाचिपूजन! अयं रणाय संग्रामार्थं ते तव स्वभूतोऽयं, सुतः-अभिषुतोऽस्माभिः सोमः। अतः हे आखण्डल! आखण्डयितः शत्रूणाम्, प्रहूयसे-प्रकर्षेण हूयसे[14] त्वमस्माभिः। शाचिगो शाचिपूजनेत्येतत्सामानाधिकरण्यादिन्द्रस्य चाखण्डलकृतसम्बन्धान्नामत्वं[15] वधकर्मत्वञ्च,प्रतीत्या आखण्डयितरिति। तडिदित्यन्तिकवधयोः, नामेति वाक्यशेषः। यतश्चैतदेवमतो[16]ऽन्तिकवधलक्षणे कर्मणि अस्य तत्संस्पृष्टकर्म। संसृष्टनामेति[17] पाठान्तरम्। अत्र स्वशब्देनैव नामत्वं साधारणत्वं चोक्तं भवति। ताडयतीति[18] सत इति वधकर्मनिर्वचनम्। इतरत्र ताडयतिरेव सन्निकर्षार्थत्वात्[19]। सन्निकर्षार्थस्य निर्वचनम्।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य
दशमः खण्डः। ][20]

---

१-अस्यामि D. पुस्तके 'वा वियातये रावति तस्य सम्बोधनम्' इति भ्रष्टविपर्यस्तवर्णमात्रः पाठः। B. C. पुस्तकयोस्तु 'प्रत्यये' इत्यनन्तरमेव 'धारयः पा ( वा C. ) स्य इति वक्तव्य- (नास्ति C.) स्य सम्बोधनम्' इति पाठोवर्तते।
२-चेति B. C.
३-तथाख० D.
४-वा सर्वे D.
५-[ ऋ० ८।१७।१२ ] 'शाचिगो शाचिपूजना० प्र हूयसे' इत्येव प्रतीकम् D.
६-[ निघ० २।१ ]
७-गौरस्य C.
८-पुं त्रुटितम् D.
९-०त्वस्य D.
१०-'एव' नास्ति D.
११-०च्यार्थः B.
१२-आज्यके B. C.
१३-जनम् B.
१४-भूतः D.
१५-चचलकृती B. C.
१६-तयश्चै० C.
१७-'संसृष्ट' त्रुटितम् D.
१८-ताल्कय० B. C.
१९-कृषार्थत्वात्। जीकेर्षा० D. अत्र 'सन्निकर्षार्थः' इति युक्तः पाठो भवेत्।
२०-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ एकादशः खण्डः । ][1]

त्वया वयं सुवृधा ब्रह्मणस्पते स्पार्हा वसु मनुष्या ददीमहि ।

या नो दूरे तळितो या अरातयोऽभि सन्ति जम्भया ता अनप्नसः ॥

गृत्समदस्यार्षम्[3] । त्वया सहायेनानुगृह्यमाणा[4] वेति[5] वाक्यशेषः[6] । वयं सुवृधा-वृद्धि-रक्तै[7]हितणयर्थः, शोभनेन वर्धयित्रा, हे ब्रह्मणस्पते ! स्पार्हा-स्पृहणीयानि वसूनि, मनुष्या-पञ्चम्याः स्थान आकारः[9], मनुष्येभ्यः सामर्थ्यात् शत्रुभूतेभ्यः, आददीमहि[10] गृह्णीम इत्यर्थः । किञ्च या नः-अस्माकम्, दूरे तळितो[11] या अरातयः, दूरे शब्दसन्निधानात् दूरान्तिकवर्तिनश्च शत्रोर्विनाशस्या[12]काङ्क्षितत्वात् तळिदित्यन्तिकनाम, तात्स्थ्यात्ताच्छब्द्यम्, अन्तिक-स्थाश्च याः । स्त्रीलिङ्गनिर्देशात् अरातिजयिते[13] इत्यभिप्रायः । अभिसन्ति-अभिभवन्ति, सामर्थ्यार्थो वास्ति, याः काश्चन सन्ति सर्वास्ताः । जम्भय[14]-नाशयेत्यर्थः । अनप्नसः[15]-अप्न[16] इति रूपनाम, अरूपाः अनपसर्वरूपाः कृत्वेत्यर्थः[17] । अरातयः-अविद्यमानदानक्रियाः, अन्य[18]मपि वा ददतं[19] वारयन्ति[20] ताः, अदानप्रैषैः[21] । आप्नोतेरप्नः[22], तद्धि कृत्स्नमाश्रयं व्याप्नोति ।

विद्युत्तडिद् भवतीति शाकपूणिः । तथा लोकप्रसिद्धेः । तत्रापि[23] वधकर्मत्वमेवोरीकृत्य[24] प्रवृत्त इति दर्शयति-सा ह्यवताडयति जनस्य चक्षूंषि, यस्य चोपरि निपतति हन्ति[25] च । दूराच्च दृश्यत इति अन्तिकनामत्वाभावं दर्शयति । अपि त्विदमित्यादि, अपिः सम्भावनायाम् तुशब्दो वधकर्मपक्षात् पक्षान्तरं दर्शयितुम्, इदमिति बुद्ध्याधि[26]करणवक्ष्यमाणमन्त्र[27]विषयम्, तडिन्नाम[28] पदापदेशार्थम्, एवशब्दोऽवधारणे, अभिप्रेतमिति निर्विचिकित्सावचनम् । दूरे

चित् सन्निधानात् अन्तिकनामत्वं तडितो निर्विचिकित्सितम् । सोऽयमा[२]चार्यमतान्तरवचनोपन्या[३]सः-विद्युत्तडिदिति-स्वमतमेव द्रढयितुम् । सर्वसाधारणशब्देषु निगमः पदान्तरसम्बन्धसामर्थ्यान्निश्चयप्रतिपत्त्यर्थम्, न पुनर्मतान्तरं दर्शयितुम् ।

यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित् सन्तळिदिवाति रोचसे ।
राज्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव[४] ॥

कुत्सस्या[५]र्षम् । यो विश्वतः-सर्वतः, सु[६]प्रतीकः-प्रतीकं मु[७]खं दर्शनपर्यायो वा,[८] सु[९]मुखः सुदर्शनो वा । सदृङ्ङसि-सदृशं[१०]असि, अगृह्यमाणविशेषत्वात् । दूरे चित् चित्[११]शब्दोऽप्यर्थे, दूरेऽपि सन्, तडिदिव-अन्तिक इव । अतिरोचसे-सुष्ठु दीप्यसे । राज्याश्चित्-रात्रेरपि अन्धं[१२]तमः-अत्युपसर्गात् [१३]ल्यबन्तक्रियापदाध्याहारः-अतीत्य, देव ! पश्यसि दृश्यसे । यस्य तव त[१४]मसापि दर्शनशक्तिर्न प्रतिहन्यत इत्यर्थः । त[१५]स्य तव हे अग्ने ! सख्ये स्तुत्यस्तोतृत्वलक्षणे वर्तमाना [१६]इति शेषः, मा रिषाम-मा हिंसि[१७]महि केनचिद् वयमित्येतदाशास्महे ।

वधसाधनत्वाद् वज्रस्य तन्नामान्यप्रदर्शयन्नाह-दि[१८]द्युत् ने[१९]मिः हे[२०]तिः-इत्या[२१]दीनि । [२२]वर्जयतीति सतः । वर्ज[२३]यति प्राणैरिति केचिद् वाक्यशेषमध्याहरन्ति । अन्ये वर्जयतिमेव विनाशार्थं वर्णयन्ति । धनुराद्यायुधधर्मा[२४]भिवचनश्च वज्रशब्द इति केचित्, इन्द्रसम्बन्ध्येव [२५]च विशिष्टमु[२६]भयमिति । त्रिशूलमित्यन्ये । धनुरादिषु तुल्यस्तुल्यार्थतया प्रयोगः । तत्रार्क-[२७]वृकतुजादयोऽनेकार्थाः, तेषां प्र[२८]दर्शनार्थमेतन्निर्ब्र[२९]वीति-त[३०]त्र कुत्स इत्येतद्[३१]यदा वज्रः, तदा [३२]कृन्ततेः, छिनत्तीति कुत्सः, ऋकारस्योकारः सो नामकरणः । यदा तु ऋषिः कुत्सस्तदा-

---

१-दूरेऽपि तत्स० D.
२-'चा' त्रुटितम् B. ३-०न्यासे B. C.
४-[ ऋ० १।९४।७ ] 'यो विश्वतः० वयं तव' इत्येव प्रतीकम् D.
५-कुत्स्यार्षम् C. कुत्सार्षम् D. ६-सुप्र० B. C.
७-सुखे D. ८-'वा' त्रुटितम् B. C.
९-'मु' त्रुटितम् D. १०-त्वादृशि B. C.
११-'चित्' त्रुटितम् B. C. १२-अन्यतम B. C.
१३-०सर्गल्य० B. C.
१४-तपसा B. दूरतमस्यापि D.
१५-तन्तु C. १६-०न इत्यर्थः D.
१७-०सिष्म्य C. १८-विद्युत् B.
१९-'नेमिः' नास्ति D. २०-'हेति' नास्ति B. C.
२१-इत्यादि B. C. २२-'वर्जयति' नास्ति B.
२३-०यन्तिमे० B. C. २४-०माश्राव० D.
२५-'च' नास्ति B. C.
२६-०भयस्मि० B. ०यतम्नि० C.
२७-०प्र ( B. ) क तुंजानयोरे का० B. C. तुंडाद० D.
२८-प्रदर्श० B. २९-०वीतीति B.
३०-'तत्र' नास्ति C. D. ३१-'द' त्रुटितम् B.
३२-[ धा० ६।१४१ ]

कर्ता स्तोमानामित्यौपमन्यवः। करोतेरेकारस्योकारः[2], स्तोमशब्दात् सकारतकारौ[3] व्यस्यतो[4]।

स्वमतमाह-अत्राभूर्वो अस्य 'कुत्स'शब्दस्य यथार्थ एव प्रवृत्तिनिमित्तं युक्तं भवति। कुतः? सति सम्भवेऽनेकनिमित्ततायां[5] अन्याय्यत्वात्। 'तत्सख इन्द्रः शुष्णं जघान'[6] इति च दर्शनाद् यथार्थतयोपपत्तेः। तदृषिसहित इन्द्रः शुष्णं शोषयितारमसुरं मेघं घोरकाप्रदानेन सस्यं, हतवान्। स च[8] स्तुत्या वीर्यविवृद्धिं कुर्वन् मेघवधे साहाय्यकमं प्रतिपद्यते। 'याभि कुत्सेन'[9] इति च मन्त्रलिङ्गात्।

शत्रुवधादैश्वर्यं सम्भवतीत्याह-ऐश्वर्यकर्माणश्चत्वारो धातवः-इरज्यति पत्यते-इत्यादयः।

ऐश्वर्यसम्बन्धादीश्वरनामानि[11] चत्वारि-राष्ट्री अर्यः-इत्यादीनि। तत्र-इन-इत्येतदेवं निर्वक्तव्यम्-सनितः सम्भक्तः सङ्गत एकीभूतो विभक्तः सर्वथा इन एवेत्यर्थः। निजै-श्वर्येणाणिमादिना परमात्मा आदित्यो वा[13], तस्य[14] पारमार्थिकमैश्वर्यम्, तदपेक्षया-न्यत्र भुवनाधिपत्यमपि तृणवदसंप्रख्यम्[15]। तथा चोह[16]।

इदं फेनो न कश्चिद्वा बुद्बुदो वा न कश्चन।
मायेयं सच दुष्पारा विपश्चिदिति पश्यति॥
मायामात्रमिदं सर्वमद्वैतं परमार्थतः[17]॥ इति।

लौकिकैस्तु[18] लवमात्रेणैवैश्वर्यव्यवहारः। सनितमैश्वर्यमनेनेश्वर्यमिति, अन्येषां तद-नुग्रहलवमात्रकं स्यात्। कर्मकर्तृव्यापारभेददर्शनमात्रेण च[20] व्याख्याविकल्पः। समितमि-त्यन्ये पठन्ति, तेषाम् इणे[21] उपसर्गार्थविशिष्टात् 'मायेकः'[22]। एकीभूतमैश्वर्येण यस्मिन्निति उच्यते। इन आदित्यः परमात्मा चेति निगमः।

[ इत्यष्टमस्या-( तृतीयस्या- ) ध्यायस्य
एकादशः खण्डः।[23] ]

# [अथ तृतीयः पादः ।

## त्रयोदशः खण्डः ।[26]]

ईश्वराणामेव बहित्याह-बहुनामान्युत्तराणि द्वादश-उरु पुरु-इत्यादि[1]। बहु प्रभवति पर्याप्नोति व्रतनिवृत्तये[2]।

बहपेक्षैव[3]चाल्पव्यपदेश इत्याह-ह्रस्वनामान्येकादश[4], ऋहन्[5] ह्रस्व-इत्यादीनि । ह्रस्वाल्पयोर्मात्रापचयसामान्येऽभेदोऽभिप्रेतः[6] । अनायामवैपुल्यलक्षणो[7] विशेषः। ह्रस्वो ह्रसतेः[8], आरोहपरिणामाभ्याम्।

ह्रस्वविपर्ययप्रसङ्गादाह-महन्नामानि पञ्चविंशतिः, महत्[9] व्रध्नः ऋभ्वः[10]-इत्यादीनि । महान्[11]-मानेन स्वगुणेन परिमाणेन अन्यान्[12] यदपेक्षमस्य महत्त्वं[13] तान् जहाति अतिक्रामति, मानशब्द[14]द्राजहातेश्चेति[15] शाकपूणिः । निर्वचनलाघवात् मंहतेः[16] पूजाकर्मणः, पूजनीय इत्याचार्यः[17]। तेषु क्वचिच्च विवक्षसे इत्येते आख्यातपदे इति शेषः। ते[18] तु[19] वक्तेर्वा वहतेर्वा साभ्यासात्[20]-सन्नाभ्यासस्य द्वे अपि न यथासंख्येन[21]। अर्थरूपस्य चोभयत्र सम्भवात्[22], अतिशयवतो वचनाद्वहनाद्वा महत्त्वस्यापि प्रतीतेः, महन्नामसूपपन्नः पाठः। योऽभिविदत्वं वक्तुं वोढुं[23] वा समर्थः[24] महानसौ । तच्चेदं निगमपदान्तरसम्बन्धसामर्थ्यादुन्नीयत इत्युभयत्र निगमौ प्रदश्येते । ववक्षिथ[25]ेत्यस्य।

---

१–'इत्यादीनि' इति पाठो युक्तः ।
२–निमित्तये B. ३–शु याह C.
४–०कद० C. ५–रील्ह C.
६–स्वाल्पयोर्मात्रप० B. C.
७–ह्रस्वे आयामो दैर्घ्यं न भवति, अल्पे च वैपुल्यं महत्त्वमिति विशेष इत्यर्थः ।
८–[cf. धा० १।७४३]
९–महो C. १०–ऋभ्यः B.
११–महान् C.
१२–अन्यान् B. C. यद् (न) पेक्ष० B.
१३–मह० C. १४–०शब्दो० C.
१५–[cf. धा० ३।८] १६–माहवा० C.
१७–इत्यार्यः B. इत्याचा C.
१८–तेषु B. १९–वक्ते C.
२०–०साक् C. अग्रे 'सन्नाभ्यासस्य' इत्यस्य स्थाने 'साभ्यासस्य' इति पाठो युक्तः । साभ्यासादिति षष्ठ्यर्थे पञ्चमी इति भावः।
२१–०सः ख्यन B. २२–०वत् C.
२३–योढुं B. योढुं C. २४–०मर्थाः B. C.
२५–चिविक्षि० C. २६–नास्त्यादर्शपुस्तकेषु ।

आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि।

न त्वावाँ इन्द्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षिथ[1] ॥[2]

गौतमस्य। आपूरयतीन्द्रो वृष्ट्या पार्थिवं रजः पृथिवीलोकं वृष्टिद्वारेण। पप्रश्च बद्बधे बध्नाति, रोचना-रोचनानि नक्षत्रादीनि, दिवि-तेषां दिवि बन्धनस्य धर्ममूलत्वा[3], धर्मस्य च वृष्टिमूलत्वात्, वृष्टिप्रदानद्वारेण बध्नातीत्युच्यते। परोक्षं[4]वं प्रत्यक्षकृतत्वाद् मिश्रं वाक्यम्[5]। न त्वावाँ त्वत्सदृशः हे इन्द्र! कश्चन-कश्चिदपि पूर्वं न जातो नापि जनिष्यते। कुतः? यतोऽतिशयेन सर्वं भुवनं ववक्षिथ[6] अनुशासितुं वोढुं वेच्छसि, अनुशास्सि वहसि वेत्यर्थः[7]। अतिशयबलः सामर्थ्यान्महानसि, अतो भवन्तं स्तुम इति शेषः।

उपाध्यायस्त्वाह-अनेकार्थत्वाद्धातूनां महदेवार्थस्य वक्षेर्वा वहतेर्वा साभ्यासस्येदं रूपम्। अत्युपसर्गाद्[10] योग्यक्रियाध्याहारः, अतीत्य सर्वं महान् भवसीत्यर्थः। विवक्षसे इत्येतस्य।

अग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे[12]।

यज्ञाय स्तीर्णबर्हिषे वि वो मदे शीरं पावकशोचिषं विवक्षसे[13] ॥

विमदस्य। आ इत्याख्यातेन[14]। अग्नि[15] न शब्दः अस्त्युपमार्थस्य सम्प्रत्ययोपयोग इति एवं पदपूरणः। स्ववृक्तिभिः-याः स्वयमात्मनैव वर्जिता दोषैः, ताभिः स्तुतिभिः, होतारं त्वाम्, आवृणीमहे-आभिमुख्येन वृणीमहे यज्ञाय स्तीर्णबर्हिषे-यज्ञस्य स्तीर्णबर्हिषोऽर्थाय। विशब्दो वैविध्ये, विविधमावृणीमह इति। वः[16] युष्माकं सर्वेषामेव देवानां मदे निमित्ते[17] सोमजन्यमदार्थमित्यर्थः[18]। कीदृशं त्वाम्? शीरं[19] सम्भूतानुशायिनम् पावकशोचिषम्-पावकदीप्तम्। किञ्च विवक्षसे, अग्निवाती नानावाक्यत्वात्। महांस्त्वं भवसि तत्र समिध्यमान इति शेषः। इत्युपाध्यायव्याख्यानम्। अन्यत्तु पूर्वकृतमेव, यो वक्तुं वोढुं

---

१-०त इति B.

२-[ऋ० १।८१।५]

३-अत्र 'मूलत्वात्' इति पाठो युक्तः।

४-परमो० B. ५-मिश्रवा० C.

६-गार C. ७-थिर० C.

८-०सि वेच्छसि इत्येव० B.

९-नोऽयमुपाध्याय इति न भाति।

१०-०र्गाद् दो ( यो C. ) ग क्रियाद्योग० B. C.

११-बव० B.

१२-अग्निनः सु० B. सुवृत्तिभि० C.

१३-[ऋ० १०।२१।१]

१४-'वृणीमहे' इत्यनेन सम्बध्यते इति शेषः।

१५-अग्निः B. १६-यः C.

१७-'मदे मदनिमित्ते' इति युक्तं स्यात्।

१८-०मदार्थमि० B. १९-शारि B. C.

२०-शिशि० C.

वेच्छसि। एवं सामर्थ्ययुक्तं तं त्वां वृणीमह इति । अस्मिन् पक्षे एकवाक्यत्वाच्छान्दसाच्च निघातः।

महतामेव गृहाः इत्याह-गृहनामानि द्वाविंशतिः, गयः कृदरः गर्त्तः-इत्यादीनि । गृहाः कस्मादिति ? लोके वेदे चोद्भूता[1]वयवभेदानुगतस्यास्यैव विवक्षायां नित्यं बहुवचनम्। एते मम गृहाः[2], गृहान् गच्छ, गृहपत्नी यथा सा[3], न्यग्भूतावयवभेदस्य समुदायस्यैकत्वेन विवक्षायामेकवचनम्। कतरद्देवदत्तस्य गृहम्, गृहमिन्द्रा जगन्तन, गृहं गृहं विवाकशात् । गृह्णन्ति रहन्ति विषयिणः पुरुषानिति । यावद्वा प्रक्षिप्यते तत्सर्वं गृह्णन्ति दुष्पूरत्वात्। सतामिति भेदेन प्रक्रमात् भेदेनैव कारकावधारणम्। विर्यगर्ता[4]दीनि यावत्पर्वतादिसाधारणनामान्युक्तेनैव प्रकारेण निगमसामर्थ्याद् विवेक्तव्यानि।

गृहसम्बन्धात् परिचरणस्याह[5] परिचरणकर्माण उत्तरे धातवो दश इरज्यति विधेमइत्यादयः।

परिचरणनिमित्तत्वात् सुखस्याह-सुखनामानि विंशतिः-शिम्बाता शतरा-इत्यादीनि।

सुखम्-सुष्ठु हित खेभ्यः । नेयं हि योगलक्षणा चतुर्थी, इन्द्रियाणामचै[6]तन्यात् सुखादिभिरनभिसम्बन्धात्। अत इयं हेतौ पञ्चमी । इन्द्रियविषयसन्निकर्षस्य सुखहेतुत्वादुपपद्यत इन्द्रियाणां हेतुता[7]। यथाश्रुतसम्बन्धानुपपत्तेश्च सम्बन्धयोगिपदान्तराध्याहारः । अतिशयेन हितं पुरुषस्य खेभ्यः, सुखहेतुकमित्यर्थः । हितं वा पुरुषे, आत्मधर्मत्वात् सुखादीनाम्, धर्म्यधिकरणत्वाच्च धर्माणाम्।

अथवा खेभ्य इति चतुर्थ्येव[8]। खशब्देन च 'आत्मा मनसा संयुज्यते मन इन्द्रियेण[9]' इति सम्बन्धसम्बन्धोक्तं[10] पुरुष पयोच्यत इति यथाश्रुतसम्बन्धः । तथाचोपनिषद्वर्णः-'स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्यात्[11]' इत्युपक्रम्य 'प्राणन्नेव प्राणो भवति[12]' इति प्राणादिशब्दैस्तस्यैवाभिधानं दर्शयति।

---

१-'द्भूता' त्रुटितम् B. २-'गृहाः' त्रुटितम् C.
३-यथा राः C. ४-अत्र 'दुर्य' इति पाठः स्यात्।
५-'परिचरणस्याह' त्रुटितम् B.
६-०णाश्चै० B. C. अयं पाठोऽस्माभिरसंगतत्वादुपेक्षितः। सर्वत्रापि चाग्रे B. C. इत्युभाभ्यामद्रितः पाठ एवम्भूत एव बोध्यः। मूले तु शुद्धपाठोऽस्माभिरेव निवेशितः।
७-हेतुत्वा ( त्व C. ) धेता B. C.
८-चतुर्थ स B. C.
९-[न्या० वात्स्या० भा० १।१।४]
१०-संयुक्तसंयोगरूपपरम्परासम्बन्धादित्यर्थः।
११-[बृ० उ० १।४।७ cf. कौ० उ० ४।२०।]
१२-[cf. बृ० उ० १।४।७] प्राणन्नेव प्राणो भवति B, C,

खं पुनः खनतेः[1], खातमिव हि तत् केनापि । अधिष्ठानाभिप्रायश्चैतत् । अथवा खद्वा-रेण विपर्येण[2] विपर्य[3]विवेकोत्पत्तेर्वस्तुखननात् खं खनतेरित्याह । अथवा खं पुनः खनते-रुत्पूर्वस्य, उत्खनति विनाशयति । किम् ? परं ब्रह्मप्राप्तिसुखम्[4] । कथम् ? तद्द्वारेण ग्राम्यसुखप्रवृत्तेरधोगमनात्[5] ।

सुखिनामेव प्रायेण रूपवत्त्वाद् रूपनामान्याह-रूपनामानि षोडशेति[6], वव्रिः वर्पः-इत्यादीनि । ननु 'रूपं रोचतेः' इत्युक्त[7]निर्वचनस्य पुनर्वचनमयुक्तम् ? उच्यते, इह प्रकरणे प्रदर्शितनिर्वचनस्य रूपशब्दस्य, तत्र प्रविभज्य निर्ब्रूयात् समासनिर्वचनप्रकारप्रदर्शन-परतया प्रासङ्गिकोऽनुवादः, 'कल्याणं[8] कमनीयं वर्णो वृणोतेः[9] रूपं रोचतेः' इति ।

अत्रापि मरुद्वादीनामुपेक्षा, रूपवतः[10] प्रशस्यत्वादाह-प्रशस्यनामानि दश-अश्रेमाः अनेमाः[11] अनेद्यः[12]-इत्यादीनि ।

प्रशस्यानामेव प्रज्ञेत्याह[13]-प्रज्ञानामान्येकादश[14] केतः केतुः[15]-इत्यादीनि । अर्थान्तरवृत्ती-न्युपेक्ष्याणि[16] ।

प्रज्ञावतां प्रायेण सत्यमित्याह-सत्यनामानि षट्-बट् श्रत्-इत्यादीनि । बडादयो[17] निपाताः । ऋतमित्युदकमपि । सत्यम्-सत्सु तायते । सन्तः शास्त्रार्थस्थानाः[18] सत्त्व[19]प्रधानास्तेषु प्रथते । स्वभावतो विनष्टधर्मानुग्रहाद्वा ते प्रभवो[20] यस्य, गृह्यमाणकारण[21]व्यवस्थाकारि-त्वात्[22] तेभ्यः प्रभवतीत्यर्थविकल्पः[23] । पूर्वत्र सत्पूर्वात् तायतेः[24] निर्वचनम् । यद्वा सत्सु विद्यमानेषु स्तम्भकुम्भकरकादिषु भावेषु यत्तायते तत्सत्यम्, नासत्सु 'नापुत्रकस्य

१–[cf. धा० १।९२७]
२–'विपर्येण' इत्यधिकः पाठो भाति ।
३–'य' त्रुटितम् C.
४–सुखम् B. C.   ५–०गमात् C.
६–अत्र 'इति' इत्यधिकं भाति । निघण्टौ मात्र निर्णिज एव पूर्वमाख्यातं नतु वने: ।
७–[ निरु० २।३ ]   ८–'कः' इत्येव B. C.
९–वृणाते: B. वृणोते: C.   १०–०पवितः C.
११–'अनेमाः' नास्ति C.
१२–अत्र 'अनिन्द्यः' इत्यधिकं पदम् C.
१३–प्रशस्यनामत्र प्रज्ञेत्यादिह B. अत्र C. पुस्तके केवलं 'दि' इत्येवाधिकम् ।
१४–०नामन्ये० C.
१५–'केतुः केतः' इति विपर्यस्तः पाठः C.
१६–विचारणीयानीत्यर्थः । पेक्षाणि B. C.
१७–वलाद० B.   १८–०स्थानः B. C.
१९–सत्य B. C.
२०–प्रभावो C.
२१–०णव्याव्य० B.
२२–त्वात् C.
२३–०र्थः वि० C.
२४–[ धा० १।५१८ ]

शरीरम्' इत्यादिषु शब्दमाहात्म्यनिबन्धनेषु विकल्पमात्रेषु। सत्प्रभवेम-सद्भिरेव वा भावैः प्रयुक्तं नासद्भिः शशविषाणादिभिः। तदेतद् व्यावहारिकमभिधानं सत्यमुररीकृत्योक्तम्।

अन्यस्तु परमार्थलक्षणं ब्रह्म शाश्वतं सत्यम्, तदपि सत्सु विकारेषु महदादिषु तायते-प्रकाशते-अस्तीति ज्ञायत इत्यर्थः। कैवल्यायां हि तत्, नासन्नो सत्। तथाच 'नासदासीत्'[२] इत्यादिमन्त्रदर्शनम्। आधिकारिकं[३] वा ब्रह्म, तदपि[४] पुनः प्रविकसति विकारात्मनि तायते। तदुक्तम्-'ऋतं च सत्यं च'[५] इति। तथाच पौराणिकाः।

यदा यथा सिसृक्षुस्तु भवेद्देवो रजस्वलः।
विभक्तेषु विशेषेषु स तदैव प्रतायते[६]॥

प्रधानमित्यन्ये। यतः प्रधानपरिकल्पेऽप्येतद्युज्यते-सत्प्रभवं[७] भवतीति वा। सत्तामात्रात्तस्मादेव ब्रह्मणः प्रभवन्त्युत्पद्यन्ते[८]। यद्विशेषसत्ताभिन्नमिति। तदप्युक्तम्-'सतो बन्धुमसति निरविन्दन्' सतो विद्यमानस्य विकारस्य बन्धुं बन्धनमूलं यतः प्रभवति, तदस्ति बीजभूतम्। न हि बीजोत्पत्तिर्दृष्टेति[११]। एतद् हृदि-हृदये, प्रतीष्य-पर्येष्य कवयो मेधाविनः, मनीषा प्रज्ञतया प्रज्ञयेत्यर्थः[१२]। तस्य च बीजभावः पूर्वार्धेन प्रदर्श्यते-'कामस्तदग्रे'[१०] इति। काम[१३] इच्छा तद्धेतुभूतो वा संकल्पः। अग्रे-सृष्टिकाले, तत्समवर्तत-समनुगतवान्। किं तत्? मनसः-मननस्य ज्ञानात्मकस्य, रेतः-बीजं कारणम्, प्रथमम् अनन्यपूर्वम्, यदासीत् तन्निरविन्दन्, इत्येवमेकवाक्यता[१४]। सोऽयं सर्वोपनिषत्सु सिद्धान्तः।

कैश्चित्तु मीमांसकैः-वेदोपरेमुपनिषत्[१५], न वाग्व्यवहारातीतं ब्रह्म इति शून्यवाचोयुक्तिरिति वदद्भिः अपहसितम्। तत्पुनर्युक्तायुक्ततया परीक्ष्यमिति।

अष्टावुत्तराणीत्यादि[१६]। किमर्थानीति? आह पश्यतिकर्माणो दर्शनार्था धातवः, आख्यातानि च आचक्षत इति भाणादिरिति, चक्षिङो[१७] दर्शनार्थस्य। चायतिप्रकृतीनि च चायति-

स्वमावानि चारयर्थानि चिन्वयत् चाक[1]नत् विश्वचर्षणिर्विचर्षणिरवचाकशत्-इति नामान्येतान्यामिश्राणि । अत एव च सामान्येनोक्तम्-पदानीति । अभिहितनामाख्यातलक्षणाच्च प्रविभागः । चायतिप्रकृतित्वं कथमवसीयेते[2]ति चेदत आह-'पिता[3] कुटस्य चर्षणिः[4]' इत्यस्य पिता कुटस्य[5] कृतस्य कर्मणश्चायितादित्य इत्यर्थः[6] । इत्युपसर्गस्यापि[7] चायत्यर्थदर्शनात् ।

नवोत्तराणि पदानि, आमिश्राणीत्यनुषङ्गः-हिकं नुकम्-इत्यादीनि । निपातोपसर्गसमाहाररूपत्वाच्चामिश्रत्वम् । अथ किमर्थमित्थंभू[8]तानामाम्नानमिति चेत् ? सर्वपदसमाम्नानीय[9] । चत्वार्यपि पदजातानि समाम्नातानि कथं[10] स्युरिति । एतच्च दृष्ट्वैवमवोचैते[11] नामान्येतानीति[12] । प्रदर्शनार्थश्च कतिचिन्निपाताः पठिताः, न साकल्येन, गौरवप्रसङ्गादपरिमितित्वाच्च । येतं[13]श्चादीन् पठित्वा[14] विभक्तिस्वरप्रतिरूपकाश्च निपाताः, इत्यभियुक्तैरपठितोपसंग्रहाय लक्षणमुक्तम्-उच्चावचेष्वि[15]ति । हिकं नुक[16]मित्यादयो निपातसमाहाररूपा निपाताः । सुकमित्युपसर्गनिपातसमाहारः[17] ।

परमार्थतस्तु निपातान्तराण्येवैतानि । निपातोपसर्गसंज्ञावयवाच्च समाहारव्यपदेशः । व्यस्तसमस्तानां निगमेषु दर्शनात् । सम[18]भिव्याहारत्वेऽपि च पदकाराणां[19] वैचित्र्यम् । केषाञ्चिदेकपदत्वम्, नचैकेषाम्[20] । 'वसुर्वसुपतिर्हि कर्म[21]' 'न हि प्रभोय[22]' 'इमा नु कं

१–'न' त्रुटितम् C.
२–'तिप्रकृतित्वं कथमवसीय' इति त्रुटितम् B. '०मवसीयत इति' इति पाठो युक्तः ।
३–चिता कूट० B.
४–[ऋ० १।४६।४ निरु० ५।२४]
५–कूटस्य B. ६–'इत्य' इति त्रुटितम् B. C.
७–अत्र 'अत्युपसर्गस्य' इति पाठो युक्तो भाति । अत्युपसर्गस्य-निरुपसर्गस्यापि चर्षणिरिति पदस्य चायत्यर्थदर्शनादित्यर्थः । तथैव सोपसर्गो विचर्षणिरपि चायत्यर्थ एवेति भावः । एवं विश्वचर्षण्यादयोऽपि बोध्याः ।
८–०मिथं भू० C. ९–'ना' त्रुटितम् B. C.
१०–अत्र 'यथा' इति पाठो युक्तो भवेत् । यथाश्रुतपाठे तु वाक्यादौ 'अन्यथा' इति शेषो योज्यः ।
११–०मवाचत B.
१२–'ना' त्रुटितम् B. C.
१३–यदश्चा० C.
१४–पठिता C.
१५–[निरु० १।४]
१६–हिकणुकमि० B.
१७–०हाराः B.
१८–समममि० B. C.
१९–०कारणां C.
२०–चेदेकेषां B. चैदेकेषां C.
२१–[ऋ० ८।४४।२४]
२२–[ऋ० ७।४।८ निरु० ३।२]

भुवना[1]' 'तिष्ठा सु कं[2]' 'पृक्तं हवींषि मधुना हि कं[3]' 'आकीं सूर्यस्य रोचनात्[4]' 'न किरिन्द्र[5]'। 'माकिर्नेशत्[6]' एवमादिष्वेते द्रष्टव्याः।

सम्प्रति निपातोदाहरणप्रसङ्गेनोपमालक्षणं वक्तुमधिकरोति-अथात उपमा इति। उपमार्थत्वान्निपातानुपादायोपमा उच्यन्ते। इदमिव इदं यथा-इत्यादि प्रदर्शयितुम्। इह तु तात्पर्येण[8]-इदमिव अग्निं न इति सामान्यविशेषाभ्यां व्याचिख्यासोरुपन्यासः। समाम्नायक्रमात्, तत्र सामान्यं तावल्लक्षयति। लक्षणमाह। यदतत्तत्सदृशमिति[9] गार्ग्यः। तदासां कर्म। 'गौरिव[10] गवयः' 'अग्निरिव मन्यो त्विषितः[11]'। लोके वेदे च गवादिरर्थः[12] प्रसिद्धः, अप्रसिद्धस्य गवयमन्युप्रभृतेरवयवक्रियागुणसामान्येन परिच्छेदाय पारार्थ्येनोपादीयमान उपमीयते[13]। उपमीयतेऽनेनेत्युपमानम्, तदाश्रितो धर्मः, यत्कृतमस्य गवादेरुपमानत्वम्, अवयवक्रियागुणसामान्यलक्षणः, गोशब्देनानुपात्तः-परित्यक्तः, उपमाख्यो यः स इवादीनामर्थः, तद्भावभावित्वेन प्रतीतेः।

एवञ्च कृत्वा षष्ठे व्याख्यातम्-सर्व एव निपाताः पराश्रितधर्मप्रतिपादनार्थाः। यथा इवादिरुपमानत्वादेरिति[14]। तदेतदुक्तम्-यदतदित्यनेन[15]। सामान्येनोपमेयमात्रं निर्दिश्यते, न तत् अतत्, अनुमेयं किं तत्सदृशं केनोपमेयेन सदृशम्। तदासामुपमानानामिवादीनां कर्म अर्थः, एवं गार्ग्यो मन्यत इति शेषः। उपमाभिप्रायश्चासामिति स्त्रीलिङ्गनिर्देशः। ननु च सदृशं गोद्रव्यं न च द्रव्यमिति वादिनामर्थः[16]? उच्यते। धर्मधर्मिणोरभेदोपचारेण सदृशं सादृश्यापदेशार्थम्। एतदुक्तं भवति-अप्रसिद्धावयवसंस्थानक्रियागुणपरिच्छेदाय गवादिशब्दा[17]नुपरिवर्तित्वेन[18] प्रयुज्यमानाः प्रसिद्धगवादिसमवेतावय-

---

१-[ऋ० १०।१५७।१]
२-[ऋ० ३।५३।२] 'तिष्ठते लयता सुकम्' प्रतीकत्वेन निर्देशः B. C.
३-[ऋ० २।३७।५]
४-[ऋ० १।१४।९]
५-[ऋ० ४।३०।१] ६-[ऋ० ६।५४।७]
७-अत्र 'क' इत्यधिकः पाठः B. C.
८-इद वाक्यमनावश्यकमिव भाति।
९-सदेत० B. तदत० C.
१०-[cf. यथा गौरेवं गवयः। न्या० वात्स्या० भा० १।१।६] लौकिकोदाहरणानुरोधेनेदम्। गवयतः C.
११-[ऋ० १०।८४।२ ॥ निरु० ११।१७] वैदिकोदाहरणानुरोधेनेदम्।'
१२-०दीत्यर्थः B.
१३-'उपमीयते' त्रुटितम् B. C.
१४-अस्मत्सम्पादितायां निरुक्तभाष्यटीकायामस्यामेव द्रष्टव्यम् [१।४। पृ० ५२]
१५-यस्तदि० B. यतदि० C.
१६-'म' त्रुटितम् B.
१७-०शब्दो नु० B. १८-०वर्तत्वे० C.

यादिसादृश्यलक्षणं धर्ममुपाददानाः सन्त इवादय उपमा उच्यन्ते। तथा प्रतीतेरि[1]त्युक्तम्।

इदानीमनेकत्रे[2] स्थितानामुपमेयप्रवृत्तिं दर्शयति-ज्यायसा वेत्यादि। अतिशयप्रशस्तेनोत्कृष्टगुणेन प्रदर्शनमेतत् कियादौ कनीयांसमतिशयेनाल्पं[3] निकृष्टमित्यर्थः। प्रख्याततमेन वात्यन्तप्रसिद्धेन अप्रख्यातमप्रसिद्धमुपमिमीते। पूर्वस्योदाहरणम्-'इन्द्र इवेह ध्रुवस्तिष्ठ'[4] इति इन्द्रस्यातिशयप्रशस्तं देवैश्वर्यस्थानम्, तेन निकृष्टं कनीयांसं मर्त्यं[5] राजानमुपमिमीते। उत्तरस्य-'अग्निरिव मन्यो त्विषितः'[6] इति। दीप्तिरग्नौ प्रख्याता यथा, न तथा मन्यौ। तथा दुर्मदपानानां[7] संघर्षः प्रसिद्धः। तेन सोमानामुपमानम् 'दुर्मदासो न[8] सुरायाम्'[9] इति। ज्यायसा कनीयांसमित्यस्य क्वचिद्‌व्यभिचारोऽपि छन्दसि दृश्यते।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य त्रयोदशः खण्डः।[10] ]

---

१-'रि' त्रुटितम् B. C.
२-०कमस्थि० B. C. ३-कहीयां० C.
४-[ऋ० १०।१७३।२]
५-०र्त्यं त रा० C. ०र्त्यं अन्तरा० B.
६-[ऋ० १०।८४।२] ७-०पानानां C.
८-'न' त्रुटितम् C.
९-[ऋ० ८।२।१२]
१०-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति।

तैनोतेर्वा स्यात् सन्ततकर्मेति । सन्ततं कर्म स्तेयमस्येति, तनोतेः कर्मशब्दाच्च तस्करः[2] । तच्च[3] सन्ततकर्मत्वं दर्शयति-अहोरात्रकर्मेति । अहनि पथि मोषणेन, रात्रौ सन्धिच्छेदनेन[4] । ततश्चात्र चेत्यपपाठः । ज्यायांस्तत्र[5] गुणोऽभिप्रेतः उपमेयगुण[6] उपमानाच्चौर[7]गुणादिति केचित् । अन्ये तु नायमपवादः, ज्यायानेवात्र गुणोऽभिप्रेत उपमानभूतो गाढबन्धन-प्रकर्षलक्षणो यश्चौरगतः[9], तेन ग्रन्थिबन्धनो बाहुरत्रोपमीयते, ज्यायसा कनीयांसमिति । अस्मिन्नेवार्थे द्वितीयमुदाहरणम् । एतदप्येवमेवोभयथा अपवादरूपेणोत्सर्ग[10]रूपेण च योजनीयम् ।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य
चतुर्दशः खण्डः ।[11] ]

---

१—[cf. धा० ८।१]
२—०स्करम् B.
३—तच B.
४—०च्छेदेनन B.
५—०ज्यायां० C.
६—उपमेव गु० B. C.
७—चोर० B.
८—'स' त्रुटितम् भाति B. C.
९—चौर० B.
१०—'स' त्रुटितम् C. 'त्सर्ग' त्रुटितम् B.
११—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

## [ अथ चतुर्दशः खण्डः । ][1]

तनूत्यजेव तस्करा वनर्गू रशनाभिर्दशभिरभ्यधीताम् ।
इयं ते अग्ने नव्यसी मनीषा युक्ष्वा रथं न शुचयद्भिरङ्गैः ॥[2]

शितस्यार्षम् । तनूत्यजाविव-क्षुधा चौर्यं कुर्वन्तौ यदा कदाचिच्छरीरविनाशस्याप्ययम्भावात् स्वस्यास्तन्वास्त्यक्तारौ स्वशरीरनिरपेक्षौ तस्करौ चौरौ[3], वनर्गू-वनगामिनौ अरण्ये मुष्णन्तौ, तौ यथा कश्चिद्[4] दृष्ट्वा गाढं रज्ज्वा बध्नीयाताम् । एवं त्वामाधानकाले जनयन्तौ रशनाभिरभ्यधीताम्, अभिपूर्वो दधातिर्बन्धने, बध्नन्तौ बाहू[5], अध्वर्योः स्वभूतौ महतादरेण जनितवन्तावित्यर्थः । इयञ्च ते-तव, हे अग्ने ! नव्यसी-अतिशयेन नव्या अन्येनाकृतपूर्वा, मनीषा-मनस ईषा स्तुतिः, एतज्ज्ञात्वा युक्ष्व[6]-नियुङ्क्ष्वात्मानं स्वकर्मणि हविर्वहनादौ । रथं न-रथमिव, यथा रथं कश्चित् शुचयद्भिः-दीप्यमानैः स्वैरश्वैर्योजयेत् । तद्वद्धा प्रियस्व आविर्भव ज्वलयेत्यभिप्रायः ।

तनूत्यजा[9] ताच्छीलिकस्तृन्, अयमर्थनिर्देशपरार्थत्वाद्बोनिर्देशस्य वचनमपि विवक्षितम् । बहुवक्तव्यत्वाच्च[11] क्रमप्राप्तमपि तस्करमतीत्य वनर्गुं निराह-वनर्गुर्वनगामीति । तस्करसन्निधानाश्चायमर्थो निश्चितः । उपमा चैवं समर्थिता भवति । ग्रामेऽरण्ये वा तस्करादन्यत्र गाढबन्धनमप्रशस्तं भवतीति कनीयसा ज्यायांसमिति दर्शयति-प्रशस्तावभिमन्थनौ बाहू, अप्रशस्ताभ्यां तस्कराभ्यामिति । तस्करः-तत्करोतीति[14], तच्छब्देन[15] प्रकरणसामर्थ्यादर्थप्राधान्याच्च पापकमेव[16] निर्देष्टुमभिप्रेतमाह यत्[17] पापकमिति[18] नैरुक्ताः-इति । वैयाकरणास्तु शब्दपरत्वाच्च सामान्येनाहुः-'तद्बृहतोः[19] करपत्योश्चोरदेवतयोः सुडागमस्तलोपश्च'[20] इति ।

---

१-आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति ।
२-[ऋ० १०।४।६] ३-चोरौ B.
४-कश्चिद् B. C.
५-धातुपाठे नास्ययं धातुरस्मिन्नर्थे । cf. ११८,२।१०
६-बाहु अध्वर्यो C. ७-युङ्क्ष्व B.
८-०यस्य B. ९-तनू B. C.
१०-०श नि० C. ११-०मवित्र० C.
१२-०ण्याश्च B. C.
१३-०मवतीय C.
१४-'तस्करो भवतीति' मूलानुसारी पाठो युक्तो भवेत् । अत्र 'भव' इति त्रुटितं वा स्यात् ।
१५-तच्छेन C.
१६-पावक० B. C.
१७-'यत्' द्विलिखितम् C.
१८-पावक० B.
१९-०हतो: B. हते: C.
२०-[पा० ६।१।१५७] इति सूत्रे वार्तिकम् cf. ०देवतयो: सुट् तलोपश्च ।

तैनोतेर्वा स्यात् सन्ततकर्मेति । सन्ततं कर्म स्तेयमस्येति, तनोतेः कर्मशब्दाच्च तस्करः[2] । तच्च[3] सन्ततकर्मत्वं दर्शयति-अहोरात्रकर्मेति । अहनि पथि मोषणेन, रात्रौ सन्धिच्छेदनेन[4] । ततश्चात्र चेत्यपपाठः । ज्यायांस्[5]तत्र गुणोऽभिप्रेतः उपमेय[6]गुण उपमानाच्चौर[7]गुणादिति केचित् । अन्ये तु नायमपपाठः, ज्यायानेवात्र गुणोऽभिप्रेत उपमानभूतो गाढबन्धन-प्रकर्षलक्षणो य[8]श्चौरगतः[9], तेनाग्निमन्थनो बाहुरत्रोपमीयते, ज्यायसा कनीयांसमिति । अस्मिन्नेवार्थे द्वितीयमुदाहरणम् । एतदप्येवमेवोभयथा अपवादरूपेणोत्[10]सर्गरूपेण च योजनीयम् ।

[ इत्यष्टमस्या-( तृतीयस्या-) ध्यायस्य
चतुर्दशः खण्डः ।[11] ]

---

१-[cf. धा० ८।१]
२-०स्करम् B.
३-तश्च B.
४-०च्छेदेनन B.
५-०ज्यायां० C.
६-उपमेव गु० B, C.
७-चोर० B.
८-'स' त्रुटितम् भाति B. C.
९-चोर० B.
१०-'स' त्रुटितम् C. 'त्सर्ग' त्रुटितम् B.
११-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

## [ अथ पञ्चदशः खण्डः । ][1]

कुह स्विद्दोषा कुह वस्तोरश्विना कुहाभिपित्वं[2] करतः कुहोषतुः ।
को वां शयुत्रा विधवेव देवरं मर्यं[3] न योषा कृणुते सधस्थ आ[4] ॥

घोषा नाम ब्रह्मवादिनी[5], तस्या आर्षम् । चिरादागतावश्विनौ[6] दृष्ट्वा सप्रणयं सोपालम्भमाह-कुहस्विदिति, स्विदिति[7] पदपूरणः[8] । परिदेवनायामीर्ष्यायां वा । क्वेति सप्तमीसामानाधिकरण्यात् दोषा वस्तोरपि सप्तम्या एव । अव्ययलुगध्यवसितः[9] । दोषा-रात्रौ एव, क्व वा वस्तोरहनि युवामश्विनौ । क्व वा[10] अभिपित्वम्[11]-अभिप्राप्तिम्[12]-अभिगमनं करतः कुरुतः । क्व वा ऊषतुः-सामर्थ्यादिह वर्तमानकालता, वसत इत्यर्थः । को[13] वां युवाम्, यजमानोऽस्मत्तो विशिष्टोऽयं[14], शयुत्रा शयने, विधवेव देवरम्-यथा विधवा देवरम्, मर्यं न योषा-यथा च सर्वमेव मर्यं मनुष्यं संभोगकाले सर्वा स्त्री, एवं परिचर्यार्थम् । आगत्याकारः कृणुत इत्यनेन सम्बध्यते, आकृणुते-अतिशयेनार्वाक् करोति, विस्मृतान्यवृत्तान्तोऽभिमुखीकरोति[15], परिचरतीत्यर्थः । सधस्थे सहस्थाने वेद्याख्ये । येनास्मद्यज्ञं[16] चिरादागतौ स्थ[17] इति । अत्रापि[18] निकृष्टनियोगकर्मणा देवरेण प्रशस्तावाश्विनौ, विधवया चाप्रशस्तया प्रशस्तकर्माणं यजमानम्, कनीयसा[19] ज्यायांसमुपमिमीत इति ।

केचित्त्वत्रापि प्रकृष्टातिशयपरिचर्यादरश्च ज्यायानेव गुणोऽभिप्रेत इति । अन्ये-विधवा विधातृका-सर्वस्य दृष्टादृष्टस्योपकारस्य[20] विधाता पतिः स्त्रियाः, स विगतो यस्याः सा । विधवनाद्वा-'धूञ् कम्पने'[21] पतिमरणदुःखार्दितत्वादसौ वेपते । विधावनाद्वा-सा हि

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो नास्ति ।
२–वित्वं C.   ३–मयं C.
४–[ऋ० १०।४०।२]
५–'नी' त्रुटितं भाति B. C.
६–०तावश्वि० C.
७–'स्विदिति' त्रुटितं भाति B. C.
८–परिपू० B. C.
९–'अध्यवसित' B., 'व्यवसितः' इति पाठो युक्तो
१३–०मवतीय (स्तोरिति शेषः ।
१०–'वा' नास्ति B.
११–'अभिपित्वं' नास्ति C.
१२–०प्राप्तिः B.   १३–कौ B.
१४–यं B.   १५–०न्तावभि० B. C.
१६–०स्मृय० C.
१७–'इ' त्रुटितम् भाति C.
१८–अवि B.
१९–कनीयांस B.
२०–०कारकस्य C.
२१–[धा० ५।९]

शरणार्थिनी इतश्चेतश्च धावति। अनन्तरनिर्वचनद्वयाभिसम्बन्धित्वेन चाह-इति प्रचर्म[1]-शितः आचार्यो मन्यते। अद्वयस्यसंज्ञा चेयम्, चर्मैव शिरसि यस्य न केशाः सन्ति, स हि खलतिरभूत्।

अपि वेत्यादि। धव इति मनुष्यनाम, तदपि पत्युरेव मनुष्यमात्रस्य, पृथिवीपतौ[2] क्षमाधव[3] इति प्रयोगदर्शनात्[4]। तद्वियोगाद्विधवा[5]। देवरो दीव्यतिकर्मा[6], क्रीडनकार एवासौ न धर्माय। मर्यो मनुष्य इत्यर्थकथनम्, मरणधर्मेति शब्दनिर्वचनम्। योषा यौतेः, मिश्रयत्यात्मानं पुरुषेण।

सामन्येन लक्षणतो व्याख्याय विशेषतो व्याचिख्यासुराह-अथ निपाताः, उपमार्थीयाः। ते पुनः पुरस्तादेव प्रसङ्गेन प्रथमे[9] व्याख्याताः। इह च लक्षणतो 'यद्तैत्'[10] इति व्याख्याताः। इह चोदाहरणं लक्षणकथनप्रसङ्गेन प्रदर्शितम्। सम्प्रति यथासमाम्नायं यथादयो विशेषेण वक्तव्या इत्याह-यथेति कर्मोपमा। कर्मणा क्रिया कर्मैवोपमीयत इति। प्रायेण च यथाशब्दः कर्मोपमाविषय इति कर्मोपमेत्युक्तम्। द्रव्योपमायामपि क्वचित्। यथा देवदत्तस्तथा यज्ञदत्त इति। उदाहरणम्।

यथा वातो यथा वनं यथा समुद्र एजति।
एवा त्वं दशमास्य सहावे हि जरायु[11]णा॥

सप्तवध्रेरार्षम्। प्रसूढगर्भाया गर्भच्यावने[12]ऽस्या विनियोगः। यथा वातः-वायुः, यथा[13] वनमुदकं निम्नप्रदेशं प्रति, यथा च समुद्रो नदीमुखानि प्रति एजति[14] गच्छति। एवा-एवम्[15] त्वं हे दशमास्य दशभिर्मासैर्निष्पन्न! गर्भ! सह जरायुणा समवेहि अधो गच्छ मातुरुदरात् पत[16], माऽत्र स्था इत्यर्थः। वातवनसमुद्रैजनकर्मणा गर्भजननकर्मोपमीयते। द्वितीयमुदाहरणम्—

१-'प्र' त्रुटितं भाति C.
२-०वीपतौ C.
३-'क्ष' त्रुटित भाति C.
४-०योग द० C.
५-०धवा C.
६-दीव्यति C.
७-[धा० २।२३]
८-'ण' त्रुटितं भाति C.
९-[निरु० १।४-११]
१०-[निरु० ३।१३]
११-[ऋ० ५।७८।८]
१२-च्यावने C.
१३-तथा B.
१४-एवजति C.
१५-'एव एव' इत्येव C.
१६-मात्रस्त्वयेत्य० B.
१७-अस्य वाक्यस्य स्थाने आदर्शपुस्तकेष्वित्थं पाठः-'वातवनैजवनकर्मणा गर्भजननकर्मोपमी (मा B.) यते'। अस्माभिस्त्वर्थानुसारी शुद्ध एव पाठो लिखितः।

अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु[1]।
भ्राजन्तो अग्नयो यथा ॥

प्रस्कण्वस्य, सूर्यदेवत्येयम् । अदृश्रम्-इति व्यत्ययेन कर्मणात्मनेपदबहुवचनस्य[2] स्थाने परस्मैपदैकवचनम्-दृश्यन्ते[3], अस्य सूर्यस्य केतवः प्रज्ञानसत्तरवाः[4] प्रज्ञाहेतुभूता रश्मयः, जनान् अनु-जनान् प्रति, विभ्राजन्तः-विविधं भ्राजमानाः, अग्नयो यथा-अग्नय इव । अथवा-अदृश्रमिति स्वार्थ[5] एव, केतव इत्यादौ तु सर्वत्र प्रथमा द्वितीयार्थे[6]। अदर्शमस्य केतून्, इत्यं वक्ष्यमाणगुणानित्यर्थः। अग्निभ्राजननेन[7] रश्मिभ्राजनमुपमीयते—

प्राचुर्यप्रदर्शनार्थमन्यदप्युदाहरणम् ।

यदिमा वाजयन्नहमोषधीर्हस्त आदधे ।
आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा[8] ॥

आथर्वणो भिषगेवमपश्यत्[9][10], दीक्षितस्योपतापे शीतोष्णा[11] अपः[12] समानीय एवं[13] विंशतिमासु[14] यवान् प्रक्षिप्य कुशपिञ्जूलांश्चावधाय[15] ताभिराप्लावनेऽस्या विनियोगः। यत्-यदा, इमाः[16], वाजयन्-स्तुवन्, अहमोषधीः[17]-यवकुशपिञ्जूललक्षणाः[18], स्वहस्ते आदधे-स्थापयामि, हस्ते गृह्णामीत्यर्थः। यदा आत्मा यक्ष्मस्य[19] रोगस्य नश्यति, पञ्चमो लोडर्थे, नश्यतु, पुरेव हननात्, जीवगृभो यथा-कस्यचिद्राजविद्विष्टकारिणः करे जीवग्राहं गृहीतस्यातिभयाज्जीव[20] इति शेषः। अत्रापि जीवनाशशब्देन[21] यक्ष्मनाश उपमीयते ।

आत्मशब्दं निगमप्रसक्तं निराह-आत्मा अततेर्वा[22], अततं गतिः, तननात् सर्वं हि तेन ततम्, विभुत्वात् सर्वग इत्यर्थः। अत्तेर्वा[23], भोक्त्रभिप्रायः, भोक्ता पुरुषः शब्दादीनाम् ।

---

१-[ऋ० १।५०।३]
२-अत्र 'कर्मणि' इति सप्तम्यन्तपाठो युक्तः स्यात्, 'भावकर्मणोः' (पा० १।३।१३] इति कर्मण्यात्मनेपदम् ।
३-दृश्यते B.
४-०सत्वताः C.
५-स्वार्थमेव B.
६-०यर्थे C.
७-अग्निर्भ्रा० B. C.
८-[ऋ० १०।९७।११]
९-अथ० C.
१०-०षवगप० C. '०गपश्यत्' इति स्यात्।
११-०तोष्ण C.
१२-आपः B.
१३-एव विं० C.
१४-०मासू B.
१५-पिञ्जलां० B.
१६-इमां C.
१७-अहमो० C.
१८-पिञ्जल B.
१९-यक्ष्वस्य C.
२०-०प्राहभिद्दी० C.
२१-'श' त्रुटितं भाति C. अत्र 'जीवनाशेन' इत्येव पाठो युक्तः स्यात्।
२२-[cf. धा० १।३८] तनोतेर्वा B. C. अत्र मध्ये 'नो'इत्यधिकं भाति। अथवा यथाश्रुतमपि स्यात्।
२३-[cf. धा० २।१]

अपि वात्त इति स्यात्[1] । जीवेन हि प्राज्ञ आत्मा संपरिष्वक्तः परिगृहीत आत्त उच्यते। अन्तःकरणञ्च जीवसंज्ञम् । कुत एतत् ? एवं स्मरणात् । स्मर्यते हि—

जीवसंज्ञोऽन्तरात्माऽन्यः सहजः सर्वदेहिनाम् ।
येन वेदयते जन्तुः सुखं दुःखञ्च जन्मसु[2] ॥ इति ॥

अन्तःकरणेन यदैव ध्यायते, तेन चात्मा । आपवर्गात् सम्बन्ध आत्त उच्यते । पाठान्तरम्-अपि वात्त[3] इति स्यात् । आप्ते[4]रात्मा, न पूर्वस्मात् । तस्य चार्थानुगमनं दर्शयति-यावद्व्याप्तिभूत इति । व्याप्यत इति व्याप्तिशब्दः कर्मसाधनः । यस्य 'यावदवधारणे[5]' इत्यव्ययीभावः । भू प्राप्तौ, व्याप्यश्च क्षेत्रज्ञश्च । आत्मपक्षे-शरीरम्, आकेशा[6]दानखात् तत्सर्वं[7] भूतः प्राप्तः, आत्मा क्षेत्रज्ञः, तत्र सर्वत्र चैतन्योपलब्धेः । परमात्मपक्षे व्याप्यं[8] कृत्स्नं विकारजातं यावद्भूतं तत्सर्वं व्याप्तः, आमहाप्रलयाद्विकारात्मना परिणतः, व्यवस्थित इत्यर्थः । आह च—

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः[10] ॥ इति ॥

प्रलयावस्थायां तु कैवल्यनिरुपाख्यत्वान्न व्याप्यं[11] न व्याप्ता, न व्याप्तिः । तथा च मन्त्रः 'नासदासीत्[12]' इति प्रदर्शित एव[13] । तनोतेरत्ते[14]र्वाददातेरा[15]प्नोतेर्वा आत्मा । एतद्-व्याप्यानां क्रियाणां तत्र समवायसम्भवादिति संक्षेपः ।

अग्निर्न ये-समाम्नायक्रमान्न शब्दस्योपमार्थत्वमिह प्रकरणे । [16]पूर्वत्र 'दुर्मदासो न सुरायाम्[17]' इति प्रसङ्गादुक्तम् । उदाहरणम्—

---

१-आङ्पूर्वो ददातिः [धा० ३।९] वात्त इति (व) B.
२-[मनु० १२।१३] 'जन्तुः' इत्यत्र 'सर्वं' इति मनुस्मृतौ पाठः ।
३-वास्त B.
४-[धा० ५।१४] अपे० B.
५-[पा० २।१।८]
६-'दा' त्रुटितं भाति B. C.
७-सर्वः B.
८-व्याप्यः B.
९-पवस० C.
१०-[भ. गी० १५।१७]
११-व्यापम B. C.
१२-[ऋ० १०।१२९।१]
१३-अथवा 'प्रदर्शितः' इत्यत्रैव पूर्ववाक्यसमाप्तिः । 'एव' इत्यस्य च स्थाने 'एवं' इति पाठः स्यात् । तस्य चोत्तरवाक्येन सम्बन्धः ।
१४-०रत्ते० B. C.
१५-०राप्नो० C.
१६-सर्वत्र B. अस्मिन् पाठेऽस्य पूर्ववाक्येन सम्बन्धो बोध्यः ।
१७-[ऋ० ८।२।१२ निरु० १।४]

अग्निर्न ये भ्राजसा रुक्मवक्षसो वातासो न स्वयुजः सद्यऊतयः ।
प्रज्ञातारो न ज्येष्ठाः सुनीतयः सुशर्माणो न सोमा ऋतं यते ॥

स्यूमरश्मेरार्षम्। मारुतीयमृक्[2] । नशब्द उपमार्थीयः। अग्निरिव ये मरुतः, भ्राजसा दीप्त्या, रुचं[3] रोचिष्णु वचो येषां ते रुक्मवक्षसः[4] । आभरणविशेषो वा रुक्मविकारो रुक्मशब्देनोच्यते । स उरस्सु येषां ते । वातासो न-वाता इव च, ये स्वयुजः-आत्मनैवात्मनः सर्वकार्येषु नियोक्तारः[5], सद्यऊतयः-ऊतिर्गतिः सद्योगतयश्च, प्रज्ञातारो न ज्येष्ठाः-यथा च प्रज्ञा अतिशयेन वृद्धा ये ते सुनीतयः स्युः, एवं ये सुनीतयस्ते, सुशर्माणो न सोमाः-शर्म सुखं सुष्ठुसुखाः, पर्वाद्यनुग्रहेण[6] सोमा इवाभिलषितफलसिद्ध्या ऋतं यज्ञं यते गच्छते यजमानायेत्यर्थः । य इत्थंगुणा[7] मरुतस्तेऽभिलषितमर्थं सम्पादयन्त्वित्येवमाशिषैक[8][9]वाक्यता ।

'चतुरश्चिद्ददमानात्' अत्र चिच्छब्द उपमायाम् । पौनरुक्त्यं चोदितं परिहृतञ्च ।

[ इत्यष्टमस्या-( तृतीयस्या- ) ध्यायस्य
पञ्चदशः खण्डः । ][10]

---

१-[ऋ० १०।७८।२]
२-०मृत् B.
३-रश्मं C.
४-रुक्म C.
५-०क्तारं B.
६-पर्वा० B.
७-गुण C.
८-मारु० C.
९-०षैव वा० B. C.
१०-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

## [ अथ षोडशः खण्डः । ][1]

चतुरश्चिद्ददमानाद्बिभीयादा निधातोः ।
न दुरुक्ताय स्पृहयेत् ॥[2]

कण्वस्य । चिदुपमायाम् । यथा चतुरोऽक्षान् ददमानाद्धारयतः[3] कितवादितरः[4] कितवः किमयं तत् पातयिष्यति येन मामयं जेष्यतीति एवं बिभेति । आ निधातोः-आनिधानात् आपातनादाक्षेपणात् तेषामक्षाणाम्[5] । एवं दुरुक्ताद् बिभीयात् । अतश्च नास्मै दुरुक्ताय स्पृहयेत् कदाचिन्न दुरुक्तं ब्रूयात् शृणुयाद्वेत्यर्थः[6] ।

'ब्राह्मणा व्रतचारिणः'[7] इह स्वावसरे लुप्तोपममिदं समाम्नातम् । उपरिष्टाच्च दैवते व्याख्यास्यति । इह नोपन्यस्तम्[8] ।

एवमेतदुदाहरणद्वयमुक्तवक्ष्यमाणार्थमिति[9] परित्यज्यानन्तरं 'जार आ भगम्'[10] भाष्यकारो व्याचिख्यासुराह-आ इत्याकार उपसर्गः, अयं क्रियाविशेषकः स पुरस्तादेव आ इत्यर्वागर्थे[11] इत्यत्र व्याख्यातः । इह तु निपात उपमार्थीयप्रकरणात् प्रदर्श्यते-अथाप्युपमार्थे दृश्यत इति । निपातत्वे सत्युच्चावचार्थत्वादुपमार्थत्वमविरुद्धम् । उपसर्गत्वे तु क्रियाविशेषकत्वम्, 'क्रियायोगे'[12] इति स्मरणात् ।

उदाहरणम्—

उदीरय पितरा जार आ भगमियक्षति हर्यतो हृत इष्यति ।
विवक्ति वह्निः स्वपस्यते मखस्तविष्यते असुरो वेपते मती ॥[11]

हविर्धानस्यार्षम् । अग्निरुच्यते । उदीरय-उद्गमय, स्वमात्मानमरण्योः सकाशान्म-

---

१—आदर्शपुस्तकेष्वत्र खण्डप्रारम्भस्य निर्देशो नास्ति ।

२—[ ऋ० १।४१।९ निरु० ३।१६ ]

३—०यते B.

४—०वानित० C.

५—वात० C.

६—०णम् C. ७—कादा० C.

८—[ऋ०७।१०३।१ निरु० ९।६ ]

९—[निरु० ९।६]

१०—उक्तं B. C. अत्र समस्त एव पाठो युक्तो भाति, 'वृक्षस्य नु ते पुरुहूत वयाः' इत्येकमुदाहरणमुक्तम् [निरु० १।४] । 'ब्राह्मणा व्रतचारिणः' इति च वक्ष्यते [निरु० ९।६] । उक्तो वक्ष्यमाणश्चार्थो यस्य, एवम्भूतमुदाहरणद्वयमेतत्परित्यज्येत्यन्वयः ।

११—[ऋ० १०।११।६ निरु० ३।१६]

१२—[निरु० १।३]०गर्थमित्य० B. C.

१३—'उपसर्गाः क्रियायोगे' [पा० १।४।५९]

श्यमानः । स्वयं[1] वा ज्योतिरिति शेषः । पितरा-पितरौ, सर्व[2]प्राणिनां मातापितृभूते द्यावा-[3]पृथिव्यावत्र पितरावुच्येते, तौ प्रतीति शेषः । अथवा-आदित्यादिपृद्गमनस्य प्रकाशनस्य च सम्बन्धदर्शनात्, उद्गमनेनात्र प्रकाशनं लक्ष्यते । प्रकाशय, ते अपि द्यावापृथिव्यौ सुष्ठु ज्वलयेत्यर्थः । रात्रेर्नक्षत्रादिदीप्तीनां च जरयितृत्वाज्जार आदित्यः । स च सवितृ-शब्द[4]वाच्यो द्युस्थानः । आकार उपमायाम । स यथा भगं द्युस्थानमेवोत्तरावस्थं भजतीति। अयं स्वं ज्योतिर्भामं वो[5] रसमुदीरयेत् तद्वत् । अथवा-जारः पार[6]दारिक एव, भगोऽपि स्त्रीभगः, स यथा पारदारिकः श[7]रत्यतिशयवशाद् रागी भगमुदीरयेत् प्रकटयेत् तद्वत् । कुत एवमुच्यते ? यत इयक्षति-छान्दसो यकारलोपः, यियक्षति यष्टुमिच्छतीति यजमानः । कान् ? हर्यतः-प्रेप्सून् कामयमानान् देवान्, न च केवलं यष्टुमिच्छत्येव, किन्तर्हि ? अधिकृतोऽपीत्याह-हृतः-हृदयेन । इष्यति-'इष ग[8]तौ' शुद्धोऽपि सोपसर्गार्थे द्रष्टव्यः । अधिग-च्छति विद्वान्, तत्त्वेनानुप्राय जानातीत्यभिप्रायः ।

किञ्च विवक्ति-अन्तर्नी[9]तसनर्थोऽयम, विवक्षति, शास्त्र[10]लक्षणां स्तुतिमिति शेषः । कोऽसौ ? वह्निः-वेधाः[11] स्तुतीनां कर्ता होतेत्यभिप्रायः । स्वपस्यते-शोभनमपः स्वपः, तस्मात् क्यच्, सुकर्मेच्छति कर्तुम । क[12]ः ? मखः-मख इति यज्ञनाम, तस्मात् तत्करोतीति णिजन्तादच । मखः-यज्ञकार्यध्वर्युः । तविष्यतते-इति वृद्ध्यर्थः, सौत्रोऽन्त[13]र्नीतण्यर्थः । सनन्तस्तु ता[14]वयिषति, वर्धयितुश्चेच्छ[15]ति स्तोत्रलक्षणां स्तुतिम । कः ? असुरः प्राणत्रा-नुद्गाता । वेपते मती-उत्पन्ने चोत्पद्ये ऋत्विक्कर्मवैगुण्ये प्रायश्चित्तकारित्वाद् वैगुण्योत्पत्तेः बिभ्यत् कम्पते । मती-मत्या बुद्ध्या चेतसेत्यर्थः । कः ? सामर्थ्याद् ब्रह्मा । यतो यजमानः सर्वे ऋत्विजश्च स्वं स्वं व्यापारं कर्तुमिच्छन्ति, स च त्वदुद्गमनमन्तरेण न शक्यः कर्तुम । अत उच्यसे उदीरय-इति समस्तार्थः ।

स एव भासाम्-नक्षत्रग्रहोषःप्रभृतीनां जरयितृत्वाज्जार आदित्यः । तथाप्येष निगमः ।

---

१-अत्र 'स्वं' इति पाठो युक्तो भाति ।
२-'सर्वप्रनाम्' इत्येव पाठः B. C.
३-पिथि० C.  ४-०वाह्यो C.
५-०मवोरस० C.  ६-०ारदा० C.
७-अयं पाठः सन्दिग्धः । अत्र 'माराद्यतिशय-वशाद्' इति पाठो युक्तो भवेत् । अथवा शकार-स्थाने क्षकारः स्यात् 'क्षरत्यतिशय०' इति ।
८-[धा० ४।११]  ९-०न्तर्णित० C.
१०-शास्त्र० B.
११-वोढा C.
१२-कामः B.
१३-०न्तर्णीत C.
१४-त ( ता C. ) पयिपति B. C.
१५-०च्छन्ति C.

मातुर्दिधिषुमब्रवं स्वसुर्जारः शृणोतु नः ।
भ्रातेन्द्रस्य सखा मम ॥

भरद्वाजस्य । माता आदित्यस्य रात्रिः । ततोनन्तरमुत्पत्तेस्ततोऽस्य जन्मावगमनात् । तस्या[2] मातुः । दिधिषुम्[3]-धारयितारम्, स्वोदयेन विरोद्धारमित्यर्थः । अब्रवम्-ब्रवीम्यहम्, यद्यद् विवक्षितम् । स च मयो[4]च्यमानः, स्वसुर्जारः-एकतो रात्रेर्जातत्वादादित्यस्य स्वसा उषाः, भ्राता भगिन्योः[5] सहचारी भवति, तदीयानाञ्च क्रीडनकानामपहर्ता बाल्ये । आदित्यश्चोषसा सहचारी, तदीयानाञ्च रसानामवश्यायानां शोषणेनापहर्ता अतः साहचर्यसामान्यात्तदीयरसापहरणसामान्याच्चोषा अस्य स्वसा उच्यते । तस्या जरयिता, तदुदये हि सा जीर्यति, अतस्तस्या जारः[6] शृणोतु । नः-अस्माकम् । भ्राता इन्द्रस्य-उभयोरिन्द्रादित्ययोरेव[7] । कस्मात् कारणात् ? मनोजातत्वात् भरणाद्वा, स हि रसान्मध्यमस्य रश्मिभिरादाय[8] तैस्तं बिभर्ति । सखा मम-स्तुत्यस्तोतृत्वलक्षणेन सम्बन्धेन सखीभूतः ।

यद्यपि पौष्णे सूक्ते पठ्यमानत्वात् पौष्णीयमृक्, तथाप्यादित्य एवोत्तरावस्थः पूषा न वस्त्वन्तरम्[10] इत्यविरोधः । एवं प्रसङ्गेनादित्यजारत्वे मन्त्रमुदाहृत्य पूर्वस्यामेवर्चि व्याख्यानानन्तरमुत्प्रेक्ष्याह अपि त्वयमित्यादि । निगदव्याख्यातम् ।

मेर इत्यादि । भूतशब्देनोपमोच्यत इति भूतोपमा । उदाहरणम्—

इत्था धीवन्तमद्रिवः काण्वं मेध्यातिथिम् ।
मेषो भूतोऽभि यन्नयः[11] ॥

काण्वो मेध्यातिथिरिन्द्रमाह-इत्था-इत्थम्, योऽयं ममाभीष्टोऽत्यन्तवशवर्तित्वलक्षणैः[12], अनेन प्रकारेण । धीवन्तम्-कर्मवन्तं प्रज्ञावन्तं वा हे अद्रिवः ! अद्रिविकारत्वादादरणाद्वा अद्रिर्वज्रः, तद्वत्, काण्वं मामेव कण्वस्य पुत्रम्, मेध्यातिथिम्-मेध्यातिथिनामानम्,

---

१-[ऋ० ६।५५।५ निरु० ३।१६] २-तस्य B.
३-दिधिष C. ४-०योत्यमा० D.
५-भगिन्याः C.
६-जारं शृणो B. जारमशृणोतु C.
७-मिथो भ्रातृत्वमिति शेषः ।
८-आदर्शपुस्तकेषु 'रसान्मध्यमस्य' इत्यस्याग्रे 'स्तं' इत्येव पाठः । तन्मध्ये च पाठस्य त्रुटितत्वाद् रिक्तं स्थानं वर्तते । तत्रास्माभिरेव 'रश्मिभिरादाय तै' इत्यर्थानुसारी पाठो निवेशितः ।
९-[ऋ० ६।५५]
१०-'पूषा न वस्त्वन्तरम्' इत्यस्य स्थाने B, C. पुस्तकयोः 'पुरुषा न वस्त्वज (ज्व C.) रम्' इति पाठो वर्तते ।
११-[ऋ० ८।२।४० निरु० ३।१६]
१२-०क्षणम् B,

मेषोभूतः-मेष इव । यथा मेषस्तत्पोषकमाभिमुख्येन गच्छेत, एवं अभियन्-आभिमुख्येन गच्छन्, अर्थः-पूर्वमभिगतवांस्त्वमिदानीमप्यनेनैव प्रकारेणाभिगच्छेत्यभिप्रायः ।

निगमप्रसक्तं मेषशब्दं निराह-मेषो मिषतेः । स हि मिषति निमिषत्येव केवलं न तु किञ्चित् प्रजानाति[2], निःसंज्ञकत्वात्[3], यदि मारयितुं नीयते[4], यदि वा दारयितुम् । 'तां विश्वरूपाः[5] पशवो वदन्ति'[6] इत्यादौ निरुक्तो भविष्यतीति प्रसङ्गात् सामान्येन पशुं निराह-तेनैवोक्तेन प्रकारेण पशुः पश्यतेः, पश्यत्येव, निर्बुद्धि[7]रित्यभिप्रायः ।

तद्रूपस्तद्वर्ण इति क्रमप्राप्तव्या[8]चिख्यासयाह-अग्निरित्यादि । अग्निर्वैद्युतोऽत्रापाम्नपाद-भिप्रेतस्तस्य रूपशब्देनोपमा रूपोपमेति । अस्योदाहरणं हिरण्यरूपम, वर्णशब्दस्याप्युप-मार्थत्व एतदेवोदाहरणम् ।

हिरण्यरूपः स हिरण्यसंदृगपां नपात्सेदु हिरण्यवर्णः ।
हिरण्ययात् परि योनेर्निषद्या हिरण्यदा ददत्यन्नमस्मै ॥[9]

गृत्समदस्य । हिरण्यस्येव रूपं यस्य स हिरण्यरूपो वैद्युतोऽग्निः स हिरण्यसंदृक् हिरण्यमिव च परया प्रीतया संदृश्यते । अपां नपात्-अपां[10] पौत्रः[11] । कथम् ? अद्भ्यो[12] हि मेघो जायते तत्संघातरूपत्वात्तस्य, मेघाद् वैद्युतः[13] । 'अद्भ्यो वा एष प्रातरुदेत्यपः[14] सायं प्रवि-शति'[15] इति श्रुतेः । प्राकराभ्य[16] ( ? ) आदित्यो जायते आदित्याद् वर्षासु रसादानद्वारेण वैद्युत इत्येवम[17]*न्यपौत्रत्वम् । सेदु इदेवार्थे, उः पदपूरणः, स एवात्यन्तोपकारित्वात् । हिरण्यवर्णः हिरण्यमिव वर्णनीयः[18] । किञ्च हिरण्ययात्-हिरण्यशब्देनात्र[19] तद्रूप[20]मुच्यते न सुवर्णम, तन्म-यसदृशादत्यन्तस्वच्छशुक्लरूपादित्यर्थः । योनेः-स्थानादन्तरिक्षाख्यात्, परि सर्वतः, निषद्या[21]-निषद्य[22], हिरण्यदाः-हिरण्यसदृशस्य दाता । ददति-'दा दाने'[23] इत्यस्य लेटि व्यत्ययेन

१-अयम् B.
२-०नाती C.   ३-हि संज्ञ० B.
४-नियते C.   ५-०रूपां B.
६-[ऋ० ८।१००।११]
७-'द्धि' इति त्रुटितं भाति C.
८-व्यात B.   ९-[ऋ० २।३५।१०॥ निरु० ३।१६]
१०-'अपां' नास्ति B.
११-प्रौत्रः C.   १२-अत्यो C.
१३-०तम् B.   १४-०त्यवः C.
१५-[अनुपलब्धमूलमिदं वचनम्]
१६-प्राकरद्भ्यः C. अत्र 'प्रातरद्भ्यः' इति पाठः स्यात् ।
१७-इदमेवा० B.   १८-वर्णः B.
१९-०ण्यथात् C.
२०-'त्र' त्रुटित भाति B. 'तद्' त्रुटितं भाति C.
२१-'निषद्या' नास्ति C.
२२-'हि' इत्येव B.   २३-[धा० ३।९].
* '०मस्य पौत्र०' इति पाठो युक्तो भाति ।

परस्मैपदम्, बहुवचनमेकवचनस्य स्थाने-ददात्वित्यर्थः । अन्नम्-अन्नवृष्ट्युदकम्, अस्मै यजमानाय[2] सर्वस्मै वा[3] प्राणिजाताय ।

हिरण्यवर्णस्येवास्य[4] रूपम्-इत्यनेनैतदाचष्टे संक्षेपेण, समासद्वयमेतदुपक्षितं वर्णशब्देन रूपशब्देन च, 'सप्तम्युपमानपूर्वपदस्य[5]' इति । एवं हिरण्यस्येव वर्णो यस्य, हिरण्यस्येव रूपं यस्येति । परमार्थतस्तु रूपशब्देनोत्तर[6]पदेन समासे स इत्यु[7]पमा प्रतीय[8]ते । रूपोपमेत्युदूमवति ।

क्रमप्राप्तमतीत्याह-था इति चेति । क्रमभेदः किमर्थ इति चेत् ? वे[9]देत्-लोकवेदयोरुभयविषयत्वाच्चास्यै[10] पुनर्वेदविषय[11]प्रतिपत्त्यर्थम्, यत्रस्मा[12]कार्पमिति केचित् । यद्येवं भूतान्वयोऽपि उभयविषयास्तेषामप्युत्कर्षः प्राप्तः । न चान्वा[13]ध्यायविषयो यो [14]वतिः स व्याख्यो[15]नेन विच्छिद्येत । तस्मादयमभिप्रायः-क्रमेण व्याख्यायमाने यथा इवा[16]दीनामुभयविषयत्वमेवं था इत्येतस्यापि गम्येत, अयं त्वन्वा[17]ध्यायमेवेति, अतः[18] क्रमभेदोऽस्य विशेषस्य प्रतिपत्त्यर्थः । अस्त्यस्यैभ्यो भेदः, भेदविषयत्वं नामेति बुद्धिविघट्टनमात्रश्चैतत् । तेन 'न चि[19]न्वाथा' इत्यन्वा[20]ध्यायम् । अन्ये भाषायामन्वध्या[21]यश्च । था इत्यस्योपमाया-मुदा[22]हरणम्—

तं प्रत्नथा पूर्वथा विश्वथेमथा ज्येष्ठतातिं बर्हिषदं स्वर्विदम् ॥
प्रतीचीनं वृजनं दोहसे गिराशुं जयन्तमनु यासु वर्धसे[123] ॥

अवत्सारस्य । वर्षकर्मसम्बन्धादिन्द्रोऽस्य देवता । 'दोहसे' इति मध्यमपुरुषश्रुतेः

१–अत्र 'ददता दोन्तो ( त्तो C. ) वा' इत्यधिकः पाठो भाति B. C.

२–यन्दसोना० C.

३–'वा' त्रुटितं भाति B.

४–'स्य' त्रुटितं भाति B. C.

५–[पात० व्या० महा० २।२।२४]

६–०ब्देनात्त० C.

७–०त्युपपमा C.

८–'य' त्रुटितं भाति C.

९–वेदेत् C. १०–०चान्यत्पु० B.

११–०यस्य प्र० C.

१२–स्माका C. अयं पाठः सन्दिग्धः ।

१३–चावध्या० B. १४–पतिः B. C.

१५–०ख्येनेन C.

१६–०वादिना० C.

१७–त्वध्या० B. C.

१८–अन्तः B. C.

१९–[ अनुपलब्धमूलमिदं वचनम् ]

२०–०त्यवध्या० B.

२१–०ध्यायाश्च B.

२२–०या उदा० B.

२३–[ऋ० ५।४४।१ निरु० ३।१६]

प्रत्यक्ष[1]कृतोऽयं मन्त्रः। तम्-त्वामिन्द्रं स्तुम इति शेषः। प्रत्नथा-प्रत्नमिति पुराणनाम, था उपमायाम्, पुराणा इवात्रिवसिष्ठप्रभृतयः ऋषयः। पूर्वथा-पूर्वे इव च शक्तिप्रभृतय ऋषयस्ते हि पूर्वे[2]न च पुराणाः, अत्रिप्रभृतीनामपत्यत्वात्। विश्वथा-विश्व इव सर्वे इव भविष्यन्तश्च ऋषयः। इमथा-इम इव वर्तमानाः। ज्येष्ठतातिम्-अतिशयेन वृद्धः प्रशस्यो वा ज्येष्ठः, ज्येष्ठ एव ज्येष्ठ[3]तातिः, अतिशयेन प्रशस्यं वृद्धं वा। अथवा ता[4]तिशब्दे[5]स्तनोतेः सन्तानवच[6]नः। अतिशयेन वृद्धः प्रशस्तो[7] वा वृष्टिसन्तानो यस्य तम्। बर्हिषदम् वेदिस्तरणे सत्तारम्। स्वर्विदम्-दिव आदित्यस्य वा स्वरशब्दवाच्यस्य वेदितारम्। तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। यः प्रतीचीनम्-अञ्चेर्गत्यर्थस्येदं रूपम्, प्रतिगतमन्तरिक्षे, पराङ्मुखमित्यर्थः। वृजनम्-बलनामैतत्, तस्मात् अर्श[8] आदित्वात् अच्, बलवन्तम्। दोहसे-क्षारयसि। कम्? सामर्थ्यान्मेघमुदकम्, द्वि[9]कर्मकोऽयम्, 'दुहियाचि'[10] इत्यादिस्मरणात्। गिरा-वाचा, हुंकारमात्रेणैवेत्यर्थः। वाचा वा माध्यमिकया। आशुम्-शीघ्रमे[12]घत्वेनोदकेन वा मेघान् जनयन्तम्। क्व? अनु यासु[13] वर्धसे-यास्विति स्त्रीलिङ्गनिर्देशात् दिशः प्रतिनिर्दिश्य[14]न्ते, यासु दिक्षु[15] स्तुतिभिर्हविर्भिश्चानुपूर्व्येण वर्धसे, येषु देशेषु मनुष्यैः स्तूयसे इज्यसे च तेष्वित्यर्थः।

इमथेति निगमप्रसक्तस्य प्रकृतिं निराह-अयमेततरः-आगततरः, आगततर इव भवति, प्रत्यक्षात्यन्तासन्नोपाधित्वादिदम्[16]ः, आपेक्षि[17]कत्वाद् दूरासन्नव्यपदेशस्य। अत्यन्तविप्रकृष्टापे[18]क्षायामीषद्विप्रकर्षप्रतिलब्धासन्नव्यपदेशविषयोऽदः शब्दोऽत आह-अमुष्मात्, अदस इत्यर्थः। इदंसम्बन्धाददसोऽप्यन्तर्निराह-'असेय एषि [11]वीर' इत्येवमादिषु निरुक्तो भविष्यतीति। असावस्ततरः क्षिप्ततर इव। कुतः? अस्मादिदम इत्यर्थः। अत्राप्युक्तेनैव

१-'क्' त्रुटितं भाति B.
२-पूर्वेण च B.
३-०ताभितिः C.
४-तानि B. C.      ५-०च्दास्त० B.
६-०चनाः B.
७-०स्तो धा B. C.
८-[cf. पा० ५।२।१२७]
९-'द्वि' त्रुटितम् भाति C.
१०-अकथितं च [पा० १।४।५१] इति सूत्रे इयं कारिका वर्तते पातञ्जलव्याकरणमहाभाष्ये [१।४।३। पृ० ३३४]
११-वासा चा B.C. 'सा' इत्यधिको वर्णः प्रमादादत्राऽऽपतित इति भाति।
१२-०मुघत्वे C. अत्र 'मुख्यत्वेन' इति पाठः स्यात्।
१३-यासि B.      १४-०श्यते B. C.
१५-भिक्षु B.
१६-०दिदम् B.
१७-अपेक्षितत्वात् B. आपेक्षितत्वात् C.
१८-'पेक्षा' इति त्रुटितं भाति B.
१९-[ अनुपलब्धमूलमिदं वचनम् ]

प्रकारेण प्रकर्षप्रत्ययोजना । असावित्यप्रसङ्गेनाह-अमुथेत्यादि । यथा-इमथा-इतीदमवस्था भवत्युपमायाम्, एवम्-अदसोऽप्यमुथा इति पदं व्याख्यातम्। यथासावित्यनेन कृतनिर्वचनेन पदद्वयेनासावस्ततर इति प्रकृत्यर्थो यथेत्युपमायामिति थाशब्दार्थः, एवममुथेति, यथासावित्यनेन व्याख्यातम् ।

ननु था इति चोपमायामित्यनेनैव अमुथाऽन्यथेत्यादिकं प्रत्नथेत्यादिवद् व्याख्यातम् । किमुच्यते-अमुथा यथासाविति व्याख्यातमिति ? उच्यते । था इति च-इत्यस्यैथायं प्रपञ्चो भाष्यग्रन्थत्वान्नातिमहते दोषाय । यथा च प्रत्नादिभ्य इवार्थे छन्दसि था, तथादिभ्योपि द्रष्टव्यः, न प्रकारवचन एव ।

वदिति सिद्धोपमा । सिद्धा प्रसिद्धा उपमा-ब्राह्मणवदधीयते तेजस्विनः, अक्रोधना वा । वृषलवत् परिचरन्तीति लौकिकमुदाहरणम् । तस्यार्थप्रदर्शनम्-ब्राह्मणा इव, इत्येवमादि । ननु यथेवार्थापि सिद्धैव, ब्राह्मणं इवाधीते, यथा ब्राह्मणस्तथाधीते इति प्रतीत्यविशेषात् । एवं तर्हि विरुद्धार्थसदसद्भावविषयो वतिः पूर्वसिद्धार्थप्रतीतिवशेन दार्ष्टान्तिके तुल्यतांप्रत्ययमाधातुं समर्थो यथा, न तथेवादयः । तथाच चूर्णिकारः पठति-वतिनिर्देशोऽयं कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । उशीनरवन्मद्रेषु यवाः । सन्ति न सन्तीति । मातृवदस्याः कलाः । सन्ति न सन्तीति । मातुरिवास्याः कलाः, यथा मातुस्तथास्याः कलाः, इत्युक्ते यादृशा मातुस्तादृशा इति कलास्तिल (?) गतसादृश्यं प्रतीयते । तत्र सदसद्भावयोरन्यतरप्रतीतेरिति । अनेन प्रतीतिविशेषेणोन्यत इति केचित् ।

---

१-'असाविति प्रसङ्गेन' इति पाठो युक्तो भाति ।
२-'व्याख्या' इत्येव C.
३-०ब्दार्थाः C.
४-पत्न्यादि० B.
५-तथा B.
६-अत्र 'तथाद आदिभ्यः' इति पाठो युक्तो भाति ।
७-ब्राह्मणा B.
८-तुल्यया B. C.
९-पूर्णिकारः B. चूर्णीकारः C. चूर्णिकारो भाष्यकारः पतञ्जलिः ।
१०-'मचा' इति त्रुटितम् B. C.
११-०दोषः B. C.
१२-अत्र 'कलाः' इति महाभाष्ये पाठः ।
१३-[ पात० व्या० महा० १।१।५७ ]
१४-अत्र 'कलाः' इति पाठो युक्तः ।
१५-अत्र 'कलास्तिलगतसादृश्यं' इति पाठः कदाचित्स्यात् ।
१६-प्रीति B. नास्त्येव C.
१७-'वि' त्रुटितं भाति B,

परमार्थतस्तु वाक्यशेषे ह्यध्याहारे (?) वतिवद्विवाद्विष्वपि न कश्चिद्विशेषो दृश्यते सदसद्भावौ प्रति । कथं तर्हि वदिति सिद्धोपमेति ? अनुवादमात्रञ्चैतत् । [1]ऊदित्यपि ज्यायसा प्रख्याततमेन पूर्ववत् सिद्धेन गुणेनोपमेति भाषायामुदाहृतम् । छन्दसि दर्शयितुमाह ।

[ इत्यष्टमस्या-( तृतीयस्या- ) ध्यायस्य
षोडशः खण्डः ।[2] ]

---

१—'वदित्यपि' इति पाठो युक्तो भाति ।

२—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

## [ अथ सप्तदशः खण्डः । ][1]

प्रियमेधवदत्रिवज्जातवेदो विरूपवत् ।
अङ्गिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवम्[2] ॥

प्रस्कण्वस्य । प्रियमेधस्येव, अत्रिवत्-अत्रेरिव च, हे जातवेदः ! विरूपवत्-विरूपस्येव च, अङ्गिरस्वत्- अङ्गिरस इव च, हे महिव्रत ! व्रतं[3] कर्म, महाकर्मन्, मम प्रस्कण्वस्य श्रुधि शृणु, हवम्- आह्वानम् ।

प्रियमेधः प्रियोऽस्य यज्ञः । प्रियमेधः[4]-प्रियास्य[5] मेधा इति पाठान्तरम् । 'नित्यमसिच्[6] प्रजामेधयोः'[7] इति समासान्तस्मरणात् । नृमेधः प्रियमेध इति । तथा सकारान्तमेव पदमित्यन्येषाम् । छान्दसो वर्णलोप इत्यपरे । प्रियमेधवत् इति लिङ्गम्[8] । प्रस्कण्वः कण्वस्य पुत्र इत्यर्थकथनम्, प्रोऽपत्यार्थेऽत्र प्रयुक्तः, यथा सुवीर इति सुर्मत्वर्थे पूर्वत्र प्रयुक्तः । कण्वप्रभव इति शब्दार्थसमाधिप्रदर्शनम् । प्रकण्वः सन् ऋषौ सुटो निपातनात् प्रस्कण्वः । अस्त्येवान्यत्र प्रयोगः-यथा प्राग्रम् । अग्रभवं सत् प्राग्रमुच्यते । प्रभवार्थप्रवृत्तिरित्याह मन्त्रक्रमेणात्रेर्निर्वचने प्रसक्ते तत्प्रसिद्धयर्थं भृगुमाह-अर्चिषि भृगुः सम्बभूव ।

यज्ञे देवस्य वितते महतो वरुणस्य हि ।
ब्रह्मणोऽप्सरसं दृष्ट्वा रेतश्चस्कन्द कर्हिचित् ॥
तत्परीक्ष्यं सवर्णो न स जुहाव विभावसौ ।
ततोऽर्चिषोऽभूद् भगवान् भृगुरङ्गारतोऽङ्गिराः ॥
अत्रैवान्वेषणाद्त्रिः खननाद्विखनो मुनिः ।
इत्थं प्रजापतेर्जाताः पुराणा ऋषिसत्तमाः[13] ॥

अथवा-भृगुर्भृज्यमानो न दग्धः, भर्जतेर्भृगुः[14] । नैतावताग्निः प्रसिध्यतीति पुनरपि हित्वा क्रममाह-अङ्गारेष्वङ्गिरा इति । प्रशान्तार्चिभ्योऽङ्गारेभ्योऽङ्गिराः । अङ्गाराः पुनरङ्कनाः,

---

१-आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो नास्ति ।
२-[ ऋ० १।४५।३ ]
३-व्रतं B. व्रतं C.
४-०मेधाः B. C.
५-प्रियस्य B. C.
६-नित्यं सि प्र० C.
७-[ पा० ५।४।१२२ ]
८-लिङ्गः B.
९-'इति शब्दार्थ' इति द्विर्लिखितम् B. C.
१०-प्रतीक्ष्य C.
११-०रतोऽङ्गि० B.
१२-०द्त्रिः C.
१३-[ cf. बृहद्देवता ५।९९,१०१।।५।१४९ ]
१४-भज्यतेः B.

अङ्कित एव वह्निर्गत इत्यर्थः। अङ्कना इति पाठान्तरम्। अङ्क्यते तैरिति। द्वयोरुत्पन्नयोरत्रैव तृतीयमृच्छनेत्यूचुर्महर्षयः। तस्मादिदमभिव्याहारादन्तेऽभवत्,[1] तस्मादत्रिः। न त्रय इति वा, नञो नलोपेन नान्ये त्रयः। एवं सम्भवाः सन्तीति।

उत्पत्तिप्रसङ्गादाह-विखननादग्निस्थानस्य वैखानसः। विरूपो नानारूपः, जपयोगै[2]र्दर्यात्, इत्यैतिहासिकाः। नित्यपक्षे तु[3] सततप्रवृत्त[4]यज्ञः कश्चिन्मृजमानः[5] प्रियमेध उच्यते तथा[6] भृग्वादयोऽपि यजमानविशेषा एव। भृगुः पञ्चतपःप्रभृतिना तपसा भृज्यमानोऽपि न देहे[7]। गार्हपत्योपायित्वा[8]दिना अङ्गारेषु वसतीत्यङ्गिराः। अदनाद् भक्षणात् क्षपणाद्रागादीनां दोषाणामत्रिः। विविधं खननाद् वेदार्थवस्तूनां वैखानसः। वैरूप्यात्तपसो विरूपः। यथैतेषामृषीणाम्। दर्शनाद् ऋषयः। प्रस्कण्वः कण्वस्य मेधाविनः पुत्रः। एकवाक्यता तु पूर्ववद्योजनीयेति।

इत्याचार्यमहेश्वरकृतायां निरुक्तटीकायाम्
अष्टमस्या-[ तृतीयस्या- ]ध्यायस्य
तृतीयः पादः।[9]
[ सप्तदशश्च खण्डः समाप्तः। ][10]

---

१-०न्तेरमभव B. ०न्तेरमभवन्त० C.
२-जयः योगै० B. C.
३-स तु C.
४-'स' त्रुटितं भाति B.
५-मृजपानः B. अत्र 'कश्चिद्यजमानः' इत्येव पाठः साधुर्भाति।
६-'तथा' इति द्विर्लिखितम् B. C.
७-देहः B.
८-०पायत्वादीनां गारेषु B.
९-इति निरुक्तटीकायामष्टमस्याध्यायस्य तृतीयः पादः B. इति निरुक्तटीकायामष्टमस्य तृतीयः पादः C.
१०-एतत्कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु।

# [ अथ चतुर्थः पादः । ][1]

इदमिवेत्यादावुपमासमाम्नाये समाम्नातस्य 'ब्राह्मणा व्रतचारिणः' इत्यस्य वाक्यार्थसामर्थ्यान्मण्डूकार्थत्वेन परार्थत्वात्, प्रकरणसामर्थ्याच्चैवान्यभावेऽपि निश्चितोपमानभावस्य प्रसङ्गेन बहुवक्तव्यतया किञ्चिद्वैलक्षण्याच्च[2] व्याख्यानक्रमादुत्कृष्टस्य अयं व्याख्यानावसर इत्याह-अथ लुप्तोपमानीति । अथेत्यानन्तर्ये । श्रूयमाणेवाद्युपमानशब्दव्याख्यानानन्तरम्[3], लुप्तोपमानि-लुप्ता उपमा येषु तानि पदानि वाक्यानि व्याख्यायन्त इति शेषः । तानि चार्थोपमानीत्याचक्षते आचार्या लौकिका वा ।

अथ किमिदमर्थोपमानीति ? अर्थवद्वाक्यसामर्थ्यादसत्युपमाशब्देऽपि येषूपमा प्रतीयते, तान्यर्थोपमानि । अथवा-अर्थ एवोपमा येषु तान्यर्थोपमानि । न हि[4] सर्वत्रैवार्थ एवोपमा, शब्दस्त्वर्थं प्रत्याय्य[5] विनिवर्तते । सत्यम्, तथापि शब्दोऽप्यर्थद्वारेणोपमोच्यते इति । तथा च-अथात उपमाः-इत्युक्तम् । इह तु शब्दाभावे स एवार्थ उपमेत्यर्थोपमानीत्युक्तम् ।

अथार्थोपमानीति किमर्थम्, लुप्तोपमानीत्येवास्तु ? उच्यते, यद्यर्थोपमानीति नोच्यते, यथैवेवादिलोपे सत्युपमार्थसद्भावे च ब्राह्मणा व्रतचारिणः, सिंहो देवदत्तः-इत्यादीनां लुप्तोपमानीति व्यपदेशः । एवं यत्राप्युपमार्थो लुप्तः, शब्दमात्रमेवास्ति तत्राप्येष व्यपदेशः स्यात्-लुप्तोपमार्थ इति । भाष्यकृता[6] न चेष्यते । अस्ति पुनः[7] क्वचिदेतत्, यच्छब्दे सन्निहितेऽर्थस्य लोपः ? अस्तीत्याह 'यावन्मात्रमुपसो न प्रतीकम्'[8] इति । यत्रे[9]दमुच्यते-अस्त्युपमार्थस्येति[10] । अतो[11] लुप्तोपमानीत्यस्य शब्दलोप-विषयतैव कथं विज्ञायेत, अर्थलोपविषयता मा विज्ञायि, इत्यर्थोपमानीत्युक्तम् । एवञ्च कृत्वा यावन्मात्रादिषु 'अस्त्युपमार्थस्य' इति वदन्[12] शब्दोपजनमात्रतामेवोपमा[13]शब्दस्य दर्शयति ।

---

1-B. पुस्तकेऽत्र 'अथ चतुर्थोऽध्यायः' इति प्रमादाल्लिखितम् ।

2-०क्षणात् C.

3-०ख्यानान० C.

4-अत्र 'ननु' इति पाठो युक्तो भाति ।

5-प्राय्य C.

6-'भाष्य' इति त्रुटितम् B. C.

7-'नः' इति द्विर्लिखितम् C.

8-[ ऋ० १०।८८।१९ ]

9-'त्र' त्रुटितम् C.

10-'अस्त्युपमानस्य सम्प्रत्यर्थे प्रयोगः' इति पाठोऽस्य मन्त्रस्य व्याख्यानावसरे निरुक्ते [७।३१] प्रदर्शितः ।

11-इतो B.

12-पदं B.

13-'मा' त्रुटितम् B. C.

नन्वेवं सति हिरण्यरूपादीनामपि लुप्तोपम[1]व्यपदेशः[2], प्राप्नोति, न ह्यत्रेवादिः श्रूयते ? उच्यते, अस्त्यत्र विशेषः, समासादत्रोपमाप्रतीतेः । तथाचोक्तम्-'अग्निरिति रूपोपमा[3]'-इति । रूपशब्देनोत्तरपदेन समासादुपमा रूपोपमा, तस्माद् भवत्येवैषा । यत्र तु नेवादिर्न च समासः केवलमुपमारूपोऽर्थः प्रतीयते, तानि लुप्तोपमानि अर्थोपमानीति सिद्धम् । उदाहरणम्-'संवत्सरं शशयाना[4]' इति चतुर्दशे व्याख्या[5]स्यते ।

सम्प्रति तु तादर्थ्येनैव सुखप्रतिपत्त्यर्थं भाषिकाण्यु[6]दाहरणानि दर्शयति-सिंह इत्यादीनि । पूजायामिति प्रायिकमेतदवधारणम् । यद्यपि सिंहे क्रौर्यादयोऽसत्पुरुषधर्मा अपि सन्ति, तथापि प्रायेण प्रशस्तानेव शौर्यप्रसह्यकारित्वादीनुररीकृत्य प्रयुज्यन्ते[7] । सिंहो देवदत्त इत्यत्र सिंहशब्दस्य देवदत्तेन सहैकवाक्य[8]र्हतस्य समानविभक्तित्वेपि सत्यर्थभेदात् सामानाधिकरण्यानुपपत्तेरानर्थक्यप्रसङ्गः, न सिंह एव देवदत्तः[9], नापि सिंहगतं[10] यच्छौर्यादि तदेव देवदत्तः, अतस्त[11]द्धर्मसामान्येन सामर्थ्याद् गुणकल्पनैषा-माभूदानर्थक्यमतः सिंहशब्दः स्वार्थसमवायी विशेषशौर्यादिधर्मसामान्योपसंग्रहवशेन प्रवर्तमानो देवदत्तेन संगच्छते-यथा सिंहः शूरः प्रसह्यकारी तथा देवदत्तोऽपीति । सिंह इव सिंह इत्यश्रूयमाणेऽप्युपमाशब्दे अतस्मिंस्तच्छब्दप्रयोगात् तादर्थ्यं गम्यते ।

तथा श्वा वृषलः काको जाल्म इति कुत्सायाम् । प्रायिकमेतदप्यवधारणम् । यद्यपि कृतघ्न[12]त्वगुह्यमैथुनत्वादिः सत्पुरुषधर्मो दृश्यते तथापि लोके कुत्साविषयेणैव[13] प्रायेण प्रसिद्धाः । यथा श्वा[14] काको वा आहारार्थमातुर इतश्चेतश्च धावति, तद्वदिति प्रतीयते ।

काक इति शब्दानुकृतिः, तदीयशब्दानुकरणनिमित्तमेवास्यैतन्नामधेयमिति दर्शयति-एवमपीति[15] । तित्तिरिकपिञ्जलादीनीत्यभिप्रायः । कुत एतत् ? यत उपरिष्टात् काकवदेकप्रयत्नेनैव निर्वचनान्तराणि वक्ष्यति । दर्शयति च-तदिदं शकुनिषु बहुलम् । तदिदं शब्दानुकरणनिमित्तनामत्वमन्येष्वपि शकुनिषु बहुलं प्रायेण दृश्यते । अथवा बहुलमनियत-

१–०पमाव्य० B.
२–प्रतीतिः C.
३–[ निरु० ३।१६ ]
४–[ ऋ० ७।१०३।१ ]
५–[ निरु० ९।६ ] ०त्यातं तस्य० B. C. अत्र 'तं त' इत्यधिकौ वर्णावापतितौ दृश्यते ।
६–०कान्युदा० C.    ७–०ज्यन्ते B.
८–अत्र 'गतस्य' इति पाठो युक्तो भाति ।
९–'देवदत्तः' त्रुटितम् B.    १०–गतः C.
११–ल ( ग ) तास्त० B. यथास्त० C.
१२–'घ्न' इति त्रुटितम् B.
१३–०येनैव C.
१४–श्वा C.
१५–एवमपीत्यादि प्रतीकवाक्यं मूले न दृश्यते ।

मनित्यमित्यर्थः। हंसादिषु व्यभिचारात् । हंसो हन्तेः[1]। श्येनः शंसनीयं गच्छतीति[2]। तस्मान्नशब्दानुकृतिर्विद्यत इति औपमन्यवो मन्यत इति सम्बन्धः। निर्वचनान्तराभिधित्सया च पूर्वोक्तं प्रतिषिध्य[3] निर्वचनान्तरमाह-काकोपकालयितव्यो निषेद्धव्योऽन्नाद्युपघात[4]भयाद् भवति।

तथा-तित्तिरिस्तरणात् प्रवनात्[5],तरत्यन्तरिक्षे गच्छति। तिलमात्राणि वा चित्राण्यस्य। अत्र रूपसिद्धिलाघवमर्थस्य च पोषः।

कपिञ्जलः कपिरिव जीर्णः[6], जीर्णमर्कटवर्णः[7],तथावयवसामान्यात्। यद्वा-उत्प्लुत्योत्प्लुत्य[8] गमनान्मर्कट इव जवते गच्छति, वर्णव्यापत्त्यादिना कपिजवः सन् कपिञ्जलः। ईषत्-पिङ्गलो वा ईषदर्थे कः पिङ्गल इत्यस्य गकारस्य जकारापत्त्या कपिञ्जलः। कमनीयं वा मधुरं शब्दं पिञ्जयति विभृणुते[9]। अत्र कमेः कः, पिञ्जेः लकारो नामकरणः।

श्वा शुयायी[10], शु इति क्षिप्रनाम शुपूर्वस्यायतेर्णिनिः[11], शीघ्रगामीत्यर्थः, शवतेर्वा[12] गत्यर्थस्योपधालोपः अन्कारो नामकरणः, श्वसितेर्वा अन्तलोपः, अन्कारश्चान्तकरणः।

सिंहः सहनात्, सहेरभिवार्थस्योप[13]धाविकारोऽनुस्वारागमश्च । हिंसेर्वा विपरीतस्य । अत्रापि रूपसिद्धिलाघवम्। संपूर्वस्य वा[14] हन्तेः समोऽकारस्येकारो ङश्चान्तकरणः। संहाय हन्तीति-संकोच्यात्मानं पश्चोद्[15]वितस्य हन्तीति पूर्वस्यैवार्थवचनम्। अतो चेत्यपपाठः।

व्याघ्रो व्याघ्राणात्-उपजिघ्रमाणो गन्धेनामिषमनुधावतीति व्याघ्रः । संज्ञायां प्रति-दिष्टा[16] ( ? ) क एव नामकरणः[17]। व्यादाय वा-विवृत्यास्यं विविधं चादायाकृष्य हन्तीति, व्युपसर्ग[18]पूर्वस्यैव हन्तेः, हकारस्य घकारः, ङकारो[19] नामकरणः।

[ इत्यष्टमस्या-( तृतीयस्या- ) ध्यायस्य ]

अष्टादशः खण्डः।[20]

---

१–'हन्ते': इति पाठो युक्तः। २–गच्छतीति C.
३–प्रतिनिषिध्य B. ४–०शान्युप० B. C.
५–अत्र 'प्लवनात्' इति पाठो युक्तः।
६–'जीर्णः' इति त्रुटितम् C. ७–वर्णाः C.
८–उत्पत्योत्पत्य B. ९–पिवृते B.
१०–शुआयी C.
११–तिनिः B. [cf. पा० ३।२।७८]
१२–[ cf. धा० १।७६१ ]
१३–०धायी ( वी C. ) का० B. C.
१४–'वा' त्रुटितं भाति B.
१५–पश्चावी तस्य C. पवी ( व ) तस्य ( स्य ) B.
१६–प्रतिदेत्सार C. अयं पाठः सन्दिग्धः।
१७–०करणम् B.
१८–व्युपम० C. अत्र 'व्योपसर्ग०' इति पाठो युक्तो भवेत्। व्याघ्रादेः 'वि' 'आ' इत्युभयोरुप-सर्गयोः सत्त्वात्।
१९–ङकारो B. अत्र 'हूकारः' इति पाठो युक्तो भवेत्।
२०–आदर्शपुस्तकेऽत्र गगङगमानिनं दृश्यते।

## [ अथ एकोनविंशः खण्डः । ][1]

प्रायेणार्चित उपमीयत इत्युपमानानन्तरमर्चतिकर्माणः पूजार्था उत्तरे धातव आख्यातानि चतुश्चत्वारिंशत्[2]-अर्चति[3] गायति इत्यादयः ।

अर्थोत्तरे[4] वचोपेक्षा मेधाविन एवाचार्या भवन्तीत्याह-मेधाविनामानि चतुर्विंशतिः-विप्रः विप्रः-इत्यादीनि । ब्राह्मणादिष्वप्युपेक्षा निगमेषु । मेधावीति-विन् मत्वर्थे । 'अस्मायमेधा'[5] इति । विप्रहप्रसक्तम्-मेधा तु ग्रन्थग्रहणशक्तिः । सा कस्मात् ? मतौ असंमूढा[6] ग्रन्थपरिवादिप्रविवेकलक्षणा बुद्धौ[7] धीयते ।

मेधाविन एव स्तोतु समर्था इत्याह-स्तोतनामानि त्रयोदश-रेभः जरिता-इत्यादीनि ।

प्रायेण च स्तोतृविषयो यज्ञ इत्याह-यज्ञनामानि पञ्चदश-यज्ञः वेनः-इत्यादीनि । यज्ञः-प्रख्यातं[8] प्रसिद्धं यजतिकर्म । प्रख्यातग्रहणं संगतकरणादिनिवृत्त्यर्थम् । याच्ञ्यो[9] भवतीति वा-याच्ञया तन्वात (?), अर्थ आदित्वाद्[10] । याचन्ते देवतास्तस्मिन्निति, सर्वो[11] वा भक्तादिः याचते तस्मिन्निति । 'स वा यदा स न याचते[12] हि' 'द्वादशरात्रीर्दीक्षितो[13] भृतिं वन्वीत'[14] इति ।

यजुरुष्मो भवतीति वा-इति, यजुषां भूयस्त्वं[15] व्याप्तिं दर्शयति, क्लेदनासम्भवात् । तेन यजुःशब्दाद्[16] उन्द्देश्च[17] यज्ञः । बहुकृष्णाजिन इति, अजिनशब्दादिकारं जकारेण गृहीत्वा तस्माद्[18] मत्वर्थीयः । सोमोपहननानि बहूनि कृष्णाजिनान्यस्मिन् सन्तीति यज्ञः । यजूंष्येनं नयन्तीति वा यजूंष्येनमादित आरभ्यान्तं नयन्तीति ।

यज्ञसम्बन्धादाह-ऋत्विङ्नामान्यष्टौ-भरताः[19] कुरवः[20]-इत्यादीनि । यज्ञद्वारेण कृत्स्नं भरन्तीति भरताः । कुर्वन्ति कर्माणीति करव[21] ऋत्विक्-ईरणः, कर्म आदावारभ्यान्तं प्रेरयति

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो न दृश्यते ।
२–'श' त्रुटित भाति C.
३–अच्छीति गायन्ति C.
४–अर्थोत्तरे C.
५–[ A fragment of पा० ५।२।१२१ ]
६–०मूढा B.
७–०मानी C.
८–प्रख्यातं C.
९–येच्ञा C.
१०–[ cf. पा० ५।२।१२७ ]
११–सर्वा C.
१२–योचते C.
१३–[ अनुपलब्धमूलमिदं वचनम् ]
१४–रात्रिर्दी० C.
१५–भूयास्त्वं B. C.
१६–यज्ञः B.
१७–[ धा० ७।२० ]
१८–०दह् C.
१९–भरताः C.
२०–करवः B.
२१–कारवः C.

करोतीत्यर्थः। ऋत्विग्भिर्यजतीति वा याज्याभिप्रायः। स्तुतिभिर्वा देवान् पूजयतीति। अतश्च ऋग्यष्टेति विगृह्य वचनमेतत्। ऋक्शब्दाद् यजेश्चेति शाकपूणिः। ऋताश्रुतौ याजनशीलेः[1]। 'ऋत्विग्दधृक्'[2] इति निपातनात्।

कर्मकरणानां यज्ञसम्बन्धादाह-याच्ञाकर्माणः प्रार्थनार्था धातवः सप्तदश-ईमहे यामि-इत्येवमादयः।

याच्ञासम्बन्धात्-दानार्था धातवो दश-दाति[3] दाशति-इत्यादयः।

अध्येष्य हि देवब्राह्मणेभ्यो दीयत इत्याह-अध्येषणाकर्माणः अभ्यर्थनार्था धातवश्चत्वारः-परिस्रव पवस्व-इत्यादयः। वक्ष्यति 'इन्द्रायेन्दो परि स्रव[4]' इति, अध्येषणेति।

अध्येषितस्य सुखं सुखितस्य स्वाप इत्याह-स्वपिति सस्ति[5]-इति द्वौ स्वपतिकर्माणौ[6]। द्विग्रहणं समाम्नाय एतावेवेति, निगमेष्वन्येऽपि। शेपे वनेषु मात्रोरित्यादयः।

स्वापरूपयोः[7]रन्धकारप्रवेशसादृश्यादाह-कूपनामानि चतुर्दश-कूपः[8] कातुः[9] कर्तः[10]-इत्यादीनि। कूपं[11] कुत्सितं पानमस्मिन्निति, कृच्छ्रसाध्यत्वात् शौचासम्भवाद्वा। कुप्यन्ति वा तत्र मनुष्यास्तृष्णयो[12] परस्परेणेति।

कूपगर्ताद्याश्रयत्वात् स्तेननामानि चतुर्दशैव-तृपुः[13] तस्करः रिभ्वा[14]-इत्यादीनि। तृप्तिरेव पानेन धर्म इति तृपुः। स्तेनः-संस्त्यानमस्मिन् आश्यानं संघातं पिण्डीभूतं यद्धित्यर्थः। पापके[15] हननहरणादिनिमित्तमिति नैरुक्ताः।

स्तेना एवान्तर्हिताश्चरन्तीत्याह-निर्णीतमन्तर्हितं[16] निगमेषु विवेक्तव्यानि। अथवा निर्णीतश्च तदन्तर्हितं चेति कर्मधारयः।

अन्तर्हितदूरयोरनुपलब्धिसामान्यादाह-दूरनामानि पञ्च-आके पराके-इत्यादीनि।

---

१–याजनशाली B.

२–[ A fragment of पा० ३।२।५९ ]

३–ददाति C.

४–[ ऋ० ८।९१।३॥ ९।१०६।४ ]

५–स्वस्ति C. ६–०ध्येषी B.

७–अत्र 'स्वापकूपयोः' इति पाठो युक्तः।

८–रूपः C.

९–वर्तुः B. नामन्येव C. १०–कर्तम C.

११–अत्र 'कूपः' इति पाठो युक्तः।

१२–०ष्णयः B.

१३–त्रिपु C.

१४–रीक्वा C.

१५–पावकम् B, C.

१६–'निर्णी' त्रुटितम् C. अत्र 'निर्णीतान्तर्हितानि' इति 'निर्णीतान्यन्तर्हितानि' इति वा बहुवचनान्तपाठो युक्तः स्यात्। अथवा 'विवेक्तव्यानि' इत्यत्र 'विवेक्तव्यमिति' इत्येकवचनान्तपाठः स्यात्।

आक्रीयेत इत्याके, पराकितमिति पराके[1]। दूरं-द्रुतं चिक्षिप्तमिव तद् भवति। दुर्यं वा-दुर्गमम्।

दूरसाम्यादाह-पुराणनामानि षट्-प्रत्नम् प्रदिवः-इत्यादीनि। पुराणं-पुरा[2] नवं भवति नेदानीम्। जीर्णं हि पुराणमुच्यते। पुरानवशब्दस्य वलोपेन णत्वेन[3] च।

पुराणविरोधित्वादाह-नवनामानि षडेव-नवम् नूतनम्[4]-इत्यादीनि[5]। नवम्-आनीतमिव तद् भवति। आनीतवचनमचिरकृतप्रज्ञापनार्थम्, आनीतमिवेदानीं केनचित्, आनयेत्[6] नवम्, उपसर्गलोपेन।

[ इत्यष्टमस्या-( तृतीयस्या- ) ध्यायस्य
एकोनविंशः खण्डः। ][7]

---

१-आकीर्यत B, वस्तुतस्त्वत्र 'आ कियतः' इति पाठो युक्तो भाति। आ कियतो देशादिति द्रष्टुं वक्तुं वा न शक्यते, दूरत्वादित्याशयः।

२-॰रत्वात् C.

३-पुरातने B.

४-नवेन C.

५-नूतनम् C.

६-॰यत्येवम् C.

७-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्न दृश्यते।

## [ अथ विंशः खण्डः । ][1]

नवपुराण[2]द्वन्द्वसम्बन्धादाह-द्विश उत्तराणि । वीप्सायां शस् । उत्तराणि नामा[3]नीति सामान्येनोक्त्वा प्रत्येकमुपन्यस्यति व्याख्याधर्मप्रदर्शनार्थम् । ततो निगम[4]ः प्रत्येकम् । एवं सर्वत्र व्याख्या कर्त्तव्येति । एकविंशतिः पृथिवीनामधेयानि । ततो गौ[5]रिति प्रत्येकमुच्चार्य त[6]स्यैकैकस्य निगमः प्रदर्शनीयः एवं सर्वत्रेति भाष्ये सर्वपाठः । उदाहरणानि च प्रत्येकम् ।

*प्रपित्वे अभीके इत्येते आसन्नार्थस्य नामनी भवतः । प्र[7]पित्वे प्राप्त इत्यर्थः । अभीके* अभ्यक्त आसन्न इत्यर्थः । सोपसर्गौ सप्तम्यन्तौ ई[8]शाविति तथा पठितौ । पित्व[9] इत्यासन्नार्थः, तथाच पित्वे[10] इत्युक्तम् । तत्रोपसर्गकृतेनार्थभेदेन भवितव्य[11]म् । ससंरब्धो प्राप्तिरासन्नदेशकाला अपित्वे[12] इति । संरम्भ आयास[13] इत्यर्थः । विप्रकृष्टदेशकाला प्रपित्वे[14] इति । प्राप्तशब्दस्यैव यौ[15] प्रविश्येकारवकारैः प्रपित्वे[16] । निगमौ—

*यथो गौरो अपाकृतं तृष्यन्नेत्यवेरिणम् ।*

*आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब[17] ।*

देवातिथेरार्षम् । इन्द्र उच्यते । यथा गौरः, आपः, अद्भिः कृतं खातं नदीप्रस्रवणदेवखातादि त[18]डाकं वा अद्भिः संवर्द्ध[19]म्, त[20]ष्यन्नेति तृषा पिपासया हेतुभूतया आगच्छति । अ[21]व इरिणम्-अवो[22]पसर्गश्रुतेर्हायेत्यध्याहा[23]र्यम्, अव[24]हाय परित्यज्य, इरिणं निरुदकं देशम्, एव[25]मापित्वे आसन्ने[26] सुत्या[27]लक्षणे आगमनकाले, नः-अस्माकम्, प्रपित्वे[28]-चिरात् प्राप्ते, तूयम[29]-

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो न दृश्यते ।
२–०राणाः द्व० B.
३–'इति' नास्ति B.
४–निगमं B.
५–गौरीति B.
६–'त' त्रुटितम् B. C.    ७–प्रवित्वे C.
८–०शावीति C.    ९–वित्व C.
१०–त्यु्यः C.    ११–०रब्धा B.
१२–अवित्व C.
१३–'सायासः' इत्यधिकोऽत्र पाठः C.
१४–प्रवित्व C.    १५–प्रवित्वेका० B. C.
१६–इदं वाक्यं प्रमादाद् द्विलिखितम् B. C.
१७–[ ऋ० ८।४।३ ]    १८–तभात्कं D.
१९–०वन्धम् C.    २०–तृष्यं नेति B. C.
२१–अप B. C.    २२–अपोप० B. C.
२३–०हार्य्यः C.    २४–अपहाय B. C.
२५–०मपि० B.    २६–असन्ने C.
२७–सुत्यल० C.
२८–प्रवित्वे C.
२९–त्वयं C.

क्षिप्रम, आगहि-आगच्छ। आगत्य कन्वेषु-मेधाविनामेतत्, तृतीयायाः सप्तमी, मेधाविभिः ऋत्विग्भिः, सचा-सह, सुषिब-सुष्ठु पिब। किम्? सामर्थ्यात् सोमम। तद्वदेव—

प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत। अभीके चिदु लोककृत्संगे समत्सु वृत्रहा-

स्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु॥

सुदासः पैजवनस्यार्षम्। प्र अर्चतिना सम्बध्यते। प्र+उ-प्रो, उसू पदपूरणौ। अस्मै इन्द्राय, अस्येन्द्रस्य सम्भूतं पुरो रथो यस्य तत् पुरोरथम्, शूषम्-सेनालक्षणं बलम्, प्रार्चत-प्रकर्षेण स्तुत, एकवाक्यतायै द्वितीया। अर्धर्चादौ यच्छब्दोऽध्याहार्यः। य इन्द्रः, अभीके-अभ्यर्णे आसन्ने। चिद् पदपूरणौ, अप्यर्थे वा। लोककृत्-लोकशब्दः स्थानवचनः, तथाहि देवलोकः पितृलोक इति देवादिस्थानमुच्यते, स्थानकृत्। सङ्गे संग्रामे, आसन्नेऽपि संग्रामकाले तिष्ठति न पलायत इत्यर्थः। न च केवलं तिष्ठत्येव, किन्तर्हि? समत्सु बहुष्वपि संग्रामेषु, वृत्रहा-शत्रूणां हन्ता। अपर ऋक्कृत्पः प्रत्यक्षकृतः बोधीति मध्यमयोगात्, अस्माकं बोधि बुध्यस्व। किम्? सामर्थ्यात् कृताः स्तुतीः शृण्वित्यर्थः। चोदिता-चोदयिता च कल्याणाय भवेति शेषः। यो वा चोदिता स बुध्यस्वेति सम्बन्धः। किञ्च तव प्रसादात् नभन्ताम्-छान्दसो वर्णलोपः, नभन्तं माभूवन्नित्यर्थः। अथवा नभतीति वधकर्मा, नभन्तां हन्यन्तां विनश्यन्त्वित्यर्थः। अन्यकेषाम्-असमत्तोऽन्येषाम्, सर्वलोककुत्सितानामस्मद्द्विषाम्, कुत्सिता ज्या ज्याकाः, अधि अधिधन्वसु-धनुषामुपरि सपयुद्धोपकरणा अस्मद्विनाशं प्रति असमर्था अस्मद्द्विषो भवन्त्वित्यर्थः।

दभ्रमल्पकमित्यर्थः, अर्भकस्य नामनी। दभ्रम्, दभ्नोतेः वधार्थस्य, तद्धि सुदम्भं सुच्छेदं भवति अल्पत्वात्। सु-सौकर्येण। अर्भकमवहृतम्-ऊनपरिमाणम्, हकारस्य च भकारः, 'संगृभाय' इति यथा। उदाहरणे—

१-[ ऋ० १०।१३३।१ ]
२-सुदाः पै (पै) जवनस्तस्यार्षम् C.
३-अच्यन्तिन B. अच्यन्तिना C.
४-अभ्यन्दे C. अयमपि पाठः B.
५-अवर B.
६-स्तुतिः C.
७-नभन्त B.
८-माभुव० C.
९-०भवती० B. C.
१०-०भवन्तां C.
११-'हन्यन्तां' नास्ति B.
१२-ज्यां ज्याकां C.
१३-'दभ्रमल्पकमित्यर्थः' नास्ति C. अत्र 'दभ्रमर्भकमिति, अर्थः-अल्पस्य नामनी।' इत्ययं पाठः साधीयान् भाति।
१४-इति C.

उपोप मे परा मृश मा मे दभ्राणि मन्यथाः ।
सर्वाहमस्मि रोमशा गन्धारीणामिवाविका ॥

दभ्राणि-अल्पानि, उत्तरत्र रोमश्रवणाद् रोमाणि, मन्यथाः-मंस्था इत्यर्थः। सर्वाहमस्मि भवामि वर्ते । रोमशा-उपस्थकक्षादिषु स्थानेषु रोमवती जातेत्यर्थः । अतः सम्भोगयोग्यां सतीं किं मामुपेक्षस इत्यर्थः । अस्योपमा-गन्धारीणामिवाविका-गन्धार इति उत्तरापथे क्वचिद् देशाभिधानम् । अतो गन्धारीणां सम्बन्धिनीति तत्र जाता अविका, उरणिका। सा ह्यतिशयसूक्ष्मदीर्घघनमृदुरोमा, सेव। अथवा पुंसः सकाशात् स्त्रियाभिगम्यमानत्वाद् गर्भमिति गर्भ उच्यते, गं धारयतीति गर्भिणी स्त्री । अविका-इत्यवतेः प्रीत्यर्थस्य, प्रीतिकरत्वादुपस्थ उच्यते । यथा गर्भिणीनामुपस्थो रोमशस्तद्वदित्यर्थः । स हि तासां समाचारः, यद् गर्भिण्यः स्त्रियो रोमाणि नोत्खिदन्तीति । तत्त्वेतनेयार्थम्।

नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।
यजाम देवान् यदि शक्नवाम मा ज्यायसः शंस मा वृक्षि देवाः ॥

शुनःशेपो यूपे बद्धो विश्वान् देवानाह-नमो महद्भ्यः-वृद्धेभ्यो युष्मभ्यं नमः, अर्भकेभ्यः-बालेभ्यो नमः, युवभ्यः-तरुणेभ्यो नमः, आशिनेभ्यः-'अशू व्याप्तौ' इत्यस्येदं रूपम्, व्याप्तेभ्यः। पलितानां कार्ण्यवृद्धत्वलक्षणयोर्द्वयोरपि वयसोर्व्याप्तत्वादाशिना आसन्नपलितौ मध्यमवयोऽवस्था उच्यन्ते। कुत एतद् ? वयोऽधिकारात् । मध्यमस्य वयसो-

१-[ ऋ० १।१२६।७ ] अत्रादर्शपुस्तकेषु कश्चन पाठस्त्रुटितः । अस्या ऋच उत्तरार्धोऽत्र नास्ति। C. पुस्तके तु 'दभ्राणि मन्यथाः' इति पदद्वयं पूर्वार्धस्यापि न विद्यते । ऋचः प्रथमपादस्य व्याख्यापि न दृश्यते । मन्त्रगतं 'दभ्राणि' इति पदं व्याख्यागतं मन्यमानेन केनचिल्लेखकेन मध्यगतः सर्वोऽपि पाठः प्रमादान्न लिखित इत्येव सम्भावयामः ।
२-सर्ति C.
३-गान्धा० C.
४-गान्धा० B.
५-य B. C.
६-'इति' नास्ति C.
७-अपि का C.
८-सा व्यति० C.
९-अलतः B. C.
१०-कारां C.
११-अयं पाठः सन्दिग्धः । कदाचिदत्र 'तत्त्वेतेन नेयार्थम्' इति 'तत्त्वमेतेन नेयार्थम्' इति वा पाठो भवेत् ।
१२-[ ऋ० १।२७।१३ ]
१३-[ धा० ५।१८ ]
१४-०तानाह० B. 'तारुण्य' इत्युचितम् ।
१५-तान्या म० B. १६-एवत् B.

क्षिप्रम्, आगहि-आगच्छ। आगत्य कण्वेषु-मेधाविनामैतत्, तृतीयायाः सप्तमी, मेधाविभिः ऋत्विग्भिः, सचा-सह, सुपिब-सुष्ठु पिब। किम्? सामर्थ्यात् सोमम्। तद्वदेव—

प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत। अभीके चिदु लोककृत्संगे समत्सु वृत्रहा-
स्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु॥[1]

सुदासे[2] पैजवनस्यार्षम्। प्र अर्चतिना[3] सम्बध्यते। प्र+उ-प्रो, उम् पदपूरणौ। अस्मै इन्द्राय, अस्येन्द्रस्य स्वभूतं पुरो रथो यस्य तत् पुरोरथम्, शूषम्-सेनालक्षणं बलम्, प्रार्चत-प्रकर्षेण स्तुत, एकवाक्यतार्थे द्वितीया। अर्धर्चादौ यच्छब्दोऽध्याहार्यः। य इन्द्रः, अभीके-अभ्यर्णे[4] आसन्ने। चिद् पदपूरणौ, अप्यर्थे वा। लोककृत-लोकशब्दः स्थानवचनः, तथाहि देवलोकः पितृलोक इति देवादिस्थानमुच्यते, स्थानकृत्। संगे संग्रामे, आसन्नेऽपि संग्रामकाले तिष्ठति न पालयत इत्यर्थः। न च केवलं तिष्ठत्येव, किन्तर्हि? समत्सु बहुष्वपि संग्रामेषु, वृत्रहा-शत्रूणां हन्ता। अपर[5] ऋषिः प्रत्यक्षकृतः बोधीति मध्यम-योगात्, अस्माकं बोधि बुध्यस्व। किम्? सामर्थ्यात् स्तुताः स्तुतीः[6] चोदिता-चोदयिता च कल्याणाय भवेति शेषः। यो वा चोदित्[7] सम्बन्धः। किञ्च तव प्रसादात् नभ-ताम्-छान्दसो वर्णलोपः, नभन्त[8] अथवा नभतीति वधकर्मा, नभन्तां[9] हन्यन्तां[10][11] विनश्यन्त्वित्यर्थः। अन्यकेषाम्-अ सर्वलोककुत्सितानामस्मद्द्विषाम्, कुत्सिता ज्याः[12] ज्याकाः, अपि अधिधन्वसु नष्टयुद्धोपकरणा अस्मद्विनाशं प्रति असमर्था अस्मद्द्विषो भवन्त्वित्यर्थः।

दभ्रमल्पकमित्यर्थः[13], अर्भकस्य नामनी। दभ्रम्, दभ्नोतेः वधार्थस्य, सुच्छेदं भवति अल्पत्वात्। सु-सौकर्येण। अर्भकमवहृतम्-ऊनपरिमाणम्, च भकारः, 'संगृभाय'[14] इति यथा। उदाहरणे—

---

१-[ ऋ० १०।१३३।१ ]
२-सुदाः वै (पै) जवनस्तस्यार्षम् C.
३-अर्च्यन्तिन B. अर्च्यन्तिना C.
४-अभ्यन्दे C. अयमपि पाठः B.
५-अवर B.
६-स्तुतिः C.
७-नभस्त B.
८-माभुव० C.
९-०भवती० B. C.
१०-०भवन्तां C.
११-'हन्यन्ता' नास्ति B.
१२-ज्यां ज्याकां C.
१३-'दभ्रमल्पकमित्यर्थः' नास्ति C.
मर्भकमिति, अर्थः-अल्पस्य नाम
पाठः साधीयान् भाति।
१४-इधि C.

उपोप मे परा मृश मा मे दभ्राणि मन्यथाः ।[1]
सर्वाहमस्मि रोमशा गन्धारीणामिवाविका ॥

दभ्राणि-अल्पानि, उत्तरत्र रोमश्रवणाद् रोमाणि, मन्यथाः-मंस्था इत्यर्थः । सर्वाहमस्मि भवामि वर्ते । रोमशा-उपस्थकक्षादिषु स्थानेषु रोमवती जातेत्यर्थः । अतः सम्भोगयोग्यां सतीं[2] किं मामुपेक्षस इत्यर्थः । अस्योपमा-गन्धारीणामिवाविका-गन्धार[3][4] इति[5] उत्तरापथे क्वचिद् देशाभिधानम् । अतो गन्धारीणां सम्बन्धिनीति[6] तत्र जाता अविका[7], उरणिका । सा[8] ह्यतिशयसूक्ष्मदीर्घघनमृदुरोमा, सेव । अथवा पुंसः सकाशात् स्त्रियाभिगम्यमानत्वाद् गमिति गर्भ उच्यते, गं धारयतीति गर्भिणी स्त्री । अविका-इत्यवतेः[9] प्रीत्यर्थस्य, प्रीतिकरत्वादुपस्थ उच्यते । यथा गर्भिणीनामुपस्थो रोमशस्तद्वदित्यर्थः । स हि तासां[10] समाचारः, यद् गर्भिण्यः स्त्रियो रोमाणि नोत्खिदन्तीति । तत्वेतनेयार्थम्[11] ।

नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।
यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥[12]

शुनःशेपो यूपे बद्धो विश्वान् देवानाह-नमो महद्भ्यः-वृद्धेभ्यो युष्मभ्यं नमः, अर्भकेभ्यः-बालेभ्यो नमः, युवभ्यः-तरुणेभ्यो नमः, आशिनेभ्यः-'अशू व्याप्तौ'[13] इत्यस्येदं रूपम्, व्याप्तृभ्यः । पलितानां कार्ष्ण्यवृद्धत्वलक्षणयोर्द्वयोरपि[14] वयसोर्व्याप्तृत्वादाशिना आसन्नपलिता[15] मध्यमवयोऽवस्था उच्यन्ते । कुत एतत्[16] ? वयोऽधिकारात् । मध्यमस्य वयसो-

१-[ ऋ० १।१२६।७ ] अत्रादर्शपुस्तकेषु कश्चन पाठस्त्रुटितः । अस्या ऋच उत्तरार्धोऽत्र नास्ति । C. पुस्तके तु 'दभ्राणि मन्यथाः' इति पदद्वयं पूर्वार्धस्यापि न विद्यते । ऋचः प्रथमपादस्य व्याख्यापि न दृश्यते । मन्त्रगतं 'दभ्राणि' इति पदं व्याख्यागत मन्यमानेन केनचिल्लेखकेन मध्यगतः सर्वोऽपि पाठः प्रमादान्न लिखित इत्येव सम्भावयामः ।

२-सतिं C.

३-गान्धा० C.

४-गान्धा० B.

५-य B. C.

६-'इति' नास्ति C.

७-अपि का C.

८-सा व्यति० C.

९-अल्पते: B. C.

१०-कासां C.

११-अयं पाठः सन्दिग्धः । कदाचिदत्र 'तत्वेतेन नेयार्थम्' इति 'तत्वमेतेन नेयार्थम्' इति वा पाठो भवेत् ।

१२-[ ऋ० १।२७।१३ ]

१३-[ धा० ५।१८ ]

१४-०तानारु० B. 'तारुण्य' इत्युचितम् ।

१५-तान्या म० B.

१६-एवत् B.

ऽप्रशिष्टत्वात् । यूपाश्च मुक्ताः सन्तो यजाम देवान् यदि शक्नवाम-इत्यात्मनो दैन्यातिशयं सूचयति[1] । ........[2].......

[ इत्यष्टमस्या-( तृतीयस्या- ) ध्यायस्य
विंशः खण्ड[3] । ]

---

१-सूच इति C.

२-इत परमादर्शपुस्तकेषु भूयान् पाठस्त्रुटित । विंशखण्डगतानां-तिर सत, त्वो नेम, ऋक्षा स्तृभि, वम्रीभि उपजिह्विका, ऊर्दर कृदाम एणाम, एवं विंशखण्डगतानाञ्च-रम्भ पिनाकम्, मेना ग्ना, शेपो वैतस, अथा एना इत्येतेषा द्वन्द्वाना व्याख्या सर्वथापि त्रुटितास्ति । सिषक्तु सचते-इत्यस्यापि कश्चन प्राथमिको भागस्त्रुटित ।

३-अयं खण्डनिर्देशोऽस्माभिरेवात्र विहित । त्रुटितभागगतोऽप्ययमंशस्तत्राप्यनिर्दिष्ट एव स्यात्, यथान्यत्र सर्वत्र ।

# [ अथ एकविंशः खण्डः । ]

यो रेवान्यो अमीवहा वसुवित् पुष्टिवर्धनः।
स नः सिषक्तु यस्तुरः ॥

............अस्य वैतद्रूपम्, रोगादीनां होता, अनातङ्क इत्यर्थः । वसुवित्-'विद्लृ लाभे' वसूनाञ्च लब्धा लम्भयिता वा दान इत्यर्थः । पुष्टिवर्धनः-सर्वप्रकाराणाञ्च पुष्टेर्वर्धयिता- स नः-अस्मान् अभिलषितार्थसम्पादनेन विप्रकारीत्यर्थः। अथवा-रेवानित्यादिभिः पुत्र उच्यते, य एवंरूपः पुत्रः स ब्रह्मणस्पतेः प्रसादेनास्मान् सेवताम्। अस्माकं जायतामित्यर्थः। अस्मिंश्च पक्षे यस्तुर इत्याद्यक्षरलोपेन चतुरः प्राह इत्येवं वा नेयम् ।

स नः पितेव सूनवेऽग्ने सूपायनो भव ।
सचस्वा नः स्वस्तये ॥

मधुच्छन्दस आर्षम् । तच्छ्रुतेर्येच्छन्दः । य उक्तगुणोऽसि स नः-अस्माकम्, पितेव सूनवे-चतुर्थी षष्ठ्यर्थे, सूनोः पुत्रस्य, हे अग्ने । सूपायनः-सूपगमनो भव, सूपसर्प इत्यर्थः । सचस्व-सेवस्व च, नः अस्मान्, स्वस्तये-अविनाशाय ।

स्वस्तिशब्दं निगमप्रसक्तं निराह-स्वस्तीत्यविनाशिनोऽर्थस्य नाम आख्या, सरूपमध्ययः अविनाशनाम-इति पाठान्तरम्, अविनाशस्य च नाम स्वस्ति, कस्मात् ? अस्तिरभिपूजितः, सुता सन्ता ( ? ), विनाशाभावश्चात्र पूजा । अर्थाभिव्यक्त्यर्थौ विगृहीतपाठः । 'त्रीणि ज्योतींषि सचते स षोडशी' इति यथानिगममुदाहरणम् ।

भ्यसते रेजते इति भयवेपनयोरर्थयोर्धातूदाहरणे । 'यो जात एव' उपरिष्टाद् व्याख्यास्यते ।

---

१–अयं खण्डनिर्देशोऽस्माभिरेवात्र विहितः । त्रुटितभागगतोऽप्ययमंशस्तत्राप्यनिर्दिष्ट एव स्यात्, यथान्यत्र सर्वत्र ।
२–[ ऋ० १।१८।२ ] त्रुटितभागगतोऽप्ययं मन्त्रोऽस्माभिरेवार्थबोधसौकर्यायात्र निर्दिष्टः ।
३–[धा० ६।१३८] विनिल्लाभे C.
४–'सर्वप्रकाराणाञ्च पुष्टेर्वर्धयिता स नः' इति पाठस्त्रुटितः । D.
५–अत्र 'अस्माकं' इति पाठे युक्तो भवेत् ।
६–अत्र 'चतुरः' इति कदाचियुक्तं स्यात् ।
७–प्राव C. ८–नेयः C.
९–[ ऋ० १।१।९ ] 'स नः पितेव' इत्येव प्रतीकम् B. C. १०–अस्मान् B.
११–सुतासन्ता C. अयं पाठः सन्दिग्धः । अथवा कदाचिदत्र 'सुता सत्ता' इति पाठः स्यात् ।
१२–[य० वा० सं० ८।३६॥३२।५]
१३–वचनयो० B. पवनोयो० C.
१४–[ऋ० २।१२।१] १५–[निरु० १०।१०]

प्र चित्रमर्कं गृणते तुराय मारुताय स्वतवसे भरध्वम् ।

ये सहांसि सहसा सहन्ते रेजते अग्ने पृथिवी मखेभ्यः[1] ॥

भरद्वाजस्य[2] । प्रोपसर्गो भरध्वमित्याख्यातेन[3] । चित्रम्-विचित्रम्, अर्कम् मन्त्रं स्तुतिलक्षणम्, गृणते[4]-कर्मणि शतृप्रत्ययः, गीर्यमाणाय स्तोतव्यायेत्यर्थः । तुराय-तुर्वतेर्हिंसार्थस्य रूपम्, तुर्वित्रे शत्रूणां हिंसित्र इत्यर्थः । 'त्वर त्वरणे'[5] अस्य वा, त्वरित्रे क्षिप्रकारिणे । मारुताय[6]-मरुतां समूहाय, स्वतवसे[7]-स्वबलाय, भरध्वम्-प्रभरध्वम्[8], प्रहरत प्रापयत प्रोधारयेत्यर्थः[9] । अथवा-अर्कमन्नं हविर्लक्षणं तद्धेतुमाहवनीयं प्रति प्रापयत, ऋत्विजश्चायं प्रैषः । किञ्च ये[10]-मरुतः, सहांसि-बलानि शत्रूणां स्वभूतानि[11], सहसा-बलेनात्मीयेन, सहन्ते[12]-सहिरभिभवे, अभिभवन्ति । यच्छ्रुतेस्तच्छ्रुतिः[13], तेभ्यो रेजते-बिभेति, भयेन वा कम्पते । हे अग्ने ! पृथिवी-पृथिव्यपि किमुतान्यानि भूतानि । मखेभ्यः-म इत्युपमितेमः[14] वि महन्नाम । यद्वा मह इत्यस्य महन्नाम्नो हकारस्य खकारः, महद्भ्य इत्यर्थः । अथवा महो यज्ञस्तमङ्गभावोपगमनेन वृष्टिप्रदानद्वारेण वा कुर्वन्ति-'तत्करोति'[15] इति णिच्, ण्यन्तात् 'णेरनिटि'[16] इति णिलोपः-मखा यज्ञकारिण इत्यर्थः । तेभ्यः, वित्वं[17] (?) सम्बन्धेनोच्यते ।

द्यावापृथिवीनामानि चतुर्विंशतिः-स्वधे पुरन्धी-इत्यादीनि स्वेनात्मना भूतग्रामं[18] धारयेते[19] इति स्वधे । पुराणि वा धारयित्र्यौ पुरन्धी[20] । एवं सर्वत्र भवति । कर्मातिशययोगेन माहाभाग्यस्य[21] वाचिका ऋक् ।

[ इत्यष्टमस्या-( तृतीयस्या- ) ध्यायस्य
एकविंशः खण्डः ।[22] ]

---

१-[ ऋ० ६।६६।९ ] 'प्रचित्रमर्कं' इत्येव प्रतीकम् B. C.  २-भारद्वा० C.
३-०ख्यानेन B. C. । सम्बध्यत इति शेषः ।
४-गृहत्कर्मणि (णी B) कर्तृ (तुं) प्रत्ययः B. C.
५-'ञित्वरा संभ्रमे' इति पाठः ।
६-मारुत्याय B. C.
७-तपसे सब० C.  ८-भरत C.
९ अत्र'प्रोधारयतेत्यर्थः' इति 'प्रोधार्येन्त्यर्थः' इति वा पाठः साधीयान् स्यात् ।
१०-येन B. येन् C.  ११-भूतादि B. भूतादि C.
१२-सहते B. C.  १३-०ति म B. C.
१४-अत्र '०तमपि' इति पाठो युक्तो भाति ।
१५-[cf.पा० ३।१।२५] इति सूत्रे वार्तिकं गणसूत्रं वा ।
१६-[पा० ६।४।५१]  १७-अयं पाठः सन्दिग्धः ।
१८-०ग्रसं C.  १९-'त' त्रुटितम् भाति C.
२०-पुरन्ध्री C.
२१-महा० C.
२२-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तिर्न दृश्यते ।

# [ अथ द्वाविंशः खण्डः । ][1]

कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद ।[2]

विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव ॥

अगस्त्यस्यार्षम् । स हि पूर्वमेव संसाररूपे दृष्ट्वेममवोचत्, कतरा पूर्वा-पूर्वकाला, तत्[3] कतरा अपरकाला, अयोः-अनयोर्द्यावापृथिव्योर्मध्ये, कथा जाते-कथं वा जाते एवं महापरिर्माणे[4], कवयः-मेधाविन ऋषयः, को विवेद-क एतद्विवेद वेत्ति जानाति, अहं तावत्त्वं जानामीत्यभिप्रायः ।

किञ्च विश्वं सर्वं प्राणिजातमेते त्मनौ[5]-आत्मना बिभृतः-धारयतः, यत्-तादर्थ्यायाश्चतुर्थ्या लुग्भवति पदपूरणः, यस्मै[6] । ये[7] एनयोर्नाम चरणाम[8] उत्पत्तिः, यदर्थमेते उत्पन्ने इत्यर्थः । वर्तेते[9]-विविधं यतेते[10], एतयोर्मध्य[11] इति शेषः । अहनी[12]-अहोरात्रे, चक्रियेव चक्रशब्दात् प्रथमाद्विवचनस्य '..................याजीकाराणामुपसंख्यानम्[13]' इत्येवमियादेशः । चक्रे इत्यर्थः । चक्रे[14]यते युक्ते च चक्रयुक्ते च, परिवर्तमानसामान्यादहोरात्रे उच्येते[15] । अर्थप्राप्तार्थवचनं चैतद् भाष्यकारस्य नाम मन्त्राक्षरविवरणं महिमानमाचष्टे, मन्त्रो मन्त्रद्वार[16] । अन्त्यपदाभ्यासोऽध्यायपरिसमाप्तिज्ञापनार्थः[17], शिष्टभागो निगमसिद्धः[18] ।

---

१–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तिर्न दृश्यते ।

२–[ ऋ० १।१८५।१ ] 'कतरा पूर्वा' इत्येव प्रतीकम् B. C.

३–'तत्' इत्यधिकमिव भाति पदम् ।

४–परमा० C.

५–त्ममना C.

६–यस्मै B. । प्रयोजनायेति शेषः ।

७–कदाचिदत्र 'ह' इति पाठः स्यात् ।

८–अत्र 'परिणाम' इति युक्तः पाठः ।

९–'वि' इत्यत्र त्रुटितम् । 'विवर्तेते' इति पाठो युक्तो भवेत् । अन्यथा 'विविधं' इति कस्यार्थः स्यात् ।

१०–यतेते C.

११–०योब्रम्मध्य C.

१२–अहन् C.

१३–'इयाडियाजीकाराणामुपसंख्यानम्' इति 'सुपां सुलुक्०' [७।१।३९ ] सूत्रे वार्तिकम् ।

१४–'चक्रे च ते युक्ते च-चक्रयुक्ते' इत्येव युक्तः पाठो भाति ।

१५–उच्यते C.

१६–कदाचिदत्र 'द्वारा' इति स्यात् ।

१७–०सिसूचनार्थम् B.

१८–शिष्टभापा ( गा ) त्रिगमसिद्धम् C.

निरुक्तमन्त्रभाष्यार्थपूर्ववृत्तिसमुच्चयः।
·········मन्त्रेण रचितः सूनुना पितृशर्मणः॥[1]

[ इत्याचार्यमहेश्वरविरचितायां निरुक्तभाष्यटीकायाम

अष्टमस्या-( तृतीयस्या- ) ध्यायस्य

द्वात्रिंशः खण्डः।[2]

अष्टमो-( तृतीयो- ) ऽध्यायश्च

समाप्तः। ]

---

१-अत्र 'ज्ञात' इति 'वुद्ध' इति वा त्रुटितं स्यात्। ज्ञातो वुद्धो वा सम्यगवगतो मन्त्रो मनन-साध्यं रहस्यं येन स तेनेत्यर्थः। अथवा कदाचिदत्र 'महेश्वरेण' इत्येव पाठो भवेत्, लेखकप्रमादाच्च तथा त्रुटितो विपर्यस्तश्च स्यात्।

२-आदर्शपुस्तकेष्वत्र 'इत्यष्टमोऽध्यायः' इत्येव पाठः।

# अथ चतुर्थोऽध्यायः ।[1]

## [ तत्र प्रथमः पादः ][2]

एकार्थमनेकशब्दमित्यादि, उक्तप्रकारेणोपसंहारो विस्मरणार्थः, प्रकरणान्तरोपन्यासार्थश्च । एकः पृथिव्यादिरर्थो यस्मिन् तदेकार्थम्[3] । अनेको वाचकः शब्दो गवादिर्यस्मिन् तदनेकशब्दम् । उक्तोपसंहारत्वाच्च, एकोऽर्थोऽनेकशब्दस्य, अनेकश्च शब्द एकार्थस्य, इत्येतदुक्तं गम्यते । कथम् ? पुरस्तात्-'एतावन्तः समानकर्माणो धातवः, एतावन्त्यस्य सत्त्वस्य नामधेयानि[4]'-इत्यस्यार्थस्य नैघण्टुकस्य[5] प्रतिज्ञातत्वात्, यथाप्रतिज्ञातं चोक्तत्वात् । यच्चोक्तं तस्योपसंहारवचनेनोपसंहर्तव्यत्वात्, तस्य च-एकोऽर्थो यस्मिन् अनेकः शब्दो यस्मिन्-इत्येवमेव ज्ञायमाने उपसंहर्तुं[6] शक्यत्वात् ।

अपि च यद्येकार्थत्वमेकस्य[7] शब्दस्याभिप्रेतं[8] स्यात्, अनेकशब्दत्वञ्चानेकस्यार्थस्य, ततो वचनानर्थक्यम्, तस्यार्थस्योत्सर्गसिद्धत्वात् । अत आरम्भसामर्थ्यादप्येकोऽनेकशब्दस्य, अनेकशब्द[9] एकस्येति युक्तमवोचाम[10] । अर्थाच्चायमर्थ इत्यपौनरुक्त्यम् । अन्यथा ह्येकोऽर्थोऽयमनेकस्य शब्दस्येत्युक्ते, अनेकशब्दो यस्मिन्नेकार्थस्येति पुनरुक्तं स्यात् । इतिशब्द एवमित्यस्यार्थे, बुद्धौ सन्निहितस्य एतदिति प्रतिनिर्देशः प्रकरणमन्यपदार्थं तदभिप्रायश्च न[11] नपुंसकैकवचनम् । एतदेवमेकार्थमनेकशब्दं नैघण्टुकं प्रकरणमुक्तमित्यर्थः । यद्यपि च गोकाष्ठादीनामनेकार्थत्वं क्वचित् प्रदर्श्यते, अनवगतसंस्कारैश्च[12] विश्वकद्राकर्षादिः[13] । तथापि तत्प्रासङ्गिकं द्रव्यम्[14] । न च प्रासङ्गिकं प्रकरणं विहन्ति ।

अयेत्यादि[15], अनन्तरं यानि 'द्यतिरनेककर्मा[16]' इत्यादीनि[17] । अनेकार्थान्येकशब्दानि तान्यतः परमनुक्रमिष्यामः अभिधानाभिधेयतन्निर्वचनोदाहरणादिक्रमेणोदाहृत्य व्याख्यास्याम इत्यर्थः ।

---

१–अथ नवमोऽध्यायः B. नास्त्येव C.
२–नास्त्यादर्शपुस्तकेषु ३–०कार्थः B.
४–[ निरु० १।२० ] ५–०घण्टुका० C.
६–०हर्तुः C. ७–'०त्वमनेकस्य' इत्यपि पाठः B.
८–०भिप्रोक्तं C.
९–अनेकाप ( व C. ) शब्द B. C. कदाचिदत्र 'अनेकश्च शब्द' इति पाठः स्यात् ।
१०–'अवो' त्रुटितं B. C. ०स्येयुक्तं......चाम B.
११–अत्र 'न' कारो ऽधिक एव भाति । अथवा 'तदभिप्रायञ्चेदं नपुंसकैकवचनम्' इति पाठः कदाचित्स्यात् । १२–०रांश्च निगमान् । B.
१३–विञ्चकत्रा ( र्णा C. ) कष्यादि B. C.
१४–'द्रष्टव्यम्' इति स्यात् ।
१५–अ ( अं C. ) गेत्यादि B. C.
१६–[ निरु० ४।१७ ] ०कीर्मत्या० B.
१७–इत्यादिति B.

न चैतावदेव, किन्तर्हि ? अनवगतेत्यादि । व्याकरणेन प्रत्यक्षेण भावितेन विशेषलक्षणेनानवगतः, अनवबुद्धः प्रकृत्यादिविभागलक्षणः संस्कारो येषाम् । केन तर्हि ? सामान्येन-'उ[1]णादयो बहुलम्[2]' 'पृषोदरादीनि यथोपदिष्टम्[3]' इत्यादिना प्रदर्शितसा[4]धुत्वात् । 'बहुलं छन्दसि[5]' इति च । तांश्च निगमान् निगमयितव्यान् वैदिकान्[6] शब्दानित्यर्थः । तेषाञ्चानेकावगतसंस्करणात्[7], कश्चिदनेकार्थ एव । यथा 'दयतिरनेककर्मा[8]' 'नूचिदिति निपातः पुराणनवयोः[9]' इति । एतयोर्हि धातुत्वान्निपातत्वाच्च नान्यः संस्कारोऽस्तीति । कश्चिदनवगतसंस्कार एव, यथा[10]-जहा-इति । कश्चिदुभयवान्[11], यथा अकूपारे[12]-इति । तथा क्वचिन्निगमेनैवोपक्रमः, इषिरेण[13]-इति क्वचिदभिधेयं निगमेनैव गतत्वाद[14]प्रदर्शितः । यथा-त्रैव-इषिरमुनयति-नोक्तम् । क्वचिद[15]तिप्रसिद्धे निगमोऽपि न पठ्यते । यथा—कुरुतना[16]दिषु[17] । तदेतद्यथा[18]सम्भवं सर्वत्र प्रदर्शयितव्यम् ।

न चैतद् व्याख्यायैवानुक्रमणात्-'तदुपरिष्टाद्व्याख्यास्यामः । नैघण्टुकानि नैगमानीह[19]' वक्ष्याम इति पुरस्ताद् व्याख्यानप्रतिज्ञामवत्सव्याप्तिनं(?)[20] क्रियते । सा चेयं[21] पूर्वाचार्यैः प्रदर्शिता ।

तत्त्व पर्यायशब्देन व्युत्पत्तिश्च द्वयोरपि ।
निगमो निर्णयश्चेति व्याख्येयं निगमे पदे[22] ॥

तत्त्वं पर्यायशब्देन[23]' यथा-निधा[24] पाश्या भवेति[25]-इति । व्युत्पत्तिश्च द्वयोरपि-तस्य च पर्यायस्य च, निधा यन्निधीयते[26] । पाश्या पाश[27]समूहः[28]-इति । निगमः-अस्मिन्नर्थं इति । निगमो वैदिकः प्रयोगो मन्त्रो वा । यथा-'वयः सुपर्णा[29]' इति । 'निधयेव वक्षान्[30]' इति

१–गुणाद० C. २–[पा० ३।३।१]
३–[पा० ६।३।१०९] बृक्षोदरादिनिथो० C.
४–०शिकसा० B. C.
५–[पा० २।४।३९,७६,७६॥३।२।८८॥५।२।१२२॥ ६।१।३४॥७।१।८,१०,१०३॥७।३.९७॥७।४ ७८॥]
६–'वैदिकान्' नास्ति B. ७–संस्कार० C.
८–[निरु० ४।१७] ९–[निरु० ४।१७].
१०–'यथा' नास्ति B. C.
११–गश्विमुभ० B. C. १२–[निरु० ४।१८]
१३–[निरु० ४।७] १४–'गतत्वा' त्रुटितम् B.
१५–'०दिति यसि' इत्येव B. १६–[निरु० ४।७]
१७–'दिषु' इति त्रुटितम् B. १८–०तन्यथा C.
१९–[निरु० १।२०] 'इह व' त्रुटितम् B.
२०–अस्य वाक्यस्यार्थो न सम्यगवगतः ।
२१–'चेय' त्रुटितम् B.
२२–पद्यमिदं दुर्गाचार्येणापि 'तदुच्यते' इत्युल्लिख्य समुद्धृतम् । एवं प्राचीनमिदं पद्यं कुत्रत्यमिति न ज्ञायते । कस्यचिद् व्याख्याकर्तुरेवेति सुनिश्चितम् ।
२३–शब्दा न B. C. २४–'निधा' त्रुटितं भाति B.
२५–भवन्ति B. C. २६–यनीधी० B.
२७–पदस्यावाग स० B. C. २८–[निरु० ४।२]
२९–[निरु० ४।२] निधापदव्याख्यावसरे निगमः ।
३०–[निरु० ४।२] ऋचोऽन्तभागः ।

बन्धनकस्य करणं निधेत्युक्तम्, पाश्या च बन्धनस्य करणम्, अतः पाश्या निधेति निर्णयः।

तत्-एतत्प्रकरणम्, ऐकपदिकमित्याचक्षते-पूर्वाचार्यप्रसिद्धेयमस्य संज्ञेत्यभिप्रायः। एकपदानां व्याख्यानम्-ऐकपदिकम्-इति। अत्र हि एकैकमेव जहादि पदं व्याख्यायते। न यथा पूर्वत्र[1],-एकविंशतिः पृथिवीनामधेयानि, हिरण्यनामानि पञ्चदश-इति पद-समुदायः[2]।

तत्र प्रथमं पदम्-जहा-इति। तदनवगतम्, तद् किं हन्तेः जिहातेः[3] जिहीतेरिति। धातुस्तावद् विशेषेणानवगतः। प्रत्ययोपि[4] जातिरपि नामाख्यातं निपातो वेति, कारक-मपि। अतो धातुप्रत्ययपदजातिकारकानवगमादनवगतम्। तस्य प्रकरणपदान्तर-सम्बन्धसामर्थ्यादिना धात्वादि निश्चित्य तदभिव्यक्त्यर्थं हन्तेर्लिडुत्तमैकवचनेन वा 'अभ्यासाच्च'[5] इति कुत्वस्याभावो नकारलोपश्छान्दसत्वादित्याह-जघानेत्यर्थ इति। इतरयोर्धात्वोः पूर्वपराभ्यासे सम्बन्धभावायाधिगमः[6]।

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य
प्रथमः खण्डः।[7] ]

---

१-'त्र' त्रुटितं भाति B.
२-०दायम् B. C.
३-'जहातेः' इति युक्तः पाठः।
४-प्रत्ययेऽपि .B C.
५-[पा० ७।३।५५]
६-०न्धाधिगमः B.
७-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्न दृश्यते।

## [ अथ द्वितीयः खण्डः । ][1]

को नु मर्या अमिथितः सखा सखायमब्रवीत् ।

जहा को अस्मदीषते ॥[2]

जहेत्यस्य पदस्य[3] प्रतिज्ञातार्थोपपादनार्थं प्रथमं[4] तावत् पूर्वा ऋगत्र[5] व्याख्यायते । त्रिशोक इन्द्रमाह—

मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु ।

वधीर्मा शूर भूरिषु[6] ॥

माशब्दो वधीरित्येतेन[7] सम्बध्यते । नः-अस्मान्, एकस्मिन्नागसि-अपराधे[8], मा च द्वयोः, उत त्रिषु मा वधीः मा हिंसीरित्यर्थः । मा च हे शूर ! भूरिषु बहुषु' बिभया[9] हि', बिभेमि हि । त्वावतः[10]-'वतुप्रकरणे[11] युष्मदस्मदोश्छन्दसि सादृश्य उपसंख्यानम्[12]' इति वतुप्रत्ययः तेन त्वत्सदृशादित्यर्थः । उग्रात्-अप्रसह्यात् क्रूराद्वा, अभिप्रभङ्गिणः[13]-अभिप्रभङ्क्तुः शत्रूणाम्, दस्मात्-उपक्षपयितुश्च, अहंस्तीषहः[14]-गल्हृत्वोः[15] दृतिः सेनानामभिभवितुरित्यर्थः । यत एवमतो ब्रवीमि 'मा सख्युः[16]'-माशब्द आविद इत्येतेन सम्बध्यते । सख्युः-मित्रस्य, शूनम् प्रवृद्धम्, किं तत् ? सामर्थ्यात् पापम्, पापपर्याय एवं[17] वा शूनम् । आविदे आभिमुख्येन मा ज्ञासिषम् । मा च पुत्रस्य । प्रभूवसो-प्रभूतधन ! किञ्च आवृतत्वादावृतावृत्तिस्तया तद्वत्, आवृत्तिमदित्यर्थः[18] । भूतु-छान्दसत्वाद् विकरणाभावः । अस्मान् प्रति सर्वं देवप्रसादपरं भवतु, ते-तव[19], मनः ।

एवमुक्त इन्द्रस्तं सोपालम्भं प्रत्याह-को नु, कः प्रश्ने, नु[20] इत्युपालम्भे, पादपूरणो वा हे मर्या ! मनुष्याः ! अथवा का+उ=को उकारः[21] पदपूरणः, मर्याशब्दोऽपि[22] मर्यादा-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भो न दृश्यते ।

२–[ऋ० ८।४५।३७] 'को नु मर्या' इत्येव प्रतीकम् B. C.

३–वास्य C.     ४–०मस्ताव० C.

५–पूर्वमृगपुत्र B. C.

६–[ऋ० ८।४५।३४] 'मान एकस्मिन्नागसि' इत्येव प्रतीकम् B. C.

७–०रित्यनेन C.  ८–'अपराधे' त्रुटितं भाति B.

९–[ऋ० ८।४५।३५]   १०–'त्वावतं B. C.

११–'वतुप्रकरणे' इति युक्तं स्यात् ।

१२–[पा० ५।१।११५] सूत्रे कौमुद्यां 'युष्मदस्मदोः सादृश्ये वतुब्वाच्यः' इत्यानुपूर्वीकं वार्तिकं पठ्यते ।

१३–प्रसह्नि० B, C.     १४–हृत्ती···ह B.

१५–०त्वादिति से० B. अत्र 'गल्हृत्वादृतीनां सेनानां' इति पाठः कदाचित्स्यात् ।

१६–[ऋ० ८।४५।३६]   १७–एवं B. C.

१८–०त्तिमित्य० B.   १९–'त' त्रुटितम् B. C.

२०–'नु' त्रुटितम् B.

२१–अयं पाठ आदर्शपुस्तकेषु द्विर्लिखितः । अन्यत्र 'का उ को उकारः' इति पाठो वर्तते । अयं पाठः साधीयान् । लकारपाठस्त्वसंगत एव ।

२२–'मर्याशब्दो' इति त्रुटितम् B.

वचनः, केयं मर्यादा, कोऽयमाचार[1] इत्यर्थः । अनाकुष्टः सखा न[2] सखायं सन्तमब्रवीत्-अब्रवीति-मा नो वधीरिति । को हि नाम सखायं सन्तं हन्ति जह्य हतवान् वा आह-किमिति शेषः, येनैवमुच्यते ! कः को वा, अस्मत्-अस्मत्तः, ईषते-ईषतिर्गतिकर्मा । शुद्धोऽपि[3] चात्र सोपसर्गार्थे द्रष्टव्यः, अपगच्छति पालयत इत्यर्थः। एवमत्र मा नो वधीरिति वधप्रतिषेधलक्षणोपालम्भत्वादस्या ऋचो जहेत्यस्यार्थस्योपपत्तेः शब्दसारूप्याच्च जघानेत्यर्थ इत्युपपन्नम् ।

अत्र-मर्यादाभिधानं वा स्यात्-इयं मर्यादा अभिधानमुक्तम् । तदयुक्तम्, प्रथमाबहुवचनान्तं हीदमामन्त्रितम्[4], न तु ह्यवन्तमेकवचनान्तम्, मर्या अमिथित इति सवर्णदीर्घत्वप्रसङ्गात् । अनुदात्तस्य चामन्त्रितत्वासम्भवाच्च[5] दोषः, छान्दसत्वादुभयं भविष्यति । अन्ये तु शाखान्तराभिप्रायं मन्यन्ते ।

मर्यादा मर्याद्योर्विभागः-मर्यादा नाम[6]-पूर्वस्या भूमेरन्तः, म्रियते[7] सा तत्रेति मर्या, आदिः परभूमेरारम्भः, मर्य्या चादिश्च मर्यादी, तौ येन यस्मिन् वा प्रदेशे विभज्येते, स मर्याद्योर्विभागः । स मर्यया चादिना[8] च योगात् । मर्यादामर्यादिनोः-इति पाठे[9] व्रीह्यादिदर्शनादिनिः[10] । मर्यादिना[11] तद्वतोर्ग्रामयोर्विभागो वा ।

अपापकमिति न्यायप्राप्तवचनम्, अपापको हि न हन्यते । तथा हित[12] इत्यर्थप्राप्तवचनमेव, अत एव हि पलायतिनाभिहितम् ।

निधेयनन्तरमनवगतसंस्कारम्, तस्य पाश्या भवतीति पर्यायेणाभिधेयकथनम् । यद् यस्मिन्विधीयते स्थाप्यते मृगपक्षिग्रहणाय इति निर्वचनम् । अभिधेयप्रसक्तं निराह्-पाश्या[13] पाशसमूहः, समूहार्थे पाशादिभ्य[14] इति यः । पाश्या जालम्, पाश्यानुप्रसङ्गात् पाशं निराह्-पाशः पाशयतेः बन्धनार्थाद् विपाशनात् । तेन विविधं मृगः पक्षी वा बध्यते । निगमः—

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य

द्वितीयः खण्डः । [15] ]

---

१–'अस्मान् प्रति' इत्यत आरभ्य 'कोऽयमनार' इत्यन्तः पाठो द्विर्लिखित आदर्शपुस्तकेषु ।

२–त् C. न् B.

३–शुद्धो विचित्र B. C.

४–०न्त्रितः C.

५–चासत्याम० B. C.

६–नाम् B. C.

७–म्रियन्ते B. मृयन्ते C.

८–पिदिना B. चिदिना C.

९–पाठः B.

१०–व्रीह्यादिभ्यश्च [cf. पा० ५।२।११६]

११–०दिना B.

१२–अत्र 'भीत' इति पाठो युक्तः।

१३–पदया पादयस० C.

१४–त्वादिभ्यः C.

१५–'इति' त्रुटितम् C.

१६–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो नास्ति ।

# [ अथ तृतीयः खण्डः । ][1]

वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान् ॥[2]

शाक्त्यस्य[3] गौरिवीतेरार्षम् । वयः-येर्बहुवचनम्, विः पक्षी गन्ता वा । अन्तर्नीतो-[4]पमानश्च । वयः पक्षिसदृशाः शीघ्रगन्तृत्वेन गन्तारो[5] वा । सुपर्णा इति, रश्मीनाम[6], आदित्यरश्मयः । उपसेदुरिन्द्रम्-उपसीदन्ति ईश्वरमादित्यम् । प्रियमेधाः-प्रिययज्ञाः[7] । ऋषयः-द्रष्टारः । नाधमानाः-याचमानाः । किम् ? उच्यते, अपोर्णुहि-अपच्छादितं कुरु अपनयेत्यर्थः । ध्वान्तम्-तमः । तच्च कुर्वन्, यदेनं[8] संपूर्णमालोकाभावाद् दर्शनस्यासमर्थं ध्वस्तमिव वा तमसा, एतत् पूर्धि-पूरय देहि वा । चक्षुः-सर्वस्य लोकस्य तच्चिचीपन, मुमुग्धि अस्मान्, निधयेव-पाशसमूहेनेव, बद्धान्-उद्धततमोऽपनयनार्थं सर्वान् विक्षिप्येत्यर्थः[9] ।

सुपर्णशब्दस्य रश्मिनामसु पाठात् सुपतना इति निर्वचनाभिप्रायः । आध्वस्तं[10] चक्षुरिति-आध्वस्तमाच्छादितं तमसा, अर्थप्राप्तस्य चार्थस्येदं वचनम्, न ध्वान्तशब्दनिर्वचनार्थम् । तमःपर्यायत्वादस्य चक्षुषा सामानाधिकरण्यासम्भवात् । चक्षुः ख्यातेर्वा[11] दर्शनार्थस्य, चष्टेर्वा[12] । अनेन हि दृश्यते ।

शिताम-इत्यनवगतसंस्कारमनेकार्थञ्च । आचार्यविप्रतिपत्तेः पूर्वपूर्वपदोत्तर-[13]पदोद्विप्रतिपत्तिनिमित्ता[14] च विप्रतिपत्तिरुपन्यस्ता निगमे सुप्रतिपादितो[15] भवतीति भाष्यकारो निगमेनैवोपक्रमते-पार्श्वतः श्रोणितः इत्यादिना—

"होता यक्षदिन्द्राग्नी छागस्य हविष आत्तामद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभो घस्तां नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करत एवेन्द्राग्नी जुषेतां हविर्होतर्यज[16] ॥"

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो नास्ति ।
२–[ऋ० १०।७३।११] 'वयः सुपर्णाः' इत्येव प्रतीकम् B. C.
३–शाक्यस्य गौरवी० C. ४–अन्तर्णीतो० C.
५–गन्धारो C. अयमपि पाठः B.
६–अत्र 'रश्मिनाम' इति ह्रस्वघटित एव पाठो युक्तो भाति ।
७–प्रियज्ञा C.
८–अत्र 'यदेवं' इति पाठो युक्तो भाति ।
९–०क्षिपेदित्य० B. १०–अध्वस्तं C.
११–[cf. धा० २।५०] १२–[cf. धा० २।७]
१३–'पूर्वपूर्व' इति त्रुटितम् B.
१४–पदोदात्तवदद्वि० B. अयं पाठः सन्दिग्ध एव । अस्याः पङ्क्तेराशयः सम्यङ् नावगम्यते ।
१५–०पादना C.
१६–[तै० ब्रा० ३।६।११।२-३] 'होता यक्षत्' इत्येव प्रतीकम् B. C.

पशोर्हविः प्रदानस्य प्रैषोऽयम् । होता यक्षत्-लोडर्थे पञ्चमः[1], हृदयादियागेन[2] यजतु । अग्नीषोमौ[3], यतस्तौ, छागस्य हविष आत्ताम्-भक्षितवन्तौ । अथ मध्यतः मध्यात् । मेदः-मध्यवपाख्यम्, यतो वपायागः कृतः । अतो हृदादय, आदिकालो वर्तत इत्यर्थः । कदा यजते ? उच्यते, पुरा द्वेषोभ्यः-द्वेष्टृभ्यो द्वेष्येभ्यो वा हविर्मथिभ्यो रक्ष आदिभ्यः, यावत् कालातिक्रमदोषाद्देवतावद्धवींषि रक्ष आदीनि न विध्वंसयन्तीत्यर्थः पुरा च पौरुषेय्या गृभ्णत[4] इति गृही इडा[5], तस्याः[6] । तौ[7] चेज्यमानौ घस्तां भक्षयेताम्[8] । नूनम्-निश्चयेन । घासे अज्राणाम्-घास[9]निमित्ते अजन्ति गच्छन्ति, घासे यान्[10] न जीर्यन्ते ये ते, घासे अंज्राः[11] पशवः । जात्याख्यायामिति, एतच्चात एकस्मिन्नेव बहुवचनम् । वचनव्यत्ययो वा । घासे भक्षणे वाजस्य पशोरवयवभूतानि । यवसप्रथमानामित्यादौ सर्वत्र द्वितीयार्थे षष्ठी । यवसमन्न प्रथममुत्कृष्टम् । अन्नान्युत्कृष्टानि मांसानीत्यर्थः । सुमत्क्षराणाम्-सुसिद्धतया मृदुत्वात् स्वयमेवोदरं प्रति क्षरितॄणि । शतरुद्रियाणाम् रुद्र इति स्तोतृनाम तस्य स्वभूताः स्तुतयो [13]रुद्रियाः ताः शतसंख्याका[14] येषां तानि बहु स्तुतीनीत्यर्थः[15] । पार्श्वतः श्रोणितः शिता[16]मतः । शितामशब्देन बाहुरुच्यते, कुतः । पार्श्वतः श्रोणित इति बाह्वा[17]वदानप्राये वचनात् । बाह्वर्थं च हृदया[18]द्यपेक्षया पार्श्वा[19]दीनाम् । तथा च श्रुतिः । अग्निष्वात्तानाम् । अग्निना पावकेन स्वादूकृतानि । पीवो[20] बलवान्[21] पशुः । उपगम्य दृश्यते यस्मिन् उपवसनम् । पीवा उपवसनं[22] येषां तानि । बलवन्तं पशुमवयवयोगेनोपवय[23] यानि व्यवस्थितान्यासन्नीत्यर्थः[24] । साहचर्यं दर्शयति । दोषोरवद्यति पार्श्वयोरवद्यतीति । पार्श्वादिसाहचर्याच्च पर्शुनाराद्वादिवैत्[25] सन्दिग्धे निर्णयः ।

---

१—पञ्चमी D.
२—'हृदयादियागेन' इति त्रुटितम् B.
३—अग्निपोमौ C.
४—'पौरुषेय्या, गृभ्णत इति गृभः' इति युक्तं स्यात् ।
५—इदा C.
६—तस्या इडायाः पुरा इत्यन्वयः । प्रागिडावदानादित्यर्थः ।
७—कौ B. C.
८—यस्ता जक्षयता C.
९—घासनि० C.
१०—या स न C. 'स' इत्यधिकम् ।
११—अग्राः B. C. इत्नोऽपि 'म' इत्यप्यधिको वर्ण आपतितः ।
१२—[ Fragment of पा० १।३।५८ ]
१३—'रुद्रि' इति त्रुटितम् C.
१४—संख्योका C.
१५—०तीनित्य० C.
१६—शिता० C.
१७—वाह्वा व० C.
१८—हृदया० C.
१९—पर्शा० C.
२०—पीवो C.
२१—बलात्य० B.
२२—०वसनो C.
२३—०नोवयम्य C.
२४—इतः परं 'पार्श्वतः श्रोणितः' इत्यारभ्य 'तथा च श्रुतिः' इत्यन्तः पाठः पुनर्लिखितो दृश्यते B.C.
२५—वप् C.

अथवा योनिः शिताम श्रोण्यानन्तर्यात् योनिशब्देन अग्नीषोमीय[1]स्य पुंस्पशुत्वात् पुंस्पशोश्च योनेरभावाद् अनवदानीयत्वाच्च सामीप्याद् गुदः प्रतिपाद्यते। तेन शिताम‌तो गुदा[2]दित्यर्थः।

श्यामं वा य[3]कृन्मांसं कालेयकाख्यं शिताम उच्यते। श्वेतं वा मां[4]सं मेद आख्यम्। तदपि हि 'मेदसा स्रु[5]चौ प्रोर्णो[6]ति' इति वचनादवदानमध्ये प्रक्षिप्यते। पार्श्वात् श्रोणेर्वा बाह्वादीनां वान्यतमस्मात्। उरसादुत। पार्श्वादीनां छेदप्रदेशास्ततः। अन्यस्माच्च हृदयादेः। अङ्गादङ्गादवत्तानाम्। अवत्तानि। कृत्स्न[7]मेव भक्षणं चैतद[8]ग्नीषोमौ। मा न का[9]र्पाम। जुषेतां से[10]वेताम् नित्यं ह[11]विरस्मदीयम्। त्वमपि होतः यज। मा विलम्बिष्ठाः।[12] पार्श्वं कस्मात्। पर्शु[13]मयमङ्ग भवति। तद्धि प[14]र्शूनां समूहः पार्श्वमित्ये[15]वं वैयाकरणा अन्वाचक्षते। न प[16]र्शुसमूहरूपत्वात् प[16]र्शुमयम्। प[17]र्शुः स्पृशतेः। स हि संस्पृष्टा[18] पृष्ठदेशेन। त[19]त्र त्वमप्यस्मात् पृष्ठदेशमित्यपवादे द्वितीयाया अर्थासम्भवात्। पृष्ठमपि स्पृशते देव। तद्धि संस्पृष्ट[20]मङ्गैः। अङ्ग[21]मङ्गनादञ्जनाद्वा। अङ्कनलक्षणमञ्जनमङ्गम्। अङ्क्यते हि तेन लक्ष्यते गतश्च न[22]च[23]कापि।

श्रोणिः श्रोणतेर्गतिचलनकर्मणः। गतेः सम्बन्धि ये[24]न कृतं चलनं गतिचलादिना द्र[25]ष्टव्यम्। अर्थसम[26]न्वयं दर्शयति-श्रोणिश्चलतीव गच्छतः पशोः पुरुषस्य वा। दोः बाहुः। स शिताम भवति। अङ्गे श्रितत्वात्। श्रितशब्दस्य पृषोद[27]रादित्वाद् रेफस्य लोपः। तद[28]न्त्यस्य दीर्घत्वम् मकारश्चोपजनः। दोष्णश्च शितामत्वे उक्ता युक्तिः। दोः द्र[29]वतेः गत्यर्थस्य। पादाभ्यामिव बा[30]हुभ्यां वि पशुर्गच्छति।

---

१–०पोटीय० C. २–गुदमित्यर्थः B.
३–अत्र 'यकृन्मांसं' इति पाठो युक्तो भवेत्।
४–मसं C. अयमपि पाठः B.
५–स्रुचौ C. ६–[ अनुपलब्धमूलमिदं वचनम् ]
७–मूले 'करत' इति पाठः। कदाचिदयं तस्यार्थः स्यात्। परं तथा सति 'अग्नीषोमौ' इति कर्तृपदस्य द्विवचनान्तत्वात् 'कुरुताम्' इति प्रथमस्य द्विवचनान्त एव पाठः साधीयान् स्यात्।
८–चैतद० C. ९–काष्ठाम् B.
१०–सेवताम C. ११–०त्यं तं ह० B.
१२–यिल० C.
१३–मयंग C. १४–पशूनां C.
१५–०त्येव B. १६–पशु B. C.
१७–पशु C.
१८–अत्र 'संस्पृष्टा' इति युक्तः पाठः।
१९–तह B.
२०–०त्याप० C. 'इत्यपपाठः' इति पाठो युक्तः।
२१–संसृष्ट० C. अयमपि पाठः B.
२२–मङ्गना० C. २३–नचताये B.
२४–तत् C. २५–०दिना हि द्रष्टव्यः C.
२६ समसयान् द० C.
२७–[ cf. पा० ६।३।१०९ ] वृषोद C.
२८–ह्रस्वस्य C. २९–[ धा० १।९९२ ]
३०–अत्र बाहुभ्यामपि' इति पाठो युक्तः।

योनिः शिताम इति शाकपूणिः। गुदोऽत्र योनिरुच्यत इत्युक्तम् । स हि विपितः[1] । 'विषृ[2] बन्धने' । विविधं सितो बद्धो भवति । गुदो हि पुरीषोत्सर्गवेलायां विकसति । संकुचत्यन्यदा । न च विविधं बद्धस्य विकसनमुपपद्यते[3] । सितशब्दस्य[4] सकारस्य शकारः । तशब्दस्य दीर्घत्वम् । मकारश्चोपजनः । पृषोदरादित्वात्[5] ।

श्यामतो यकृत इति तैटीकिः[6] । श्यामशब्दस्य यकारस्य सम्प्रसारणम् । ताशब्दश्चागमः । यकृत्त[7] इत्यर्थः । प्रतार्थवचनम् । श्यामकृत एव कालेयकाख्यम् । अवदानविधानात्[8] । तैटीकिराचार्यः[9] । श्यायतेरित्यर्थस्य । तद्धि गतं द्वाभ्यां वर्णाभ्यां[10] शुक्लेन च कृष्णेन च । शुक्लकृष्णसम्पर्कात् श्यामस्योपजायमानत्वात्[11] । यकृद्यथा कथा च । यथाकथञ्चिन्मृदुत्वादक्लेशेनैव[12] कृत्यते छिद्यत इत्यर्थः ।

शितिमांसतो मेदस्त इति गालवः[13] । शितिशब्दः श्वेतवर्णवचनः[14] । तस्येकारस्याकारः[15] । मांस इत्यस्यापि आकारस्य[16] ह्रस्वत्व अनुनासिक 'स'शब्दलोपः[17] शितामतः मेदस्त इत्यर्थप्राप्तवचनम्[18] । तद्धि श्वेतस्यां सं गालव आचार्य [19]ते । शितिः श्यतेः तनूकरणार्थस्य । कृष्णादिभ्यो हि तनुरिव शुक्लवर्णः[20] । मांसं माननं वा । तेन हि मन्यतेऽतिथ्यादि[21][22] । मानसं वा मन[23] इति । प्रसन्नचेतसो हि पुरुषस्य[24] तदुपचीयते नोद्विग्नस्य । मनोऽस्मिन् सीदतीति वा । मांसे हि मनः प्रायेण सर्वस्य सीदति भक्षयेयमेतदिति । मेदो मेद्यतेः । मेद्यतिः स्नेहार्थः[25] । स्निग्धं हि तत् । एवमनवगताभिधेयोऽनवगतसंस्कारोऽनेकार्थश्च[26] । एवश्चानेकप्रकारमनवगतं पदजात्यभिधेयविभागाध्याहारः[27] कृतो द्रष्टव्यः ।

---

१–विपतः C. २–[ धा० ५।२ ] विड् C.

३–०सदुप० B.

४–सित इति द्विर्लिखितम B. C.

५–[ cf. पा० ६।३।१०९ ] पृष्ठोद० C.

६–तैकं C. ७–यं कृत्त C. अयमपि पाठः B.

८–दवदान C. ९–रि इति त्रुटितम् C.

१०–पर्णाभ्यां C. ११–०कांद्ध्यामस्यौप० C.

१२–० थं चि मृदु C. १३–शालवः C.

१४–०ब्दश्वेत० C. १५–स्योकारः B.

१६–व्याकरस्य C. व्याकरणस्य प्रवत्रः B.

१७–आदर्शपुस्तकेषु 'स' इति नास्ति । अर्थानुसारित्वादस्माभिरेवात्र निवेशितः । मांस शब्दे अनुनासिककस्य सशब्दस्य च लोप इत्यर्थः । अन्यथा 'शितामत' इति रूपाव्युत्पत्तेः

१८ ००र्थः प्रा० B. C.

१९–'आचार्यो मन्यते' इति पाठोऽत्र स्यात् ।

२०–०क्लेन० C.

२१–मन्यते B. C.

२२–०तिथ्यादि C.

२३–अत्र 'मन' इत्यधिकं भाति ।

२४–०स्येति B. ०स्य ति C. अत्र 'इति' इति 'ति' इति वाऽधिक एव पाठः ।

२५–'न हार्थः, इत्येव C.

२६–एवमयनवगत्वान्वभिधेयेनवगतसंस्कारानेकार्थश्च C.

२७–०भागध्या० C.

तत्र किञ्चिदुदाहरणानि प्रदर्शयामः—

तत्रार्थानवगतत्वे उदाहरणम्-त्वे[1] इति । इदं हि नामत्वेन चोपन्यासात् पद-जात्यनवगतं केचिन्नामत्वेन प्रतियन्ति । अन्ये निपात इति पूर्वे[2] विचारितम् ।

अभिधेयानवगतम् । शिताम योनिमिति । अभिधेयविप्रतिपत्तेः ।

तथा पदविभागानवगतम् । मेहना इति ।

अध्याहारानवगतम् । दमूना इति । दानम[3]ना इत्यध्याहारात् ।

तथा क्रमानवगतम् । यत्रान्यस्यावसरेऽन्यो वर्णः प्रयुज्यते । 'उभयाहस्त्या भर[4]' । 'समृवृनातेवानु मा गृहाय[5]' इति वर्णव्यापत्तीरनवगमः ।

तथा स्वरानवगतम् । 'वने न वा यो[6]' इति ।

तथा विक्षेपानवगतम् । 'द्यावा नः पृथिवी इमम्[7]' 'इन्द्रा नु पूषणा वयं[8]' अनानुपूर्व्य-संहिता शुनै[9]श्चिच्छेदादि द्रष्टव्यम् ।

गुणानवगत[10]म् 'कुविदङ्गी करूलती[11]'त्यादि । यत्रैतच्छब्दो[12]द् व्याख्यागुण पर्याव[13]-गतः । संस्कारान्यद[14]यज्ञहेति ।

व्यवधानानवगतम् 'वायुः पूषा स्वस्तये नियुत्वान्[15]' । तथा हि दर्शयति 'वायुश्च नियुत्वा[16]न्' इत्यादिना ।

तथा क्वचिदेकस्यानेकत्वं क्रियते । 'ततो वयः प्र पतान् पूरुषा[17]दः' इति पुरुषा-[18]दनाय ।

क्वचिच्चानेकमप्येकम् । 'चकार गर्भं सनितुर्निधानम्[19]' । गर्भनिधानमिति ।

क्वचित् प्रसिद्धाख्यातार्थासम्भवादन्यथा निरुच्यते । 'विश्वेदिन्द्रस्य भक्षत[20]' इति भक्षयत्यर्थासम्भवात् [21]भजेर्निरुच्यते ।

---

१–त्व B. २–[ निरु० १।७,९ ]
३–मना इति त्रुटितम् C.
४–[ ऋ० ५।३९।१॥ निरु० ४।४ ] हस्ताभ्या C.
५–[ अनुपलब्धमूलमिदं वचनम् ]
६–[ ऋ० १०।२९।१॥ निरु० ६।२८ ]
७–[ ऋ० २।४१।२०॥ तै० सं० ४।१।११।४ निरु० ९।३८ ]
८–[ ऋ० ६।५७।१ ]
९–शुन० C. १०–वदतम् C.
११–[ निरु० ६।३० ] कुविदंति करूल० C. 'किविदंती' इति पाठो युक्तः ।
१२–०च्छाद् C.
१३–०वादव० C. अयमपि पाठः B.
१४–'न्य' त्रुटितम् C. १५–[ ऋ० ७।३९।२ ]
१६–[ निरु० ५।२८ ]
१७–वय प्रवत, ( ता C. ) त पुरुषाद B. C. [ ऋ० १०।२७।२२ ]
१८–'पुरुषानदनाय' इति वा पाठः स्यात् ।
१९–[ ऋ० ३।३१।२ ] २०–[ ऋ० ८।९९।३ ]
२१–'भजेत्' त्रुटितम् B.

क्वचिच्च नैवैवाख्यातं[1] क्रियते। 'अग्निर्वेरुथं मम तस्य चाकन्'[2]। आख्यातं येन 'आ तो भर सुवितं[3] यस्य चाकन्'[4] इति। यद्वृत्तसंबन्धान्निघातप्रतिषेधे[5] सत्युदात्तश्रुतिर्भवति[6]। तेन कामयता कामयत इत्यर्थः। सोऽयं पदान्तरसम्बन्धसामर्थ्यापेक्षोऽनेकविकल्पावगमः प्रदर्शनीयः। तथा चोक्तम् 'अर्थनित्यः संस्कारमाद्रियेत'[7] इति।

मेहना इति आचार्यविप्रतिपत्तेः। मिहोऽनवगतम्[8]। एकमिति शाकल्यः। त्रीणीति[9][10] गार्ग्यः। तां च विप्रतिपत्तिमुदाहरणेनैव दर्शति।

[ इति नवमस्या-( चतुर्थस्या-) ध्यायस्य
तृतीयः खण्डः।[11] ]

---

१–नैमैवा॰ C.
२–[ ऋ० १।१४८।२ ] चाकन् B.
३–सुवितं C.
४–[ अनुपलब्धमूलमिदं वचनम् ]
५–यद्वृत्त C.
६–नियात B.
७–[ निरु० २।१ ]
८–'स' त्रुटितम् C.
९–त्रिणी॰ C.
१०–'इति' नास्ति B.
११–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति।

# [ अथ चतुर्थः खण्डः ।[1] ]

यदिन्द्र[2] चित्र[3] मेहनास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर[3] ॥

अत्रेर्भौमस्येयम् । यत्[4] हे इन्द्र चित्रं चायनीयं पूज्यम्[5] । मेहना मंहतेः[6] दानकर्मणः । अकारस्य एकारः । अनुस्वारलोपश्च । शाकल्यपक्षे मंहनीयं दानार्हम् । अस्ति तुभ्य[7] । छन्दोगानां तु मेहना शब्दे[8] नैवास्ति । 'यदिन्द्र चित्र मेहनास्ति' इत्येवंरूपः पाठः । तेषां चित्र म इह नास्तीत्येषां पदानां पञ्चानां[9] मेह[10] न इत्येवं रूपाणि मध्यानि पदानि । यन्मे मम गृहे नास्तीत्यर्थः । परार्थं[11] वा प्रार्थ्यते । असद्धेत्यर्थिधर्म[12]प्रसङ्गेन चेदमस्या ऋषेः[13] शाखान्तरे वेदान्तरे वाऽधीतस्या अवयवस्य च[14] व्याख्यानं द्रष्टव्यम् । त्वादातं[15] कृत्यार्थे प्रत्ययः । यद्देयं[16] त्वया स्तोतृभ्यो यष्टृभ्यश्च दातुं संकल्पितमित्यर्थः । हे अद्रिवः । अद्रिः[17] ग्रावा तद्धि[18]काराद्वा दादरणाद्वा[19] । वज्रोऽत्राद्रिरुच्यते[20] तेन तद्वता । राधो धनम् । तन्नः अस्मदर्थमस्मभ्यं दातुमित्यर्थः । हे[21] विदद्वसः-विन्दति लभते वसूनि[22] धनानि यः विद्वसुः[23] धनानां लब्धा तस्येदं[24] सम्बोधनम् । उभयाहस्ति द्विदण्ड्यादि[25]रयम् । उभाभ्यां हस्ताभ्यामित्यर्थः[26] । आभर-आभर प्रभूतमित्यर्थः ।

अद्रिः[27] आदृणाति विदारयति अनेन सोममिदं गदादि वा । अपि[28] वार्त्तेः[29] स्याद् भक्षणार्थस्य । अद्रयो[30] ह्यभिषवकाले सोममदन्ति । तथाच मन्त्रेऽपि 'सोमादो[31]'.

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो नास्ति ।
२–चित्रं B.
३–[ ऋ० ५।३९।१ ] 'यदिन्द्र चित्र (त्रं B.)' इत्येव प्रतीकम् B. C.
४–येत् C. ५–चित्र चायनीयः पूज्य C.
६–[ निघ० ३।२० ] 'मंहतेः' इति पाठो युक्तः स्यात् ।
७–तव C.
८–अत्र 'शब्दो' इति पाठो युक्तो भवेत् ।
९–पञ्चानां पदानां C.
१०–महान B. अत्र 'मे इह न' इति युक्तो स्यात् ।
११–परार्थ्य C.
१२–धर्मः प्र० C.
१३–ऋषयः B. ऋषयः C.
१४–अत्र 'वा' इति 'च' इति वा पाठो युक्तः ।
१५–द्वादातं B. C. १६–यदेयं B.
१७–अद्रि B. १८–०कारद्वा C.
१९–'आदारणाद्वा' इति पाठो युक्तः स्यात् ।
२०–ऽत्राद्रिरु० C. २१–'हे' इति नास्ति B.
२२–'वसू' इति त्रुटितम् C. २३–०द्वसुः C.
२४–तेस्यदं C.
२५–[ cf. पा० ५।४।१२८ ]
२६–भ्यामीत्य० C.
२७–आदटात्रिः B. २८–अवि C.
२९–'अत्तेः' इतिः पाठो युक्तः ।
३०–अद्रियो B. ३१–[ ऋ० १०।९४।९ ]

इत्येस्मि[1] । सोमादनमेषां विज्ञायते । अयं च मन्त्रः पुरस्तात् 'अंशुं दुहन्तोऽध्यासते[2] गवि । इत्याधिषवणचर्मणः'[3] इत्यत्र व्याख्यातः[4] ।

गध इति धननाम । किमर्थमेतदुच्यते पठितमेवं ह्येतदुच्यते[5] प्रसङ्गेन निर्वचनप्रदर्शनार्थम् । राध्नुवन्ति[6] साधयन्ति एतेन धर्मादीन् पुरुषार्थानिति । तन्नस्त्वं वित्तधन लब्धधनेत्यर्थः । उभौसमुपलब्धौ[7] भवतः । 'उभ उम्भ पूरणे'[8] । संपूरितौ परस्परेण । उभशब्दस्य वि[9] द्विगतं साहित्य मित्यर्थः । यो यश्च साहित्यसंपूरितौ परस्परेण भवतः ।

दमूना इत्यनवगतम्[10] । संस्कारगुणादिव्युत्पत्तेः । मेखनसीति । अनेकार्थश्च । दमे मनो यस्य स दमूना अक्रूर इत्यर्थः । अथवा दाने मनो यस्य सः । अथवा दान्तेषु शीलवत्सु पुरुषेषु[11] । दान्तं वा मनो यस्य सः । अपि वा दम इति गृहनाम । सामर्थ्याच्चात्र यजमानगृहे वर्तते । तस्मिन्[12] दमेदं (?) गृहमिति । एवं मनो[13] यस्य स दमूनाः । सर्वेष्वेतेषु वर्णानां लोपविकारौ दर्शयितव्यौ । मनो मनोतेः बोधनार्थस्य । तेन हि सर्वं बुध्यते । निगमः ।

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य
चतुर्थः खण्डः ।[14] ]

---

१–अत्र 'इत्यस्ति' पाठो युक्तो भवेत् ।
२–ध्यासेते B. C.
३–[ निरु० २।५ ] ४–व्याख्यातम् B.
५–अत्र 'मेवं ह्येत' इति द्विर्लिखितम् B. C.
६–राध्नव० B.
७–मूले 'समुब्धौ' इति पाठः ।
८–[ धा० ६।३२। ]
९–'वि' इत्यधिकं भाति । १०–गतः C.
११–'षु' इति त्रुटितम् C.
१२–निस्मिन् C. १३–एव ममनो य० C.
१४–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ पञ्चमः खण्डः ][1]

जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुप याहि विद्वान्।
विश्वा अग्ने अभियुजो विहत्या शत्रूयतामा भरा[2] भोजनानि ॥

वसुश्रुतस्यात्रेयस्य। अत्रैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ[3]। यस्त्वं जुष्टः सेवितः[4] सर्वेण प्रियो वा सर्वस्य। दमूनाः यथोक्तमर्थः अतिथिः अतिथिस्थानीयश्च। सायं प्रातश्चाग्निहोत्रिणां दुरोणे[5] गृहेऽस्मदीये[6]। इमं[7] नोऽस्माकं स्वभूतं यज्ञमुपयाहि उपगच्छ। विद्वान् जानन् स्वमधिकारं भक्ततां वाऽस्माकम्। उपगम्य च विश्वाः सर्वाः हे अग्ने अभियुजः स्त्रीलिङ्गनिर्देशादभियोक्त्री[8]रस्मच्छत्रुसेना इत्यर्थः[9]। विहत्या[10] विविधं हत्वा शत्रूयतां येऽस्माकमिच्छन्ति तेषां स्वभूतानि आभर[11] आहर भोजनानि अन्नानि। अथवा भोजनमिति धनना[12]म धनानि।

अतिथिरभ्यतितो[13] गृहान्[14] भवति। अततिर्गतिकर्मा[15] अभिगतो हि स नूनं निवासं[16] गृहाण्य[17]तिथिः। अभ्येति तिथिषु वा कुलानि। अभ्येति तिथिषु[18] सुष्ठु गच्छन्ती[19]त्यर्थः। अतिथिर्हि यावद् गन्तव्यं तावद् योति[20] परकुलानीति। तिथिषु सर्वासु दाशुपादाय[21] निहत्यान्येषां बलानि इत्यादिना तयोरर्थविवरणम्।

मूष इत्यनवगतम्। मुषेः क्विपि दीर्घत्वं द्रष्टव्यम्। मुष्णन्तीति मुषः मूषिका इत्यर्थावगमश्च। औणादिके[22] तनिप्रत्यये मुषये[23] दीर्घश्चेति। मूषिकाः पुनर्मुष्णातेः। ता हि सुस्वापिते[24]र्मपि हरन्ति। तथाचायं मूषोऽप्येतस्मादेव धातोस्तथोक्तः। निगमः।

[ इति नवमस्या-( चतुर्थस्या-) ध्यायस्य
पञ्चमः खण्डः।[1] ]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भसमाप्तिनिर्देशो न दृश्यते।
२–[ ऋ० ५।४।५ ] 'जुष्टो दमूनाः' इत्येव प्रतीकम् B. C.
३–'व' त्रुटितम् C.
४–सवित. B.
५–दूरेणे C.
६–०स्मादी० C.
७–'इम' नास्ति B.
८–०व्योक्त्रर० C.
९–अभीत्यर्थः B.
१०–विहत्य विविध हेत्वा C.
११–आभर C.
१२–धनानाम C.
१३–०भ्यततो C.
१४–गृगन् C.
१५–[ धा० १।३८ ] अतनिर्ग० C.
१६–'निवासगृहाणि' इति समस्तपाठो युक्तःस्यात्।
१७–०हानति० B.
१८–तिथिति C.
१९–'गच्छतीत्यर्थः' इति पाठो युक्तः।
२०–'याति' इति पाठो युक्तः। योतति B.
२१–'इत्यादावुपादाय' इति 'इत्याद्युपादाय' इति वात्र पाठः स्यात्।
२२–[ उणा० २।४२ ] 'किकनि प्रत्यये' इति पाठो युक्तः।
२३–'मुषेः' इति पाठो युक्तः।
२४–०मवि C.

न्यार्थम[1]। किञ्च वितं 'विद ज्ञाने[2]' श्रवणेन च यज्ज्ञानं[3] तदिहाभिप्रेतं शृणुतमित्यर्थः। मे मत। अत्र द्वितीयार्थे षष्ठयेषा इदं स्तोत्रमित्यर्थः। अथवा अस्येति दुःखं प्रतिनिर्दिश्यते[4]। इदं कूपपात[5]कृतं दुःखं[6] मम जानीत[7]मिति। उत्तरेणार्थश्चेदमुच्यते। श्रुत्वा स्तोत्रं ज्ञात्वा वा दुःखमुच्चारणम[8]। अस्मात् कूपादित्यर्थः। हे रोदसी द्यावापृथिवी[9]।

स्वाङ्गेत्यादि। स्वाङ्गं प्रजननं तत्सदृशं वा। पुंप्रजननमपि हि तिर्यञ्चो विहङ्गो (?) दृश्यन्ते। त्रितं कूपेऽवहितं पतितं[10] मित्यर्थः। एतत्सूक्तं[11] यत्रेयमृक् प्रतिबभौ प्रतिभातम्। त्रितस्य कूपे पतितस्येदं सूक्त[12]मार्षमित्यर्थः। तत् कतमत्? 'चन्द्रमा अप्स्वन्तरा[13]' इति। तत्रेत्यादि। पुरावृत्तमितिहासस्तेन मिश्रम्। 'त्रितः[14] कूपेऽवहितो देवान् हवत[15] ऊतये। तच्छुश्राव[16] बृहस्पतिः[17]' इत्यादिना। त्रितं[18] चात्र कल्पान्तरे य आसीत् सोऽत्राभिप्रेतः। आत्मनो वा परोक्षरूपेण प्रतिनिर्देशः।

ऋङ्मिश्रम्। ऋक्छब्देन सामान्यशब्देनापि सामर्थ्यात् परिदेवनार्था ऋच इहोच्यन्ते। गाथामिश्रम्। 'अरुणो मा सकृत्[19]' इत्यादिभिर्गायन्ति स्तुवन्ति[20] याभिस्ता गाथाः[21] केवलाः स्तुत्यर्था ऋचः, ताभि[22]र्मिश्रम्। 'चन्द्रमा अप्स्वन्तरा[23]' इत्यादिभिस्तत्तु मनाक् स्तुतिं प्रदर्शयामः। निरुक्ते प्रदर्शितत्वाच्च[24]। चन्द्रमा अप्स्वन्तोऽपां मध्ये स्थित इति वाक्यशेषः। अभ्रमण्डले स्थित इत्यर्थः। सुवर्ण इति। रश्मीनां[25] सुपुम्नाख्यो हि सूर्यरश्मिश्चन्द्रमाः। अन्तर्णी[26]तमत्वर्थो वा सुवर्णशब्दः। सुषुम्नरश्मि[27]र्धान् आधावते दीपति।

त्रितस्तीर्णतमः प्रकृष्टं तप इत्यर्थः। केन? मेधया। आसीद् भ्रात्रोः सकाशात्। अपि वा संख्य[28]निमित्तमेवेदं नामाभिप्रेतं स्यात्। एते हि भ्रातर एतेन क्रमेण एकतो द्वितस्त्रित इति त्रयो बभूवुः। तथाहि ब्राह्मणम्। 'सोऽङ्गारेणापोऽभ्यपातयत्[29] तत एकतोऽजायत, स द्वितीयमभ्यपातयत् ततो द्वितः, स तृतीयं ततस्त्रित इति[30]'। नित्यपक्षे त्रितो नाम शुक्लशब्द-

---

१–न्यायम C. २–[ धा० २।५५ ]
३–यत् नास्ति B. ४–निर्दिश्यते C.
५–पात इति त्रुटितम् B.
६–दुःखं इति त्रुटितम् B.
७–त इति त्रुटितम् C. ८–नम् B.
९–द्यावापृथिवी इति द्विर्लिखितम् C.
१०–त इति त्रुटितम् B. C. ११–सूत्रं B.
१२–०मारिषमि० C. १३–[ ऋ० १।१०५।१ ]
१४–तितत् B. तितः C. १५–नवत B.
१६–नच्चुश्राव C. १७–[ ऋ० १।१०५।१७ ]
१८–'त्रितश्चात्र' इति पाठो युक्तो भवेत्।
१९–[ ऋ० १।१०५।१८ ]
२०–गायन्तीः स्तुवन्तीः B. गायन्ती स्तुयन्ती C.
२१–गाडाः C. २२–तभि C.
२३–[ऋ० १।१०५।१] २४–च इति नास्ति C.
२५–०नाम C. २६–०र्णीत० C.
२७–०रश्मिमान् B. C.
२८–'संख्यानिमित्तम्' इति पाठो युक्तो भवेत्।
२९–भ्यपातयन् B. C.
३०–[ cf. तै० ब्रा० ३।२।८।१ | मै० सं० ४।१।९ ]

लक्षणः कर्मपाशैस्त्रिः स्वर्गनरकमर्त्येषु बुद्धः[1] कश्चित् क्षेत्रज्ञः। कर्मज्ञानसमुच्चयाभावादपवर्गमवाप्नुवन् नरके घटितयन्त्र[3] घटित संसारे बम्भ्रम्यमाणः परिदेवयाञ्चक्रे। सन्तापयन्ति मां पुनर्मातुरुदरे मग्नमशुचिप्रस्तरके पुरीषतन्तुजालये यकृल्लोमावष्टम्भादेर्विभक्तोच्छ्वासो[2] बीभत्समानमसृक्पङ्कमध्यशायिनं तमसि निरालोके संवर्तमानमभितो[4] मातुः पर्शव[5] इव तलस्थस्य च मूत्रो न शिश्ना व्यदन्ति माध्यः सम्यग्दर्शनविरयाः कामा असम्पद्यमानाः। परं समानयोजनम्।

इषिर इत्यनवगतम्। उदाहरणे मनसा समाना[6]धिकरण्यदर्शनात् मनो[7]विशेषणमेतत् इत्यभिधेयप्रतीतेर्लिङ्ग[8]मेवैवोपक्रमते।

[ इति नवमस्या-( चतुर्थस्या-)[9] ध्यायस्य
षष्ठः खण्डः। ]

---

१–अत्र 'बद्धः' इति पाठो युक्तो भवेत्।

३–अत्र 'घटीयन्त्रवद् घटिते' इति युक्तः पाठो भवेत्। B. पुस्तके 'संसारे' इति पदं नास्ति। 'नरके' इति विशेष्यपदेऽस्यानावश्यकत्वमपि। अथवा 'घटीयन्त्रे घटीव संसारे' इति पाठः स्यात्।

२–०त्तोच्छ्वासः C.

४–संवर्तमानम् इति पाठो युक्तः।

५–'पर्शवः' इति पाठो युक्तः।

६–सामाना० C.  ७–०नोविशे० B.

८–०र्लिंग० C.  ९–नारत्यादर्शपुस्तकेषु।

# [ अथ सप्तमः खण्डः । ][1]

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः ।

सोम राजन् प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ॥[2]

प्रगाथस्यार्थम् । इषिरे[3]णेति ईषते[4]र्गतिकर्मणः । इषेर्वा[5] इच्छार्थस्य 'इषिमदिमुदि-[6]खिर्दी' स्त्रौणा[7]दिकरप्रत्ययान्तस्य । ऋ[8]षेर्वा दर्शनार्थस्य रूपम् । गतेन त्वां प्रति त्वद्-ध्यानपरेणेत्यर्थः । पवि[9]त्रापि त्वत्साध्यस्य फलस्य द्रव्यं[10] वा सर्वार्थानाम् । तद् भाष्यकार आह । ईषणेन वैपणेन वार्पणेन वेति । केन ? मनसा । ते तव । सुतस्येति द्वितीयार्थे षष्ठी । त्वां सुतं भक्षीमहि नित्य भजेमहि । त्वया सुतेन नित्यं यजेमेत्यर्थः । अथवा भक्षीमहीति भक्षयते[11] रूपं [12]न भजते[13]ः । उत सुतस्येति षष्ठीश्रुतेरेकदेशमिति शेषः । सुत[14]स्यैकदेशं स्वांशलक्षणं भक्षयेम । । पित्र्य[15]स्येव रायः । अत्रापि द्वितीयार्थे षष्ठी । षष्ठी-श्रुतेर्वा एकदेशमिति शेषः । पितुरागतं पित्र्यं पित्र्यमिव धनं पित्र्यस्ये[16]व धनस्यै[17]कदेशं स्वांशलक्षणं पुत्रः ।

किञ्च हे सोम राजन् नः अस्माकमायूंषि प्रता[18]रीः तेरेति[19]र्वृद्ध्यर्थः प्रवर्धय । किमिव ? उच्यते । अहानीव सूर्यः । कतमानि ? उच्यते । वासराणि । अह्नामेतद् विशेषणं नाह्नाम अहानीत्यनेन पौनरुक्त्यप्रसङ्गात् । वेसरशब्दस्य चायमेकारस्याका[20]रश्छान्दसः । साद्-दृश्येन च विशेषणं वेसर[21]सदृशानि । कतमानि पुनस्तानि वा सन्ति कानि तानि हि या वेसरो ( ? ) निष्पादकगताभ्यां विरुद्धाभ्यां जातिभ्यामश्वजात्या च सम्बन्धः । एवं यौव[22]हौ निष्पादकौ पूर्वभागापरभागौ तद्गताभ्यां विरुद्धाभ्यां पूर्वभागगतेन चोष्णेन च सम्बन्धाद् वेसरसदृशानि ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० ८।४८।७ ] 'इषिरेण त' इत्येव प्रतीकम् B. C.
३–इषरेणति C. ४–[ cf. निघ० २।१४ ]
५–[ cf. धा० ६।५९ ]
६–[ cf. उणा० १।५२ ] 'र' नास्ति C. 'खिदी' इति युक्तम् ।
७–०नादि० C.
८–धातुपाठे नास्त्ययं धातुरेतस्मिन्नर्थे । [cf. धा० ६।७ तत्रायं गत्यर्थः ]
९–०त्रापि C. १०–द्रव्या C.
११–[ धा० १०।२२ ] १२–न इति त्रुटितम् B.
१३–[ धा० १,१०४७ ] १४–असुतस्य B.
१५–०स्येपरा० C. १६–०स्येवा C.
१७–०स्येकदे० C. १८–प्रतारीः C.
१९–[ धा० १।९६९ ] अयं प्लवनतरणयोरेव । तरतिरन्यो नास्त्येव ।
२०–०कतर० B. C. २१–र इति त्रुटितम् C.
२२–०वहौ B.

अथवा वासराणीति[1] वासयते[2] रूपम् । वासयतिश्चात्र शुद्धोऽपि विशुद्धस्यार्थे । तद् भाष्यकार आह विवासनानीति[3] वा । सन्ति कानि ह्यहानि[4] विवासनानि शीतकालस्यापनायना[5]नीत्यर्थः । गमनानीति वा अर्थवचनमेतत् । रूपं तु सर्त्तोर्द्विपूर्वस्य[6] गत्यर्थस्य । वी[7]त्यस्येकारस्याकारः । विविधं सराणि विविधं सृतानि विस्तीर्णानीत्यर्थः ।

कुरुतनेत्यभाषिकत्वादनवगतम् । लोण्मध्यमपुरुषबहुवचनस्य । तात् 'तप्तनप्तनथना[8]श्च' इति छान्दसस्तनादेशः । तत्र तशब्द एवार्थवान् नशब्दस्त्वनर्थकः । उपजनश्चात्र विकरणो धातुर्वा तन्त्रमित्यस्य प्रतिपादनार्थमाह । कर्तन हन्तन यातनेति । अनर्थका उपजना भवन्तीति बहुवचनं भाष्ये । आद्येष्वेवंरूप उपजनाः सन्तीत्यस्य प्रतिपादनार्थम् । यथाक् चोयक्[9] 'भत्याशयत्वेद् विभजस्व वेद[10]' इति । 'आज्जसेरसुक्[11]' ब्राह्मणासः सोम्यास इत्यादयः ।

कुरुतनेत्यादीनां निगमाः प्राचुर्याद् भाष्यकारेण न प्रदर्शिताः । अतः प्रदर्श्यन्ते । कुरुतनेत्यस्य तावत् ।

एता हि नो मरुतो अरातीर्जिघांसन्ते शवसा मघानि ।
विश्वास्तन्वो रेषणाय दध्रेऽभिप्रेणाहनसा कुरुतना ता[10] ॥

एता इत्यस्यार्थो[12]ऽन्येतच्छब्देन सम्बन्धयितव्यः । ता एताः । हिशब्दो यस्मादर्थे यस्मादेता नः अस्माकं हे मरुतः, अरातीः शत्रु-सेनाः । जिघांसन्ते हन्तुमिच्छन्ति । शवसा बलेन स्वेन । मघानि मघादीनि । विश्वाः सर्वाश्चात्मीयाः तन्वः शरीराणि रेषणाय हिंसायै अस्माकं दध्रे धारयन्ति । यस्मादिति वचनात् तस्मादित्यध्याहार्यम्[13] । कस्मात् अभिप्रेण[14] पापेन[15] भयानिकेत[16] आहनसा आननकेन गदया[17] अन्येन वा केनचित् कुरुत संगत[18] इति शेषः । करोतिरेव वा सामर्थ्याद् वधार्थः, हत ।

---

१–रा इति त्रुटितम् C.
२–[ cf. धा० १०।२०४,३५२ ]
३–वीवास० C. ४–व्यह्वानि C.
५–ना इति त्रुटितम् D.
६–अत्र 'सर्त्तेर्विपूर्वस्य' इत्यर्थानुसारी पाठो युक्तो भाति ।
७–वीन्यसेका C.
८–[ पा० ७।१।४५ ] ०नथनादरोदि: B. नवनान्छेदि B. अत्र सूत्रादौ 'तात्' इत्यनर्थकमधिकं भाति ।
९–यथा चोयक् B. अत्र 'यथा चेयक्' इति पाठो युक्तो भवेत् ।
१०–[ अनुपलब्धमूलमिदं वचनम् ]
११–[ पा० ७।१।५० ]
१२–अत्र 'अन्य' इति पाठो युक्तो भवेत् ।
१३–०हार्यः C. १४–इत्रेण C.
१५–वाचेन C.
१६–अत्र 'भयानकेन' इति पाठः स्यात् ।
१७–गतया C.
१८–संगत C.

कर्तनेत्यस्य निगमः—

शुनं सुफाला वितुदन्तु भूमिं शुनं कीनाशा अभि यन्तु वाहैः ।
शुनांसीरा हविषा तोशमाना सुपिप्पला ओषधीः कर्तनास्मे[1] ॥

शुनं सुखमक्लेशेनेत्यर्थः । अस्माकं स्वभूताः फाला विकृषन्तु विलिखन्तु भूमि-[2]मित्येतदाशास्महे । शुनं सुखमेव कीनाशः[3] कीलस्य नाशयितारः कर्षकाः कर्षणार्थमभियन्तु अभिगच्छन्तु क्षेत्रं वाहैः वोढृभि र्महोक्षैः सह । शुनासीरा हे शुनासीरौ शुनो[4] वायुः सीर आदित्यो युवामपि वाय्वादित्यौ । हविषा उदकेन मेदम, उदकेन वृष्टिलक्षणेन । तोशेति-[5]वधकर्मा घ्नन्तौ प्रभूतं वर्षन्तावित्यर्थः । सुपिप्पलाः[6] पिप्पलं[7] फलं सुखफला ओषधीः कर्तन[8] द्विवचनस्य[9] स्थाने व्यत्ययेनेदं बहुवचनम् । कुरुतमस्मै[10] अस्मदर्थम् ।

अथवेदमन्यदा[11] वैदिकमुदाहरणम्—

अध्वर्यवः कर्तना श्रुष्टिमस्मै वने निपूतं वन उन्नयध्वम् ।
जुषाणो हस्त्यमभि वावशे व इन्द्राय सोमं मदिरं जुहोत[12] ॥

गृत्समदस्य । हे अध्वर्यवः कर्तन शुद्धोपि करोतिरत्र संपूर्त्यर्थे संस्कुरुत । श्रुष्टि सुखनामस्वपठितोऽपि[13] श्रुष्टिशब्दः सामर्थ्यात् सुखवचनः[14] सुखम्[15] । कम् ? सोममस्मै अस्ये-न्द्रस्यार्थाय संस्कृत्य वने वनं वृक्षाः । अथवा तोद्धितेनेत्येवमयं[16] वनशब्दस्तद्विकारे द्रष्टव्यः । वनविकारभूते द्रोणकलशे । निपूतं[17] नियमेन शास्त्रलक्षणे तत्पूतं[18] वने वनविकारभूते एव ग्रहचमसादौ[19] उन्नयध्वम् । किञ्च जुषाणो प्रियमाणं[20] हस्त्यं हस्ते भवं सोममस्मै[21] । अभिवावशे 'वश कान्तौ'[22] अभिकामयते इन्द्रः । कस्य हस्त्यम् ? उच्यते । युष्माकम् । एतज्ज्ञात्वा[23] इन्द्राय[24] सोम मदिरं ( मदिर इषिरेणैव तुर्यव्युत्पत्तिः[25] ) मदकरं[26] जुहोत मा विलम्बध्वम् ।

---

१–[cf, वा० सं० १२।६९। मै० सं० २।७।१२। का० सं० १६।१२। ऋ० ४।५७।८। तै० सं० ४।२।५।६। अथ० ३।१७।५] 'शुनं नः फाला.' इत्येव प्रतीकम् B. शुनमन्तः फालाः C.
२–मि इति त्रुटितम B. C. ३–किनाशः C.
४–शुनो C.
५–[ निघण्टौ २।१९ 'नितोशति:' सोपसर्गो वधकर्मसु पठितः । ]
६–सुत्रिप० C. ७–विपल C.
८–कर्णन B. C. ९–विवच० B. C.
१०–अस्मे इति मूले पाठः । ११–०दावैदि० C.
१२–[ ऋ० २।१४।९ ] 'अध्वर्यवः' इत्येव प्रतीकम् B. C. १३–०तोऽवि C.
१४–०चनम् C. १५–तम् B.
१६–तद्विने० B. १७–नितिपूतं ( वे B. ) B. C.
१८–पूत व० B. १९–चामसा० C.
२०–प्रियमाण इति नास्ति B. 'प्रियमाणः' इति स्यात् । २१-सोमत्रेभि० C.
२२–[ धा० २।७० ] पशौ B. वशान्तौ C.
२३–ज्ञार्था C. २४–इन्दिराय D.
२५–अयं कोष्ठकान्तर्गतः पाठः सन्दिग्ध एव ।
२६–०काज्जुहो० C.

हन्तनेत्यस्य निगमः—

यो नो मरुतो अभि दुर्हृणायुस्तिरश्चित्तानि वसवो जिघांसति ।

द्रुहः पाशान् प्रति स मुचीष्ट तपिष्ठेन हन्मना हन्तना तम् ॥[1]

अस्माकं हे मरुतः अभीत्ययं जिघांसतीत्येतेन[2] सम्बध्यते । दुर्हृणायुः-हृणिः क्रोधः कुत्सितो हृणिर्दुर्हृणिर्वैरानुबन्धिनी[3] प्रणयपूर्वं इत्यभिप्रायः[4] । तं यच्छति येद्वा स दुर्हृणायुः । 'तिरोऽन्तर्धौ'[6] इत्येवमस्य गतिना[7] । गतीनां च क्रियासम्बन्धात् क्रियाशब्दोऽत्राध्याहार्यः[8] । तिरस्कृतात्मानोऽन्तर्हितानीत्यर्थश्चित्तानि अभिप्रायाः[9] । हे वसवः 'वस आच्छादने'[11] छादयितारः । केन कस्य ? सामर्थ्याद् वृष्ट्या जगतः । कोऽसौ । मरुतः । अभिजिघांसन्ति अभिहन्तुमिच्छन्ति । द्रुहः 'मूलविभुजादिभ्यो'[12] द्रोग्धा पाशान्[13] युष्मदीयान् ।[14] स प्रतिमुचीष्ट प्रतिमुञ्चतु आत्मनि स युष्मदीयैः पाशैर्बध्यतामित्यर्थः । यद्वैष[15] सन्तं तपिष्ठेन[16] अतिशयेन तापयित्रा दुःखयित्रेत्यर्थः । हन्मना अनेन[17] आयुधेन हन्तन हत आ यूयम् ।

को न्वत्र मरुतो मामहे वः प्र यातन सखींरच्छा सखायः ।

मन्मानि चित्रा अपिवातयन्त एषां भूत नवेदा म ऋतानाम्[18] ॥

अगस्त्येन्द्रमरुतां संवादे सूक्ते कयाशुभीये[19] अगस्त्यस्यार्षम् । कः[20] मर्त्यः । नु इति पादपूरणः । अत्र काले आगते । हे मरुत मामहे 'मह पूजायाम्'[21] अत्यर्थं पूजयति । वः युष्मान् न कश्चिदपीत्यभिप्रायः । एतज्ज्ञात्वा प्रयात प्रेतेयत उपेत्येतस्य स्थाने उपयात अस्मानेव सखीन् अच्छ आप्तुं हे सखायः मम स्तुत्येत्यर्थः । उपगम्य च मन्मानि मन्यतेरर्चतिकर्मण[22]

१–[ ऋ० ७।५९।८ ] 'यो नो मरुतः' इत्येव प्रतीकम् B. C.
२–०त्येकेन B. ०त्येकेतन C.
३–०बन्धनी C. ४–०प्रायं C.
५–'यो वा' इति पाठो युक्तः स्यात् । अत्र 'द्वा' इति द्विर्लिखितम् C.
६–[ पा० १।४।७१ ]
७–अत्र 'गतिनाम' इति पाठो युक्तः स्यात् ।
८–या इति त्रुटितम् C.
९–०हिंसतत्यर्थः C.
१०–०प्रायाः C. ११–[ धा० २।१२ ]
१२–'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' [ पात० व्या० महा० ३।२।५ ]
१३–पाशान् C.
१४–सै० B.
१५–यद्वश B.
१६–तविष्ठेन C.
१७–इनेन C.
१८–[ ऋ० १।१६५।१३ ] 'को न्वत्र मरुतः' इत्येव प्रतीकम् B. C.
१९–शुभिये अगस्त्येस्या० C. [ ऋ० १।१६५। ]
२०–कं C.
२१–[ धा० १।७६६ ]
२२–[ निघ० ३।१४ ]

एतद्रूपम्। मननानि स्तोत्राणि हे चित्रा चायनीया[1] अपिवातयन्तः[2] अपिः[3] धात्वर्थानुवादि वात[4]यतिश्च गमयतेरर्थे गमयन्त आत्मानं प्रतिपादयन्तः[5] स्तूयमाना अस्माभिरिति[6] शेषः। एषां भूत भवतेरर्थः[7]। के ? उच्यते। नवेदाः व्यत्ययेनात्रैकवचनं नवेदसः। नवेदा इत्येतच्च[8] मेधाविनामान्यत्र[9]। इह त्वेषां भूतेत्यस्य के भवाम इत्येवमाकाङ्क्षतत्वात् प्रत्यक्षकृतत्वाच्च मन्त्रस्य मेधाविनां मन्त्रः[10] सत्तास्यामन्त्रितत्व प्रसङ्गात् आमन्त्रितस्य च सतो निघातं[11]-प्रसङ्गात् न मेधाविनामेदम्। किन्तर्हि। तत् न न वेत्ति वेत्येव इत्येतस्मिन्नर्थे वर्तते। कुत एतत् ? निपातनात्[12]। वैयाकरणा हि 'नभ्राण्नपान्नवेदानासत्या[13]' इति नवेदःशब्दं* न न वेत्ति वेत्त्येव इत्येतस्मिन्नर्थे निपातयन्तीति[14]। द्वौ प्रतिषेधौ प्रकृतं गमयतः। न ते वेदि[15] कारणम्। वेदानां[16] चानुभवः, एषां भवतामनुभवितार[17] इत्यर्थः। मे मम स्वभूतानां यज्ञानाम्।

जठरमित्येतदनवगत[18]संस्कारम्। 'आ सिञ्चस्व[19] जठरे[20]' इति मन्त्रे सिचि संयोधोपपत्तेः। उदर भवति[21] इत्यभिधेयकथनम्। जग्धं[22] भक्षितमन्नमस्मिन् ध्रियते तिष्ठति धीयते वा प्रक्षिप्यत इत्यक्षरवर्णसामान्यान्निर्वचनम्। निगमः।

[ इति नवमस्या-( चतुर्थस्या-) ध्यायस्य
सप्तमः खण्डः।[23] ]

---

१–चायनिया C. २–०तयन्ति C.

३–अत्र 'अपि धात्वर्थानुवादि' इति 'अपिः धात्वर्थानुवादी' इति वा पाठो युक्तो भाति।

४–पातय० B. वादय० C.

५–प्रतिप्रापयन्तः C. ६–०भिरित्यर्थः C.

७–भवत इति द्विर्लिखितम् B.

८–०तेत्यस्य: B. ९–देत्येव B.

१०–०विनामन सत्ता० C. वस्तुतस्त्वत्र 'मेधाविनाम्नः सतोऽस्याम०' इत्येव पाठो युक्तः।

११–त इति त्रुटितम् C.

१२–निवात० C.

१३–[ Fragment of पा० ६।३।७५ ] नभ्राभ्रपान्नासत्या B. नभ्रान्तभ्रान्नवेदान्नासत्या C.

*–'नवेदःशब्द' इत्युचितम्।

१४–निवात० C.

१५–न च वेदि C. अत्र 'नन वेत्ति कारण' इति पाठो युक्तो भाति। कारणं नेत्त्येवेत्यर्थः।

१६–वेदनां चा० C. अत्र 'वेदना चानुभवः' इत्येव पाठो युक्तः।

१७–अत्र 'भवतामनुभवितार' इति पाठो युक्तो भवेत्। भवतां सम्पद्यमानानामनुष्ठीयमानानां वा यज्ञानां वेत्तार इत्यर्थः।

१८–०मित्यनव० C.

१९–ञ्च इति त्रुटितम् B.

२०–[ ऋ० ३।४७।१ ]

२१–भवति C.

२२–जग्धं C.

२३–आदर्शपुस्तकेऽत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

# [ अथ अष्टमः खण्डः ][1]

मरुत्वाँ इन्द्र वृषभो रणाय पिबा सोममनुष्वधं मदाय ।
आ सिञ्चस्व जठरे मध्व ऊर्मिं त्वं राजासि प्रदिवः सुतानाम् ॥[2]

विश्वामित्रस्य । मरुद्भिस्तद्वान् सहित इत्यर्थः । हे इन्द्र वृषभः प्रत्यक्षकृतोऽयं[3] मन्त्रः । न चेदमामन्त्रितम्[4] । अतो यत्तच्छब्दावध्याहृत्य एकवाक्यत्वं नेयम् । यस्त्वं वर्षिता अपां वृष्टिलक्षणानां संपिब[5] सोमम् । अनुष्वधम् अनुगतं स्वधयाऽन्नेन[6] सवनीयपुरोडाशादि-ना[7] सवनीयपुरोडाशादिसंयुक्तमित्यर्थः । उच्यते । रणाय मदाय-संग्रामार्थो यो[8] मदः संग्रामे जयकरो[9] न संमोहकरस्तदर्थमित्यर्थः । मा चाल्पम्[10] । किं तर्हि ? आसिञ्चस्व क्षारय जठरे मध्वो मधुसदृशस्य स्वादोः सोमस्य ऊर्मिं संघातं बहुसोमं पिबेत्यर्थः । यतस्त्वं राजासि ईशितासि[11] । प्रदिवः पुराणमेतत् । ये पूर्वेऽपि अहस्सु सुतास्ते पुराणास्तेषामपि सुतानां सोमानां न केवलमिदानीन्तनानामेवेति ।

रणाय[12] रमणीयायेति । रमणीयशब्दोऽयोपादानं[13] रणशब्दस्य निर्वचनप्रदर्शनार्थम् । जैत्राय[14] जयतामायेत्यर्थः । अर्थप्राप्तवचनं चेदम् । संग्रामार्थो हि मद इहोक्तः । जयकरश्च[15] मदः संग्रामार्थं भवति न संमोहकरः ।

मधु सोममित्यौपमिकम् । उपमाप्रयुक्तं मधुसादृश्यात् दुरवोद्धा[21] । मधु सोमं मायतेः[22] । विनापि वा[23] शब्देन सोमे मधुशब्दस्य प्रवृत्तिनिमित्तान्तरवचनमेतत् । मायतेर्वा मधु

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० ३।४७।१ ] 'मरुत्वाँ इन्द्र' इत्येव प्रतीकम् B, C.
३–प्रत्यक्षो कृ० C.
४–चेयमा० B.
५–पिबि C.
६–अनुष्टय्यं C.
७–स्वधाया C.
८–यो इति नास्ति B.
९–जयकारः B.
१०–०ल्पं वा C.
११–अत्र 'ऊर्मि' इत्यधिकः पाठः B, राजासामि ईशि C.
१२–अ इति त्रुटितम् C.
१३–अत्र 'ते' इत्यधिकम् B, C.
१४–य इति त्रुटितम् B, C.
१५–य इति त्रुटितम् C.
१६–०ब्दोवादा० C.
१७–अत्र 'जैत्राय' इति पाठः साधुः ।
१८–जयता मां यत्यर्थः B. अत्र 'जयतमायेत्यर्थः' इति 'जयकरायेत्यर्थः' इति वा पाठः साधीयान् भवेत् ।
१९–०यतर० C.
२०–संग्रामा० C.
२१–०दुरवदिः C.
२२–सोममायन्तः C.
२३–वाश० C.

सोममित्यर्थः । 'मद तृप्तौ'[1] तृप्यन्ति हि सोमेन देवताः । इदमपीत[2] मधु माक्षिकं भ्रामरं क्षौद्रमेव[3] वा एतस्मादेव धातोः । तेनापि[4] हि तृप्यन्ति पातारः[5] ।

इति स्कन्दस्वामिकृतायां निरुक्तटीकायां

नवमस्या-(चतुर्थस्या-[6]) ध्यायस्य

प्रथमः पादः ।

---

[ अष्टमश्च खण्डः समाप्तः । ][7]

---

१–[cf. धा० १०।१६५] 'तृप्तियोगे' इति धातुपाठे ।

२–त इति त्रुटितम् C.

३–एव इति नास्ति C.

४–तेनापी C.

५–पातारम् C.

६–चतुर्थस्या इति नास्ति B. C.

७–खण्डसमाप्तिनिर्देशो नास्ति B. C.

# अथ द्वितीयः पादः।

## [ नवमः खण्डः ][1]

तितउ[2] इत्यनवगतम्। परिपवनमभिधेयम्। परिपूयते अनेनेति। यल्लोके चालनमिति [3]असिद्धम्। नच कचित् [4]चर्म कचित् [5]विदलं सर्वथा [6]तेतेन मध्ये [7]तुषैश्छिद्रैस्तिलमात्रैश्च तद्वत् इत्ये[8]तद्गुणसमुच्चयेऽपि किञ्चिद् विवक्षितमनुपात्तापरित्यक्तमनुदिति (?)। [9]ततवद्वा इत्या[10]दयो निर्वचनविकल्पाः। यावत् ततवत् तावत् तितउ। कथमे[11] ? [12]तनोतेर्निष्ठायां मतुपि[13] उपधाया[14] इकारो वकारस्य सम्प्रसारणं [15]परलोपश्च।

एवं तुदेस्तुन्नवत्। अत्राप्युपधेत्वं[16] संयोगस्य च तत्त्वम्। परं पूर्ववत्। तिलमात्रतुन्नमिति[17] वेति[18]। तिलशब्दार्थस्तदितकारोच्छ्रेतशब्देन (?) व्युत्पन्नः परलोपश्च[19]। मयडर्थे[20] बहुव्रीहिः। निगमः —

[ इति नवमस्या-( चतुर्थस्या-) ध्यायस्य

नवमः खण्डः। ][21]

---

१-अयं कोष्ठकान्तर्गतः पाठो नास्ति B. । C. पुस्तके तु पादारम्भोऽपि न निर्दिष्टः।

२-तितउ इत्यस्मात्पूर्वम् 'ओ' इति दृश्यते C.

३-अत्र 'प्रसिद्धम्' इति पाठो युक्तो भवेत्।

४-कर्म B.

५-विदलं C.

६-त इति त्रुटितम् B.

७-अत्र 'त' इत्यधिकम् B. C. तुषैच्छिद्रैः C.

८-एतद् गुण॰ Be. तितउपदव्याख्यानस्य कियानपि पाठः स्थानान्तरेण B. पुस्तके द्विर्लिखितः। स्थानान्तरगताः पाठभेदा अस्माभिस्तु Be. निर्देशेन निर्दिष्टाः।

९-ततवचा B. त्रिवद्वा Be.

१०-इत्याद॰ C. Be.

११-त्यम् B. उत्थ Be.

१२-तेनोते Be.

१३-मतुवि C. मतुपि Be.

१४-या इति त्रुटितम् C. उपा इत्येव Be.

१५-वरलो॰ C.

१६-त्वं इति त्रुटितम् B.

१७-॰तुन्नमिति C. ति इति त्रुटितम् B.

१८-चेति C. Be.

१९-वरलो C.

२०-आमयर्थे C. 'मयडर्थे बहुव्रीहिः' नास्ति Be.

२१-आदर्शपुस्तकेष्वत्र नागमसमाप्तिनिर्देशो न दृश्यते।

# [ अथ दशमः खण्डः । ][1]

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत ।

अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि[2] ॥

बृहस्पतेर्विद्यासूक्ते ज्ञानप्रशंसैषा[3] । सक्तुमिव तितउना । यथा सक्तुं[4] कश्चित्[5] तितउना[6] उक्तनिर्वचनेन[7] चालनकेन[8] कालपरनाम्ना पुनीयात्[9] तद्वत् पुनन्तो यत्र विद्वत्समवाये यज्ञे धीराः प्रज्ञावन्तो मनसा चालनकस्थानीयेन[10] शास्त्रजनितविवेकज्ञानेनेत्यभिप्रायः । वाचं सक्तुस्थानीयाम् अक्रत-करोतेर्लुङि[11] रूपम्, अक्षतं[12] संस्कुर्वन्ति । किम् ? प्रकृतत्वाद्[13] वाचमेव अपेतमलां प्रयुञ्जत इत्यर्थः । प्रज्ञातार्थत्वाद् वाचः प्रज्ञानं[14] मनश्च केचित् । भाष्ये 'अक्रत प्रज्ञानम्' इत्यभिधीयते ।

एतदुक्तं भवति । स्वेन मनसा विविच्य यद् वाचः सारभूतमर्थं निरवद्यं च तत् प्रयुञ्जाना इतरत् त्यजन्तः स्वज्ञानप्रकाशनार्थं यत्र प्राज्ञा[15] व्याख्यानं कुर्वन्तीति । अत्र यत्रेत्युद्दिष्टस्य तत्रेत्यनेन प्रतिनिर्दिष्टत्वात् अत्रशब्दो [illegible]र्थे । तत्र सखायः समानख्याना[16] व्याख्यानं व्याकरणविद्यास्थानं तेन[17] ये [illegible]था जल्पस्तद्विज्ञाना[18] इत्यर्थः । सख्यानि समानख्यानेषु व्याख्यातृभवादि[19] ज्ञाना[20]नि जानते । कस्मात् ? भद्रा कल्याणी एषा लक्ष्मीर्ज्ञानाख्या निहिता । अधिवाचि वाच उपरि । यस्मात् प्रज्ञानेन तच्छा[21]स्त्रविषयेण विशिष्टेन[22] वाचा शुद्धया युक्ता इत्यर्थः ।

सक्तुः सचतेः । सचिश्च सेवायां[23] तया पात्रसम्बन्धात्[24] संश्लेषो लक्ष्यते । स हि

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १०।७१।२ ] 'सक्तुमिव' इत्येव प्रतीकम् B. C. Be.
३–°शं सैषा C.
४–सक्तु B. Be.
५–कश्चिर Be.
६–तितदना C.
७–क्ति इत्येव Be.
८–चालनेनैकेन B. चालन कन C.
९–वुनीयात् C. अत्र 'पुनीयात्' इति पाठो युक्तः ।
१०–चालयनक B. चालयनक C.
११–त्तुदि C.
१२–'अक्षत' इति क्रियाविशेषणमिदं स्यात् ।
१३–प्रकृताद् B.
१४–प्रज्ञान B. C.
१५–प्रज्ञा B.
१६–नव्याख्या° C.
१७–यच्छास्त्र° B.
१८–ज्ञानार्था C.
१९–°ख्यातृषु भ° C. अत्र 'व्याख्यातृषु भवानि' इति पाठः साधीयान् भवेत् ।
२०–°नादिनि C.
२१–एतच्छा° C.
२२–°ष्टेण C.
२३–सेवान् C. अत्र 'सेवायाम्' इति पाठः साधीयान् भवेत् ।
२४–नात्र C.

नि[1]तिनान्तः (?) संश्लिष्यते । तथाहि सक्तुर्हि दुर्धावो दुःप्रक्षालो भवति । कसतेर्वा स्याद् विपरीतस्य । स हि विकसितः पुष्पितः प्रविरलावयवीभूत[2] इत्यर्थः । अथवा विकसितो विहिसितो भृष्टपिष्टत्वात् । धीराः-रो मत्वर्थे ध्याते धीस्तद्वन्तः । भद्रं कल्याणं भगेन व्याख्यानम् । 'स्त्रीभगस्तथा स्याद् भ[4]जतेः' इति भजनीयं हि त[5]त् । अथवा भूतानामभिद्रवणीयमभिगमनीयम् । भद्रम् भ[6]मेर्भः, द्रवतेर्द्रः शब्दः । भ[7]वदुपचयमानं रमयतीति वा । यस्य तद् भव[8]ति रमतेऽसौ । भा[9]जनवद्वा । भा[10]जनं स्थानं भद्रस्य कर्मणः पुरुषास्तद्वत् । भद्रं भाजनशब्दे भाशब्दस्य ह्रस्वत्वम्, अकारस्य दकारः, अनशब्दस्य लोपः, मत्वर्थे रो नामकरणः ।

लक्ष्मीर्लाभाद्वा लभ्यते हि सा । लक्षणाद्वा [11]सेहि लक्ष्यते चि[12]न्त्यते सर्वेण । लाञ्छना[13]द्वेति धा[14]त्वन्यमात्रम्, अर्थस्तु स[15] एव । [16]'लाञ्छितो लाञ्छि लक्षणे[17]' इति [18]लाञ्छतेरपि लषते[19]र्वा प्रेप्सार्थस्य । लक्ष्मीर्हि सर्वेण प्राप्तुमिष्यते वा[20] । [21]लष्यतेर्वा आश्लेषकर्मणः । लक्ष्मीर्हि आश्लिष्टा तद्व[22]द्भिः । ल[23]ज्जतेर्वा अश्लाघनार्थस्य । लक्ष्मीवान् य[24] उत्तमः स लज्जित इव तया न श्लाघते ।

शिप्रे इत्यनवगतम् । तत् पुनः प्रसङ्गादुपरिष्टाद् व्याख्यास्यामः । 'शिप्रे हनू नासिके वा[25]' इति ।

मध्या इत्यनवगतम् । मध्यशब्दात् 'सुपां सुलु[26]क्' इत्येवमयमकारः सप्तम्याः स्थाने छान्दसत्वात्, मध्ये इत्यवगमः ।

[ इति नवमस्या-( चतुर्थस्या-) ध्यायस्य
दशमः खण्डः । ][27]

१-नि इति नास्ति C. संदिग्धमिदं पदम् ।
२-०भूता B.  ३-भ्रष्ट C.
४-[ निरु० ३।१६ ]  ५-तम् B.
६-अभेरः C. अत्र 'भेरः भः' इति पाठो युक्तो भवेत् ।
७-भवादु० B.  ८-ततपति B.
९-भजन C.  १०-भाजन B. C.
११-अत्र 'सा हि' इति पाठो युक्तो भवेत् ।
१२-चिद् ( न ) ष्यते C.  १३-०नाप्वेति C.
१४-अत्र 'धात्वन्यत्वमात्रं' इति पाठो युक्तो भवेत् ।
१५-प B. वे C.
१६-लञ्चितो C.
१७-[ अनुपलब्धमूलमिदं वचनम् ]
१८-लञ्छने रवि C.
१९-[ cf. धा० १।९३७ ]
२०-र्वा C. अत्र 'वा' इत्यधिकमेव ।
२१-[ cf धा० १।८२३ ]
२२-अत्र B. पुस्तके 'स' इति C. पुस्तके च 'प्स' इत्यधिकः पाठः ।
२३-[ cf. धा० ६।१० ]
२४-'य' इति त्रुटितम् B. न C.
२५-[ निरु० ६।१७ ]
२६-[ Fragment of पा० ७।१।३९ ]
सुलित्येव० C.
२७-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ एकादशः खण्डः । ][1]

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार ।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै[2] ॥

कुत्सस्यार्षम् । तत् सूर्यस्य देवत्वं तच्च महित्वं महत्त्वम् । तच्छन्दश्रुतेर्यच्छन्दो[3]ऽध्याहार्यः । मध्या मध्ये कर्तोः कर्मणः कृष्यादेरपरिसमाप्त एव कृष्यादावित्यर्थः । वि[4]तम् अतिमहदेतत् स्वरश्मिजालं भौमस्य रसस्य हरणात् क्षणेनैकेन संजहार संहरति । भाष्येऽपि[5] तत्संह्रियत इत्यर्थः । कथम् ? न न शब्दार्थविवरण संजहारेत्यस्य कर्त्रर्थत्वात्[6] संह्रियत इत्यस्य च कर्मार्थत्वात् । कदा संहरति ? उच्यते । यदेदनर्थकः[7] । अश्वं गन्तुमयुक्त नियुक्ते[8] । हरितो भौमस्य रसस्य हरणान्[9] रश्मीन् हरिवर्णान्वा[10] अश्वान् सधस्थात् सहस्थानात् पार्थिवाल्लोकात् मन्दुरातो वा । पञ्चमीश्रुतेरादेय[11] इति शेषः । सप्तम्यर्थे वा पञ्चमी । सहस्थाने स्वस्मिन् मण्डले रथे वा । आत् अथ[12] अनन्तरं चेत्यर्थः ।

रात्री वासस्तनुते । वास इति वासरशब्दस्य अहर्नाम्नश्छान्दसोऽन्त्यस्याकारस्य लोपः । अनयोर्[13] क्रियाकर्मणोः परस्परतः सम्बन्धुमयोग्यत्वात् प्रविश पिण्डीमित्यादिवत् योग्यक्रियाकर्मान्तराध्याहारः । अहरवयुवती तमस्तनुत इति । अवयुवती अवनयतीत्यर्थः । हेतौ चात्र शतृप्रत्ययः । 'लक्षणहेत्वोः क्रियायाः'[14] इति । प्रयोजनस्य च हेतुत्वेन[15] विवक्षा । अहरपनयनार्थं तमस्तनुत इत्यर्थः । सिमस्मै पञ्चम्यर्थे चतुर्थी । अवयुवतीत्येतेन चास्य सम्बन्धः । सर्वस्मात् पार्थिवाल्लोकादवयुवती । भाष्ये 'अथ रात्री वासस्तनुते सिमस्मै वासरमहरवयुवतिः सर्वस्मा' इति पाठः, न 'वेनरमहरवयुवती सर्वस्मात्' इति । वासरशब्दस्याहर्नामत्वात्[16] तस्य चान्त्याकारलोपेन वासर इत्येतस्य विज्ञानात् ।

अथवा क्रियाकर्मान्तराध्याहारस्यान्याय्यत्वात् तनुत इत्युपमार्थे यदेति च उदय-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १।११५।४ ] 'तत्सूर्यस्य' इत्येव प्रतीकम् B. C.
३–तच्छन्द C.
४–वितमतं C.
५–भाष्ये वि C.
६–कर्मत्वात् C.
७–यदा गुदनर्थकः C.
८–नियुङ्क्ते इति पाठो युक्तो भवेत् ।
९–हरणात् स्वस्मिन् C.
१०–हरिः वर्णान्वा C. 'हरितवर्णान् वा' इति पाठो युक्तः ।
११–आदेय C.
१२–अथ B.
१३–अनयास्त्र B.
१४–[ पा० ३।२।१२६ ]
१५–हेतुत्वेने C.
१६–०मत्वात् C.

काल उच्यते नास्तमयकालः । यदा सूर्य उद्गन्तुं युङ्क्ते[1] रश्मीनश्वान्[2] वा तदा वसूमिव[3] काचित् स्त्री[4] रात्रिस्तमस्तनुते[5] सर्वस्मै लोकायेति । भाष्ये 'अपि वोपमार्थे[6] स्याद् रात्रीव वासस्तनुत[7] इति'। इव[8] शब्दोऽस्थाने[9] प्रयुक्तो न हि रात्रीत्येतदुपमार्थे । किं तर्हि ? तनुते वास[10] इत्यनयोरन्यतरः[11] ।

यथोपमार्थे तथा निगमो भवति ।

पुनः समव्यद्विततं वयन्ती मध्या कर्तोर्न्यधाच्छक्म धीरः ।
उत्संहायास्थाद्व्यृ१तूँरदर्धररमतिः सविता देव आगात्[12] ॥

गृत्समदस्यार्षम् । यदा तावत् पूर्वस्यामृचि तनुत[13] इत्युपमार्थे तदा[14] ऋचः प्रथमोऽर्धर्च एवं व्याख्येयः । यदुदयकाले तत्तदस्तमयकाले पुनः समव्ययत्[15] 'व्येञ्[16] संवरणे'[17] प्रवृणोति वेष्टयतीत्यर्थः । विततं वयन्ती वस्त्रं वयन्ती काचित् स्त्री । का पुनः सा संवृणोति[18] ? रात्रिः । कुत एतत् ? ऋग्वेदे या अधस्त्या[19] ऋक् 'अनुव्रतं सवितुर्मोक्यागात्'[20] इति मोक्यस्याः[21] प्रकृतत्वात् मोकीशब्दस्य[22] रात्रिनामत्वात्[23] । किं संवृणोति[24] ? उच्यते । मध्या मध्ये[25] कर्तोः कर्मणो न्यधात् शक्म कर्मनामैतत्[26] तृतीयार्थे चात्र प्रथमा कर्मणा उदयादिनाऽस्तमयपर्यन्तेन धीरः प्रज्ञावान्[27] सविता । किं[28] पुनस्तत्[29] ? अहः तत्[30] कर्मणां मध्ये उदयादिनाऽस्तमयपर्यन्तेन[31] कर्मणा सविता[32] निधत्ते ।

---

१–युङ्क्ते इति त्रुटितम् B. २ ०नश्वाद्वा C.
३–अत्र 'वास इव' इति पाठो युक्तः ।
४–स्त्री इति पदस्याग्रे ( रात्री ) इत्येवं कोष्ठकमध्ये लिखितं वर्तते B.
५–अत्र 'रात्रिः' इति 'रात्री' इति वा पाठो युक्तः ।
६–योपमा० C. ७–पास० C.
८–अत्र 'इव' इति पदं B. C. पुस्तकयोर्नास्ति, अस्माभिस्त्वर्थानुसारित्वादत्रावश्यकमिदमिति निहितम् ।
९–शब्दस्तात्स्थाने B.
१०–द्वाग उ C. ११–०तान् C.
१२–[ ऋ० २।३८।४ ] 'पुनः समव्यत्' इत्येव प्रतीकम् B. C.
१३–तनुच C.
१४–'तदास्या' इति पाठो युक्तो भवेत् ।
१५–समव्यत् C. १६–व्येञ्ड् C.
१७–[ धा० १।१०।५६ ] १८–०णोति C.
१९–असस्त्या B.
२०–[ ऋ० २।३८।३ ] 'मोक्यागात्' इति स्यात् ।
२१–'मोक्याः' इति पाठो युक्तो भवेत् । रात्रिनामसु 'मोकी' इति पदं पठितं न तु मोक्ती ।
२२–मोकी श० B. २३–रात्रिः ना० C.
२४–संवृणोति C.
२५–मध्ये इति त्रुटितम् C.
२६–[ निघ० २।१।९ ] कर्म इति त्रुटितम् B.
२७–न् इति त्रुटितम् C.
२८–किं इति त्रुटितम् B.
२९–०नस्तः B.
३०–अत्र 'न्यधात्' इति पाठो युक्तः स्यात् ।
३१–०यादिना० C. ३२–सविता C.

काल उच्यते नास्तमयकालः । यदा सूर्य उद्यन्तं युङ्क्ते[1] रश्मीनश्वान्[2] वा तदा वसूमिव[3] काचित् स्त्री[4] रात्रिस्तमस्तनुते[5] सर्वस्मै लोकायेति । भाष्ये 'अपि वोपमार्थे[6] स्याद् रात्रीव वासस्तनुत[7] इति'। इव शब्दोऽस्थाने[8] प्रयुक्तो न हि रात्रीत्येतदुपमार्थे । किं तर्हि ? तनुते वास[9] इत्यनयोरन्यतरः[10][11]।

यथोपमार्थे तथा निगमो भवति ।

पुनः समव्यद्विततं वयन्ती मध्या कर्तोर्न्यधाच्छक्म धीरः ।
उत्संहायास्थाद्व्यृतूँरदर्धररमतिः सविता देव आगात्[12] ॥

गृत्समदस्यार्षम् । यदा तावत् पूर्वस्यामृचि तनुत[13] इत्युपमार्थे तदा[14] ऋचः प्रथमोऽर्धर्च एवं व्याख्येयः । यदुदयकाले तत्तदस्तमयकाले पुनः समव्ययत[15] 'व्येञ्[16] संवरणे'[17] प्रवृणोति[18] वेष्टयतीत्यर्थः । विततं वयन्ती वस्त्रं वयन्ती काचित् स्त्री । का पुनः सा संवृणोति ? रात्रिः । कुत एतत् ? ऋग्वेदे या अधस्तया[19] ऋक् 'अनुव्रतं सवितुर्मोक्यागात्[20]' इति मोक्त्याः[21] प्रकृतत्वात् मोकीशब्दस्य[22] रात्रिनामत्वात्[23] । किं संवृणोति[24] ? उच्यते । मध्या मध्ये[25] कर्तोः कर्मणो न्यधात् शक्म कर्मनामैतत्[26] तृतीयार्थे चात्र प्रथमा कर्मणा उदयादिनाऽस्तमयपर्यन्तेन धीरः प्रज्ञावान्[27] सविता । किं[28] पुनस्तत्[29] ? अहा तत्[30] कर्मणां मध्ये उदयादिनास्तमयपर्यन्तेन[31] कर्मणा सविता[32] निधत्ते ।

१–युङ्क्ते इति त्रुटितम् B. २.०नश्वान्वा C.
३–अत्र 'वास इव' इति पाठो युक्तः ।
४–स्त्री इति पदस्याग्रे ( रात्री ) इत्येवं कोष्ठकमध्ये लिखितं वर्तते B.
५–अत्र 'रात्रिः' इति 'रात्री' इति वा पाठो युक्तः ।
६–योपमा० C. ७–पास० C.
८–अत्र 'इव' इति पदं B. C. पुस्तकयोर्नास्ति, अस्माभिस्त्वनुसारित्वादत्रावश्यकमिदमिति निहितम् ।
९–शब्दस्त्वस्थाने B.
१०–द्राग C. ११–०तरत् C.
१२–[ ऋ० २।३८।४ ] 'पुनः समव्यत्' इत्येव प्रतीकम् B. C.
१३–तनुत C.
१४–'तदाम्या' इति पाठो युक्तो भवेत् ।
१५–समव्यत C. १६–व्येत्रेङ् C.
१७–[ धा० १।१०५६ ] १८–वृणोति C.
१९–असत्त्या B.
२०–[ ऋ० २।३८।३ ] 'मोक्यागात्' इति स्यात् ।
२१–'मोक्याः' इति पाठो युतो भवेत् । रात्रिनामसु 'मोकी' इति पदं पठितं न तु मोक्ती ।
२२–मोनी श० B. २३–रात्रिः ना० C.
२४–संवृणोति C.
२५–मध्ये इति त्रुटितम् C.
२६–[ निघ० २।१।९ ] कर्म इति त्रुटितम् B.
२७–न् इति त्रुटितम् C.
२८–किं इति त्रुटितम् B.
२९–०नस्तः B.
३०–अत्र 'न्यधात्' इति पाठो युक्तः स्यात् ।
३१–०यादिना० C. ३२–मतिता C.

# [ अथ एकादशः खण्डः । ][1]

तत्सूर्यस्य देवत्वं तन्महित्वं मध्या कर्तोर्विततं सं जभार ।
यदेदयुक्त हरितः सधस्थादाद्रात्री वासस्तनुते सिमस्मै[2] ॥

कुत्सस्यार्षम् । तत् सूर्यस्य देवत्वं तच्च महित्वं महत्त्वम् । तच्छब्दश्रुतेर्यच्छब्दो[3]ऽध्याहार्यः । मध्या मध्ये कर्तोः कर्मणः कृष्यादेरपरिसमाप्त एव कृष्यादावित्यर्थः । वि[4]ततम् अतिमहदेतत् स्वरश्मिजालं भौमस्य रसस्य हरणात् क्षणेनैकेन संजहार संहरति । भाष्ये[5]ऽपि तत्संह्रियत इत्यर्थः । कथम् ? न न शब्दार्थविवरण संजहारेत्यस्य कर्त्रर्थत्वा[6]त् संह्रियत इत्यस्य च कर्मार्थत्वात् । कदा संहरति ? उच्यते । यदेद[7]नर्थकः । अस्तं गन्तुमयुक्त नियु[8]क्ते । हरितो भौमस्य रसस्य हरणान् रश्मीन् हरि[10]द्वर्णान्वा अश्वान् सधस्थात् सहस्थानात् पार्थिवाल्लोकात् मन्दुरातो वा । पञ्चमीश्रुतेरा[11]दाय इति शेषः । सप्तम्यर्थे वा पञ्चमी । सहस्थाने स्वस्मिन् मण्डले रथे वा । आत् अथ[12] अनन्तरं चेत्यर्थः ।

रात्री वासस्तनुते । वास इति वासरशब्दस्य अहर्नाम्नश्छान्दसोऽन्त्यस्याकारस्य लोपः । अनयो[13]र्द्वे क्रियाकर्मणोः परस्परतः सम्बन्धुमयोग्यत्वात् प्रविश पिण्डीमित्यादिवत् योग्यक्रियाकर्मान्तराध्याहारः । अहरवयुवती तमस्तनुत इति । अवयुवती अवनयतीत्यर्थः । हेतौ चात्र शतृप्रत्ययः । 'लक्षणहेत्वोः क्रियायाः[14]' इति । प्रयोजनस्य च हेतुत्वे[15]न विवक्षा । अहरपनयनार्थं तमस्तनुत इत्यर्थः । सिमस्मै पञ्चम्यर्थे चतुर्थी । अवयुवतीत्यतेन चास्य सम्बन्धः । सर्वस्मात् पार्थिवाल्लोकादवयुवती । भाष्ये 'अथ रात्री वासस्तनुते सिमस्मै वासरमहरवयुवती सर्वस्मा' इति पाठः, न 'वेनरमहरवयुवती सर्वस्मात्' इति । वासरशब्दस्याहर्नामत्वा[16]त् तस्य चान्त्याकारलोपेन वासर इत्येतस्य विज्ञानात् ।

अथवा क्रियाकर्मान्तराध्याहारस्यान्याय्यत्वात् तनुत इत्युपमार्थे यदेति च उदय-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १।११५।४ ] 'तत्सूर्यस्य' इत्येव प्रतीकम् B. C.
३–तच्छब्द C.
४–वितमतं C.
५–भाष्ये वि C.
६–कर्मत्वात् C.
७–यदा गुदनर्थकः C.
८–नियुङ्क्ते इति पाठो युक्तो भवेत् ।
९–हरणात् स्वस्मिन् C.
१०–हरिः वर्णाद्वान् C. 'हरितवर्णान् वा' इति पाठो युक्तः ।
११–आदेय C.
१२–अथ B.
१३–अनयात्त B.
१४–[ पा० ३।२।१२६ ]
१५–हेतुत्वे C.
१६–०मत्वात् C.

काल उच्यते नास्तमयकालः । यदा सूर्य उद्यन्तुं[1] युङ्क्ते रश्मीनश्वान्[2] वा तदा वसूंमिव[3] काचित् स्त्री[4] रात्रि[5]स्तमस्तनुते सर्वस्मै लोकायेति । भाष्ये 'अपि वोप[6]मार्थे स्याद् रात्रीव वा[7]सस्तनुत इति'। इव[8] शब्दोऽस्थाने[9] प्रयुक्तो न हि रात्रीत्येतदुपमार्थं । किं तर्हि ? तनुते वा[10]स इत्यनयोरन्य[11]तरः ।

यथोपमार्थे तथा निगमो भवति ।

पुनः समव्यद्विततं वयन्ती मध्या कर्तोर्न्यधाच्छक्म धीरः ।
उत्संहायास्थाद्व्यृ१तूँरदर्धररमतिः सविता देव आगात्[12] ॥

गृत्समदस्यार्षम् । यदा तावत् पूर्वस्यामृचि तनुत[13] इत्युपमार्थे तदा ह्य[14]स्या ऋचः प्रथमोऽर्धर्चे एवं व्याख्येयः । यदुदयकाले तत्तदस्तमयकाले पुनः समव्य[15]त् 'व्येञ्[16] संवरणे'[17] प्रवृणोति वेष्टयतीत्यर्थः । विततं वयन्ती वस्त्रं वयन्ती काचित् स्त्री । का पुनः सा संवृ[18]णोति ? रात्रिः । कुत एतत् ? ऋग्वेदे या अधस्त[19]या ऋक् 'अनुव्रतं सवितुर्मोक्यागात्[20]' इति मोक्त्याः[21] प्रकृतत्वात् मोकी[22]शब्दस्य रात्रिनाम[23]त्वात् । किं संवृ[24]णोति ? उच्यते । मध्या मध्ये[25] कर्तोः कर्मणो न्यधात् शक्म कर्मनाम[26]एतत् तृतीयार्थे चात्र प्रथमा कर्मणा उदयादिनाऽस्तमयपर्यन्तेन धीरः प्रज्ञावान्[27] सविता । किं[28] पुनस्तत्[29] ? अहा तत्[30] कर्मणां मध्ये उदयादिना[31]स्तमयपर्यन्तेन कर्मणा सविता[32] निवर्त्ते ।

---

१–युङ्क्ते इति त्रुटितम् B. २ ०मश्वान् C.
३–अत्र 'वास इव' इति पाठो युक्तः ।
४–स्त्री इति पदस्याग्रे ( रात्री ) इत्येवं कोष्ठकमध्ये लिखितं वर्तते B.
५–अत्र 'रात्रिः' इति 'रात्री' इति वा पाठो युक्तः ।
६–योपमा० C. ७–पास० C.
८–अत्र 'इव' इति पदं B, C. पुस्तकयोर्नास्ति, अस्माभिस्त्वर्थानुसारित्वादत्रावश्यकमिदमिति निहितम् ।
९–शब्दस्तस्थाने B.
१०–वास इ C. ११–ऽतरन् C.
१२–[ ऋ० २।३८।४ ] 'पुनः समव्यत्' इत्येव प्रतीकम् B. C.
१३–तनुत C.
१४–'तदास्या' इति पाठो युक्तो भवेत् ।
१५–समव्यत् C. १६–व्यत्रेद् C.
१७–[ धा० १।१०।५६ ] १८–वृणोति C.
१९–असस्त्या B.
२०–[ ऋ० २।३८।३ ] 'मोक्यागात्' इति स्यात् ।
२१–'मोक्याः' इति पाठो युक्तो भवेत् । रात्रिनामसु 'मोकी' इति पदं पठितं न तु मोक्ती ।
२२–मोकी श० B. २३–रात्रिः ना० C.
२४–मंवृणोति C.
२५–मध्ये इति त्रुटितम् C.
२६–[ निघ० २।१।५ ] कर्म इति त्रुटितम् B.
२७–न् इति त्रुटितम् C.
२८–किं इति त्रुटितम् B.
२९–०नस्तः B.
३०–अत्र 'न्यधात्' इति पाठो युक्तः स्यात् ।
३१–०यादिना० C. ३२–मतिता C.

यदा तु पूर्वस्यामृचि मीता इत्येतदुपमार्थे तदायमर्थश्च एवं व्याख्येयः। यदुदयकाले ततमासीत् तत्पुनः संवृणोति रात्रिस्तामपि विततमिव वस्त्रं वयन्ती काचित् स्त्री। कदा ? उच्यते। यदा मध्ये कर्मणां विधत्ते स्वेन कर्मणा येदाख्येयेनाह । प्रज्ञावान् सविता। यदोदयेनाहः सविता प्रवर्तयतीत्यर्थः।

किञ्च संहाय 'ओहाक् त्यागे' इत्यस्य वा 'ओहाङ् गतौ' इत्यस्य वा एतद्रूपम्। सम्यक् त्यक्त्वा रात्रिं संगम्य वा स्वरश्मिभिरुदस्थात् उत्तिष्ठति उदेतीत्यर्थः। उत्थाय चापि जन्तून् व्यैदर्धः, विविधमृतून् वसन्तादीन् धारयति। किञ्चिन्मन्देनातपेन किञ्चिन्मध्येन किञ्चित्तीव्रेण। किञ्च अरमतिरलंशब्दस्य पर्याप्त्यर्थस्य लकारस्यायं रकारो मकारलोपश्च अलंमतिः पर्याप्तज्ञानः। सविता देव आगात् आगच्छति च नभसो मध्येनास्तमयदेशम्। भाष्ये समनात्सीदिति समव्यैदित्यस्यार्थस्य कथनम्। 'णह बन्धने' इत्यस्यैतद् रूपम्। सम्यग्वध्नाति संवृणोति वेष्टयतीत्यर्थः।

मन्दू इत्यनवगतम्। मन्देस्तृप्त्यर्थस्य ताच्छीलिक इकारो द्रष्टव्यः। तैर्दन्तात् प्रथमाद्विवचन एतद्रूपम्। तृतीयैकवचने वा 'सुपां सुलुक्' इति पूर्वसवर्णः। मदिष्णू मदिष्णुना वेत्यवगमः। निगमः—

[ इति नवमस्या (चतुर्थस्या) ध्यायस्य
एकादशः खण्डः। ]

---

## [ अथ द्वादशः खण्डः । ]

इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा ।

मन्दू समानवर्चसा[2] ॥

मधुच्छन्दसा[3] इन्द्र उच्यते । इन्द्रेण ईश्वरो[4] मरुद्गणस्तेन सह । सं हिशब्दः पदपूरणः, संदृश्यसे संजग्मानः संगच्छमानस्त्वं[5]नविभ्युषा भयवर्जितेन । किञ्च मन्दू प्रथमाद्विवचनमेतत्, मदनशीलौ युवामिन्द्रमरुद्गणौ[6] । अथवा मन्दू इत्येतदपि तृतीयैकवचनान्तमेव मरुद्गणविशेषणम् । मन्दुना मदिष्णुना मरुद्गणेनेति । समानवर्चसा इत्येतेन व्याख्यातम् । द्विवचनान्तं वा तृतीयैकवचनान्तं वा । समानदीप्ती[8] युवाम्[9] । समानदीप्तिना वा मरुद्गणेनेति ।

ईर्मान्तास[10] इत्यनवगतम् । मन्त्रेऽप्यश्रवणेन[11] सामानाधिकरण्यादभिधेयप्रतीतेरश्व[12]विशेषणत्वेन सुप्रतिपादकत्वं[13] निगमेनैवोपक्रमते । समीरितान्ताः पृथ्वन्ता येऽश्वर्गा[14]ः । निगमः—

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य

द्वादशः खण्डः । ][15]

---

## [ अथ त्रयोदशः खण्डः । ][१]

ईर्मान्तासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः ।
हंसा इव श्रेणिशो यतन्ते यदाक्षिषुर्दिव्यमज्ममश्वाः[२] ॥

दीर्घतमस आर्षम् । आदित्याश्वा[३]नामियं स्तुतिः । ते च सप्त, तेषां य अन्तर (?) ईरिताः प्रेरि[४]ता विरलौ[५] इत्यर्थः। ये तु[६] मध्यमास्ते संस्तृताः संगताः परः[७]समुच्चिता इत्यर्थः। तेन ते ईर्मान्ताः सिलिकमध्यमा[८]श्चोच्यन्ते । अथवा प्रत्येकं शरीरद्वारेण ए[९]ते विशेषणे । अश्वस्यान्त एकत उरोऽन्यतो जघनं स ये[१०]षामी[११]र्मा प्रेरितः पृथुरित्यर्थः । ते ईर्मान्ताः । मध्यमप्रदेश उदरं स ये[१२]षां संस्तृतः संगतस्तनुरित्यर्थः । ते सि[१३]लिकमध्यमाः । शार्ष[१४] प्रधानो मध्यमो येषां ते सिलिकमध्यमाः । अथवा शिर इत्यादित्य उच्यते सोऽधिष्ठा[१५]तृत्वान्मध्यवर्ती[१६] येषां ते सिलि[१७]कमध्यमाः । समित्युपसर्गो यतन्त[१८] इत्याख्यातेन संबन्धयितव्यः[१९] । शूरणासः[२०] शूर आदित्यः स नेता येषां ते शूरनेतृकाः शूरणासः । दिव्यासो दिवि जाताः । अत्याः परस्तादश्वश्रुतेः पौनरुक्त्यप्रसङ्गादत्यशब्दः सत्ये[२१]ऽश्वनामत्वे क्रियायोगाद् विशेषणत्वेन द्रष्टव्यः । 'अत सातत्यगमने'[२२] सततगामिन इत्यर्थः । हंसा इव श्रेणिशः । एककार्यपाराणां बहूनां समूहः श्रेणिरुच्यते । बह्वर्थस्याश्चास्य 'बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्'[२३] शस्[२४] । संमूर्हीभूताः[२५] संयतन्ते सम्यग् गच्छन्ति । कदा ? उच्यते । यद् यदा आक्षिषुः 'अक्षू व्याप्तौ'[२६] व्याप्नुवन्ति । दिव्यं दिवि भवम् । अज्मम[२७]जतेः गमनमार्गम् । अश्वा आदित्यस्य स्वभूताः ।

अपि वा शिर आदित्यो भवति । यद् यस्मादनुशेते सर्वाणि । शेतिरत्र स्थानार्थः । रश्मिभि[२८]रनुप्रविश्य सर्वाणि भूतानि तिष्ठतीत्यर्थः। इदमपीतरन्मनुष्यशिर एतस्मादेव धातोः।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १। १६३। १०] 'ईर्मान्तासः' इत्येव प्रतीकम् B. C.
३–०त्याश्वाना० C. ४–प्रथीरताः B.
५–विरडा C. ६–यद्‌ B.
७–परस्त्रमु० C. ८–मध्यन्मा० C.
९–एतैर्विशेषणैः B. १०–एषा० B.
११–मी इति त्रुटितम् B. १२–एषां B.
१३–सलिक C. १४–शीर्षः C.
१५–साधिष्ठा तृत्वा म० B.
१६–०ध्यवती B. C. १७–सिलन C.
१८–ऽयंतत B. यंतत C. १९–०तव्यम् B.
२०–०णासहः C. २१–सत्यप्यश्वना० C.
२२–[धा० १ । ३८]
२३–[पा० ५ । ४ । ४२]
२४–शस C.
२५–सम्मर्द्दीभूतास्वंय० C.
२६–[धा० १ । ६८४]
२७–०अजत इति नास्ति B.
२८–०भिः स्तु० C.

तदपि ह्यनुप्रविश्य चक्षुरादिभूतानीन्द्रियाणि तिष्ठन्ति । समाश्रितान्येनदिन्द्रियाणि भवन्तीत्युपपत्तिवचनम् । एतत् तानि समाश्रितानीत्यर्थः ।

शूरः शवतेर्[1]गति[2]कर्मणः । गच्छति ह्यसौ शत्रून् । आदित्योद्भासनार्थमाह । अस्त्यादित्यस्तुतिरश्वस्येत्यादि । आदित्यशब्देनात्र आदित्यप्रभवोऽश्व उच्यते । कथम् ? आदित्यशब्दाद्धि प्रभवतीत्येतस्मिन्नर्थे 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः'[3] इति यो ण्यः प्रत्ययस्तदन्तोऽयमादित्यशब्दो विज्ञायते । अस्त्यादित्य[4]प्रभव[5]त्वेन स्तुतिरश्वस्येत्यर्थः । यत आदित्यादश्वो निरतष्ट[6] आवृत्येत्यर्थः । एवं चेदुपपन्नमिदं दिव्यादित्यस्य दिवि जात इति निर्वचनम् ।

आदित्यप्रभवत्वेन स्तुतेरुदाहरणम्—

यमेन दत्तं त्रित एनमायुनगिन्द्र एणं प्रथमो अध्यतिष्ठत् ।
गन्धर्वो अस्य रशनामगृभ्णात् सूरादश्वं वसवो निरतष्ट[7] ॥

दीर्घतमसः । यमो द्युस्थान आदित्यस्तेन दत्तं त्रितस्त्रिस्थानो वायुर्ऋषिर्वा स एनमश्वं आयुनग् युक्तवान् रशनया पर्यायेण बावत्रा[8] पर्याणितवान् चेत्यर्थः । इन्द्र एनमेन[9]मश्वम् प्रथम उत्कृष्टो देवानां मध्ये अध्यतिष्ठत् अधि[10]ष्ठितवान् आरूढः । गन्धर्वोऽस्याह्रिय[11]माणस्य रशनां बन्धनीं रज्जुमगृभ्णीत[12] गृहीतवान् । एवं सूरादश्व यूयं हे वसवः स्वेन स्वेन व्यापारेण सर्वस्या[13]च्छादयितारो निरतष्ट निरक्षिप आ इत्येतस्य स्थाने तक्षतिः करोतिकर्मा, करोतिश्च क्रियासामान्यवचनः, सोऽत्र सामर्थ्यात् हारणे वर्तते, आहृतवन्त इत्यर्थः ।

कायमान इत्यनवगतम् । अस्यार्थोऽर्थ[14]गमश्च निगमा[15]देव गम्यत इत्युदाहरणेनैवोपक्रमः—

[इति नवमस्या-(चतुर्थस्या-) ध्यायस्य
त्रयोदशः खण्डः][16]

———

१–[Cf. धा० १ । ७६१]
२–गतिर्ह्य० B. गति ह्य० C.
३–[पा० ४ । १ । ८५]
४–दित्य इति द्विर्लिखितम् C.
५–०भवस्त्वेन C.
६–निस्तष्टं C.
७–[ऋ० १ । १६३ । २] 'यमेन दत्तं त्रित एनमायुनगिति' इत्येव प्रतीकम् B. 'यमेन दत्तं' इत्येव C.
८–पर्यायेण बावत्रा B. अत्र 'पर्याणेन, रज्ज्वा' इति पाठो युक्तो भवेत् ।
९–एत० C.
१०–अधितिष्ठत० C.
११–ह्रिय इति त्रुटितम् B.
१२–०गृह्णात् C.
१३–०स्य छा० B.
१४–०र्थोऽगम० C.
१५–नियमा० C.
१६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ चतुर्दशः खण्डः । ][1]

काय॑मानो व॒ना त्वं यन्मा॒तॄरज॑गन्न॒पः ।

न तत्ते॑ अग्ने प्र॒मृषे॑ नि॒वर्त॑नं॒ यद्दू॒रे स॑न्नि॒हाभ॑वः[3] ॥

विश्वामित्रस्य । काय॑मानश्चा[4]यमानो योनिद्वेन पश्यन्नित्यर्थः । कामयमानो वा । वनानि वृक्षान्[6] तद्धितेन तद्विकारभूतानि काष्ठान्युच्यन्ते काष्ठानि । त्वं यद् यदा[8] मातृर्मातृभूता अप अजगन् गच्छति[9] कर्मायम, गच्छसि आप[10]: । कदा पुनः ग्निः काष्ठान्यपश्च गच्छति ? उच्यते । यदोपशाम्यति । कथम् ? सर्वं हि कार्यं विनश्यत् स्वयोनिं गच्छति । अग्नेश्च[11] पार्थिवस्य योनिः काष्ठानि वैद्युतस्यापस्तेन पार्थिवोऽग्निरुप[12]शाम्यन् काष्ठानि गच्छति वैद्युतो[13]ऽपः । अत एत[14]दुच्यते काष्ठान्यपश्च गच्छसीति । न तत् ते तव हे अग्ने प्रमृषे मृष तितिक्षाकर्मा यतिक्षो ( ? ) क्षमा प्रकर्षेण न क्षम्यते । निवर्तनं विनाशो न[15] सर्वनाशो-ऽत्यन्तविनाशं त्वननाभ्याम[16]वगम्यत इत्यर्थः । यद्[17] दूरे भवति न स दृश्यते । तत्सम्बन्धाद् दूरे सत्तया[18]शादर्शनं लक्ष्यते । अदृश्यमानः सन्नित्यर्थः । इहाभवः पुनर्भवसि तत्र एव काष्ठौ[19]वा पुनः ।

लोधमित्यनवगतम् । लुब्धमित्यवगमः । निगमः—

न साय॑कस्य चिकिते जनासो लो॒धं न॑यन्ति॒ पशु॒ मन्य॑मानाः ।

नावा॑जिनं वा॒जिना॑ हासयन्ति॒ न ग॑र्द॒भं पु॒रो अश्वा॑न्नयन्ति[20] ॥

विश्वामित्रस्य । नेति प्रतिषेधश्चिकित इत्याख्यातेन सम्बध्यते । सायकस्येति

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२—कामयमानः B. C.

३–[ ऋ० ३ । ९ । २ ] 'कामयमानः' इत्येव प्रतीकम् B. C.

४—कामयमानः B. C. ५—एयमानः C.

६—पश्यदिय० C. ७—वृक्षात् C.

८ तदा B. पदा C.

९–'ति' इति त्रुटितम् C.

१०–अपि: C. अत्र 'अपः' इति द्वितीयान्तः पाठो युक्तः स्यात् ।

११–अग्नि B. १२–०रुपशाम्यन् C.

१३–०तोऽग्: C.

१४–'एत' इति द्विर्लिखितम् C.

१५–इतः परम् 'इत्यर्थः' इत्यन्तः पाठः संदिग्धः । अथवा कदाचिदत्र 'न सर्वनाशोऽत्यन्तविनाशो वानेनात्रावगम्यत इत्यर्थः' इत्ययं पाठो भवेत् ।

१६–म इति नास्ति C.

१७–यत्र B. C. अत्र कदाचित् 'यद् यः' इति पाठो भवेत् ।

१८–सततदात्रा० B.

१९–काष्ठोद्वा C.

२०–[ऋ० ३ । ५३ । २३] 'न सायकस्य' इत्येव प्रतीकम् B, C.

षष्ठीश्रुतेः सामर्थ्य[1]मिति शेषः । द्वितीयार्थे वा षष्ठी न चिकिते न[2] जान[3]न्ति सामर्थ्यं वज्रस्य वज्रं वा । येनेन्द्रस्य स्तोतारं सन्तमृषिं लोधं लुब्धं मां स्वधर्मे तपसि वा नयन्ति परिभूय प्रे[4]रयन्ति यष्टिहस्ताः । पशु[5] द्वितीयैकवचनस्य लुक्, पशुम् । लुप्तोपमं चैतत् पशुमिव अजं मन्यमाना[6] वसिष्ठा विद्विषैतद्वृत्तान्तेन इन्द्रे[7]ण नियमे[8]नैते वज्रेण हनिष्यन्त इत्य[9]भिप्रायः । तत्र[10] तपस्यास्थित एव मयि[11] इन्द्र एतान् पुरस्करिष्यतीति । ततश्चैते मया सह स्पर्धयि[12]ष्यन्त इतीति । तच्च न । यतो लोके[13]ऽपि नावाजिनो[14] वाजिना हासयन्ति । हसतिः स्पर्धायाम् । नाश्व[15]मश्वेन सह स्पर्धयन्ति । न च गर्दभं पुरोऽग्रतोऽश्वान्नयन्ति अश्वे सति गर्दभं न दधतीत्यर्थः । एवं चेदिन्द्रोऽपि मयि स्थिते[16] कानपरान्[17] गर्दभकल्पान् वसिष्ठान्[18] न कथञ्चित् पुरो धास्यतीत्यर्थः ।

अथवा स[19] सायको वा वज्रः शाकरूपो[20]ऽत्राभिप्रेतस्त्वं वा मदीया[21] तव[22] सायकं न जानन्ति नूनं यतो[23] लोधं नयन्तीत्यादि समानव्याख्यातम् । तत्रैतत् स्यात् यात्[24] सायकेन[25] शापेनैनान् हिंसानीति । तच्च न । यतो मम त्यक्ताशेष[26]स्य एषां च बहुयाजिनां कामात्मनां कः संघर्षः । लोकेऽपि च नैव विप्रकृष्टान्तरालानां स्पर्धा भवति न ह्येकनिष्कधनः शतनिष्कधनेन सह स्पर्धते । तथाहि नावाजिनमित्यादि समानं पूर्वेण ।

शीरमित्यनवगतम् । अनुशायिनं वाशिनं वेत्यवगमः । अग्निरभिधेयः । निगमः—

शीरं पावकशोचिषं ज्येष्ठो यो दमेष्वा ।
दीदाय दीर्घश्रुत[27]मः ॥

---

१—०मर्थमि० C.
२—न इत्यधिकमत्र भाति ।
३—'नन्ति' इति त्रुटितम् B.
४—०यं प्ररन्ति B. ५—पशुं C.
६—मन्यमानो B. C. ७—इन्द्रियेण B. C.
८—०नैत्र ते B.
९—इत्यभिप्रा इति त्रुटितम् B.
१०—तत्रैतत् स्यात् स्थित C.
११—मै B. १२—०र्धविष्य० C.
१३—०केवि B. C.
१४—अत्र 'नावाजिनं' इति मूलानुसारी पाठो युक्तो भवेत् ।
१५—नाश्वम० C.
१६—'इत्यने' इत्यत्राधिकः पाठो भाति B. कदाचिदत्र 'इत्यनेन' इति स्यात् ।
१७—०मानल्पान् B. १८—वषिष्मान् B.
१९—स इति नास्ति C.
२०—शाकरूपोऽत्रा० C. कदाचिदत्र 'शपिरूपोऽत्राभिप्रेतः' इति पाठः साधीयान् भवेत् । सायक इति शपेरिदं रूपमित्यर्थः ।
२१—मदीय B. २२—तप सा येकं C.
२३—यतो म लाधं C.
२४—अत्र 'यत्' इति पाठो युक्तः ।
२५—सायतेन B. २६—०शेषेणस्य B. C.
२७—[ऋ० ८ । १०२ । ११] 'शीरं पावक' इत्येव प्रतीकम् C.

प्रयोगो नाम भार्गवस्तस्यार्षम् । शीरम् अनुगम्य भूतानि जङ्गमानि जाठरात्मना स्थावराणि च सूक्ष्मेण चाभिव्यक्तशक्त्यात्मनाऽयं द्वे व्यवतिष्ठते अश्नानि[1] वा, एवंशीलः स शिरोऽग्निः[2], तं शीरमनुशायिनं चेत्यर्थः । [3]पावकशोचिषं पावकदीप्तिम् । ज्येष्ठोऽतिशयेन वृद्धः । यो[4] दमेषु यज्ञगृहेषु । आदीडो[5] दीप्त्यर्थस्येदं[6] रूपमादीप्यते । दीर्घश्रुतमः[7] श्रुय इति श्रुत् कीर्तिः, दीर्घा श्रुद्येषां ते दीर्घश्रुतः । तेषां मध्ये अतिशयेन दीर्घकीर्तिस्तं स्तुम इति शेषः ।

अतः[8] शीरं[9] पावकशोचिषमिति च कर्मश्रुतेः साकाङ्क्षत्वात् अपरश्चैक[10]वाक्यता[11]-

तमर्वन्तं न सानसिं गृणीहि विप्र शुष्मिणम् ।
मित्रं न यातयज्जनम्[12] ॥

तमर्वन्तमि[13] अश्वमिव सानसिं संभक्तारं ग्रामादेः शीघ्रगामिनमित्यर्थः । गृणीहि[14] स्तुहि हे विप्र मेधाविन्[15] आत्मन[16] एवायमन्तेरात्मनः प्रैषः[17] । शुष्मिणं बलवन्तं मित्रमिव[18] च । कीदृशम् ? यातयज्जनम्[19] इति अस्यतेर्वा[20] गतिकर्मण एतद् रूपम् । प्रथमम[21]ग्निहोत्रादौ[22] यः कारयति[23] वा स्वर्गं जनान्यष्टॄन्[24] स यातयज्जनोऽग्निः ।

विद्रधे[25] द्रुपदे इत्यनवगते । तयोर्मतभेदे[26]नानेकार्थत्वमनवगमं* च लाघवान्निगमेनैव दर्शयिष्यामीत्युपन्यासाद् द्वयोरप्येकमुदाहरणम् ।

[ इति नवमस्यान्(चतुर्थस्य) ——

चतुर्दशः खण्डः ।][27]

———

१–अत्र 'अश्नाति' इति युक्तं स्यात् ।
२–अत्र 'शीरोऽग्नि.' इति पाठो युक्तः ।
३–'अग्निरभिधेयः । निगम.' इत्यारभ्य 'पावकशोचिषं' इत्यन्तः पाठस्त्रुटितः B. ४–यद्दमेषु C.
५–अत्र 'दीडो' इत्यस्मात् पूर्वम् 'आदीदाय' इति पाठो भवेत् । तत्र 'दीदाय' इति त्रुटितं स्यात् । [धा० ४ । २६] अयं क्षयार्थ एव । डो इति द्विर्लिखितम् B. आदिडीडो C.
६–दीप्तिर्थस्येद B. C. ७–श्रूतमः C.
८–अनेः B C. ९–शिरं B.
१०–'अपरश्चैकवाक्यता' इति पाठो युक्तः स्यात् ।
११–वाच्यता B.
१२–[ ऋ० ८ । १०२ । १२ ]
१३–न्तं मन्न B. १४–गृणीभि C.
१५–०विन् C.
१६–आत्मनः इति द्विर्लिखितम् C.
१७–प्रेषः C. १८–०मिति च B.
१९–अप्रयत्न B. C. २०–[Cf. धा० १।३४]
२१–प्रतमग्नि० B. C २२–०त्रादनयः B.
२३–'यातयति' इति युक्तं स्यात् ।
२४–०न्यष्टॄन् C. न्यष्टक् B.
२५–विद्रथे C. २६–भेदाना० C.
२७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।
* 'मवगमं' इत्युचितम् ।

# [ अथ पञ्चदशः खण्डः । ][1]

कनीनकेव विद्रधे नवे द्रुपदे अर्भके ।
बभ्रू यामेषु शोभेते[2] ॥

वामदेवस्य । कनीनके कन्यके । प्रथमाद्विवचनस्यायमाकार आदेशः । कनीनका इव कनीनकेव । इतरथा हि प्रगृह्यत्वात्[3] कनीनके इव इति स्यात् । तेनायमर्थः, यथा कन्यके विद्रधे[4] द्रुहेर्[5]हिंसार्थस्येदं रूपम् । व्यत्ययेन चात्र सर्वत्र[6] बहुवचनस्य स्थाने एकवचनम् । विद्रधेषु इत्यवगमः । विविधं हिंसितेषु अधःकृतेष्वित्यर्थः[7] । नवनवेषु नवघटितेषु द्रुपदेषु दारुमयेषु पादुकाख्येषु अर्भके अल्पकेषु अन्यूनानतिरिक्तेषु । सप्तमीश्रुतेरारूढे इति शेषः । एवमेतानि कन्ययोरधिष्ठानप्रवचनानि सप्तमीबहुवचनस्य स्थाने एकवचनानीति शाकपूणिर्मन्यते ।

यास्कस्तु कनीनकेव इति कन्ययोर्दृष्टान्तत्वेनोपन्यासादर्थसामर्थ्यात् नवे अर्भके इत्येते द्वे कन्ययोर्विशेषणे । सप्तम्येकवचने प्रथमाद्विवचने च तुल्यश्रुतित्वात् प्रथमाद्विवचनान्ते इति मन्यते । नवजाते अर्भके अल्पकाल्पप्रमाणके[8] ये तथ[9] । के ते[10] ? यथा विद्रधेषु[11] द्रुपदेषु पादुकाख्येषु आरूढे । एवं[12] वा पादुकास्थानेषु[13] खुरेषु[14] आरूढौ[15] बभ्रू[16] बभ्रुवर्णाविदयौ । यामेषु यामशब्दो रथवचनः । कुत एतत् ? 'वीळो[17] वीळित वीळयस्व मायामादस्मादवजीहि[18] वो न'[19] इति मन्त्रान्तरे अर्थदर्शनसामर्थ्यात् । रथेषु आजि[20]धावनादिषु वा यानस्थानेषु शोभेते । एवमेव चानवगतेषु विद्रधे[21] द्रुपदे इति द्वयोः पाठ उपपन्नः । शाकपूणिमते तु वचनावगमाय चत्वार्यपि पदानि स्युः ।

एकपदनिरुक्तम् । कन्या कमनीया प्रार्थनीया[22] भवति सर्वस्य । क्वेयं नेतव्येति[23] वा । प्राक्

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ४।३२।२३] 'कनीनकेव' इत्येव प्रतीकम् B. कत्सनीनकेव C.
३–प्रगृह्य० C. ४–विद्रथे C.
५–[ Cf. धा० ४।८८ ]
६–सर्वस्य C.
७–कृपितेष्वि० C.
८–प्रथमाण० C.
९–अत्र 'तथा' इति पाठः स्यात् ।
१०–से ते B. ११–विद्रथेषु C.
१२–एव B. १३–०दुकस्था० C.
१४–खुरे ( अश्वे ) षु B.
१५–आरुढा C. वस्तुतस्त्वत्र 'आरुढे' इत्येव पाठः स्यात् ।
१६–बभूव B. १७–विलित C.
१८–०वजी इ B.
१९–[ अनुपलब्धमूलमिदं वचनम् ]
२०–कदाचिदत्र 'धाजि' इति स्यात् ।
२१–विद्रथे C. २२–प्रार्थनीया इति नास्ति B.
२३–तव्येति C.

प्रदानकालात् कन्यायाः पितुरेवं चिन्ता भवति। उद्वाहलक्षणेन नयनेन क्वेयं मया नेतव्या केनोद्वाहयितव्येत्यर्थः। कनतेर्वा कान्त्यर्थस्य। कन्या हि बाल्यात्सर्वस्य कान्ता। द्राह दृणातेर्विदारणार्थस्य। द्रुणातेर्वा[4] वधकर्मणः। तस्मादेव धातुद्वयाद्रूपम। यड्वो[5]-रद्वयोः संस्तव ऋत्यच[6] समस्तार्थवचनम्।

तुर्वनि[7] इत्यनवगतम्। तस्याभिधेयावगमो निगमादेवोपगम्यत इति निगमस्य समस्तार्थमाह[8]। इदं च[9] मेदादित्यादिना। ऋषिः सौभरिः प्रसंख्याय गणयित्वाह 'सुवास्त्वा अधि तुर्वनि'[10]। अत्र सुवास्तुर्नदी तस्यास्तुग्व तीर्थं तस्य तीर्णमेनत्[11] इत्यादि निर्वचनम्। तीर्थं पानायावगाहनाय वा क्षिप्रमागच्छन्ति। निगमः—

अदान्मे पौरुकुत्स्यः पञ्चाशतं त्रसदस्युर्वधूनाम्।
मंहिष्ठो अर्यः सत्पतिः[12]॥

अत्र सौभराख्याने वर्त्ते (?) इतिहासः। सौभरिर्नाम ऋषिः। स नद्या उदके तिष्ठन्[13] पुत्रसहस्रेण परिवृतं सामन्तं[14] नाम मत्स्यं ददर्श। तेनोपजातापत्याभिलाषश्च[15] दारार्थी त्रसदस्युं राजानमुपगम्य इदमुवाच। तव पञ्चाशत् कन्यास्तासामेकां भार्यार्थं मह्यं देहीति। स तं विरूपं वृद्धं दृष्ट्वा सापदेशं प्रत्याख्यातुं प्रत्युवाच। कुलधर्मोऽयमस्माकं कन्याः स्वयंवरा इति। एतज्ज्ञात्वा त्वं[16] कन्यान्तःपुरं गत्वा या वरयिष्यति[17] सा तुभ्यमिति। स कथं[18] तथा प्रत्याकलय्य योगैश्वर्यबलाद् दिव्यं रूपमास्थाय कन्यान्तःपुरं जगाम। स तत्र[19] रूपयौवनलावण्यातिशयक्षिप्तान्तःकरणाभिः सर्वाभिः कन्याभिर्युगपदेव[20] वृतः। विदित्वैतद् वृत्तान्तं राजा त्रसदस्युरतस्मै ताः सर्वाः सुवास्त्वां* तीर्थे प्रादात्[21]। तस्या[22] गृहीत्वा[23] आगच्छन्तं पथीन्द्रो ददर्श। स एनं पप्रच्छ कुतस्तवेयं[24] विभूतिरिति। स तस्मादाचचक्षे।

१–माया C. २–नेतव्या C.
३–[ निघ० २।१९ ] ४–द्रुया द्रुवे C.
५–यड्वो० C.
६–ऋत्यऋच C. अत्र 'इत्यृचः' इति पाठो युक्तो भवेत्।
७–तुन्वनि B. तुन्यनि C. ८–०माहुः B.
९–इदय मे C. १०–[ ऋ० ८।१९।३७ ]
११–'तूर्णमेतत्' इति मूलानुसारी पाठो युक्तः।
१२–[ ऋ० ८।१९।३६ ] 'अदान्मे पौरुकुत्स्यः' इत्येव प्रतीकम् B. C.
* 'सुवास्त्वास्तीर्थे' इत्युचितम्।
१३–तिष्ठत् C. १४–सामनं B.
१५–तनोप० C.
१६–अत्र 'त्वां' इति पाठो युक्तो भवेत्।
१७–वरियीष्यति C.
१८–अत्र 'कथनं' इति पाठो युक्तो भवेत्।
१९–ततः B. २०–युगवदेव गृतः C.
२१–प्रदात् C.
२२–अत्र 'कन्याः' इति पाठो युक्तः।
२३–गृही इति द्विर्लिखितम् B. २४–कुतस्तेयं C.

अदात्[1] दत्तवान् मह्यं पौरुकुत्स्यः पुरुकुत्सस्य पुत्रस्त्रसदस्युर्नाम पञ्चाशतं कन्याः । एतासां वधूनामचिरोढा स्त्री वधूरुच्यते । मंहिष्ठो मंहतेर्दानार्थस्य इष्ठनि रूपम् । अतिशयेन दाता[2] । अयं ईश्वरः । सत्पतिः सतां पाता ।

उत मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि ।
तिसृणां सप्ततीनां श्यावः प्रणेता भुवद्वसुर्दियानां पतिः[3] ॥

अपिच मे मह्यं प्रयियोर्वयियोर्द्वितीयार्थे षष्ठी, अत्यर्थं प्रयाति तत् प्रयियु अश्वो-[4]ष्ट्रादि, ऊयते यत्तद् वयिषु[5] वस्त्रं कम्बल[6]प्रावरणास्तरणादि तच्च दत्तवान् । अथवा प्रयियोरिति[7] सुवास्त्वा तते विशेषणे । वयतिश्चात्र सन्तानमात्रलक्षणार्थः । प्रयियोरत्यर्थं[9] प्रयित्रमः[10] वयियोः सन्ततायाश्च सुवास्त्वा[11] सुवास्तुनाम्ना[12] नद्या अधिवनि[13] तीर्थस्योपरीत्यर्थः । एतन्मन्त्रलिङ्गमूलं तु[14] 'देशे काले च यत्पात्रे[15]' इति स्मरणाद् द्रष्टव्यम् । गवां च तिसृणां सप्ततीनां दशोत्तरे द्वे शते तिस्रः सप्ततयस्तासाम् । श्यावः श्याववर्णो[16] वृषभः । प्रणेता अग्रतो गामी । भुवद् आसीत् । वसुः[17]-'वस[18] आच्छादने[19]' सर्ववृषभाणां स्वेन शोभातिशयेन आच्छादयिता । दियानां देयानां गवां पतिर्भर्तृभूतः । शोभने[20] च द्वे शतोत्तरे श्यावेन वृषभेण सह दत्तवानित्यर्थः ।

नंसन्ते इत्यनवगतम् । नंसन्ते[21] इति प्राप्ते नमतेर्मकारात्परं सकारागमः । निगमः—

ताँ आ रुद्रस्य मीळ्हुषो विवासे कुविन्नंसन्ते मरुतः पुनर्नः ।
यत्सस्वर्ता जिहीळिरे यदाविरव तदेन ईमहे तुराणाम्[22] ॥

वसिष्ठस्यार्षम् । तान् प्रकृतान् रुद्रस्य मीढुषः सेक्तुर्धनवतो वा पुत्रानिति शेषः । कुत एतत् ? ऋग्वेदे[23] 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः[24]' इत्यादौ मन्त्रान्तरे दर्शनात् । आविवासे विवासतिः परिचर्यायाम्, आभिमुख्येन परिचरामि । कस्मात् ? यस्मात् कुविद्

---

१–आदात् C. २–०येनादाता C.
३–[ऋ० ८।१९।३७] 'उत मे' इत्येव प्रतीकम् B C.
४–श्वाष्ट्रादि B. ५–प्रयियु B. पयि C.
६–वावर C.
७–'प्रयियोर्वयियोरिति' इति पाठो युक्तः स्यात् ।
८–अत्र 'नद्याः' इति पाठो युक्तो भवेत् ।
९–अत्यर्थं B. C.
१०–प्रयित्रभः C. अत्र 'प्रयित्र्याः' इति पाठः स्यात् ।
११–'सुवास्त्वाः' इति सविसर्गः पाठ उचितः ।
१२–नाम्नेना C.
१३–अधिपनि C. अत्र 'अधितुग्वनि' इति पाठो युक्तो भवेत् । १४–च C.
१५–[ भ० गी० १७।२० ] 'यत्पात्रे' इत्यस्य स्थाने 'पात्रे च' इति पाठो गीतायाम् ।
१६–श्याम व० B. १७–वसु C.
१८–वसः C. १९ –[ धा० २।१३ ]
२०–शोभेन B. २१–'नमन्ते' इत्युचितम् ।
२२–[ ऋ० ७।५८।५ ] 'ताँ आ रुद्रस्य' इत्येव प्रतीकम् B. C. २३–'ऋग्वेदे' इति स्यात् ।
२४–[ऋ० ६।६६।३]

बहुवचनान्तं नसन्ते नमन्ते वर्षाद्युपकारेण प्रह्वीभवन्ति[1] । मरुतः पुनः-अन्तर्नीतवीप्सार्थो-[2]ऽयं पुनःशब्दः पुनः पुनः पुनः[3]। नोऽस्माकम् । किञ्च यत्र सस्वर्ता सस्वरित्यन्तर्हितनाम तर[4] इति 'तनु विस्तारे'[5] इत्यस्य रूपम् । अन्तर्हितमेव तायमानमप्रकाशमानमेवेत्यर्थः । जिह्मीळिरे लज्जयन्ति[6] । यदाविर्यच्च प्रकाशं तदुभयमपि एनः[7] पापम् अव ईमहे अवेत्येव अपेत्यं-[8]तस्य स्थाने ईमहे इति 'इण् गतौ'[9] इत्यस्य अन्तर्नीतण्यर्थस्य[10] रूपम्, अवगमयेम[11] नाशये-मेत्यर्थः । तुराणां सर्वस्य स्वशत्रोरेत्तुर्वितृणां[12] त्वरमाणानां मरुतां प्रसादेनेति शेषः ।

नसन्ते इत्यनवगतम् । तदुपरिष्टाद् द्वादशे[13] 'घृतस्य धाराः समिधो नसन्त'[14] इत्यत्र व्याख्यास्यामः ।

आहनस इत्यनवगतम् । आहननवन्त इत्यवगमः । निगमः—

परि सोम प्र धन्वा स्वस्तये नृभिः पुनानो अभि वासयाशिरम् ।

ये ते मदा आहनसो विहायसस्तेभिरिन्द्रं चोदय दातवे मघम्[15] ॥

भार्गवस्य कवेरार्षम् ।[16] हो सोम एतस्माद् दशापवित्रात् परि प्रधन्व[17] सर्वतः प्रगच्छ प्रक्षरेत्यर्थः । स्वस्तये अविनाशाय कर्मणोऽस्माकं वा । नृभिर्मनुष्यैर्ऋत्विग्भिः पुनानः पूयमानो ऽभिवासय[18] ........ वय चेत्यर्थः[19] । आशिरं दधिपूतभृतिद्धावनीतम्[20] । ये च तव मदाः । आहनसः 'ब्राह्मण इदमाहतम' इत्यादौ दर्शनादाहन्निर्वचनार्थं[21] वचनवन्तः पाटव-[22]

१-भवद्भिः C. अयमपि पाठः B.

२-अन्तर्णीत० C.

३-पुनः इत्यधिकमेव ।

४-अत्र 'ता' इति पाठः स्यात् ।

५-[ धा० ८।१ ]

६-०यति C.

७-ए इति त्रुटितम् C.

८-अवेत्ये० C.

९-[ धा० २।३६ ]

१०-अन्तर्णीतन्यर्थस्व C.

११-अवगम० C.

१२-०रत्तुर्पितृणां C. 'वित्' इत्यस्य स्थाने ( तुरा ) इत्यपि पाठः B. कदाचिदत्र 'स्वशत्रोरत्तृणा' इति पाठः स्यात् ।

१३-[ निरु० ७।१७ ] ०दशे स्तृ B. C.

१४-[ ऋ० ४।५८।८ ]

१५-[ऋ०९।७५।५]'परि सोम' इत्येव प्रतीकम् B.C.

१६-'हे' इत्युचितम् ।

१७-प्रधन्वा B.

१८-अत्र कश्चन पाठस्त्रुटितः । कदाचिदत्र 'अभि-प्रच्छादय अभिभावय चेत्यर्थः' इत्ययं पाठो भवेत् ।

१९-वेत्यर्थः B.

२०-०भृतियदव० C. सदिग्धमिदं पदजातम् कदा-चिदत्र 'दधिपयोघृतनावनीतम्' इति पाठो भवेत् । आशिर हि दध्यादि वस्तुजातं सोमो भूयस्त्वेनाभिभवति । मिश्रणे सोमरसाधिक्येन दध्यादि न ज्ञायत इत्यर्थः । सोमाशिरमिश्रण तु तृतीयसवने क्रियते ।

२१-दाहन्नि० B. 'आहन्तिर्वचनार्थः' इति पाठो युक्तः ।

२२-पादव० C. 'पटुवचनाः' इति युक्त स्यात् ।

जनना नः संमोहकरा इत्यर्थः। विहायसो महद्धाम मदं[1] महान्तः। तेभिस्तैरिन्द्र चोदय दातये[2] दातुमस्मभ्यं मघं धनम्।

अश्नसत्[3] इत्यनवगतम्। अश्नेरौणादिके मन्प्रत्यये[4] अश्न[5]। अन्नम्[6]भिधेयम्। तस्मिन्नात्मनि[7] सीदति तद्वा संभजते अश्ननि[8] उपपदे सदेः सनेर्वा 'अन्येभ्योऽपि दृश्यते' 'क्विप्'[9] इति क्विप्यपि रूपम्। पदसत्वादनवगतम्[10]। अश्नसानिनीति[11] वेत्यवगमः। निगमः—

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य
पञ्चदशः खण्डः। ][12]

---

१–अत्र 'इदं' इति पाठो युक्तः।
२–जातवेदाः तुभ्यमस्म॰ B.
३–अश्नसत् C.
४–[ उणा॰ ४।१४५]
५ अद्र B.
६–अत्र 'अन्नम्' इति पाठो युक्तः।
७–अत्र 'अद्मनि' इति पाठो युक्तः।
८–म इति त्रुटितम् B.
९–[ पा॰ ३।२।७५, ७६ ] 'क्विप्' इत्यस्य स्थाने 'विच् च' इति पाठो युक्तः।
१०–अद्मगत्वा॰ इति पाठो युक्तः स्यात्।
११–ति इति त्रुटितम् C. अत्र 'अन्नसादिनीति वा अन्नसानिनीति वा' इति पाठो मूलानुसारी युक्तः स्यात्।
१२–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

# [ अथ षोडशः खण्डः ।[1] ]

उपो अदर्शि शुन्ध्युवो न वक्षो नोधा इवाविरकृत प्रियाणि ।
अद्मसन्न ससतो बोधयन्ती शश्वत्तमागात् पुनरेयुषीणाम्[2] ॥

कक्षीवत आर्षम् । उपो उकारः पदपूरणः । उपोपसर्गश्रुतेश्च योग्यक्रियापदाध्याहारः । उपगता उदिता सतीत्यर्थः । अदर्शि वर्तमाने कर्मणि लुङ्, दृश्यते उषाः । किमिव ? शुन्ध्युवो न वक्षः[3] उदकेचरो[4] वा पक्षी हंसादिः शुक्लवर्णस्तस्येव वक्ष[5] उरः, भास्वरा शुक्लवर्णा वेत्यर्थः । किञ्च आविरकृत स्वेन ज्योतिषा कृत्स्नं जगदाविष्करोति । नोधा ऋषिः स यथात्मनः प्रियाणि[6] धनादीनि स्वेनार्पेण 'सपर्यामि प्रयसा[7]' 'नुष्ठिरं मरुतो विहतो वीरवन्तम्[8]' इत्यादिनाविष्कृतवान्, तद्वत् । किञ्च अद्मसेन्नदनादश्वं[9] तस्मिन्[10] यक्षितृत्वेन सीदति सनोति वा तस्मा अद्मसत सा च सामर्थ्यात् सूपकारी[11] मक्षिका वाञ्चारिप्रवत्ता मा यथा प्रा[12]तरुत्थाय क्षीरादिसंग्रहार्थं जनान् प्रबोधयति[13] । शश्वत्तमागात्[14] पुनरेयुषीणाम् । शश्वच्छब्दो नित्यवचनः पुनरायान्ति ताः पुनरेयुष्यो यथोषसः । उषसो हि गत्वा प्रत्यहमुदेष्यन्त आदित्यात् पुनरायान्ति । गवादयो हि गव्यूतिप्रभृति गत्वा गत्वा पुनरायान्ति । निर्धारणे चेयं षष्ठी । अतिशयेन नित्या पुनरेयुषीणां मध्ये आगात् कृत्स्नं जगदभ्येति व्याप्नोतीत्यर्थः ।

शुन्ध्युरादित्यो[15] भवति शोधनात् । स हि तमसा व्याप्तं कृत्स्नं रश्मिभिः शोधयति । तमोऽस्मादपनयतीत्यर्थः । अथवा अशुद्धमशुचि[16]तः शुचीकरोति । यथाच स्मृतिः—

स्पर्शने विहितं शौचं सोमसूर्यांशुमारुतैः[17] । इति ॥

भासाध्यूढमित्यादित्यवक्षसो[18] निर्वचनप्रदर्शनम् । आदित्यवक्षो[19] हि दीप्त्या रूढम्, 'वह प्रापणे'[20] । तया[21] न प्रयोजकव्यापारभूतया प्रयोज्यव्यापारः[22] प्राप्तिर्लक्ष्यते ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १।१२४।४ ] 'उपो अदर्शि' इत्येव प्रतीकम् B. C.
३–पक्षः C. ४–उदकचरः C.
५–पक्षः C. ६–प्रियाणि इति त्रुटितम् B.
७–मि इति त्रुटितम् B. प्रेय० B. [ ऋ० १।१६।७।१।५।४।३ ]
८–[Cf. ऋ० १।६४।१५ नृष्ठिरं मरुतो वीरवन्तम् ।]
९–अद्मरत० B. 'अद्मसदना०' इति युक्तं स्यात् ।
१०–तस्मन् यक्षतृत्वेन B. ११–सूपकारी C.
१२–प्रतरु० C. १३–प्रबाध० B.
१४–'शश्वत्ते' इत्यधिकः पाठः B.
१५–शुन्ध्युरादि० B. शुन्धुरा० C.
१६–शुचि इति त्रुटितम् B.
१७–[ अनुपलब्धमूलमिदं वचनम् ]
१८–हागा० B. C. १९–नि भासा दीप्त्या C.
२०–[धा० १।१०५३]
२१–'तया च' इत्युचितम् । २२–व्याहारः C.

उपरि प्रासं व्याप्तमित्यर्थः । असौ वहे[1]र्वक्षः । इदमपीतरद् वक्षो मनुष्यवक्ष एतस्मादेव धातोः । तदप्यध्यूढं काये उपरि का[2]यस्य व्या[3]प्तं प्रापितं वेत्यर्थः । शकुनिरपि शुन्ध्युरुच्यते शोधनादेव स ह्युदकचरो भवति उदकचरत्वान्नित्यशुद्धः । आपो[4]ऽपि शुन्ध्यु[5]व उच्यन्ते शोधनादेव ता ह्यशुद्धं शोधयन्ति स्नानप्रक्षालनादिना ।

नोधा ऋषिर्भवति । कस्मात् ? स हि वै[6]नं स्तवनं द[7]धाति देवतानाम् । ददाति वा देवताभ्यः । देवताः स्त[8]नतीत्यर्थः । परं भाष्यमृग्व्याख्यानेनैव गतम् ।

इष्मिण इत्यनवगतम् । ईषतेर्गतिकर्मण इषेर्वा इच्छार्थस्य । [9]तथा चागमप्रदर्शनं [10]ईषणिन प्वणिन आर्वणिन इति चेति । निगमः—

श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः ।
ते वाशीमन्त इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः [11]॥

गौतमस्य रहूगणपुत्रस्यार्षम् । '[12]पृश्निदुग्धे प्रैयङ्गवं चरुं निर्वपेत् पृश्निभ्यो ग्रामकामः'[13] इति । तत्रेयं याज्या । पृ[14]क्षय इति मरुतो[15]ऽभिधीयन्ते । श्रियसे श्रीशब्दस्य तादर्थ्ये चतुर्थ्येकवचनम् । छान्दसत्वात् । असुगागमः श्रियै यस्य संपत्त्याख्यायै कमुदकं भानुभिर्दीप्तिभिर्विद्युदाख्याभिः संमिमिक्षिरे '[16]मिह सेचने' सम्यक् सेक्तुमिच्छति[17] मरुतो न केवलाद्भिः किन्तर्हि ? ते रश्मिभिः प्रग्रहैरश्वा[18]नां ते एवम् ऋ[19]भिः-अर्चनमृक् स्तुतिस्तद्वद्भिः । कैः ? सामर्थ्यादश्वै रथैर्वा सर्वैश्चोपकरणैर्वर्तन्तीत्यर्थः ।

अथवा कमिति सुखनाम । संमिमिक्षिर इति म्यक्षते[20]र्गतिकर्मणो रूपम् । तेनायमर्थः । [21]श्रिये यस्य संलक्षणाय सुखाय प्राणिनां रसानुप्रदानकाले दीप्तिभिरादित्यस्य रश्म्या-

---

१–यहेर्वे० C. ०हेर्वृक्षः B.
२–रायस्य C अयमपि पाठः B. ३–प्राप्तं C.
४–आपोप C. ५–पशव B.
६–'नवनं' इति पाठो युक्तः ।
७–अत्र 'ते' इत्यधिकः पाठः C.
८–'स्तौतीत्यर्थः' इति पाठः स्यात् ।
९–'नोधा ऋषिर्भवति' इत्यत आरम्य 'तथा' इत्यन्तः पाठस्त्रुटितः B.
१०–इध्मिणः B.
११–[ऋ० १।८७।६] 'श्रियसे कं' इत्येव प्रतीकम् B.C.
१२–तृश्निये दु० C. 'पृश्नियै दु' इति युक्तम् ।
१३–[तै० सं० २।२।११।४] "पृश्नियै दुग्धे प्रैयङ्गवं चरुं निर्वपेन्मरुद्भ्यो ग्रामकामः ।"
१४–य इति त्रुटितम् C.
१५–०तो ऽपि B. अत्र 'धीयन्ते' इत्यत आरम्य किन्तर्हि ते रश्मिभिः' इत्यन्तः पाठस्त्रुटितः B.
१६–[ धा० १।१०४१ ]
१७–'इच्छन्ति' इति बहुवचनान्तः पाठो युक्तः ।
१८–०रश्चानां C.
१९–ऋभिः C. 'ऋक्वभिः' इति मूलानुसारी पाठो युक्तो भवेत् ।
२०–[ निघ० २।१४ ]
२१–अत्र 'श्रियसे' इति 'श्रियोर्थाय' इति वा युक्तं स्यात् ।

ऋग्भिः संगच्छन्ते । तेन मरुतस्त एव यागकाले स्तुतिमद्भिः । कैः ? सामर्थ्याद् ऋग्भिः सुखादयः[1] शोभनानां चोदितारः[2] । किञ्च ते वाग्मिन्तो वाचा च तवन्तः[3] । इष्मिणो[4] गन्तार इषितारो वा स्तुतीनां हविषां च द्रष्टारो[5] सर्वार्थानामित्यर्थः । अभीरवो भयवर्जिताश्च । किञ्च विद्रे विदेरछान्दसमेतद्[6] रूपम्, वेद्मीत्यर्थः[7], अहम् । प्रियस्य मारुतस्य[8] धाम्नो द्वितीयार्थे षष्ठी, प्रियमारुतं धाम स्थानम् । धाम जन्म तेजो वा सामर्थ्याल्लभ्यम् । वाग्मीति वाङ्नाम्नो[9]र्विवक्षयोपन्यासः । वाद्यन्त इति सत्याः । कर्मणि कारके यो[10]ऽसौ वाद्यते शस्यते ।

वाह इत्यनवगतार्थम् । कल्पनाभेदाच्चानेकार्थम्[11] । स्तुतिरधिषवणचर्म वा अभिधेयम्[12] । निगमः—

शंसावाध्वर्यो प्रति मे गृणीहीन्द्राय वाहः कृणवाव जुष्टम् ।
एदं बर्हिर्यजमानस्य सीदाथा च भूदुक्थमिन्द्राय शस्तम्[13] ॥

विश्वामित्रस्य । होताध्वर्युमाह । अहं च त्वं च समीभूय[14] शंसावहै । अध्वर्यो[15] अहं शंसामि[16] त्वं प्रति मे गृणीहि[17] प्रतिगिरं[18] मे देहि एतत् कुर्वन्तौ यदेतदिन्द्राय[19] इत्थं वाहो देवताः प्रत्यूहमानत्वादहःशब्देनात्र[20] स्तुतिरुच्यते । अथवा यदेतद्रूप[21][22]समीपे तदुदकस्योद्धृतस्य[23] स्थानमावाह इति लोके प्रसिद्धम् । तस्मादश्यात् सोमरसस्य पूर्णमधिषवण इति चर्म वाह इत्युच्यते । तत् कृणवाव करवाव । जुष्टं प्रियमिन्द्रस्य । आकारः सीदेत्यनेन सम्बध्यते[24] । तदर्थमिदं बर्हिर्यजमानस्य स्वभूतमासीद । अथा च अथ चानन्तरमेव भूत वर्तमाने लुङ्[25] अडभावश्च भवति । इत्थमिदं[26] शस्त्रमिन्द्राय शस्तं न कश्चिद् व्याक्षेप[27] इत्युच्यत इत्यभिप्रायः ।

---

१–सुखादयः C. २–चोदितारः B.
३–तवन्तः B. C. ४–ईष्मिणः C.
५–अत्र 'च' इत्यस्मात्परं 'द्रष्टाश्च' इति B. पुस्तके दष्टाश्च' इति C. पुस्तके अधिक एव पाठो भाति।
६–वितेच्छा० C.
७–०न्दसेनैतद् B. ८–वेशमीत्य० C.
९–नाम्निर्वि० C. अत्र 'वाङ्नाम्नो विवक्षया' इति रेफरहित एव पाठः स्यात्।
१०–वान्वि C. 'वान्वी' इत्यपि B.
११–इदं वाक्यं नास्ति B. १२–०भिधेयम् B.
१३–[ ऋ० ३।५३।३ ] 'शंसावाध्वर्यो' इत्येव प्रतीकम् B. C.
१४–समभिभू० C. १५–अध्वमर्यो C.
१६–शसामि C. १७–गृणीह C.
१८–प्रतिकरं B.
१९–०न्ता यदेतदिन्द्रियाय C.
२०–शब्देनात्र C.
२१–यदेतद्० C. २२–'एतद्रूप०' इति स्यात् ।
२३–०स्योद्धतस्य C. २४–सम्बध्येते B.
२५–लुट् B.
२६–'उक्थमिदं' इति पाठो युक्तः ।
२७–व्याक्षेव C.

भाष्ये अभिवदनस्तुतिमिति अभिवहनशब्देन स्तुतिरुच्यते । अधिपवणशब्देन अधि[1]-पवणचर्म । असत्येपि[2] वाशब्दे विकल्पवचनमेतद् द्रष्टव्यम् । अभिवहनस्तुतिमधिपवणप्रवादं वा प्रवदन्तीत्यनेन स्तुतिरुच्यते । ततस्तज्जुष्टवचनेनोच्यते । देवताः प्रतीति वहनसम्बन्धेयं स्तुतिः । अथवा अधिपवणचर्म ततोऽधिपवणप्रवादः । प्रोच्यतेऽसाविति[3] प्रवादः । अधिपवणं[4] प्रवादो यस्यामधिपवणं वा प्रवदन्तीत्यर्थः । साधिपवणप्रवादा[5] ऐन्द्री त्वेषा । पक्षद्वये अधिशब्दस्य ते वाह इत्यस्य गुणत्वाद् गुणत्वं चास्येन्द्रायेतीत्यर्थी[6]-ऽर्थवचनात् ।

परितक्म्या[7] इत्युपरिष्टाद् व्याख्यास्यामः[8] । 'परितक्म्या रात्रिः परिस एनां तक्म' इत्यत्र[9][10] प्रसङ्गाद् व्याख्यास्यामो लाघवार्थम्[11] ।

इति स्कन्दस्वामिकृतायां निरुक्तवृत्तौ
नवमस्या-[ चतुर्थस्या- ] ध्यायस्य
द्वितीयः पादः ।
[ षोडशश्च खण्डः समाप्तः । ][12]

---

१–अभिपव० B.
२–असत्यपि वा C.
३–प्रेत्यते C.
४–अभिप० B.
५–०दाऐन्द्री B.
६–०तीत्यार्थ० C.
७–परितस्म्या C.
८–'व्याख्याम्याम:' इति नास्ति C.
९–तत्र B, C. 'त' इति त्रुटितम् B.
१०–इत्यक्ष B. इत्यस्य C. [ निरु० ११।२५ ]
११–०वार्थः C.
१२–अय कोष्ठकान्तर्गतः पाठो नास्ति B. C.

# [ अथ तृतीयः पादः[1] ।

## सप्तदशः खण्डः । ]

सुविते इत्यनवगतम् । अनेकार्थविकल्पं[2] च । सु इति[3] इते सूते इत्ययगमौ । विकल्पेन एतेः क्तप्रत्यये इतः । तस्मिन् सु इत्युपसर्गस्य यणादेशे प्राप्ते छान्दसत्वादुवङ् । 'पूङ्[4] प्राणिगर्भविमोचनयोः[5]' इत्यस्य वा क्तप्रत्यये इडागम उपजनः[6] । सुगते प्रजायामिति चेत्यर्थः । वचनवैकल्पिके निगमः—

अनाधृष्टमस्यनाधृष्यं देवानामोजः ।
अभिशस्तिपा अनभिशस्तेन्यम् ।
अनु म इदं मतँ व्रतपतिर्मन्यता-
मनु दीक्षा दीक्षापतिरञ्जसा
सत्यमुपागाँ सुविते मा धाः[7] ॥

तानूनप्त्रं करिष्यन्नाज्यमभिमृशन्नाह अनाधृष्टमसि[8] धृषिरभावे अनभिभूतमसि केनचित् । अनाधृष्यं देवानामोजो-ऽसीत्यनुषक्तव्यम् । अनभिभवनीयं च यद्[9] देवानामोजस्तच्चासि । अभिशस्तिपा अभिशस्तिः परस्परद्रोहलक्षणा हिंसा तत्पालयित्[10] । अनभिशस्तेन्यं[11] अनभिहिंसनीयञ्च[12] । अनु मे इदम्—अनुशब्दो मन्यतामित्यनेन संबध्यते[13] । मम इदं व्रतमद्रोहलक्षणं व्रतपतिरग्निरनुमन्यताम् । दीक्षा दीक्षापतिः सोमोऽनुमन्यताम् । अनुतेप[14] अनुमन्यतां चतिह्मकस्तनवाञ्जनादि तपस्पतिरग्निरग्निदेव । यतश्च अञ्जसा ऋजुना अशठेन चित्तेन[15] । सम्यगुपगतमिति पाठान्तरं सत्यमुपगतमित्यर्थः । अतस्त्वमपि सुविते[16] शोभनं गम्यते यत्र स्वर्गादौ तत्र सूते वा प्रजायां वा मा मां धाः निधेहि[17] । स्वर्गे मां गमय प्रजा वा मह्यं देहीत्यर्थः । अनेककर्मत्वं चावधारणार्थम् ।

---

१—पादखण्डारम्भनिर्देशो नास्ति C. 'अथ तृतीयः पादः' इत्येव B.

२—०कार्थ वि० B. ३ —सु इत्येते C.

४—पूङ् इति त्रुटितम् B. C.

५—[ Cf. धा० २।२१ ]

६—न इति त्रुटितम् B. उपजच C.

७—[ मैत्रा० सं० १।२,७ ] 'अनाधृष्टं' इत्येव प्रतीकम् B. C.

८—अत्र 'धृ' इत्यधिकम् B.

९—'च यद्' इति नास्ति B.

१०—अत्र 'ततः पालयित्' इति युक्तं स्यात् ।

११—न इति त्रुटितम् B.

१२—च इति नास्ति B.

१३—सिन्य इति त्रुटितम् C.

१४—अनुतनः C. इदं वाक्यं सन्दिग्धमेव ।

१५—चित्तेन C.

१६—सुपिते C.

१७—निधेहि C.

दयते।[1] दयतिरनेककर्मैव नरवनयगतो[2]ऽपि सुविता[3]दिवत् । 'नतेन पूर्वं दयमानाः स्याम'[4] इत्युपदयाकर्मा । उपदया रक्षा चतुर्दशे शेषः पठ्यते । तत्रैव व्याख्यास्यते। य एक इद्धि दयते[5] यद्ध्विति[6] दानार्थो वा विभागार्थो वा ।

य एक इद् विदयते वसु मर्ताय दाशुषे[7]।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग[8] ॥

राहूगणस्य[8] गौतमस्यार्षम् । य एक[9] इत् एवार्थे एक एव विदयते विविधं[10] ददाति विभजते वा[11] । किम् ? वसु धनम् । कस्मै[12] ? मर्ताय मनुष्याय । किंभूताय ? दाशुषे हवींषि दत्तवते यजमानाय । यतः[13] श्रुतेः स इत्यध्या[14]हार्यम् । स ईशान ईश्वरः[15] कृत्स्नस्य जगतः । अप्रतिष्कुतः अप्रतिगतश्च केनचिद् युद्धेन नाभियुक्तोऽप्यत्यभियुक्तपूर्व इत्यर्थः । कोऽसौ ? इन्द्रः । अङ्गेति निपातः क्षिप्रार्थो[16] विदयत[17] इत्यनेन सम्बध्यते । क्षिप्रं ददाति विभजते चेति ।

'दुर्वर्तुर्भीमो दयते वनानि' इति दहतिकर्मा—

अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो नाशनिः सृजाना ।
शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि[18] ॥

भरद्वाजस्यार्षम्[19] । दावरूपस्याग्नेः स्तुतिरेषा । प्रवृत्तश्च दावरूपोऽग्निः, अथ अनन्तरमेव चास्य जिह्वा जिह्वास्थानीया ज्वाला पापतीति वीप्सेत्यर्थः । प्रतपति[20] गच्छति । वृष्णो हविर्वहनद्वारेण वर्षितुः । गोषुयुधो न गाव आप[21]स्तासु निमित्तभूतासु योद्धृत्वाद् गोषुयुत इन्द्र उच्यते । तस्यैव स्वभूता अशनिः सृजाना तेन विसृज्यमाना क्षिप्यमाणे-त्यर्थः । किञ्च शूरस्येव यादृशी शूरस्य मनुष्यस्य प्रसितिः स्यतेरिदं रूपम । स्यतिश्चोप-सृष्टो[22] विमोचने हत्वा हताः शत्रवो यत्र विमुच्यन्ते सा प्रसितिः संग्रामभूमिः सा हता-

१–दयते । दयतिः इति नास्ति C.
२–०गः तः वि B. ०तो वि C.
३–०विदिता० C.
४–[ मैत्रा० सं० ४।१३।८।। तै० ब्रा० ३।६।१३] का० सं० १९।१३ ॥
५–[ निरु० ९।४६ ]
६–द्विदिति C.
७–[ ऋ० १।८४।७ ] 'य एक इत्' इत्येव प्रतीकम् B. C.
८–राहू इति त्रुटितम B. रभू C.
९–एकं C.
१०–वीविधं C.
११– किम् इति त्रुटितम B.
१२–तस्मै C.
१३–यति श्रु० C.
१४–इत्याध्या० C.
१५–शिवः B.
१६–तथापि B.
१७–त इति द्विर्लिखितम C.
१८–[ ऋ० ६।६।५ ] 'अध जिह्वा' इत्येव प्रतीकम् B. C.
१९–आर्षम् इति नास्ति C.
२०–प्रपतति इति पाठो युक्तो भवेत् ।
२१–आपम ता० C.
२२–'०सृष्टो' इत्युचितम ।

मित्यभिसम्बन्धेनादेव्य उच्यन्ते ता अदेवीरतिसन्धानप्रज्ञाः प्रगदने आकर्षणाभिभवति । दुरेवा मायाविशेषणमेतत् । अवते रक्षणार्थस्य दूरक्षा इत्यर्थः । अग्नेर्वा विशेषणम् । अवतिरपि तर्पणार्थो दुस्तर्पः । शिशीते निद्यति च । स्वयमर्थ स्त्री चू........ ।

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य

अष्टादशः खण्डः । ]

---

१—०त्यभिः स० B. C.

२—०न्यो नान्य उच्य० B.

३—ण इति त्रुटितम् C.

४—दुरक्षा B.

५—स्वयमर्च स्त्री पु C. इतः परमाखण्डपरिसमाप्तेः कश्चित् पाठस्त्रुटित आदर्शपुस्तकेषु । तत्र 'शिशीते' इत्यस्य किंचिद् व्याख्यानमेव वर्तते । 'सुतुकः सुप्रायणाः' इत्यनयोश्च सर्वं व्याख्यानं त्रुटितम् ।

६—आदर्शपुस्तकेष्वत्र खण्डसमाप्तनिर्देशो न दृश्यते ।

दयते। दयतिरनेककर्मैव नत्वनवगतोऽपि सुविंतादिवत्। 'नतेन पूर्वं दयमानाः स्याम' इत्युपदयाकर्मा। उपदया रक्षा चतुर्दशे शेषः पठ्यते। तत्रैव व्याख्यास्यते। य एक इद्धि दयते वंस्विति दानार्थो वा विभागार्थो वा।

य एक इद् विदयते वसु मर्ताय दाशुषे।
ईशानो अप्रतिष्कुत इन्द्रो अङ्ग॥

राहूगणस्य गौतमस्यार्षम्। य एक इत् एवार्थे एक एव विदयते विविधं ददाति विभजते वा। किम्? वसु धनम्। कस्मै? मर्ताय मनुष्याय। किंभूताय? दाशुषे हवींषि दत्तवते यजमानाय। यतः श्रुतेः स इत्यध्याहार्यम्। स ईशान ईश्वरः कृत्स्नस्य जगतः। अप्रतिष्कुतः अप्रतिगतश्च केनचिद् युद्धेन नाभियुक्तोऽप्रत्यभियुक्तपूर्व इत्यर्थः। कोऽसौ? इन्द्रः। अङ्गेति निपातः क्षिप्रार्थो विदयत इत्यनेन सम्बध्यते। क्षिप्रं ददाति विभजते वेति।

'दुर्वर्तुर्भीमो दयते वनानि' इति दहतिकर्मा—

अध जिह्वा पापतीति प्र वृष्णो गोषुयुधो नाशनिः सृजाना।
शूरस्येव प्रसितिः क्षातिरग्नेर्दुर्वर्तुर्भीमो दयते वनानि॥

भरद्वाजस्यार्षम्। दावरूपस्याग्नेः स्तुतिरेषा। प्रवृत्तश्च दावरूपोऽग्निः, अथ अनन्तरमेव चास्य जिह्वा जिह्वास्थानीया ज्वाला पापतीति चोप्सेत्यर्थः। प्रतपति गच्छति। वृष्णो हविर्वहनद्वारेण वर्षितुः। गोषुयुधो न गाव आपस्तासु निमित्तभूतासु योद्धृत्वाद् गोषुयुत् इन्द्र उच्यते। तस्यैव स्वभूता अशनिः सृजाना तेन विसृज्यमाना क्षिप्यमाणेत्यर्थः। किञ्च शूरस्येव यादृशी शूरस्य मनुष्यस्य प्रसितिः स्यतेरिदं रूपम्। स्यतिश्चोपसृष्टो विमोचने हत्वा हताः शत्रवो यत्र विमुच्यन्ते सा प्रसितिः संग्रामभूमिः सा हता-

१–दयते। दयतिः इति नास्ति C.
२–०गः तः त्वि B. ०तो त्वि C.
३–०विदिवा० C.
४–[ मैत्रा० सं० ४।१३।८।। तै० ब्रा० ३।६।१३] का० सं० १९।१३॥
५–[ निरु० ६।४३ ]
६–त्विदिति C.
७–[ ऋ० १।८४।७ ] 'य एक इत्' इत्येव प्रतीकम् B. C.
८–राहू इति त्रुटितम् B. रभू C.
९–एकं C.
१०–वीविधं C.
११– किम् इति त्रुटितम् B.
१२–तस्मै C.
१३–यति श्रु० C.
१४–इत्याध्या० C.
१५–शिवः B.
१६–तथापि B.
१७–त इति द्विर्लिखितम् C.
१८–[ ऋ० ६।६।५ ] 'अध जिह्वा' इत्येव प्रतीकम् B. C.
१९–आर्षम् इति नास्ति C.
२०–प्रपतति इति पाठो युक्तो भवेत्।
२१–आपस ता० C.
२२–'०सृष्टो' इत्युचितम्।

द्वृतैः शत्रुभिराकीर्णा । ईदृशी क्षाति[1] क्षिपते[2] दृह्यमाना ओषधिवनस्पतयो यस्यां सा क्षातिर्मगभूमिः[3] । सा दग्धा दग्धौषधिवनस्पतिभिराकीर्णा अभेद्यावरूपस्य[4] । किञ्च दुर्वर्तुदुर्वारो[5] दावरूपोऽग्निः । भीमो भयानकः । दयते दहति वनानि ।

'विदद्वसुर्दयमानो वि शत्रून्' इति हिंसाकर्मा—

इन्द्रः पूर्भिदातिरद्दासमर्कैर्विदद्वसुर्दयमानो वि शत्रून् ।
ब्रह्मजूतस्तन्वा वावृधानो भूरिदात्र आपृणद्रोदसी उभे[6] ॥

विश्वामित्रस्य । इन्द्रः पूर्भित्[7] पुरां भेत्ता[8] । आतिरत् तरतिर्वधकर्मा । आतिरदिति[9] वधकर्मसु पाठात् । आभिमुख्येन वहति[10] । कम ? दासमुपक्षयितव्यं मेघम । कैः ? अर्कैः[11] । वज्रोऽत्रार्क उच्यते । ते[12] पानन[13]साधनत्वादेव वा मरुतः । वज्रैर्देवैर्वा[14] मरुद्भिः सह । विदद्वसुर्दयमानो विविधं हिंसन्[15] शत्रून् । ब्रह्मजूतो ब्रह्मणा[16] स्तुत्याख्येनाभिगतः । तन्वा शरीरेण वावृधानो वर्धमानः । भूरिदात्रो बहुदानः । आपृणद् आभिमुख्येन । रोदसी उभे[17] उभे अपि द्यावापृथिव्यौ ।

मां विहायस इत्यत्र विहायोगतिकर्मणा दयतिनार्थमाह-डयमान[18] इति । 'मा वायस' इत्यस्य शेषः ।

इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विना तान् ।
अयं[19] हि वामूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत्[20] ॥

अस्यार्थः । तानिति तच्छब्दश्रुतेर्ये इत्यध्याहार्यम् । ये इमे सुता अभिषुता[21] इन्दवः सोमाः हे (?) प्रातरित्वना प्रातर्गामिनौ सह उपसा पिबतमश्विनौ तान्[22] अयं[23] हि

---

१–अत्र 'क्षातिः' इति युक्तं स्यात् ।
२–अत्र 'क्षिप्यन्ते' इति पाठः स्यात् ।
३–'भोगभूमिः' इति पाठो युक्तः।
४–'सतिश्चोपदृष्टा विमोचने' इत्यत आरभ्य 'दावरूपस्य' इत्यन्तः पाठस्त्रुटितः B.
५–दुर्वृत्तः B.
६–[ ऋ० ३।३४।१ ] 'इन्द्रः पूर्भित् ( कू C. ) इत्येव प्रतीकम् B. C.
७–पूर्भिन् C. ८–मो C.
९–[ निघ० २।१९ ] अतिरत् तिरदिति C.
१०–वहन्ति C. ११–मेघैः B.
१२–ते इति नास्ति C.
१३–वानन C. अत्र 'पातन' इति पाठो युक्तः ।
१४–०नद्वादे० C.
१५–हिसन् C.
१६–ब्राह्मणा ( णैः ) B.
१७–उभे इति त्रुटितम् C.
१८–मूले तु 'डयमान' इति पाठो न दृश्यते । तत्र 'दयमान' इत्येव ।
१९–मुद्रितपुस्तके 'अहं' इति पाठः ।
२०–[ निरु० ४।१७ ]
२१–अभिप्रुताः B.
२२–तान C.
२३–अयं हि इति द्विर्लिखितम् C.

यस्माद् वां युवयोरेतये तर्पणाय वन्दनाय स्तवनाय च मां वायसः काको दोषा रात्रौ दयमानः 'डीङ् विहायसा गतौ' आकाशेन गच्छतीत्यर्थः, अबुबुधत् बोधितवान् ।

नूचित् इति निपातः पुराणनवयोर्नूच इति च । नूचिदिति च द्वावेतौ निपातौ नैकः । अतोऽध्याहार्यः । नूचिदित्यत्र निपात ये यो यत्र इति निपातो नूचेत्यत्र च अयं पुराणनवयोर्वर्तते । नूचेत्यत्र नेचे । चिच्छब्दचशब्दौ तु समुच्चये । यतश्च नु इत्ययं पुराणनवयोर्वर्तते । अतोऽनेकार्थः । अनेकार्थः । अनेकार्थत्वाच्च इहैकपदिके प्रकरणे समाम्नातः । नानवगतत्वात् । नहि निपातानां व्याकरणे प्रकृत्यादिविभागोऽस्ति ।

पुराणे तावदुदाहरणम्—

अद्या चिन्नूचित्तदपो नदीनां यदाभ्यो अरदो गातुमिन्द्र ।
नि पर्वता अद्मसदो न सेदुस्त्वया दृळ्हानि सुक्रतो रजांसि[11] ॥

भरद्वाजस्य । अद्या इति सांहितिकं दीर्घत्वम् । अद्य चिन्नूचित् अद्य च पुरा च तदपस्तदेव कर्म नदीनाम् । यत् आभ्यो व्यत्ययेनैते चतुर्थीद्वितीयार्थयोर्द्वितीयाचतुर्थ्यौ । यस्मै इमाः । यदर्थमेता नदीरित्यर्थः । अरदो 'रद विलेखने' खानवान् वृत्रयुद्धद्वारेणाखनस्त्वम् हे इन्द्र गातुमत्रापि चतुर्थ्यर्थ एव द्वितीयां यस्मा इत्यनेन सामानाधिकरण्यम् । यस्मै गातवे सर्वत्र प्राणिनामुपकारार्थमुदकपूर्णानामासां गमनायेत्यर्थः । किञ्च निशब्दः सेदुरित्यनेन सम्बन्धयितव्यः । पर्वता मेघाः । अद्मसदो न ( अद्मनां तत्र ये निषण्णा ओद-

---

१–मृतये B. येतये C.
२–दोष C.
३–॰मानन् C.
४–धिङ् C.
५–[ धा० १।१०१७ ]
६–गच्छन्ती॰ C. 'गच्छतीत्यर्थः' इति पाठो युक्तः ।
७–यावे तौ C.
८–अत्र 'निपातयोर्योयं नू इति निपातः' इत्येव पाठो युक्तो भवेत् ।
९–अत्र 'नवे' इति पाठो युक्तः ।
१०–अत्र 'नू' इति स्यात् ।
११–[ ऋ० ६।३०।३ ] 'अद्या चिन्नूचित्' इत्येव प्रतीकम् B. C.
१२–भारद्वा॰ C.
१३–अत्र 'नू' इत्यधिकम् C.
१४–अभ्य C.
१५–तदपस्त्रुटितम् B. तदेव त्रुटितम् C.
१६–॰नैके C.
१७–[ धा० १।५४ ]
१८–खातवान् इति पाठो युक्तः
१९–गां B.
२०–या इति त्रुटितम् B. C.
२१–निशब्दाः B. निसब्दः C.

रिका आत्मम्भरयो न ते अदः[1]) त इव निषेदुस्त्वया हन्यमाना निर्[2]षीदन्ति। यथा भोजन-प्रधाना दैवपित्र्यकर्मवर्जिता अनन्याः पुरुषा नरकाग्नरकं पत[3]तोऽ[4]धो गच्छन्ति तद्वत् त्वया हन्यमाना मेघा इत्यर्थः। किञ्च त्वया दृ[5]ष्ठानि सुस्थितानि। हे सुक्रतो सुकर्मन् सुप्रज्ञ वा रजांसि लोकास्त्रयो लोका अपि त्वामाश्रिता इत्यर्थः।

नूच इति निगमः—

नू चं पुरा च सदनं रयीणां जातस्यं च जायमानस्य च क्षाम्।
सतश्चं गोपां भवंतश्च भूरेंर्देवा अग्निं धारयन् द्रविणोदाम्[6]॥

कुत्सस्य। नूच[7] पुरा च अद्य[8] च पुरा च। सदनं स्थानम्। रयीणां धनानां जातस्य भूतग्रामस्य जायमानस्य च श्रुतेर्जनिष्यमाणस्य च। क्षां क्षा पृथिवी तत्[9]स्थानीयमाश्रे[10]यमित्यर्थः। सतश्च पूर्वोत्पन्नस्य गोपां गोपायितारं भवतश्च इदानीं चोत्पद्यमानस्य च श्रुतेरुत्पत्स्य[11]मानस्य च। भूरे[12]र्बहुना देवा अग्निं धारयन् धारितवन्तः। न दैवे होतृ[13] छे। द्रविणोदां हविर्लक्षणधनस्य दातारम्। ऊर्ध्वां देवलोकमवि[14]कारमित्यर्थः। तथा च 'देवा दधिरे हव्यवाहम्[15]' इति मन्त्रान्तरे दर्शनम्। रयिरिति धननाम रातेर्दानार्थस्य दीयते हि तत्।

दावने इत्यनवगतम्। ददातेः। 'आतो मनिन् क्वनिब्वनिपश्च[16]' इति कर्मणि[20] वनिप्[17] प्रत्ययः[18]। ततो दावच्छब्दात्[19] चतुर्थी सा च षष्ठ्यर्थे द्वितीयार्थे वा। दानस्य दानं चेत्यवगमः।

---

१-अस्य कोष्ठकान्तर्गतपाठस्य स्थाने C. पुस्तके ( अग्नानां तत्र य निषण्णाः औदरिका आत्मन् भरय न तेत्मदः ) इत्ययं पाठो वर्तते। भ्रष्टविपर्यस्ताक्षरवर्ण एवायं पाठः। अत्र कदाचित् 'अग्नानामर्थाय निषण्णा औदरिका आत्मम्भरयो ऽग्नसदः' इति पाठः स्यात्।

२-नि इति द्विर्लिखितम् B. C.

३-पतन्तः इति पाठो युक्तः।

४-अधो ग० C.

५-अत्र 'दृढानि' इति पाठो युक्तः।

६-[ ऋ० १।९६।७ ] 'नू च पुरा च' इत्येव प्रतीकम् B. C.

७-नु च C.

८-अथन्य च C.

९-तः स्थानी० B.

१०-०श्रय इत्य० B.

११-०त्पद्यमा० C. 'च श्रुतेरुत्पत्स्यमानस्य च' इति पाठस्त्रुटितः B.

१२-बहुनो इति पाठो युक्तः।

१३-'तत्र दैवे होतृत्वे' इति युक्तं स्यात्।

१४-०मपिका० C.

१५-[ऋ० १०।९२।३॥ निरु० ६।३५]

१६-[पा० ३।२।७४]

१७-वनिप् इति त्रुटितम् B.

१८-प्रत्यया C.

१९-'दावच्छब्दात्' इति 'दावशब्दात्' इति वा स्यात्।

२०-नानस्य C.

रिका आत्मम्भरयो न ते भदः ) त इव नि[२]षीदन्ति । यथा भोजन-प्रधाना दैवपित्र्यकर्मवर्जिता अनन्याः पुरुषा नरकान्नरकं पतन्तो[३]ऽधो[४] गच्छन्ति तद्वत् त्वया हन्यमाना मेघा इत्यर्थः । किञ्च त्वया दृ[५]शानि सुस्थितानि । हे सुक्रतो सुकर्मन् सुप्रज्ञ वा रजांसि लोकास्त्रयो लोका अपि त्वामाश्रिता इत्यर्थः ।

नूच इति निगमः—

नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षाम् ।
सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन् द्रविणोदाम्[६] ॥

कुत्सस्य । नू[७]च पुरा च अद्य[८] च पुरा च । सदनं स्थानम् । रयीणां धनानां जातस्य भूत-ग्रामस्य जायमानस्य च श्रुतेर्जनिष्यमाणस्य च । क्षां क्षा पृथिवी तत्स्[९]थानीयमाश्र्[१०]यमित्यर्थः । सतश्च पूर्वोत्पन्नस्य गोपां गोपायितारं भवतश्च इदानीं चोत्पद्यमानस्य च श्रुतेरुत्पत्स्[११]य-मानस्य च । भूरे[१२]र्बहुना देवा अग्निं धारयन् धारितवन्तः । न दैवे होतृ[१३] हे । द्रविणोदां हवि-र्लक्षणधनस्य दातारम् । ऊर्ध्वां देवलोकमवि[१४]कारमित्यर्थः । तथा च 'देवा दधिरे हव्य-वाह[१५]म्' इति मन्त्रान्तरे दर्शनम् । रयिरिति धननाम रातेर्दानार्थस्य दीयते हि तत् ।

दावने इत्यनवगतम् । ददातेः । 'आतो मनिन् क्वनिब्वनिपश्[१६]च' इति कर्मणि [१७]वनिप् [१८]प्रत्ययः । ततो दावच्छ[१९]ब्दात् चतुर्थी सा च षष्ठ्यर्थे द्वितीयार्थे वा । दानस्य[२०] वेत्यवगमः ।

---

१–अस्य कोष्ठकान्तर्गतपाठस्य स्थाने C. पुस्तके ( अन्नानां तत्र य निषण्णाः औदरिका आत्मन् भरय न तेत्सदः ) इत्ययं पाठो वर्तते । भ्रष्ट-विपर्यस्ताक्षरवर्ण एवायं पाठः । अत्र कदाचित् 'अन्नानामर्थाय निषण्णा औदरिका आत्मम्भरयो ऽभसदः' इति पाठः स्यात् ।

२–नि इति द्विर्लिखितम् B. C.

३–पतन्तः इति पाठो युक्तः ।

४–अधो ग० C.

५–अत्र 'दृशानि' इति पाठो युक्तः ।

६–[ ऋ० १।९६।७ ] 'नू च पुरा च' इत्येव प्रतीकम् B. C.

७–नु च C.

८–अधन्य च C.

९–तः स्थानी० B.

१०–०श्रय इत्य० B.

११–०त्यद्यमा० C. 'च श्रुतेरुत्पत्स्यमानस्य च' इति पाठस्त्रुटितः B.

१२–बहुनो इति पाठो युक्तः ।

१३–'तत्र दैवे होतरि' इति युक्तं स्यात् ।

१४–०मविक्रा० C.

१५–[ऋ० १०।५२।३॥ निरु० ६।३५]

१६–[पा० ३।२।७४]

१७–वनिप् इति त्रुटितम् B.

१८–प्रत्यया C.

१९–'दावच्छब्दात्' इति 'दावशब्दात्' इति वा स्यात् ।

२०–दानस्य C.

मित्यभिसम्बन्धेनैदेव्य[1][2] उच्यन्ते ता अदेवीरतिसन्धानप्रज्ञाः प्रमहते आकर्षणामिभवति। दुरेवा मायाविशेषणमेतत्[3]। अवते रक्षणार्थस्य दूरक्षा[4] इत्यर्थः। अग्नेर्वा विशेषणम्। अवतिरपि तर्पणार्थो दुस्तर्पः। शिशीते निश्यति च। स्वयमद्य स्त्री चू[5]........।

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य

अष्टादशः खण्डः।[6] ]

---

१—०त्यभिः स० B. C.

२—०न्धो नान्य उच्य० B.

३—ण इति त्रुटितम् C.

४—दुरक्षा B.

५—स्वयमर्चं स्त्री पु C. इतः परमाखण्डपरिसमाप्तेः कश्चित् पाठस्त्रुटित आदर्शपुस्तकेषु। तत्र 'शिशीते' इत्यस्य किञ्चिद् व्याख्यानमेव वर्तते। 'सुतुकः सुप्रायणाः' इत्यनयोश्च सर्वं व्याख्यानं त्रुटितम्।

६—आदर्शपुस्तकेष्वत्र खण्डसमाप्तनिर्देशो न दृश्यते।

# [ अथ एकोनविंशः खण्डः । ][1]

आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः ।
देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे[2] ॥

..................................................नोऽस्माकम्[3]। यथा सदम् इदेवार्थे[4] सदैव वृधे वृद्ध्यै असन् भवेयुः[5] सर्वदा वृद्धिभिर्वर्धयेयुरित्यर्थः । अप्रायुवोऽ[6]थान्तरेणाप्रमिश्रिता बुद्धिर्येषां ते अप्रायुवोऽतिच्छिन्नचेतस्का अप्रमाद्यन्त इत्यर्थः । रक्षितारश्च दिवे दिवे अहन्यहनि ।

च्यवन[7] इत्यनवगतम् । च्यावन इत्येव[8] न्याय्यम् । ऋषिरभिधेयः । तदाह-च्यावयिता स्तोमानाम् । देवानां प्रतिगमयिता स्तोतेत्यर्थः । रूढत्वाच्च[9] तक्षादिवदतिप्रसङ्ग[10]-निवृत्तिः । प्रसिद्धत्वात् च्यवनस्य ऋषित्वे न निगमो दर्शितः । अप्रसिद्धत्वात् च्यौ[11]वनशब्दस्य निगमं दर्शयति । च्यवनमित्ये[12]प्यस्यैवेति ।

युवं च्यवानं सनयं यथा रथं पुनर्युवानं चरथाय तक्षथुः ।
निष्टौग्र्यमूहथुरद्भ्यस्परि विश्वेत्ता वां सवनेषु प्रवाच्या[13] ॥

कक्षीवतो दुहिता[14] कक्षीवते[15] इत्यश्विनावाह । युवं युवां च्यवानं[16] च्यवनमृषिं सनयं पुराणं यथा रथं कश्चित् तक्षा एवं पुनर्युवानं चरथाय चरणाय गमनाय सुकन्यां[17] संभोक्तुमित्यभिप्रायः । तक्षथुः कृतवन्तौ स्थः । अयं चेतिहासः शतपथे[18] सुकन्याब्राह्मणे पठ्यते । किञ्च[19] तौग्र्यं तुग्रस्य पुत्रं भुज्यमानं[20] समुद्रे विपद्यमानं सभिरस्यक्तं[21] निष्टथुर्निरूढवन्तौ

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १।८९।१ ]
३–अत्र खण्डारम्भ एव भूयान् पाठस्त्रुटित आदर्शपुस्तकेषु । अयं 'आ नो भद्राः' इति मन्त्रस्तु शिष्टव्याख्याबोधसौकर्याय अस्माभिरेवात्र लिखितः । कोशे त्वस्य प्रतीकमपि नास्ति ।
४–उदेवा० B.
५–भवेयत् B. C. ६–अप्रोसुवः C.
७–अवि (ह) दचे०B. ८–इति न्यायं C.
९–०स्वात्तद्य B. C. अत्र 'त्त' इत्यधिकम् ।
१०–प्रसंगे नि० B.
* 'च्यवान' इत्युचितम् ।
११–च्यावन C. अत्र 'च्यवान' इति युक्तम् ।
१२–म्य इति त्रुटितम् C.
१३–[ ऋ० १०।३९।४ ] 'युवं च्यवानं' इत्येव प्रतीकम् B. C. १४–दुहेतान् B.
१५–'काक्षीवती' इति पाठः स्यात् ।
१६–च्यावं C. १७–स्कन्यायाः B. C.
१८–[ श० ब्रा० ४।१।५ ] शपथे C. [ म० भार० वनप० १२४ ]
१९–किश्च इति नास्ति B.
२०–अत्र 'भुज्युनामानं' इति पाठो युक्तः ।
२१–अत्र 'खि' इति त्रुटितं स्यात् । 'सखिभिरस्यक्त' इति पाठो युक्तः ।

स्थः, उ[*]त्तेरितवन्तावित्यर्थः । अद्भ्यः समुद्राः समुद्रेभ्यः । परि सर्वतः[1] ।

अयमितिहास ऋग्वेदे-'उत त्यं भुज्युमश्विना सखायो मध्ये जहुर्दुरेवासः समुद्रे'[2] । [3]'तुग्रो ह भुज्युमश्विनोदमेघे' इत्यादिषु भूय आश्विनेषु दृश्यते । अथवा तुग्र्य इत्युदकनाम । तत्समूहस्तौग्र्यं तन्निरू[4]ढवुर्मेघात् भूतवन्तौ स्थ इत्यर्थः । अद्भ्यः परि अपां चिरन्ते[5]तीनामुपरि अ[6]क्षीणायामेव पूर्वदृष्टावित्यर्थः । यान्येवमादीनि कर्माणि विश्वा सर्वाणि कर्माणि । [7]इति पदपूरणः । [8]ता तानि युवां युवयोः सवनेषु[9] यज्ञेषु प्रवाच्या प्रकर्षेण वचना[10]र्हाणि । युवा तारुण्यात् शीघ्रं कुर्वन् प्रयौति प्रकर्षेण[11] मिश्रयनीव[12] कर्माणि । नक्षतिः करोत्यर्थः ।

रज इति । रजःशब्दस्यानेकार्थत्वेनोपन्यासः । रजतेरिति धातुनिर्देशो नतु रजेः[13] । पाचादिके[14] अचि अनुनासिक[15]लोपाभावादकारान्तत्वप्रसङ्गाच्च अनवगतसंस्कारोऽप्युच्यते । 'भूरञ्जिभ्यां कित्'[16] इत्यसुक्प्रत्ययान्तस्य व्युत्पादनाच्चावगतत्वम् । नच औणादिकत्वमात्रेणा[17]वगतत्वमिष्यते । किं तर्हि ? तत्राप्यसकृत् छन्दोग्रहणाद् य एव छान्दसं बहु[18]लवचनेन धा[19] व्युत्पाद्यन्ते नैव ग[20]ताः । ये तु भाषायां सिद्धसाधुभावा रूढिशब्दाः प्रत्यक्षेण लक्षणेन व्याता अवगतसंस्कारा एव ते इति । अतो युक्तोऽने[21]कार्थत्वेनोपन्यासः । ये त्वविशेषेणौणादिकानामनवगतत्वं मन्यन्ते तेषामनवगतोऽपि ।

तां चानेकार्थतां दर्शयति ज्योती[22] रज उच्यते । तद्धि स्वभासा सर्वमनुरञ्जयति प्रकाश्यम् । उदकं रजः । तदपि क्लेद[23]यदनुरञ्जयति क्लेद्यम् । लोका रजांसि । तेऽपि[24] हि रञ्जयन्ति प्राणिनः । असृगह्नी असृग् रुधिरं तत्स्वयमेव रक्तम् । अहस्तदपि रञ्जयति स्वेनोपकारेण सर्वप्राणिनः । प्रसिद्धत्वाद् भाष्ये न[25] पठिता निगमाः ।

ज्योतिषां तावत्—

---

१–परी सर्वतः C. २–[ ऋ० ७।६८।७ ]
३–तुग्रा B. C. ४–तद्रिरू० C.
५–०न्तिनी० C. ६–अक्षिणा० C.
७–अत्र 'इत' इति पाठो युक्तः ।
८–ता इति त्रुटितम् B. या C.
९–सवेनेषु C. १०–०र्हांसि B.
११–ण इति त्रुटितम् C.
१२–निश्चय० C. निश्चय० इत्यपि पाठः B.
१३–ञ्जः इति पाठः स्यात् ।
*–'उत्तारितवन्तौ' इत्युचितम् ।
१४–[ Cf. पा० ३।१।१३४ ] वाचादि० C.
१५–०सिके लोभाभावा० C.
१६–[ उणा० ४।२१६ ] रञ्जिभ्याञ्जि कित् B. C.
१७–०त्रेणोपग० C.
१८–ल इति त्रुटितम् B. C. १९–त्वा C.
२०–अवगताः इति पाठो युक्तः ।
२१–०क्तोऽनेकार्थः इति पाठो युक्तः ।
२२–ज्योति रज इत्युच्यते C.
२३–कुदयदनु० C.
२४–तेव हि C. २५–ण C.

या ते अग्ने रजःशया तनूर्वर्षिष्ठा गह्वरेष्ठा ।
उग्रं वचो अपावधीत् त्वेषं वचो अपावधीत् स्वाहा [1]॥

या ते तव हे अग्ने रजःशया रजो ज्योतिस्तद्यस्यां शेते तिष्ठति सा रजःशया । एवं वाजसनेयिनां पाठः । 'चकारणान्[2]तु रजाशया' इति पाठः । तत्र छान्दसः सकारस्याकारः । तनूर्वर्षिष्ठा अतिशयेन गह्वरेष्ठा गह्वरे च गहने उर्जने[3] क्वापि प्रदेशे स्था स्थात्री उग्रं वचोऽप्रसह्यं च यच्छात्रवादे[4]र्वचस्तदपावधीद् अपहतवती । त्वेषं दीप्तं[5] च यद् आज्ञापयितुं कस्यचित् तदप्यपवधीः[6] । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तस्यै स्वाहा सम्प्रदानार्थोऽयं निपातः ।

उदकस्योदाहरणम्-

भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः ।
दिवि मूर्धानं दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम्[7] ॥

त्वाष्ट्रस्त्रिशिरा नाम तस्यार्षम् । भुव इति नायं भूशब्दः पञ्चम्यन्तः पृथिवीवचनः । 'सावेकाचः'[8] इति विभक्तेरुदात्तत्ववचनात्[9] 'मूर्धा भुवो भवति नक्तमग्निः'[10] इत्यादिवदन्तोदात्तत्वप्रसङ्गात्[11] । किन्तर्हि ? आख्यातमेतत् । 'भुवस्त्वमिन्द्र ब्रह्मणा महान्'[12] इति यथा । अतोऽयमर्थः-भुवो भवसि[13] त्वं यज्ञस्य रजसश्च उदकस्य 'अग्निर्वा[14] इतो वृष्टिं समीरयति'[15] इति श्रुतेरितो लोकान्नेता । क्व ? उच्यते । यत्रा यत्र नियुद्भिरदिष्टोपयोजनमेतत् । नियुतो वायोरिति । तृतीया 'इत्थम्भूतलक्षणे'[16] सा च सर्वत्र सम्प्रतिपादयति । 'अपि भवान् कमण्डलुना छात्रमद्राक्षीत्'[17] इति यथा । नियुद्भिः सम्बद्धं वायुं[18] सचसे हविर्नयनेन त्वं सेवसे । कीदृशीभिर्नियुद्भिः ? शिवाभिः[19] सुखाभिः । क्व पुनर्नियुद्भिः सम्बन्धं[20] वायुं हवि-

---

१-[ Fragment of यजु० ५।८ ] 'या ते अग्ने' इत्येव प्रतीकम् B. C.
२-०रणान्तु B. ३-दुर्जने C.'दुर्जने'इति युक्तम् ।
४-यच्छत्रवादे० C.
५-त्वेप जीप्तं C.
६-०प्यपावधीत् C. अपावधीत् इति पाठो युक्तः ।
७-[ ऋ० १०।८।६ ] 'भुवो यज्ञस्य' इत्येव प्रतीकम् B. C.
८-[ Fragment of पा० ६।१।१६८ ]
९-०वचनं B.
१०-[ ऋ० १०।८८।६ ॥ निरु० ७।२७]
११-०दिपद० C. १२-[ ऋ० १०।५०।४]
१३-भवधि B. १४-अग्निर्वेति वृ० B.
१५-'अग्निर्वा इतो वृष्टिमुदीरयति' [ तै० सं० २।४।१०।२ ॥ का० सं० ११।१०] 'अग्निर्वा इतो वृष्टिमीट्टे' [ वै० सं० २।१।८ ]
१६-[ पा० २।३।२१ ]
१७-अविभयात C. [ काशिका २।३।२१ ]
१८-संबन्धवोयुं C.
१९-'कीदृशीभिर्नियुद्भिः । शिवाभिः' इति त्रुटितम् B.
२०-'सम्बद्धं' इत्युचितम्

नैयनेनाग्निः[1] सेवते ? उच्यते । अन्तरिक्षे तद्धि वायोरुचितम् । किञ्च दिवि द्युलोके मूर्धानं प्रधानभूतं दधिषे हविर्जननद्वारेण धारयसि । स्वर्गा स्वर्धा[2]स्तस्याः सवितारं संविभक्तारमादित्यम् । जिह्वां[3] जिह्वास्थानीयां[4] च ज्वालाम् । हे अग्ने चकृषे करोषि हव्यवाहं हविर्नयनसमर्थाम्[5] ।

लोकानामुदाहरणम् । 'स्वया इळहानि सुक्रतो[6] रजांसि'[7] इति पुरस्ताद् व्याख्यातम् ।

असृजः । 'त्रिरात्रं रजस्वलाऽशुचिर्भवति'[8] । 'मासि मासि रजो[9] ह्यासीम्' इति च ।

अह्नः । 'अहश्च कृष्णमहरर्जुनं च विवर्तेते रजसा'[10] इति पुरस्ताद्[11] व्याख्यातम् ।

हर इत्यनेकार्थम् । हरतेरिति धातुनिर्देशः । ज्योतिर्हरः । तद्धि हरति तमः । उदकं हरः । तदपि[12] च हरति सर्वम् । लोका हरांसि । तेषु ह्रियते सर्वम् । त एव वा[13] मृत्युना कालेनाह्रियन्ते ।

ज्योतिष उदाहरणम् । ब्रह्मचारिणोऽग्निकार्ये मन्त्रः 'यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम्'[14] इति । उदकस्य लोकानां चोदाहरणं पर्येष्यम् ।

जुहुरे इत्यनवगमः ।

जुहुरे वि चितयन्तोऽनिमिषं नृम्णं पान्ति ।
आ दृळ्हां पुरं विविशुः[15] ॥

अत्रेरात्रेयस्यार्षम् । जुहुरे अत्रैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ । ये जुहुरे हुतवन्तं[16] जुह्वति वा हवींषि विचितयन्तो विविधं जानन्तः[17] । किम् ? होमकर्मैव ब्रह्म वा आत्माख्यम् । अनिमिष निमेषवर्जितं च महता यत्नेनेत्यर्थः । नृम्णं बलं योगसामर्थ्यलक्षणं पान्ति[18] रक्षन्ति । सततं च योगमभ्यस्यन्तीत्यर्थः[19] । ते ज्ञानकर्मसमुच्चयकारिणः । आकारो विविशुरित्यनेन संबध्यते । दृळ्हां दृढां दुर्भेदां पुरं परमात्माख्यामाविविशुराविशन्ति परमात्मनि लीयन्ते मोक्षं गच्छन्तीत्यर्थः ।

---

१–जैनयद्वा° C. अयमपि पाठः B.
२–द्योः C. ३–जिह्वो C.
४–°स्थानीयं C.
५–°मर्थम् B.
६–सुक्रतो B.
७–[ऋ० ६।३०।३]
८–[ अनुपलब्धमूलमिद वचनम् ]
९–[वासि० ध० शा० २८।४]
१०–[ऋ० ६।९।१]
११–[निरु० २।२१]
१२–तादपि C. १३–एवा B. C.
१४–[ तै० सं० ३।५।३।२ ]
१५–[ऋ० ५।१९।२] 'जुहुरे वि चितयन्तः' इत्येव प्रतीकम् B. C.
१६–अत्र 'हुतवन्तः' इति पाठो युक्तः ।
१७–विविधं जानन्तः इति त्रुटितम् B.
१८–वान्ति C.
१९–°स्यतीय C.

व्यन्त इत्येषोऽनेककर्मा । व्यन्त इत्यत्र य एष धातुः स दयतिवदनेकार्थ इत्यर्थः[1] ।
*तथा चोदाहरणानि दर्शयति । 'पदं देवस्य' इति पश्यत्यर्थः ।*

पदं देवस्य नमसा व्यन्तः श्रवस्यवः श्रव आपन्नमृक्तम् ।
नामानि चिद्दधिरे यज्ञियानि भद्रायां ते रणयन्त संदृष्टौ[2] ॥

भारद्वाजस्य । पदं स्थानमग्निलोके स्वर्गे वा । देवस्य भगवतोऽग्नेः । नमसा स्तुत्या मन्त्रलक्षणया व्यन्तः पश्यन्तो जानन्त[3] इत्यर्थः । देवानां हि यावत् किञ्चित् तत्सर्वं स्तुतिपूतेभ्यो मन्त्रेभ्यो ज्ञायते,अत एतदुच्यते पदं स्तुत्या जानन्त इति । श्रवस्यवः श्रवोऽन्नं यशो वा प्राप्नुवन्तम । कीदृशम ? अमृक्तम[4] अमृतशब्दस्यार्थं छान्दसः ककार उपजनः, अमृतसदृशम् । अथवा 'मृजू शुद्धौ[5]' इत्यस्येदं रूपम् । 'व्रश्चभ्रस्जसृजमृज[6]' इति षत्वे प्राप्ते छान्दसः 'चोः कुः' इति कुत्वम् । शुद्धं केवलं धनादिभिः सहितमित्यर्थः । अमृतं वा परैरपरामृष्टमित्यर्थः । अत्रैकवाक्यतायै यत्तच्छब्दावध्याहार्यौ । किं बहुना नामानि चित् चिदप्यर्थे जना नामान्यपि ये दधिरे भगवतोऽग्नेर्धारयन्ति कीर्तयन्तीत्यर्थः । यज्ञियानि यज्ञार्हाणि । तेऽपि भद्रायां ते तव सदृष्टौ संदर्शने अनुग्रहप्रवृत्ताविस्यर्थः । सप्तमीश्रुतेः स्थिता इति शेषः । रणयन्त रमयन्ते त्वयाऽनुगृह्यमाणाः सुखिनो भवन्तीत्यर्थः ।

'वीहि[13] शूर पुरोळाशम' इति खादत्यर्थः[14] ।

इमा ब्रह्म ब्रह्मवाहः क्रियन्त आ बर्हिः सीद ।
वीहि शूर पुरोळाशम्[15] ॥

विश्वामित्रस्य । इमा ब्रह्म[16] ब्रह्माणि स्तुतिरूपाणि । ब्रह्मवाहो ब्रह्म स्तुतिलक्षणमुच्यते प्राप्यते यत्र स्तोतृभिः स[17] ब्रह्मवाहः । स्तुत्यर्थे तस्येदं सम्बोधनम् । क्रियन्तेऽस्माभिरेतज्ज्ञात्वा । आ बर्हिः सीद । आसीदेदं बर्हिः । आसद्य च वीहि[18] खाद हे शूर इन्द्र पुरोळाशम् । पुरोडाशकर्मत्वाच्च वीतेः खादतिकर्मत्वाध्यवसानम् । खादतेर्द्रव्यकर्मत्वात् ।

---

१–इदं वाक्यं नास्ति B.
२–[ऋ० ६।१।४] 'पदं देवस्य' इत्येव प्रतीकम् B.C.
३–जानन्त इति द्विर्लिखितम् C.
४–अमुक्तं C.
५–[धा० २।५७]
६–[Fragment of पा० ८।२।३६]
७–अत्र 'छान्दसं' इति पाठो युक्तः ।
८–[पा० ८।२।३०]
९–शुद्धे केवल B.
१०–०रवरा० C.
११–०रादृष्ट० B.
१२–०यतीय० C.
१३–श्रीहि B.
१४–चलादत्यर्थः B.
१५–[ऋ० ३।४१।३] 'इमा ब्रह्म' इत्येव प्रतीकम् B. C.
१६–ब्रह्मा C.
१७–त्रभिः स इति त्रुटितम् B,
१८–श्रीहि B.

'वीतं पातं पयसः' इत्यत्रोदनातिकर्मा ।

उत वां विक्षु मद्यास्वन्धो गाव आपश्च पीपयन्त देवीः ।
उतो नो अस्य पूर्व्यः पतिर्दन् वीतं पातं पयस उस्रियायाः ॥

दीर्घतमसः । मित्रावरुणावुच्येते । अपि वां युवयोरर्थाय विक्षु मद्यासु स्त्रीलिङ्गनिर्देशान्मनुष्यजातिषु मदयित्रीषु देवानाम् । सप्तमीश्रुतेः स्थितमिति शेषः । अन्धोऽपेयस्याख्या । गाव आपश्च पीपयन्त प्यायतेर्वृद्ध्यर्थस्येदं रूपम् । वर्धयन्त्यो देवीर्देव्यः । उतो अपि नोऽस्माकमृत्विजां पूर्व्यः पुराणः पतिः स्वामी चिरन्तन एव याज्य इत्यर्थः । अस्यान्धस्य युवाभ्यां दन् ददत् दाता दास्यते तदित्यर्थः । एतद्द्वयं ज्ञात्वा वीतमश्नीतं पिबतं च । यदस्य नातिद्रवं नातिकठिनं तदश्नीत यद् द्रवं च तच्च पिबतम् । पयसः पयोविकारभूतस्य पायसाख्यस्य हविषः । उस्रियाया गोसम्बन्धिन इति शेषः । उस्रियेत्यादि पठमानस्यैव निर्विवक्षयोपन्यासः । उत्स्राविणो येऽस्यां भोगास्ते ऊर्ध्वं स्रवन्ति गच्छन्ति क्षीरदधिनवनीतक्रमेण ।

क्राणा इत्यनवगतम् । कुर्वाणा इत्यवगमः ।

त्वामिन्द्र मतिभिः सुते सुनीथासो वसूयवः ।
गोभिः क्राणा अनूषत ॥

वामदेवस्य । त्वां हे इन्द्र मतिभिर्मेधाविभिरध्वर्युभिः । सुते अभिषुते । सुनीथासः सुनीथाः प्रशस्यनामेदं सुष्ठु प्रशस्याः । के ? सामर्थ्यादुद्गातारो होतारश्च । वसुयवः वसु धनं दक्षिणालक्षणं तत्कामाः । गोभिर्गीर्भिरिति वाङ्नाम वाग्भिः । अनूषत अस्तोषत

१–श्रा इति त्रुटितम् C.
२–[ऋ॰ १।१५३।४] 'उत वां विक्षु' इत्येव प्रतीकम् B. C.
३–क्षु इति त्रुटितम् C.
४–अन्नं पयस्याख्यं C.
५–वीपय॰ C.
६–प्यायते C.
७–वृध्यर्थ॰ C.
८–भवतयः C.
९–॰मृत्विजः B. १०–दद C.
११–दाता इति द्विर्लिखितम् C.
१२–पीत॰ B. C.
१३–नामिति द्र॰ B. नातीति द्र॰ C.
१४–वस्मिनं C.
१५–पयस्याख्यस्य C.
१६–उस्रावि॰ B.
१७–ये ते इति न स्तः [पृ॰ टि॰]
१८–[ निरु॰ ४।१९ ] 'त्वामिन्द्र' इत्येव प्रतीकम् B.C.
१९–वाम्देवस्य B. C.
२०–वसुयवः C.
२१–वसु C.
२२–लक्षिणं C.
* कदाचिदत्र 'पठ्यमानस्य' इति स्यात् ।

स्तुवन्तः क्राणाः कुर्वाणाः। किम् ? ता एव स्तुतिलक्षणा वाचः सोमप्रदानं वा।

वाशी इत्यनवगतम्। यद्वा अवाशीशब्दस्य वाङ्नामत्वेनाम्नानम्। वाश्यसाविति वाशिनीत्यवगमः। निगमः—

आ तू षिञ्च हरिमीं द्रोरुपस्थे वाशीभिस्तक्षताऽश्मन्मयीभिः।
परि ष्वजध्वं दश कक्ष्याभिरुभे धुरौ प्रति वह्निं युनक्त॥

बुधस्यार्षम्। तु इति पादपूरणः। सिञ्चतिर्द्रवद्रव्यप्रक्षेपे प्रसिद्धः। स इह लतासोमस्य द्रवत्वात् प्रक्षेपसामान्यलक्षणार्थः। व्यत्ययेन चैकवचनम्। आसिञ्च प्रक्षिपत*। हरिं हरितवर्णमेनं लतासोमम्। द्रोर्द्रुममयस्याधिषवणफलकाख्यस्य उपस्थे समीपे उपरीत्यर्थः। प्रक्षिप्य वाशीभिर्वाशीशब्दः छेदनद्रव्यविशेषवचनस्तस्य सकारस्य शकारेण व्यापत्तिः। वासीभिरधिषवणग्रावाख्याभिः। तक्षत तक्षतिः करोतिकर्मा शुद्धोऽपि चात्र संपूर्वार्थे द्रष्टव्यः, संस्कुरुत अभिषुणुतेत्यर्थः। अश्मन्मयीभिः पाषाणमयीभिः।

अथवा सिञ्चेर्द्रवद्रव्यप्रक्षेपे या प्रसिद्धिस्तस्यास्त्वक्रमयोग्यत्वाद् वाशीशब्दस्य च वाङ्नामत्वाद् रसावस्थः सोम इहोच्यते न लतावस्थः। आसिञ्चत हरितवर्णमेनं रसावस्थं सोमं द्रुममयस्य द्रोणकलशस्योपरि। आसिच्य च वाशीभिस्तक्षत वाग्भिः संस्कुरुत स्तुतेत्यर्थः। अश्ममयीभिरेतद्गुणानां व्याप्तिभिरित्यर्थः। परिष्वजध्वं च प्रहृचमसस्थं सन्तं गृह्णीतेत्यर्थः। दश तृतीयार्थे अत्र लुक्, दशभिः कक्ष्याभिः। उभे च हविर्धानस्य धुरौ प्रति वह्निं लुप्तोपममेतद् वह्निमिव वोढारमिव अनड्वाहं युनक्त हविर्धानधुरोऽधस्तात् खरे सादयतेत्यर्थः। अयमपीतरो हरिर्मेभे एतस्मादेव वर्णसामान्यात्। अन्यो वा

---

१–काणाम C.
२–वा इति त्रुटितम् B.
३–अत्र 'अ' इत्यधिकमेव लेखकप्रमादादापतितम्। वाङ्नामसु 'वाशी' इत्यस्यैव पाठात्।
४–श इति द्विर्लिखितम् C. ॰ब्दस्या B.
५–वाशिनि B. अयं पाठः सन्दिग्धः।
६–[ ऋ० १०।१०१।१० ] 'आ तू (तु C.) षिञ्च' इत्येव प्रतीकम् B. C.
७–श्रतिः इति त्रुटितम् B. C.
८–॰स्याधिषवा॰ C.  ९–चेदन C.
* 'प्रक्षिपत' इति युक्तम्।
१०–॰शेषव॰ C.
११–शकारस्य B.
१२–॰वणाग्रा॰ C.
१३–तस्या स्त॰ B. C.
१४–आसिञ्च B. आसिच्य C.
१५–तृतीया अत्र लुक् B. C.
१६–कक्ष्यभिः C.
१७–अनध्वाहं C.
१८–॰नधुरो॰ B.
१९–अत्र 'मर्कटः' इति पाठः स्यात्।

वर्णकायस्यक्करूक्षानीतामन्यतमः ।

विपुण इत्यनवगतम्[1] । विषम इत्यवगमः ।

न यातवं इन्द्र जूजुवुर्नो न वन्दना शविष्ठ वेद्याभिः ।
स शर्धदर्यो विषुणस्य जन्तोर्मा शिश्नदेवा अपि गुर्ऋतं नः[2] ॥

वसिष्ठस्य । न शब्दोऽत्र माशब्दार्थे । यातव उत्तरपदलोपोऽत्र द्रष्टव्यो भीमभामावत्[3] । यातुधाना राक्षसा हे इन्द्र जूजुवुर्जवतिर्गतिकर्मा मा गमन्नित्यर्थः । अस्माकं ये भूतं यशम[4] । न वन्दना अयमपि नशब्दो माशब्दस्यैवार्थे मा च वन्दना[5] तृतीयैकवचनस्थानेऽयमाकारस्तच्छुतेश्च युक्ता इति शेषः । वन्दनयो स्तुतिवचनजीविनो नटनर्तकनै[6]षप्रस्थापकप्रभृतय इत्यर्थः । शविष्ठ[7] अतिशयेन बलवत्[8] । वेद्याभिर्वेद्या वेदितव्याः कुहकप्रभृतय ईश्वरप्रतारणोपाय[9]भूतास्ताभिर्वा युक्ताः ।

कस्तर्हि ? स शर्धत्[10] शर्धतिरुत्साहार्थे उत्सहतामागन्तुम् । अर्यः 'ऋ गतौ'[11] इत्यस्य शुद्धस्यार्थेऽधिपूर्वार्थे[12] वर्तमानस्येदं नेश्वरताम्[13] । बाहुलकत्वाच्च कर्तरि कृत्प्रत्ययः । स इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । अर्योऽधिगन्ता ज्ञातेत्यर्थः । तथाच श्रुतिः 'तङ्गति वै यज्ञो विदुषा गच्छता य मे समृद्धं भविष्यति'[14] । अयमेतत् समर्थयिष्यतीति[15] । विषुणस्य विषमस्य जन्तोर्जननधर्मिण आत्मनो यज्ञस्य वा । मा च शिश्नदेवा अपि शिश्नेन[16] ये च[17] नित्यं दीव्यन्ति[18] क्रीडन्ति ब्रह्मचर्यवर्जितास्ते अपि[19] गुर्गमन्[20] । ऋतं यज्ञं नोऽस्माकम् ।

अथवा ऋतमत्र सत्यमुच्यते । ऋ जु इत्येतावपि[21] शुद्धावधिपूर्वार्थे द्रष्टव्यौ[22] ।

---

१–नावगतोऽयं पाठः । C. पुस्तके 'वायस्यत् रक्षा' इति पाठः ।
२–[ ऋ० ७।२१।५] 'न यातव' इत्येव प्रतीकम् ।
३–भाभावन् B. ०मावन् C.
४–इदं वाक्यं नास्ति B.
५–वन्दनाया C.
६–ष इति त्रुटितम् B.
७–'वो' इत्यत्राधिकः पाठः B. C. शपिष्ठ C.
८–वेलवन् C.
९–०णापाय० B. ०णोवाय० C.
१०–शर्धदर्यः B.
११–[ धा० १।९८३॥३।१६]
१२–०स्याव्यतिपू० C.
१३–'नेश्वरतायाम्' इति पाठो युक्तो भवेत् ।
१४–[ अनुपलब्धमूलमिदं वचनम् ]
१५–इद वाक्यं नास्ति B.
१६–शब्देन B.
१७–ज C.
१८–दीप्यन्ति C.
१९–अवि C.
२०–गमत् C.
२१–०ववि शु० C.
२२–द्रष्टव्यः B. दष्टव्यो C.

सत्यं परमार्थमस्माकमधिगमनमंशासिपुरित्यर्थः। शिश्नं श्नथतेस्ताडनार्थस्य। ताड्यते हि तेन स्त्री संभोगकाले। तथा चोर्वश्या उक्तम[2] 'त्रि स्म माह श्नथयो वैतसेन'[3] इति।

जामिरित्यतद्गतम्[1]। अनेकार्थं[4] च। अतीरे बालिशसमानजातीयविषयत्वात्। निगमः—

[ इति ध्यास्या-( चतुर्थस्या- ) ध्यायस्य
एकोनविंशः खण्डः।[5] ]

---

१–अ इति त्रुटितम् C.
२–उक्तः तिस्म०।१,'त्रिः स्म माह्नः' इति शुद्धः पाठः।
३–[ऋ० १०।९५।५]
४–०कार्थश्च C. अग्रिमं वाक्यं सन्दिग्धमेव।
५–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

# [ अथ विंशः खण्डः । ][1]

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।

उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत् ॥[2]

यमीयमसंवादे यमी[4] यमं चकमे । तां सोऽनया प्रत्याचष्टे । आकारो[3] गच्छा[5]-नित्यनेन सम्बध्यते । यो न सम्बध्यते सोऽनर्थः । आगच्छन्* आगमिष्यन्ति । ता तानि उत्तरा उत्तराणि युगानि कालाः[6] कलियुगान्ते ते काला आगमिष्यन्ति न इदानीं[7] वर्तन्त इत्यर्थः । यत्र येषु सर्वशास्त्रव्यवस्थापरिलोपा जामयो भगिन्यः कृणवन्[8] करिष्यन्ति । अजामि अविद्यमाना जामिः कर्तृत्वेन यस्य तदजामि भगिन्यामयोग्य[9]मैथुनलक्षणं कर्म । एतज्ज्ञात्वा उपबर्बृहि[10] भर्तुर्धारणार्थस्य[11] । वर्णस्यापत्त्या[12] भकारस्य[13] वकार उपबर्बृहि[14] एकशयनगतस्य समीपे[15] धारय उपधानीकुर्वित्यर्थः । वृषभाय योऽविरुद्धे[16]तत्कर्म[17] रेतो वर्षति स वृषभस्तस्यार्थाय तं[18] परिष्वक्तुमित्यर्थः । बाहुमात्मीयं[19] चान्यमिच्छस्व इच्छ कामयस्व । सुभगे पतिं मत्[20] मत्तः । अहमयोग्यस्तव पतित्वस्येत्यर्थः ।

जाम्यतिरेकनाम । अतिरिच्यत इत्यतिरेकः पुनरुक्तमुच्यते तस्य नाम पुनर्ज्ञायमान[21]-त्वात् । उदाहरणम् । 'अथ यदसन्नयत् पुरोडाशावन्तरेणोपांश्वाज्यस्य यजत्यजामि-तया[22]' इति । तथा 'जामि वा एतद् यज्ञे क्रियते यदन्वञ्चौ[23] पुरोडाशौ' इति । बालिशस्य वा अश्रुतिकार्येषु मुग्धः शेत इति बालिशो मूर्खस्तस्य वा नाम । स हि जात एव केवलं न कस्मैचित् पुरुषार्थायालम् । तत्र निगमः पर्येष्यः[24] । समानजातीयस्योपजनः । अन्ये[25]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ऋ० १०।१०।१०] 'आ घा ता' इत्येव प्रतीकम् B.C.

३–आ घा ता B.

४–अत्र 'घा' इति पाठः स्यात् ।

५–वा (नि) B.　६–काल: C.

७–तेदानि C.　८–कृण्वन् B.

९–०योग्यं मै० C.　१०–उपबृबृहिः C.

११–'बिभर्तेः' इति पाठो युक्तः ।

१२–'वर्णव्यापत्त्या' इति युक्तं स्यात् ।

१३–आकार० C.　१४–व इति त्रुटितम् C.

* 'आगच्छान्' इत्युचितम् ।

१५–०कुर्वत्यर्थः C.

१६–वः B. C.

१७–०रुद्धे तत्कर्मक B.

१८–तः B.　१९–०त्मीयत्वं C.

२०–पतिर्मत् C.　२१–पुनर्ज्ञाय० C.

२२–[ अनुपलब्धमूलमिदम् ]

२३–[ अनुपलब्धमूलमिदम् ]

२४–पर्येष्यम् B.

२५–अत्र 'अन्ये' इति पदेन दुर्गाचार्य एव । स हि 'असमानजातीयो हि पुरुषस्य भगिन्याख्यो भ्राता । सा हि स्त्रीत्वादेव अतुल्यजातीयैव पुरुषस्य भवति' इति व्याचख्यौ ।

बालिशस्य वासमानजातीयस्य[1] वेति तुल्यत्वात् संहिताया असमानजातीयस्य वा इत्येवमवच्छिन्दन्ति[2] । सा स्त्रीत्वादेव भगिनी भ्रातुरसमानजातीया इत्युच्यत इति व्याचक्षते ।

अथवा जाम्यतिरेकनाम । कस्यातिरिच्यमानस्य नाम । बालिशस्य वा [3]असमानजातीयस्य वोपजनो जामिः । तौ हि जातावेव केवलं न कस्मैचित् प्रयोजनाय[4] । एको मूर्खत्वात् अपरोऽपरोपकरणत्वात् । तथा चान्यत्र[5] 'जामिरन्येऽस्यां जनयन्ति' इति[6] निरवोचत् । इह तूभयोर्जाय[7]वाच्ययोः भिरुप[8]जनः । अन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातं निगदेन[9] । अथवा 'अन्यो नानेयः' । 'असि सु इत्यभिपूजितार्थे'[10] । 'स्त्रीभगस्तथा स्याद् भजतेः'[11] । 'पतिः पाता वा पालयिता वा'[12] इति निर्वचनतः पुरस्ताद् व्याख्यातम् ।

पितेत्यनवगतम् । 'पा[13] रक्षणे'[14] इत्यस्य । पातेत्यवगमः[15] । 'वा[16] णो लुट्[17] वक्तव्यः'[18] इत्येवं वा[19] णयन्तस्य वा[20] पायिता[21] अन्यै रक्षयितव्येत्यर्थः । अन्ये तु 'पाल रक्षणे'[22] इति धातुमर्थैकत्वं चाहुः ।

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य
विंशः खण्डः । ][23]

---

१–दीपति B. दिपति C.
२–०न्दति B.
३–अ इति त्रुटितम् C.
४–०जनया C.
५–चायत्र B. C.
६–[ निरु० ३।६ ]
७–'जाया' इति पाठः स्यात् ।
८–मीरुप० B.
९–[ निरु० ११६ ]
१०–[ निरु० १।२ ]
११–[ निरु० ३।१६ ]
१२–'पिता पाता वा पालयिता वा' [ निरु० ४।२१ ] 'सर्वस्य पातारं वा पालयितारं वा विश्पतिम्' [ निरु० ४।२६ ] 'विश्पती सर्वस्य पातारौ वा पालयितारौ वा' [ निरु० ५।२८ ]
१३–वा C.
१४–[ धा० २।४७ ]
१५–वाते० C.
१६–वा इति त्रुटितम् B.
१७–लट् C.
१८–वक्तव्यः इति नास्ति B. 'पातेर्णौ लुग्वक्तव्यः' इति [ पा० ७।३।३७ सूत्रे ]वार्तिकम् ।
१९–पाण्यन्त० B.
२०–वा इत्यधिकमेवात्र भाति ।
२१–वायिता C.
२२–[ धा० १०।९९ ] करणे B. C.
२३ आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ विंशः खण्डः । ][1]

आ घा ता गच्छानुत्तरा युगानि यत्र जामयः कृणवन्नजामि ।
उप बर्बृहि वृषभाय बाहुमन्यमिच्छस्व सुभगे पतिं मत्[2] ॥

यमीयमसंवादे यमी यमं चकमे । तां सोऽनया प्रत्याचष्टे । आकारो[3] गच्छा[4]-नित्यनेन सम्बध्यते । यो न सम्बध्यते सोऽनर्थः । आगच्छन्[*] आगमिष्यन्ति । ता[5] तानि उत्तरा उत्तराणि युगानि कालाः[6] कलियुगान्ते ते काला आगमिष्यन्ति न इदानीं[7] वर्तन्त इत्यर्थः । यत्र येषु सर्वशास्त्रव्यवस्थापरिलोपा जामयो भगिन्यः कृणवन्[8] करिष्यन्ति । अजामि अविद्यमाना जामिः कर्तृत्वेन यस्य तदजामि भगिन्यामयोग्यं[9] मैथुनलक्षणं कर्म । एत-ज्ज्ञात्वा उपबर्बृहि[10] भर्तेः[11] धारणार्थस्य । वर्णस्योपरया[12] भकारस्य[13] बकार उपबर्बृहि[14] एक-शायनगतस्य समीपे धारय उपधानीकुर्वित्यर्थः[15] । वृषभाय योऽविरुद्धै[16] तत्कर्म[17] रेतो वर्षति स वृषभस्तस्यार्थाय तं[18] परिष्वक्तुमित्यर्थः । बाहुमात्मीयं[19] चान्यमिच्छस्व इच्छ कामयस्व । सुभगे पतिं मत्[20] मत्तः । अहमयोग्यस्तव पतित्वस्येत्यर्थः ।

जाम्यतिरेकनाम । अतिरिच्यत इत्यतिरेकः पुनरुक्तमुच्यते तस्य नाम पुनर्जायमान[21]-त्वात् । उदाहरणम् । 'अथ यदसन्नयत् पुरोडाशावन्तरेणोपांश्वाज्यस्य यजत्यजामि-तया'[22] इति । तथा 'जामि वा एतद् यज्ञे क्रियते यदन्वञ्चौ पुरोडाशौ'[23] इति । बालिशस्य वा अज्ञातिकार्येषु मुग्धः शेत इति बालिशो मूर्खस्तस्य वा नाम । स हि जात एव केवलं न कस्मैचित् पुरुषार्थायालम् । तत्र निगमः पर्येष्येः[24] । समानजातीयस्योपजनः । अन्ये[25]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १०।१०।१०] 'आ घा ता' इत्येव प्रतीकम् B.C.
३–आ घा ता B.
४–अत्र 'घा' इति पाठः स्यात् ।
५–का (नि) B. ६–काल: C.
७–तेदानि C. ८–कृण्वन् B.
९–०योग्यं मै० C. १०–उपबृबर्हि: C.
११–'बिभर्तेः' इति पाठो युक्तः ।
१२–'वर्णव्यापरया' इति युक्तं स्यात् ।
१३–भाकार० C. १४–बं इति त्रुटितम् C.
* 'आगच्छान्' इत्युचितम् ।
१५–०कुर्वत्यर्थः C.
१६–वः B. C.
१७–०रुद्धे तत्कर्मक B.
१८–तः B. १९–०त्मीयत्वं C.
२०–पतिर्मत् ।". २१–पुनर्जाय० C.
२२–[ अनुपलब्धमूलमिदम् ]
२३–[ अनुपलब्धमूलमिदम् ]
२४–पर्येष्यम् B.
२५–अत्र 'अन्ये' इति पदेन दुर्गाचार्य एव । स हि 'असमानजातीयो हि पुरुषस्य भगिन्याख्यो भ्राता । सा हि स्त्रीत्वादेव अतुल्यजातीयैव पुरुषस्य भवति' इति व्याचख्यौ ।

वालिशस्य[1] वासमानजातीयस्य चेति तुल्यत्वात् संहितायां असमानजातीयस्य वा इत्येवमवच्छिन्दन्ति[2]। सा स्त्रीत्वादेव भगिनी भ्रातुरसमानजातीया इत्युच्यत इति व्याचक्षते।

अथवा जाम्यतिरेकनाम। कस्यातिरिच्यमानस्य नाम। बालिशस्य वा अ[3]समानजातीयस्य वोपजनो जामिः। तौ हि जातावेव केवलं न कस्मैचित् प्रयोजनाय[4]। एको मूर्खत्वात्[5] अपरोऽपरोपकरणत्वात्। तथा चान्यत्र[6] 'जामिरन्येऽस्यां जनयन्ति' इति निरबोचत्। इह तूभयोर्जायैवा[7]च्ययोः मि[8]रुपजनः। अन्यमिच्छस्व सुभगे पतिं मदिति व्याख्यातं निगदेन[9]। अथवा 'अन्यो नानेयः'। 'अति सु इत्यभिपूजितार्थे[10]'। 'स्त्रीभगस्तथा स्याद् भजतेः[11]'। 'पतिः पाता वा पालयिता वा'[12] इति निर्वचनतः पुरस्ताद् व्याख्यातम्।

पितेत्यनवगतम्। 'पा[13] रक्षणे[14]' इत्यस्य। पाते[15]त्यवगमः। 'वा[16] णो लुक्[17] वक्तव्यः[18]' इत्येवं वा[19] ण्यन्तस्य वा[20] पायि[21]ता अन्ये रक्षयितव्येत्यर्थः। अन्ये तु 'पाल रक्षणे[22]' इति धातुमर्थकत्वं चाहुः।

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य विंशः खण्डः। ][23]

---

१–दीपति B. दिपति C.
२–०न्दति B. ३–अ इति त्रुटितम् C.
४–०जनया C. ५–चायत्र B. C.
६–[ निरु० ३।६ ]
७–'जाया' इति पाठः स्यात्।
८–मीरुप० B. ९–[ निरु० १।६ ]
१०–[ निरु० १।३ ]
११–[ निरु० ३।१६ ]
१२–'पिता पाता वा पालयिता वा' [ निरु० ४।२१ ] 'सर्वस्य पातारं वा पालयितारं वा विश्पतिम्' [ निरु० ४।२६ ] 'विश्पती सर्वस्य पातारौ वा पालयितारौ वा' [ निरु० ५।२८ ]
१३–वा C. १४–[ धा० २।४७ ]
१५–वाते० C. १६–वा इति त्रुटितम् B.
१७–लट् C.
१८–वक्तव्यः इति नास्ति B. 'पातेर्णौ लुग्वक्तव्यः' इति [ पा० ७।३।३७ सूत्रे ] वार्तिकम्।
१९–पाण्यन्त० B.
२०–वा इत्यधिकमेवात्र भाति। २१–वायिता C.
२२–[ धा० १०।६९ ] कर्पणे B. C.
२३ आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

# [ अथ एकविंशः खण्डः । ][1]

द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी महीयम् ।
उत्तानयोश्चम्वो ३ र्योनिरन्तरत्रा पिता दुहितुर्गर्भमाधात्[2] ॥

दीर्घतमा[3] आह । द्यौर्मे[4] मम पिता यः स जनिता जनयिता । कथम् ? उच्यते । नाभिरत्र नाभिभूतो भौमो रसः । अत्र तिष्ठतीति शेषः, ततश्चान्नं[5] जायते । अन्नाद्रेतः । रेतसो[6] मनुष्याः । एवं पारंपर्येण जननहेतो रसस्याधारभावाद् द्यौर्जनयिता ततश्च मम पिता । बन्धुः शरीरस्य बन्धनकशरीरात्मना परिणमयित्रीत्यर्थः । मे मम माता मातृभूता । अथवा बन्धुशब्दोऽत्र जातिवचनः । संज्ञाति[7]र्मातेत्यनेन[8] विशेष्यत इति । पृथिवी मही महती[9] इयम् । किञ्च यदिदमुत्तानयो[10]श्चम्वो[11]र्द्यावापृथिव्योरन्तर्मध्ये[12] योनिः स्थानमन्तरिक्षाख्यातम् । अत्र स्थित इति शेषः । पिता पालयिता पर्जन्यो दुहितुर्दूरे निहितायाः[13] पृथिव्याः ।

अथवा सस्यवर्तायाः[14] जनयितृत्वात् पितेव पर्जन्यः पृथिव्याः पृथिवी चास्य दुहिता । स तस्या वृष्टिप्रदानद्वारेण सस्यनिष्पत्तिफलं गर्भमाधाद् आधत्ते । बन्धुः सम्बन्धनात् सम्बन्धो[15] हि सः । नाभिः सन्नहनात्[16] । किं तत्र सन्नहनम् ? उच्यते । नाभ्या सन्नद्धाः परिवेष्टिता गर्भा जायन्ते । अतः सन्नह्यमानाभिरित्याहुः । प्रत्यक्षेणापि[17] चैतत् स्वयमपि दृश्यत एव । एतस्मादेव सन्नहनात् सम्बन्धनाच्च ज्ञातीन् सनाभय इत्याचक्षते । संबन्धव[18] इति च समाना हि तेषां[19] नाभिर्मातुः । माता[20] महावयवभूता । बन्धुश्च माता । माता मही वा ।

ज्ञातिः संज्ञानात् । प्रसङ्गेन ज्ञातिनिर्वचनम् । स[21] हि संज्ञायते मातृपितृसम्बन्धात् । उत्तान उत्ततान ऊर्ध्वं[22] ततो विस्तीर्णो नः प्राणो निश्वासलक्षणो यस्य स उत्तान ऊर्ध्वतानो वा । तानो विस्तारो निश्वासस्य स ऊर्ध्वं यस्य स उत्तानः ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ ऋ० १।१६४।३३ ] 'द्यौर्मे पिता' इत्येव प्रतीकम् B. C.
३–०तमाः । अहः B.
४–द्यौः C.
५–तकथा० C.
६–ई तत्र सा B.
७–संजातिः B.
८–'मातेत्यनेन' इति पाठो युक्तः ।
९–'महती इ' इति त्रुटितम् B.
१०–०मुत्तान० C
११–०श्चम्वोः C.
१२–मध्ययोनिः C.
१३–अत्र 'वि' इत्यधिकम् C.
१४–०वर्तायाः C.
१५–संबन्धो हि सन् B.
१६–सन्याहनात् C.
१७–०णापि चै० C.
१८–संबन्ध० C.
१९–ते इति द्विर्लिखितम् B.
२०–माता द्यौव० C. अत्र 'माता महावयवभूता' इति 'मही अवयवभूता' इति वा पाठः साधीयान् भवेत् ।
२१–अत्र 'सा' इति पाठो युक्तः ।
२२–'ऊर्ध्वं' इति नास्ति B.

शंयोरिति द्विपदमेतदनवगतम्। द्वे नात्मनस्तत:[1] शमित्येकमनवगतम्। शमनमित्यवगमः। योरिति द्वितीयम्। अन्यस्यापि[2] यावनमिति। द्वयोरप्येकमेवोदाहरणम्।

बर्हिषदः पितर ऊत्य१र्वागिमा वो हव्या चकृमा जुषध्वम्।
त आ गतावसा शंतमेनाथा नः शं योररपो दधात[3] ॥

शंयो नाम यामायनस्तस्यार्षम्। हे बर्हिषदः पितरः। परस्तात्तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। ये[4]षामूति चतुर्थ्याः। अत्र 'सुपां सुलुक्'[5] इति पूर्वसवर्णः। ऊतये अवनाय* तर्पणाय। अर्वागित्यागतेत्यनेन संबध्यते। इमा इमानि वो[6] युष्माकं हव्या हवींषि चकृमा[7] कृतवन्तो वयम्। जुषध्वं सेवध्वम्[8]। ते एतानि[9] तदर्थश्च अर्वागागत आगच्छत[10]। अवसा शन्तमेन 'इत्थम्भूतलक्षणे'[11] इत्येवमेषा तृतीया। सा च सम्बन्धत्वं प्रतिपादयति। अपि भवान् कमण्डलुना छात्रमद्राक्षीदिति यथा। पालनेन सुखतमेन यत्पालनमतिशयेन सुखं तेन संबन्धैः[12]। तदर्थं गृहीत्वेत्यर्थः। अथ अनन्तरं च नोऽस्मभ्यम्। शंयोः 'अनुदात्तं पदमेकवर्जम्[13]' इत्येकस्मिन् पदे नैकोदात्तत्वस्या[14]सम्भवाच्छंयोरित्यनयोश्च द्वयोरप्युदात्तत्वात् द्वे ते पदे। शमनं शं[15]मुपशमनमुत्पन्नानां रोगाणां तत् शम्। योर्यावनं[16] पृथग्भावोऽसंबन्ध उत्पन्नस्य मानैर्भयैः। ते चारपो[17] रपो[18] रिप्रमिति पापनामनी भवत इति पापानां शमनयावनयो[19]श्चेदं[20] विशेषणं पापशमनं यावनं चेति। अथवा एतदपि[21] पृथगेव। प्रां पापत्वं[22] च दधाति धत्त एव एते[23] द्वे पदे।

क्वचित्तु शंयोरित्येवंरूपमेवैकम्। तत्प्रदर्शनाय अथापि शंयुरित्यादि। शंयुर्नाम बृहस्पतेः पुत्र इति सोऽपि शंयोरित्यनेनोच्यते 'तच्छंयोरावृणीमहे' इत्यत्र। प्रसङ्गेनेदं श्रुतिसारूप्यात् भिन्नस्वरस्यापि शंयोरित्येकपदस्यार्थवचनम्। एकपदत्वमेकोदात्तत्वात्। अभ्यस्यत एवैको यो नित्यमुदात्तः। आदिस्तु शमित्यनुदात्तः।

---

१—नात्मानं C.
२—'अन्यस्यापि' इति 'अस्यापि' इति वा पाठः साधीयान् भवेत्।
३—[ ऋ० १०।१५।४ ] ४—एषाम्० C.
५—[ Fragment of पा० ७।१।३९ ]
६—प: C. ७—चक्रम C.
८—सेवध्वम् C. ९—एतारि C. एतानि B.
१०—अन्वगच्छत B. अत्र 'अन्वागच्छत' इति पाठः समीचीनो भवेत्।
* 'अवनाय' इति स्यात्।
११—[ पा० २।३।२१ ]
१२—०बन्धाः C.
१३—[ पा० ६।१।१५८ ] वर्जितत्वस्येक० C.
१४—'त्वस्यासंभवाच्छं' इति त्रुटितम् B.
१५—शं इति नास्ति B. १६—यापनं C.
१७—चाङ्पः C. १८—रवो C.
१९—शमनं यावनं B. यापन C.
२०—'श्चेदं विशेषणं पापशमनम्' इति त्रुटितम् B.
२१—तितद० C. २२—प्रापत्वं C.
२३—त्रैते C. 'अत्रैते' इति पाठः स्यात्।

तच्छंयोरावृणीमहे गातुं यज्ञाय
गातुं यज्ञपतये दैवी स्वस्ति-
रस्तु नः स्वस्तिर्मानुषेभ्यः।
ऊर्ध्वं जिगातु भेषजं शं नो
अस्तु द्विपदे शं चतुष्पदे[1]॥

बार्हस्पत्यः शंयुरार्हः। तच्छंयोः शंयुनाम्नोऽस्मदीयस्यान्तरात्मनोऽर्थाय वयमावृणीमहे आभिमुख्येन वृणीमहे प्रार्थयामहे। किं तत्? गातुं यज्ञाय शमनं यज्ञस्य देवान् प्रति गातुं यज्ञस्य पतये गमनमेव यज्ञपतेः स्वर्गं। किञ्च दैवी स्वस्तिरस्तु नः देवप्रभवा च स्वस्तिरस्माकम्। स्वस्तिरेव मानुषेभ्यः। देवाश्चास्माकं मनुष्याश्च स्वस्ति कुर्वन्तीत्यर्थः। ऊर्ध्वं चैतद् देवलोकं जिगातु नित्यं गच्छतु। भेषजमौषधं भेषजं सुखं वा। औषधभूतत्वात् सुखभूतत्वाद् यज्ञोऽत्र भेषजमुच्यते। कुत एतत्? 'ऊर्ध्वो नो यज्ञो देवलोकं गच्छतु इत्येवैतदाह' इति शतपथे विवरणात्। किञ्च शमो अस्तु द्विपदे शं चतुष्पदे मानुषेभ्यो गवादिभ्यश्चेत्यर्थः।

इति स्कन्दस्वामिकृतायां निरुक्तवृत्तौ
नवमस्या-( चतुर्थस्या- ) ध्यायस्य
तृतीयः पादः।

[ एकविंशश्च खण्डः समाप्तः। ][11]

---

१–[ मैत्रा० सं० ४।१३।१० ]
२–०रात्या: B. C.
३–०रह C.
४–अत्र 'गमनं' इति पाठो युक्तः स्यात्।
५–मनुष्येभ्यः B.
६–औषधभू० C.
७–त इति त्रुटितम C.
८–यज्ञ B.
९–[ श० ब्रा० ?
१०–[ ऋ० १०।१६५।१ ]
११–अयं कोष्ठकान्तर्गतः पाठो नादर्शपुस्तकेषु दृश्यते।

# [ अथ चतुर्थः पादः ।

## द्वाविंशः खण्डः ।.][1]

अदितिरित्यनवगतम् । अनेकार्थत्वश्च दर्शनभेदेन । कथम् ? ऐतिहासिकाना देवानां माता उच्यते । नैरुक्तानामदीनादिगुणः । अध्यात्मपक्षे प्रकृतिः । यद्यपि च 'धातेः'[2] क्तिनि 'द्यतिस्यति'[3] इति त्वेवं[4] सिध्यति अदितिरिति । तथापि[5] द्यतेर्नित्यं[6] विपूर्वत्वान्न[7] त्वयाँचि[7] 'दीङ् क्षये'[8] इत्यस्य छान्दसं रूपं द्रष्टव्यम् । तथाचोक्तम् 'न संस्कारमाद्रियेत अर्थनित्यः परीक्षेत'[9] इति । अतः सर्वेषु पक्षेष्वखण्डनस्यासम्भवादनवगतत्वमुच्यते ।[10]

[ इति नवमस्या-( चतुर्थस्या-) ध्यायस्य
द्वाविंशः खण्डः ।[11] ]

---

१–[ ] एतत्कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।

२–[ धा० ४।४२ ]

३–[ पा० ७।४।४० ]

४–अत्र 'इतीतेन' इति 'इतीत्थं एवं' इति वा पाठो युक्तो भवेत् ।

५–तथापि B. C.

६–द्यतेर्नित्यं च पूर्वत्वा C.

७–अत्र शुद्धः पाठो नावबुध्यते । अथवा 'अनन्वयाच्च' इति पाठोऽत्र भवेत् । तथाच 'द्यतेर्नित्यं विपूर्वत्वादनन्वयाच्च' इत्यानुपूर्वीकं एव पाठः स्यात् ।

८–[ धा० ४।२८ ] दीक्षये B.

९–[ निरु० २।१ ]

१०–पक्षेष्व० C.

११–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो नास्ति ।

## [ अथ त्रयोविंशः खण्डः । ][1]

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्[2] ॥

गौतमस्य । पष्ठ्या[3] चैतदुत्कृष्टम् । तदुपरिष्टाद् व्याख्यास्यामः । तदिहानवगतत्व-प्रसङ्गादागतं व्याख्यायते । अदितिर्द्यौः । देवमातृत्वाददितेर्द्युप्रभृतयस्तत्प्रभवाः । तेषां तत्प्रभवत्वाच्च तच्छब्देनैवाभिधानम् । अदितिप्रभवा द्यौरित्यर्थः । एवमेव[4] अदितिरन्तरिक्षम् । अदितिप्रभवत्वादित्यर्थः । अदितिर्माता[6] सः । स इति लिङ्गव्यत्ययः सैव पिता[7] सैव पुत्रः । विश्वे देवा अदितिः । पञ्चजनाश्च गन्धर्वादयः । निषादपञ्चमा वा वर्णाः । किं बहुना । अदितिरेव जातम् । अदितिरेव जनिष्यमाणमित्यर्थः । एवं[8] लोके यावद् द्युवियन्मातृपितृपुत्रादिसंमतं तत्सर्वं[9] तत्प्रभवत्वाददितिरिति कृत्स्नस्य जगतस्तत्प्रभवत्वेन । एवम[10]दितेर्विभूतिमाचष्टे मन्त्रो मन्त्रदृग्वा[11] ।

अदीनपर्यायो वा नैरुक्तपक्षेऽदितिशब्दो न देवमातृवचनः । अत आह । एतान्य[12]दीनानीति वा इति । अक्षीणा द्यौः । तथान्तरिक्षादीनि । अध्यात्ममपि अदितिः प्रकृतिः कारणं ब्रह्म । प्रकृतिसार्व[13]नाम्न्याच्च तत्प्रभवत्वे सति सर्वमदितिरिति व्याख्येयम् ।

परिरे इत्यनवगतम् । परिरे इत्यस्य[14] स्वयमेव च रूपसिद्धिमाचष्टे ईरिति[15] । 'ईर गतौ'[16] इत्ययमुपसृष्ट आ इत्यनेनोपसर्गेण युक्तोऽभ्यस्तैः 'लिटि धातोरनभ्यासस्य'[17] इति कृताभ्यासः । यद्येवं कोऽस्या[18]नवगमः ? उच्यते । उपसर्गस्य उपसर्गान्तरा[19]र्थे वृत्तिरनवगमः । अत्र चायं प्र इत्येतस्य स्थाने ओङ्[20] ।

यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना ।
[21]गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति[22] ॥

---

१–आदर्शपुस्तकेष्वयं खण्डारम्भनिर्देशो नास्ति ।
२–[ ऋ० १।८९।१० ] 'अदितिर्द्यौः ( ०ति द्यौः C. )' इत्येव प्रतीकम् B. C.
३–शुद्धः पाठोऽत्र नावगतः ।
४–[ निरु० ७।५ ]
५–द इति त्रुटितम् C.
६–०तिर्वाता C.
७–विता C.
८–एव लोके याव द्युवियमातृ० C.
९–०र्वतं तत्प्र० C.
१०–एवमिदि० C.
११–मन्त्रः ऋग्वा B.
१२–एतान्यदीति वेति C.
१३–०तिः सार्व० B.
१४–'रे इत्यस्य' इति त्रुटितम् C.
१५–अत्र 'ईर्तिरिति' इति पाठो युक्तः भवेत् ।
१६–[ धा० २।८ ]
१७–[ पा० ६।१।८ ]
१८–०त्रनव० C.
१९–०र्गान्तरा० C.
२०–आदे B. C.
२१–इतः पूर्वम् 'अभिते' इति पाठोऽत्र त्रुटितो भाति ।
२२–[ ऋ० १।१४३।४ ] 'यमेरिरे' इत्येव प्रतीकम् B. C.

दीर्घतमसः। यमेरिरे अभिलषितार्थसिद्धये प्रेरितवन्तः। के? भृगवः। विश्ववेदसं[1] सर्वस्य वेदितारं सर्वधनं वा। नामा नाभिभूतायां पृथिव्यामुत्तरवेद्यां भुवनस्य भूतजातस्य मज्मना बलनामैतत्[2]। तद्धेतौ[3] चात्र वर्तते। बलहेतुनानेन हविरादनेनाग्निं[4] तम्[5]। गीर्भिर्हिनुहि नुदस्व आ दमे। हिनोतिर्वृद्धयर्थः। अभि नुमि[6] (?) मर्यादायाम्। आङ् मर्यादायाम्। वर्धयस्व दमे यज्ञगृहे। कीदृशः सोऽग्निः? उच्यते। य एक एव वस्वो वसुनो धनस्य वरुणो न वरुण इव यथापां पतिर्न[7] राशेः। एवं राजति ईष्टे।

जसुरिरित्यनवगतम्। 'जसु मोक्षणे'[8] 'जसु[9] ताडने'[10] इत्यस्य वा एतद्रूपं रिप्रत्यये[11]।

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य
त्रयोविंशः खण्डः।[12] ]

---

१–विश्ववेदसं C.
२–बलनामेदं C.
३–ततो B. तद्धेतो C.
४–न इति त्रुटितम् B. C.
५–गर्भि ननु हिस्व C.
६–अयं पाठः संदिग्ध एव।
७–पतीरस C.
८–[धा० ४।१०५]
९–जनि B. जसि C.
१०–[धा० १०।१३५] धातुपाठे 'हिंसायाम्' इति पाठः।
११–अरिप्रत्यये C.
१२–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

# [ अथ चतुर्विंशः खण्डः । ][1]

उत स्मैनं वस्त्रमथिं न तायुमनु क्रोशन्ति क्षितयो भरेषु ।
नीचायमानं जसुरिं न श्येनं श्रवश्चाच्छा पशुमच्च यूथम् ॥[2]

वामदेवस्य । उत अपि । पूर्वत्वक्षया[3] चैतदुच्यते । अपि पूर्वस्यामृचि यदुक्तमप्येतदन्यत्[4] किमुच्यते । स्म इति पदपूरणः । एवमधिकृतत्वात्सूक्तस्य दधिक्राम्[5] । वस्त्रमथिं न[6] वस्त्रमाथनमिव[7] वस्त्रापहारिणमिव तायु स्तेनम् । अयमागतोऽयमागतोऽयमागतो-ऽयमित्यनुक्रोशन्ति प्रतियोद्धुमशक्नुवन्तः । क्षितयो मनुष्याः शत्रुभूताः । भरेषु संग्रामेषु । नीचायमानं शत्रूणां वञ्चनार्थं नीचैर्गच्छन्तम्[9] । किमिव ? उच्यते । जसुरिं न श्येनं यद्वन्धस्ता-[10]डितो याहनं वेगश्रान्तो जसुरिरुच्यते । श्रान्तमिव श्येनम् । किमर्थं गच्छन्तमेनं[11] ? श्रवश्च अन्नं यशो धनं वा तच्च अच्छ आप्तुम् । पशुमच्च पशुभिश्चावयवभूतैर्बन्धुभिस्तद्वद् यूथम् । भाष्ये स्यच्छशब्दोऽहेः[12] । अत्रोपसर्गश्रुतेः क्रियापदमध्याहार्यम् । अभिसन्धायेति ।

वस्त्र वस्तेराच्छादनार्थस्य[13] । आच्छाद्यते हि तत् । तायुः[14] स्तेनः । संस्त्यानं संहतं पिण्डीभूतमस्मिन् पापकमिति[15] नैरुक्ताः । तस्यतेर्वा[16] स्यादपक्षयार्थस्य । उपक्षीणो ह्यसाविह लोके आयुषा[17] यदा राज्ञो[*] मारयिष्यमाणत्वात् । परलोकेऽपि धर्मेण अधर्मकारित्वात् । भर[18] इति निर्विवक्षयोपन्यासः । भरतेर्वा[19] । ह्रियन्ते[20] हि तदर्थं योधानामायूंषि[21] धनानि च । नीचैर्निचितमधश्चितम् । उच्चैरुच्छ्रितमूर्ध्वचितम्[22] । प्रासङ्गिकं चेदमुच्चैः-शब्दस्य निर्वचनम् । श्येनः शंसनीयं[23] गच्छति । उच्चैर्दूरं[24] च गमनात् । प्रशंसायां[25] च ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ४।३८।५]'उत स्मैनं' इत्येव प्रतीकम् B.C.
३–पूर्वगलक्षया C. अत्र 'पूर्वापेक्षया' इति 'पूर्वर्गपेक्षया' इति वा पाठो युक्तः ।
४–इदं वाक्यं द्विर्लिखितम् C.
५–दधिक्रा B.
६–न इति त्रुटितम् B. C.
७–माथिन० इति पाठो युक्तः ।
८–०गतेय० C. ९–गच्छन्तः B.
१०–वन्धस्ता० C. ११–गच्छन्तः B.
१२–अत्र 'अपेः' इति 'अभेः' इति वा पाठः स्यात् । स्थाने इति शेषो योज्यः । भाष्ये 'श्रवश्चापि' इति अपिरस्ति । अत्र टीकायां तु 'अभिसन्धाय' इत्यभिः ।
१३–[ धा० २।१३ ] १४–तातु C.
१५–पावक C. १६–[ धा० ४।१०६ ]
१७–'आयुषा' इति नास्ति B.
१८–भरत C. १९–[ धा० १।९२३ ]
२०–ह्रियन्ते इत्यस्मात्पूर्वमत्र 'हरतेर्वा' इति पाठो भवेत् ।
२१–योधानायूंषि B. यौधानायूंषि C.
२२–०मूर्द्धचि० C. २३–०सनीयः C.
२४–उच्चैर्द्दूरं B. उच्चैद्दूरं C.
२५–यां इति नास्ति C. *–'राज्ञा' इत्युचितम् ।

यूथं चेति । प्रशंसाहेतुत्वाद् यशःप्रशंसेत्युक्तम् । यूथं यौतेः[1] । समायुतं भवति । समायुतं संमिश्रं स्त्रीभिः पुंभिर्बालैर्वृद्धैः पशुभिः ।

जरते इत्यनवगतम् । 'गॄ स्तुतौ'[2] इत्यस्य छान्दसोऽयं गकारस्य जकारः । एवंरूपस्य स्तुत्यर्थस्य धात्वन्तरस्याभावात् । निगमः—

दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।
तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः[3] ॥

भलन्दनपुत्रो[4] वत्सप्रीर्नाम[5] । तस्यार्षम् । दिवः परि दिवं[6] उपरि प्रथमं जज्ञे जातोऽग्निरादित्यात्मना । अस्मत्परि अस्माकमुपरि द्वितीयं पार्थिवात्मना जातवेदा जातधनो जातविद्यो वा । तृतीयमप्सु[7] । आप[8] इत्यन्तरिक्षनाम । अन्तरिक्षे वैद्युतात्मना । नृमणा नृषु अनुग्राहकं[9] मनो यस्य स नृमणाः । एवंरूपमजस्रं नित्यमिन्धानो[10] भवीभिर्दीपयन्ते[11] । तं जरते स्वाधीः । अत्र वाक्यपरिसमाप्त्यर्थं यत्तच्छब्दावध्याहार्यौ । यो जरते गृणाति स्तौति सं[12] स्वाधीः सुप्रज्ञः ।

मन्दिने[13] इत्यनवगतम् । मन्दतेः[14] स्तुतिकर्मणो घञि मदनं मन्दः स्तुतिस्तद्वान्मन्दी । छान्दसत्वात् 'अत इनिठनौ'[15] नेष्येते । 'एकाक्षरात् कृतो[16] जाते सप्तम्यां च न तौ स्मृतौ'[17] इति ।

प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तं सख्याय हवामहे[18] ॥

मन्दिने स्तुतिमते स्तुत्यायेत्यर्थः । पितुमत् पितुरित्यन्ननाम । अन्नेन हविराख्येनेति[19] संयुक्तम् । प्रार्चत अर्चतिनात्र उच्चारणपूर्वकत्वात्स्तुतेरुच्चारणं लक्ष्यते, प्रोच्चारयत हे ऋत्विजः । वचः स्तुतिरूपम् । यः कृष्णगर्भाः कृष्णवर्णस्य मेघस्य गर्भभूताः । कास्ताः ?

---

१–[ धा० २।२३ ]
२–धातुपाठे स्तुत्यर्थो 'गॄ' न दृश्यते । 'गा' इति त्वस्ति [ धा० ३।२४ ] म C.
३–[ ऋ० १०।४५।१ ] 'दिवस्परि' इत्येव प्रतीकम् B C.
४–भवन्दन C.
५–वत्सनिर्नाम C.
६–चेवेरि B.
७–०मना C.
८–[ निघ० १।३ ] अप C.
९–०हकर्मनो C.
१०–'स नृमणाः । एवंरूपमजस्रं नित्यमिन्धानः' इति पाठस्त्रुटितः B.
११–सन्दिग्धमिदं पदम् ।
१२–चं B.
१३–मन्दीत्यन० C.
१४–[ धा० १।१३ ]
१५–[ पा० ५।२।११५ ] इनिठनौ तेष्येते C.
१६–कृतौ B.
१७–[ अनुपलब्धमूलमिदम् ] 'स्मृतौ' इति द्विर्लिखितम् C.
१८–[ ऋ० १।१०१।१ ] 'प्र मन्दिने' इत्येव प्रतीकम् B. C.
१९–अत्रैको नकारोऽधिकः C.

सामर्थ्याद्वेः । निहन् हन्तिर्गतिकर्मा सामर्थ्याद्यान्तर्नीत[2]ण्यर्थो निर्गमितवान् । ऋजिश्वना[3] ऋजु[4]ः द्रवति गच्छति यः स ऋजिश्वा[5] वज्रस्तेन । वयमपि अवस्यवः[6] पालनकामाः । वृषणं वर्षितारम् । वज्रदक्षिणं वज्रो दक्षिणे हस्ते यस्य तं वज्रदक्षिणम् । मरुत्वन्तमिन्द्रम् । सख्याय स्तुत्यस्तोतृलक्षणाय स्तोतुमित्यर्थः । हवामहे आह्वयामः ।

गौरित्यनेकार्थः । स निर्वचनतोऽभिधेयतश्च पुरस्तात् सप्तमे[7] व्याख्यातः । तत्र यदुक्तम् 'अथाप्येको रश्मिश्चन्द्रमसं प्रति दीप्यते' इत्याद्युपक्रम्य 'सोऽपि[8] गौरुच्यते । अत्राह गोरमन्वत' इति तस्य तदुद्दिष्टस्यायमवसर[9] इति व्याख्यायते ।

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य
चतुर्विंशः खण्डः । ][10]

---

१–०र्थ्याद्वन C.
२–०न्तर्णीत० C.
३–ऋजिश्वना C.
४–ऋजु गवति C.
५–ऋजिश्वा C.
६–अवस्यवं C.
७–[ निरु० २।६ ]
८–सापि B.
९–त उत्कृष्टस्यायमवसार C
१०–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ पञ्चविंशः खण्डः ][1]

अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।

इत्था चन्द्रमसो गृहे[2] ॥

गौतमस्य । अत्राह अहनिपातो विनिग्रहार्थीय एवशब्देन समानार्थीयः[3] । अत्रैव गोः सुषुम्नाख्यस्य सूर्यरश्मेः । अमन्वत[4] अमंसत मतवन्तः । के ? अन्ये रश्मयः । किममंसत ? नाम नमनं प्रह्वीभावमनुप्रवेशमित्यर्थः । त्वष्टुः पञ्चम्येषा । आदित्यस्य सकाशात् । अपीच्यं अपेत्य[5] चितं स्थितम । अथवा अञ्चतेर्गत्यर्थस्य[6] अनेकार्थत्वाद्धातूनामपिचिद्धा[7]नार्थस्येदं रूपम् । अन्तर्हितनाम वा । अन्तर्गच्छतमाच्छादितं वा चन्द्ररूपेणेत्यर्थः । इत्था अमुत्र चन्द्रमसो गृहे गृहभूते मण्डले ।

गातुरित्यनवगतम् अवसरप्राप्तं तत्पुरस्तात् । तर्द[8] थयोः प्रसङ्गेन व्याख्यातं गमनं जनायेति

दंसय इत्यनवगतम् । कर्माणीत्यभिधेयवचनम् । दसयन्त एनानि[9] धातुर्कारक[10]विशेषप्रदर्शनम् । 'दसि दंसनदर्शनयोः'[11] । दर्शयन्ति हि तानि तत्कारिणो दृश्यन्त इति वा दंसयः । अथवा 'तसूपक्षये दसु च'[12] इत्यस्य । उपेक्षितव्यानि[13] हि तानि अन्तर्नेतव्या[14]नीति । निगम :—

तव त्य इन्द्र सख्येषु वह्नय ऋतं मन्वाना व्यदर्दिरुर्वलम् ।

यत्रा दशस्यन्नुषसो रिणन्नपः कुत्साय मन्मन्नह्यश्च दंसयः[15] ॥

अर्थं[16] औरवस्तस्यार्षम् । तव त्ये ते हे इन्द्र सख्येषु । सप्तमीश्रुतेर्वर्तमान इति शेषः । सखीभूता इत्यर्थः । वह्नयो बलवन्तो वोढारः स्वकर्मणा मरुतोऽश्वा वा । ऋतं मन्वाना ऋतमुदकं तत्रावबुध्यमानाः । व्यदर्दिरु[17]र्विदारयन्ति । वलं मेघम् । कस्मिन् काले ?

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ऋ० १।८४।१५] 'अत्राह' इत्येव प्रतीकम् B. C.

३–०नार्थीया B. C.

४–अमयत C.

५–अपत्य C. ६–[ धा० १।१८८ ]

७–अविचि० C. ८–तच्छब्दयोः B.

९–'०नानि' इत्यारभ्य 'दर्शयन्ति हि' इत्यन्तः पाठस्त्रुटितः B.

१०–अत्रैको 'धा' कारोऽधिकः C.

११–[ धा० १०।१४२ ]

१२–[ धा० ४।१०६–१०७ ]

१३–उपेक्षितव्यानि B. उपेक्षत० C.

१४–अन्तर्नेत० B.

१५–[ ऋ० १०।१३८।१ ] 'तव त्य इन्द्र सख्येषु' इति प्रतीकम् B. 'तव त्य इन्द्र' इत्येव C.

१६–अत्रौरवस्त० C.

१७–०दिरवलंदा० C.

उच्यते । यत्र यस्मिन् काले । दशस्यन्[1] दशस्यतिर्दानकर्मा ततो वर्तमाने लटि छान्दस- मेतद् रूपम् । ददातीत्यर्थः[2] । काः ? उषसः । पूजायां बहुवचनम् । माध्यमिका वाचः । रिणन्[3] रिणोतेर्[4]गतिकर्मण एतद्रूपं पूर्ववत् । गच्छन्ति च । अपो मेघस्थाः प्रति कुत्साय कृन्ततेः कुत्सः कर्षकोऽभिप्रेतः । स हि भूमिं कृन्तति तस्यार्थाय । मन्मन् मन्यत इत्यर्च- तिकर्मा । लुप्तविभक्तिकं चेदं द्रष्टव्यम् । कुत्सस्य विशेषणम् । अपां[5] कुत्साय मन्मने स्तोत्रे अपो मन्मनस्तुत्याः । अथ च दंसयोऽहिर्मेघस्तस्मिन् भवे[6]स्तन्निमित्त इत्यर्थः । अह्नो व्यत्ययेन चैकवचनम् । छान्दसत्वात् । मेघनिमित्तानि कर्माणि वर्षणादी[7]नि यस्मिन् काले वर्षास्वित्यर्थः ।

'तूर्तावित्यनवगतम् । तुताव[8]त्यवगमः[9] ।

यस्मै त्वमा यजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम् ।
स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव[10] ॥

कुत्सस्यार्षम् । यस्मै त्वं यस्यार्थाय त्वमायजसे । आङ् मर्यादायाम् । यथा[11]शास्त्रं यजसि देवान् दैव्ये होतृत्वे वर्तमानः । स साधति साधयत्यात्मनोऽभिप्रेतानि । अनर्वा[12] अप्रत्यृतोऽपराश्रितश्च । क्षेति क्षीयति* निवसति स्वस्मिन् स्थाने । दधते धारयति चात्मनि प्राप्नोतीत्यर्थः सुवीर्यं शोभनं वीर्यम् । स एव तूताव[13] तुवतिर्वृद्ध्यर्थः । सर्वां वृद्धिमश्नोति नैनं व्याप्नोति पापं वधो वा[14] । यत एवमतो ब्रूमः । हे अग्ने सख्ये स्तुत्यस्तोतृलक्षणे वर्तमाना इति शेषः । मा रिषाम मा हिंसिष्महि[15] केनचिद्वयं तव ।

अंहतिरंहश्चांहुश्च हन्तेर्निरूढोपधाद्विपरीतात्[16] । हन्तेरुपधाया अकारः सन्निकृष्य ऊढः प्रापितो नीत आदौ यस्य स निरूढोपधः[17] । यावपि हकार[18]नकारावयवौ तावपि[19] विपरीतौ यस्य स विपरीतावयवत्वाद् विपरीतः । भीमभामा[20]वदुत्तरपदलोपेन च । प्रसङ्गेन चात्र अंहो-

---

१–दशस्यात् C.          २–ददतीत्यर्थः C.
३–रिणन् इति नास्ति C.
४–[ धा॰ ६।१२४ ] स्वादिगणीयस्तु हिंसार्थः । रिणाते॰ C.
५–आदर्शपुस्तकेष्वत्र 'पापां' इति पाठः । स चानर्थकत्वादस्माभिरुपेक्षितः ।
६–भवस्तन्निमित्ता C.    ७–॰णादिनि C.
८–स्तौते॰ C.          ९–तुतदवेत्य ॰ C.
१०–[ऋ॰ १।९४।२] 'यस्मै त्वम्' इति प्रतीकम् B. यस्मैर्थम् C.
* 'क्षियति' इत्युचितम् ।

११–येथा C.   १२–अनवा अप्रत्य ऋतोवरा॰ C.
१३–कूताव तुपति॰ C.          १४–पा B.
१५–हिंसिपुहि C.
१६–॰ढोवधाद्विपरिताधन्ते॰ C.
१७–'॰ढोवय:' इत्यपि B. ॰ढोवधः C.
१८–हकारः नकाव ( प B. ) यवौ B. C.
१९–नावपि B. C.
२०–भावानुत्तर॰ B. 'भीमसन्यायवदुत्तरपदलोपेन' इत्युचितम्, भामाशब्दे उत्तरपदलोपाभावात् ।

ऽहुशब्दयोर्निर्वचनम् । अंहतिशब्दस्यैव पठितत्वात् ।

चयसे इत्यनवगतम् । चातयसीत्यवगमः ।

ये त्वा देवोस्रिकं मन्यमानाः पापा भद्रमुपजीवन्ति पज्राः ।
न दूढ्ये३ अनु ददासि वामं बृहस्पते चयस इत्पियारुम् ॥[1]

अगस्त्यस्येदमार्षम् । ये त्वा हे देव उस्रिकमुत्स्राविणं[2] भोगानां मन्यमानाः । ऋजुरयं वराको न मुधैव[3] भागान्[4] ददातीत्येवं मन्यमाना इत्यर्थः ।

अथवा उस्रिकमिति । उस्रियाशब्दो गोनाम छान्दसोऽयं यकारस्य ककारादेशः । गौणश्चायमत्र गौर्वाहीके[5] इति यथा । उस्रिकं गां गोसदृशं मूर्खं मन्यमाना इत्यर्थः । पापा भद्रमुपजीवन्त्येव केवलं न यजते[6] न स्तुतिं वदति[7] च । पज्राः[8] प्रार्जितधना ईश्वराः सन्त इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तेभ्यो न दूढ्ये व्यत्ययेनात्रैकवचनं पापबुद्धिभ्यः । अनुददासि आनुपूर्व्येण ददासि त्वम् । वामं प्रशस्यं धनम् । किं तर्हि ? बृहस्पते चयसे चातयसि त्वं तान्[9] । इदिति पदपूरणः । पियारुं[10] पीयतिर्हिंसतिकर्मा । अत्रापि व्यत्ययेनैकवचनम् । पियारुं देवानां हिंसकान् हिंस्यान् वा । पीयतिर्हिंसार्थः[11] 'पीयति त्वो अनु त्वो गृणाति'[12] इति यथा ।

वियुते । किमर्थमिदं यावता अवगतं चैतदेकार्थं च ? उच्यते । यौतेर्विरुद्धानेकार्थविषयत्वप्रदर्शनार्थः । अयं हि युमिश्रणे पठ्यते[13] । प्रयुज्यते च 'जनयद्वै त्वा संयौमि'[14] इति । ततोऽर्थान्तरेऽपि वृत्तिं[15] दर्शयितुमस्य पाठः । मिश्रणविपरीतपृथग्भावेऽपि[16] दर्शनात्[17] । नचायं वेरुपसर्गस्यार्थः । शुद्धस्यापि प्रयोगे प्रतीतिदर्शनात् । युतं धनमस्य[18] भोजनमस्य[19] युतोऽयमिति पृथग्भूत इति गम्यते । अतोऽत्र विशब्दः क्रियाविशेषणे वैविध्यादौ द्रष्टव्यः । द्यावापृथिव्यावभिधेये । वियवनादिति[20] निर्वचनम् । विमिश्रणं सह सतोः पृथक्पृथग्भवनम् । तथाहि मैत्रावरुणीनां श्रुतिः-

---

१-[ ऋ० १।१९०।५ ] 'ये त्वा देवः' इत्येव प्रतीकम् B. C.
२-०मुत्क्षावि० C.
३-मुधैव B. ०कोन्दुधे C.
४-भागन् C.
५-वाहिक C.
६-अत्र 'यजन्ते' इति पाठो युक्तः ।
७-वदति च C. अत्र 'वदन्ति' इति पाठो युक्तः ।
८-वज्राः C.
९-तार् C.
१०-पयारुं C.
११-पायति B. पीयति ,C
१२-[ ऋ० १।१४७।२ ]
१३-[ धा० २।२३ ] अत्र 'पठ्यते' इत्यस्मात्पूर्वं B. पुस्तके 'वैविध्यादौ द्रष्टव्यः। द्यावापृथिव्यावभिधेये' इत्येतावान् पाठोऽधिकः ।
१४-[ अनुपलभ्यमूलमिदं वचनम् ]
१५-०रे प्रवृत्ति B. वृत्तिदर्श० C.
१६-मिश्रणं B.
१७-०नैत्रिद० C.
१८-धतमस्य B. C.
१९-भोजमस्य B, C.
२०-पियवनात् C.

'इमे वै सहास्तां ते दम्यामाशं व्यैताम्'[1] इति । बह्वृचानाम्-'इमौ वै लोकौ सहास्तां व्यैतानावर्षं न समन्तयदित्'[2] इति ।

निगमः[3]—

समान्या वियुते दूरे अन्ते ध्रुवे पदे तस्थतुर्जागरूके[4] ।
उत स्वसारा युवती भवन्ती आदु ब्रुवाते मिथुनानि नाम ॥

विश्वामित्रस्य । समान्या[5] आकारो द्विवचनस्थानिकः[6] । परिमाणतः समाने इत्यर्थः । वियुते सह[7] सत्यौ विमिश्रिते पृथग्भूते इत्यर्थः । दूरे अन्ते द्यावापृथिवीनामधेयमेतत् । तयोर्हि[8] तिर्महत्त्वाद् दूरतस्तेन तथोच्यते । ध्रुवे पदे ध्रुवं नित्यं तत्स्थानं[9] शाश्वतं यत् स्थानमन्तरिक्षाख्यं[10] तस्मिन् । तस्थतुस्तिष्ठतः । तथाच 'सर्वमिदमाकाशं प्रोतं चे'[11] इति श्रुतिः । जागरूके जागरणशीले धृतिद्योतनादौ[12] स्वव्यापारे प्रमादवर्जिते इत्यर्थः । उत स्वसारा अपि च स्वसारौ भगिन्यौ । एकस्मात् करणात्मनो[13] जातत्वात् । युवती भवन्ती सर्वदैव परस्परोपकारकरणेन मिश्रीभवन्त्यौ । आदिति[14] पदपूरणः । इवार्थे वा । ब्रुवाते कथयत इव स्तोतृभ्यः । मिथुनानि द्विवचनसंयुक्तानि । नाम बहुवचनस्यात्र लुक् नामानि स्वानि स्वधे पुरन्ध्री इत्यादीनि ।

समानं सम्मानमात्रं[15] भवति समानपरिमाणम् । मात्रा मानात् परिमाणमित्यर्थः । दूरं व्याख्यातम् । द्रुतं भवति दूरयं चेति । अन्तेऽन्ततेः[16] । 'अत सातत्यगमने'[17] अन्तो ह्यादेर्मध्याच्च[18] सततगतो भवति । न कदाचिदादौ मध्ये वास्ति ।

ऋधगित्यनवगतम् । अनेकार्थं चावगतम्[19] । अनेकार्थं दर्शयति पृथग्भावस्येत्यादिना । पृथग्भावोऽनुप्रोच्यते येन तत् पृथग्भावस्यानुप्रवचनम् । वाचकमित्यर्थः । अत्र भाष्यकारेण नियमो नोक्तः । उच्यते ।

---

१–[ मैत्रा० सं० ४।१।७ ] व्यैताम् C.
२–[ अनुपलब्धमूलमिदम् ] तौ व्येतानानर्पण समन्तवदिति C.
३–निगमाः C.
४–[ ऋ० ३।५४।७ ] 'स ( सा C. ) मान्यावियुते' इत्येव प्रतीकम् B. C.
५–सामान्या B. C.
६–'द्विवचनस्थानिकः । परिमा०' इत्येतावान् पाठस्त्रुटितः B.
७–'सह' इति नास्ति B.
८–तयो स्थिति इत्वात् B.
९–नित्यतस्थानं C.
१०–रिक्षाख्य C.
११–[ अनुपलब्धमूलमिदम् ]
१२–धृतद्योत० B. धृतिद्योत० C.
१३–अत्र 'कारणात्मनः' इति पाठः साधीयान् भवेत् ।
१४–आत् उ इति पदपूरण न इवा० C.
१५–समानमात्रं C.
१६–अत्र 'अततेः' इति मूलानुसारी पाठो युक्तः ।
१७–[ धा० १।३८ ]
१८–ह्यादौ मध्ये च B.
१९–चानवगतम् C.

यदिन्द्र दिवि पार्ये यदृधग् यद्वा स्वे सदने यत्र वासि।
अतो नो यज्ञमवसे नियुत्वान् सजोषाः पाहि गिर्वणो मरुद्भिः[1]॥

भरद्वाजस्य। यद् यदि त्वं हे इन्द्र दिवि द्युलोके पार्ये पारयितव्ये दूरवर्तित्वाद् यत्नेन गन्तव्य इत्यर्थः। यदृधक्[2] यदि वा पृथग् द्युलोकाद्[3] यद्वा यदि वा स्वे सदने अन्तरिक्षे यत्र वा क्व[4] चाप्यसि। अत आगत्येति शेषः। नोऽस्माकं[5] स्वभूतं[6] यज्ञमवसे तर्पणायात्मनः। नियुत्वान् नियुतोऽश्वास्तैस्तद्वान्[7]। सजोषाः संप्रीयमाणः[8] पाहि रक्षआदिभ्यो[9] रक्ष। यद्वा 'पा पाने'[10] इत्यस्येदं छान्दसत्वात्[11] पिबादेशाभावे रूपम्। पिब[12] सोमम्। हे गिर्वणो[13] गीर्भिर्वननीय[14] आभिः सहेत्यर्थः।

अनेकार्थतां दर्शयितुमाह-अथापीत्यादि[15]।

यदद्य त्वा प्रयति यज्ञे अस्मिन्नग्ने होतारमवृणीमहीह।
ऋधगया ऋधगुताशमिष्ठाः प्रजानन् यज्ञमुप याहि विद्वान्[16]॥

अध्वर्यवे मन्त्रः। यद् यस्माद् अद्य त्वा प्रयति प्रगच्छति प्रोत्सर्पतीत्यर्थः, यज्ञे अस्मिन् हे अग्ने होतारमवृणीमहि वृतवन्तो वयम्। इह वेद्याम्। ऋधगया यस्माच्च[17] होतृत्वात् कारणाद् अन्येषामपि यष्टॄणामृधक् अवृद्धमपि यागमृद्धं कुर्वन् अयान अयाक्षीद् देवान्। ऋधक् उतशब्द एवार्थे अवृद्धां च स्तुतिमृद्धां[18] मे कुर्वन्। अशमिष्ठाः शममान इत्यर्चतिकर्मसु[19] पाठात् शमिरत्र स्तुत्यर्थः[20]। अस्तौषीर्देवान्। यस्मादिति वचनात् तस्मादित्यध्याहार्यम्। तस्मात् प्रयोजनात् स्वमधिकारमुपयाहि यज्ञमस्मदीयम्। विद्वान् जानंश्चास्मद्भक्तताम्।

---

१–[ऋ० ६।४०।५] 'यदिन्द्र दिवि' इत्येव प्रतीकम् B

२–यदृधक् C.

३–द्युलोकात् C.

४–अत्र 'व' इति त्रुटितं 'क्' इत्येव C.

५–दन: अ० C.

६–अत्र B. पुस्तके 'ये भूतं' C. पुस्तके च 'यभूतं' इति पाठो वर्तते। 'स्वभूतं' इति पाठस्त्वस्माभिरेवार्थानुसारी कल्पितः।

७–'नियुतोऽश्वास्तैस्तद्वान्' इत्यस्य स्थाने B. पुस्तके 'नियुतोऽश्वाश्वयन्धयस्ताभिस्तवान्' C. पुस्तके च 'नियुतोश्वाश्वा वन्धयस्ताभिस्तवान्' इति वर्तते। अयं तूपरिष्टान्निर्दिष्टः पाठोऽस्माभिरेव यथार्थं मत्वाऽत्र निहितः।

८–०माणा: B. संप्रीयमाण: C.

९–आदिभ्यो C.

१०–[ धा० ११५५० ]

११–'छान्द' इति त्रुटितम् B, C. तत्वात् B. सत्वात् C.

१२–पिबा B. C.

१३–गीर्वण: C.

१४–गीर्वननीय B.

१५–अपानीत्यादि C.

१६–[तै० सं० १।४।४४।२॥ मैत्रा० सं० १।३।३८] 'यदद्य त्वा' इत्येव प्रतीकम् B. C.

१७–'च' इति नास्ति B.

१८–'ऋद्धां मे' इति 'ऋद्धामेव' इति वा पाठोऽत्र कदाचित् स्यात्।

१९–[निघ० ३।१४] तत्र 'शशमानः' इति पाठः।

२०–आदर्शपुस्तकेषु 'स्तुत्य इत्यर्थः' इति पाठो वर्तते। तत्र 'इत' इत्यधिकमेव।

अस्या इत्युदात्तस्योदाहरणम् ।

अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व श्रवस्यतामजाश्व ।
ओ षु त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः
नहि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे[1] ॥

परुच्छेपस्यार्षम् । अस्या ऊ[2] षु पदपूरणौ । नोऽस्माकं लिप्सितकाया इत्यर्थः । सातये षष्ठ्यर्थे एषा चतुर्थी सातेः 'षणु दाने[3]' दानस्य । उपभुवः समीपे भव । तेन चात्र[4] तदाभिमुख्यं लक्ष्यते यदेतल्लिप्सितमस्माकं दानमेतस्या अभिमुखो भव चिकीर्षुस्तदित्यर्थः । अहेळमानः क्रुध्यतिकर्माणं याञ्चायाः[5] क्रोधहेतुत्वेन लोके दृष्टत्वादेवमुच्यते ऽहेळमान इति । ररिवान्[6] छान्दसत्वाद् वर्तमाने लटि क्वसावेतद् रूपम् । नेदद्दिरित्यर्थः[7] । अजाश्व[8] अजजातीया[9] अजाकारा वा अश्वा यस्यासावजाश्वस्तस्य सम्बोधनं हे अजाश्व । श्रवस्यतां श्रवो धनं तदिच्छतां धनकामानामस्माकं हे अजाश्व पूर्वेण पौनरुक्त्यप्रसङ्गात् 'अज गतिक्षेपणयोः[10]' इत्येवं व्युत्पाद्यते । अजानां च गमनस्वभावकाश्वा[11] वा[12] यस्येत्यर्थः । कस्मादेवमुच्यते । ओ षु त्वा ववृतीमहि[13] यस्मात् त्वा त्वाम् आ ऊ ओ[14] इति पदपूरणाः सुष्ठु आवर्तयामो वयम् । केन ? स्तोमेभिः स्तोमैस्तीव्रैस्तुतिभिः[15] । दस्मे[16] उपक्षयितव्यस्तमसां* तस्कराणां वा । साधुभिः शोभनैर्मधुरस्वरसौष्ठवादियुक्तैः[17] । यस्माच्च नहि त्वा नहीत्ययमेको[18] निपातो नशब्दस्यार्थे न त्वाम् हे पूषन् अतिमन्ये अतीत्ययमवेत्यस्य[19] स्थाने अवमन्ये कदाचिदप्यहम् । हे अतिघृणे 'घृ क्षरणदीप्त्योः[20]' इत्यस्य घृणिर्दीप्तिरागतदीप्तिके न ते न च

१-[ ऋ० १।१३८।४ ] 'अस्या ऊषुण' इत्येव प्रतीकम् B. C.

२-उमू C.

३-[ धा० ८।२ ]

४-'तेन वा' इत्येव 'त्र तदाभिमुख्य' इत्येतावान् पाठस्त्रुटितः B.

५-याञ्चायाः C.

६-'ररिवान् छान्दसत्वात् वर्तमाने' इत्येतावान् पाठस्त्रुटितः B. अत्र 'वर्तमाने' इत्यतः परं 'लटि' इत्यस्य स्थाने 'लिटि' इति पाठो युक्तः स्यात् ।

७-नेननद्दर्दिरित्यर्थः C.

८-अजाश्व C.

९-'अजा' इत्येव 'अ...तीया' इति पूर्वोत्तरभागात्मकः पाठस्त्रुटितः B.

१०-[ धा० १।२३० ]

११-गमनस्व० C. अयमपि पाठः B.

१२-व B. C.

१३-प्रवृतीमहि C.

१४-आ उद B. अत्र 'आ उ सु' इति पाठो युक्तो भवेत् ।

१५-स्तोस्तीव्रै ददिभिः B. स्तोमैस्तीव्रन्ददिभिः C. एतौ पाठावनर्थकत्वादस्माभिरुपेक्षितौ ।

१६-भे दस्म C. अत्र कदाचित् 'हे दस्म' इति पाठो भवेत् ।

१७-सोष्ठवादि B. सोष्ठवा० C.

१८-०मेतन्निपातः B.

१९-०यमेवेत्य० C.

२०-[ धा० ३।१४ ]

* 'उपक्षेत०' 'उपक्षपित०' इति वा युक्तम् ।

तव सख्यं स्तुत्यस्तोतृलक्षणमपन्हुवे अपलपामि अपनयामीत्यर्थः। यथैव पुरा एवमिदानीमपि स्तौम्येवेत्यर्थः।

अत्र भाष्ये केचित् 'अस्या ऊ षु ण' इति चतुर्थ्याः षष्ठ्याश्च संप्रसज्येत अपि उपभुव[1] इत्येतेन[2] न सम्बध्यते। सातय इत्येतेन व्यवधानात्। नहि अनन्तरसम्बन्धकल्पनायां सत्यां व्यवहितसम्बन्धकल्पना न्याय्या। अतः सातय इत्येतेनैव सम्बध्यते। [3]अस्या इति षष्ठ्यन्तं न चतुर्थ्यन्तम्। तथाच पदकारः षष्ठ्यन्ततयैवावधृतवान्* अस्या इति [4]स्थितिः। सातय इत्येतत्त्र्यङ्गत्वाद् व्यत्ययेन षष्ठ्यर्थे कल्पितचतुर्थीकम्। अस्या इत्यस्य समानाधिकरणं विशेषणं चैतत्। सामानाधिकरण्येन बलेन[5] अस्या इत्यस्य चतुर्थ्यन्तकल्पना अयुक्ता[6]। तस्मात्[7] 'अस्या नः सातये' इति[8] पाठः। 'अस्यै नः सातये' इत्यपपाठः। ररिवानिति 'रा दाने' इत्ययं 'लिटि धातोः' इत्येवं कृताभ्यासः। अजाश्वेति पूर्व[9]माह अजा अस्या अश्वा[10] इत्यपरम्। केचित् अस्या अतना इति पचतिना[11] सोकं[12] पठन्ति। तदसत्। अत्यै[13]शब्दस्येहाभावात्। ईमन्तास इत्यत्र च कृतत्वात्[14]। कस्तर्हि पाठः? अजा अस्याश्वा अजीता[15] इति। अस्येति बहुव्रीह्यर्थस्यान्यपदार्थस्य निर्देशः। अजीता इत्यजशब्दस्य निर्वचनम्। कुत एतदीदृशः पाठ इति। अजाश्वेति बहुव्रीहिर्नान्यपदार्थेन निर्दिष्टस्य काङ्क्षितत्वादन्यत्र चाकृतत्वादजशब्देन निर्वचनस्याकाङ्क्षितत्वात्[16]।

अथानुदात्तमुदाह्रियते—

पुनः पत्नीमग्निरदादायुषा सह वर्चसा।
दीर्घायुरस्या यः पतिर्जीवाति शरदः शतम्[17]॥

---

१–उप हुव C.
२–'इत्येतेन' इत्यतः परमादर्शपुस्तकेषु 'समीपे भु (हु C.) वः कस्य.समीपे भुव इत्येते' इति पाठोऽधिक एव भाति।
३–अत्र भाष्ये केचिदित्यारभ्य सम्बध्यते इत्यन्तः शङ्काग्रन्थः। अस्या इति षष्ठ्यन्तमित्यादिः परिहारग्रन्थः।
४–स्थितिः C. ५–'बलेन' इति द्विर्लिखितम् C.
६–युक्ता C.
७–[ पा० २।४७ ]   ८–[ पा० ६।१।८ ]
९–पूर्वममाह C.   १०–अस्याश्वा B.
११–पचति न C. अत्र 'अजतिना' इति पाठः कदाचिद्युक्तो भवेत्।
१२–आदर्शपुस्तकेषु 'कं' इत्येव पाठः। 'सा' इति त्रुटितं स्यात्।
१३–अभ्यरा० B.   १४–कृतत्वात् C.
१५–अत्र 'अजना' इति पाठो युक्तो भवेत्।
१६–'कस्तर्हि पाठः' इत्यत आरभ्य 'निर्वचनस्याकाङ्क्षितत्वात्' इत्यन्तः पाठो न दृश्यते C.
१७–[ ऋ० १०।८५।३९ ] 'पुनः पत्नीम्' इत्येव प्रतीकम् B. C.
* '०न्तमेवा०' इति स्यात्।

आर्यायाः। पित्रा सकृद्दत्तां[1] पुनरेनां पत्नीं विवाहकाले अभिददात्। आयुषा सह वर्चसा। अन्नतामेदम्। अन्नेन सहिताम्। किञ्चित्[2] दीर्घायुरस्या यः पतिर्यः[3] पतिरस्याः स दीर्घायुः। जीवाति लोडर्थे पञ्चमः, जीवतु। कियन्तं[4] कालम्? शरदः शतम्। दुर्जीवत्वाच्छरदि तत्स[5]म्बन्धाच्छेनं[6] प्रार्थ्यते वर्षाणाम्।

शरत् भूता[7] ह्यस्यां मोह्यायोषधयो भवन्ति। आश्रिता वा प्रायेण तेषां तत्र ग्रहणस्मरणाद्[8] वैद्यके[9]। शीर्णा आप इति वा। वर्षासु सर्वतोऽभिप्लुता या आपो[10] बह्वयस्ताः शीर्णा विशीर्णा अल्पीभूता अस्यामिति। अस्येति[11] अस्या इत्येतेन व्याख्यातम्[12]। उदाहरणमत्र व्याख्यातं तदुच्यते।

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य
पञ्चविंशः खण्डः।[13] ]

---

१–सा तु दत्ता B.
२–अत्र 'किञ्च' इति पाठो युक्तो भवेत्।
३–'यः पतिरस्याः' इति नास्ति B.
४–कियन्त C.
५–॰दि तत्सम्बन्ध॰ C. ॰दि वतत्स॰ B.
६–॰न्धाच्छतन्त्रा॰ B.
७–भिता ह्यस्या मोह्यन्योष॰ C.
८–॰ण प्रस्मर॰ C.
९–वैद्यके B. C.
१०–अपो B.
११–'अस्येति' इत्यादर्शपुस्तकेषु नास्ति। आवश्यकत्वादस्माभिरेवात्र लिखितम्।
१२–व्याख्यातः B.
१३-आदर्शपुस्तकेष्वत्र खण्डादिसमाप्तिनिर्देशो न दृश्यते।

# [ अथ षड्विंशः[1] खण्डः । ]

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः ।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रम्[2] ॥

दीर्घतमस आपादपरिसमाप्तेः। द्वितीये पादे तच्छब्दश्रुतेर्योगार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । योऽयं दिवि दीप्यते तस्यास्य वामस्य वननीयस्य । पलितस्य पालयितुः । होतुराह्वानार्हस्येत्यर्थः[3] । भ्राता मध्यमो वायुः । अस्ति भवति । एकस्मात्[4] कारणादुत्पन्नत्वात् । क्रियाशब्दो वा भ्रातृशब्दः हरतेर्बिभर्तेर्वृद्ध्यर्थः । रश्मिभि[5]राहृतानां भौमानां हर्ता भर्तव्यो वा रसैः । अश्नोऽशनो व्यापी[6] । तृतीयो भ्राता घृतपृष्ठो घृतमाहुतिलक्षणं पृष्ठे यस्य घृतेन[7] वा यः स्पृष्टः स घृतपृष्ठः पार्थिवोऽग्निः सोऽस्येति । अत्र एषां च मध्ये अपश्यं[8] पश्याम्यहम् । विश्पतिं[9] विश्वस्य पातारं भौमस्य रसस्य पालयितारं वा रश्मिभी रक्षितारमित्यर्थः । तथा त्वन्यत्र सप्तपुत्रं सप्तसंख्याका[10] रश्मयः पुत्राः पुत्रस्थानीयो[11] अस्य सप्तमो वा[12] योऽदितेः पुत्र इति इतिहासपक्षे[13] । 'अदितिः पुत्रकामा[14]' इति प्रस्तुतस्यैव[15] मित्रं च वरुण इत्यादिषु सप्तम इति । सर्पणा[16] वा सततगन्तारो रश्मयः पुत्रा रसादान[17]प्रकाशनेना[18]त् पुत्रवहनेन[19] पुरुणस्नातारो यस्य स[20] सप्तपुत्र आदित्यस्तम्[21] । एवमत्र अस्येत्येतद् 'अस्य वामस्य' इत्युदात्तत्वं[22] प्रथमादेशे वर्ण्यते । 'तृतीयो भ्राता घृतपृष्ठो अस्य' इत्येतदनुदात्तमन्वादेशे । तेनैतयोरप्युदात्तानुदात्तयोरेकमेवोदाहरणम् ।

भ्राता भरतेर्हरतिकर्मणः । हरते भागं पित्र्यस्य हि धनस्य । मध्यमोऽपि वृद्ध्यर्थं रश्मिभिराहृतानां भौमानां भागान्[23] हरति[24] । भर्तव्यो भवतीति वा सर्वं वा पूर्वजस्येतरान्[25] विभु-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ ऋ० १।१६४।१ ] 'अस्य वामस्य' इत्येव प्रतीकम् B. C.
३–०नार्भयस्ये० C.
४–आदर्शपुस्तकेषु 'एतस्मात्' इति पाठः।
५–'भि' इति त्रुटितम् C. ६–अशनव्यापि C.
७–'लेनिवायस्पृष्टः' इत्यवादर्शपुस्तकेषु पाठः। अस्माभिस्त्वयं संस्कृत्य लिखितः।
८–अवश्यं C.
९–विशर्ति C.
१०–'सप्त' इति द्विर्लिखितम् B. C.
११–०स्थानीयस्य C. १२–वायुः दितेः B.
१३–'इति' इत्येकमेव B. C.
१४–[ अनुपलब्धमूलमिदम् ]
१५–०तस्यैव C. १६–सर्पणां B. सर्पाणा C.
१७–रसान्दान C. १८–'त्' इति त्रुटितम् C.
१९–आदर्शपुस्तकेषु 'पुत्रवहण दुरुणस्रा' इति पाठः।
२०–'स' इति नास्त्यादर्शपुस्तकेषु।
२१–'म्' इति त्रुटितम् B.
२२–'इत्युदात्तं' इति पाठो युक्तो भवेत्।
२३–भागान् C. २४–भाति B.
२५–०तरान् C.

यात् पितृवदिति । अविभागपक्षे भर्तव्यो[1] भ्राता पित्र्येण[2] स्वयं वार्जितेन धनेन । मध्यमो वृष्ट्यर्थं[3] रसैर्भर्तव्यः । तत्रापत्यं सर्वस्य पातारं पालयितारं वेति[4] धात्वन्यत्वम् । अर्थस्त्वेक एव । व्याख्याय चार्थं[5] यस्य पदस्यायमर्थस्तद्दर्शयति-विद्पतिमिति[6] । सप्त सृता[7] संख्या गता षड्भ्यः सकाशात् । सप्तपुत्रमित्यस्य[8] सप्तसंख्याका रश्मयः पुत्रा यस्येति यदुक्तं निर्वचनं तस्यापवादेनार्थमाह-सैतादित्यरश्मय[9] इति वदन्ति ।

[ इति नवमस्या-( चतुर्थस्या- ) ध्यायस्य
षड्विंशः खण्डः । ][10]

---

१–दत्तव्यो C.
२–पित्र्येणान्वयं C.
३–वृष्ट्यर्थः रश्मे ( रसै B. ) भर्त॰ B.C.
४–वति B.
५–'च' इति नास्ति C.
६–'द' इति त्रुटितम् C.
७–सता C.
८–'सप्तपुत्रमित्यस्य' इति त्रुटितम् B.
९–सप्तदित्य C.
१०–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ सप्तविंशः खण्डः । ][1]

सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः[2] ॥

सप्त युञ्जन्ति योजयन्त्यात्मना उदितमात्रमेव रथम् । रथो रंहतेर्गतिकर्मणः । रंहितारं गन्तारमादित्यम् । एकचक्रम् एकमेव चरितारं दीपितारमित्यर्थः । चरितारं गन्तारमित्यर्थः । उदिते[3] ह्यादित्ये स एवैकश्चरति[4] वा नान्यानि ज्योतींषि तद्रश्मिभिराच्छादितत्वाद्दृश्यमानत्वात् । स च तैर्युक्त एकोऽश्वोऽशनो[5] व्यापी वहति[6] गच्छति सप्तनामा[7] सप्त[8] रश्मयो यस्मै रसानभिसंनामयन्ति[9] । सप्तर्षयो वा यं प्रति स्तावकत्वेन नमन्ति स सप्तनामा । उत्तरोऽर्धर्चः संवत्सरस्तुतिः । त्रिनाभि नाभित्रयं[10] ग्रीष्मो वर्षा हेमन्त इत्येते[11] ऋतवो नाभिस्थानं यस्य[12] तत् त्रिनाभि । चक्रं संवत्सराख्यम् । परिवर्तमान[13]सामान्यात् संवत्सरस्य चक्रव्यपदेशः[14] । अजरं जरावर्जितम् । अनर्वमप्रतिहतम् । अन्यत्राश्रितत्वेन[15] पराश्रयमित्यर्थः । यत्र यस्मिन् इमा विश्वा इमानि सर्वाणि भूतजातानि । अधितस्थु रधिशब्दः 'अधिपरी अनर्थकौ'[16] इत्येवं कर्मप्रवचनीयसंज्ञकः पदपूरणः । उत्पत्तिप्रलयस्थितिभिरपि स्थानि यदनपेक्ष्य[17] न कस्यचिदुत्पत्तिः स्थितिः प्रलयो वास्तीत्यर्थः ।

सप्त युञ्जन्ति रथमेकचक्रमेकचारिणमिति । एकचक्रमित्यस्यार्थस्य वचनप्रदर्शनार्थं चात्र चरणस्योपादानम् । परस्ताच्चक्रशब्दनिर्वचनेन चक्रे[18] चङ्क्रमणस्याप्युपादानात् एकचारिणमेकचक्रात्मकमित्यर्थः[19] । चक्रं च चकतेर्वा चरतेर्वा[20] क्रामतेर्वेति धात्वन्यत्वम् । अर्थस्तु गेर्श्चरतेः[21] स एव क्रमेरपि । इदमपीतरं[*] नाम संज्ञा । एतस्मादेवाभिसंनामात् । नतं हि रश्मिभ्यामवति ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १।१६४।२ ] 'सप्त युञ्जन्ति' इत्येव प्रतीकम् B. C.
३–उदित्येतच्चादित्ये C.
४–'चरति' इति द्विर्लिखितम् B. C.
५–अशने व्यापि C. 'नो' त्रुटितम् B.
६–भवति B. C. ७–सप्तानामा C.
८–'स' इति त्रुटितम् C. ९–संनमयन्ति C.
१०–नाभित्रयो C. ११–०न्त इति इत्येतो C.
१२–स्थान या यस्य त त्रि० C.
१३–परिवर्जमान० B. C. १४–व्यपदेशः B.
१५–०त्राश्रिश्वेन B. ०श्रिश्रित्वेन C.
१६–[ पा० १।४।९३ ]
१७–अत्र कदाचित् 'स्थानिनमनपेक्ष्य' इति पाठः स्यात् । १८–चक्रन क्रमणयोरप्युपादात् C.
१९–एकचक्रार्थीणं B. एकचक्रामीणं C. मूलस्थितस्तु पाठोऽस्माभिरेव निर्दिष्टः ।
२०–चरतेरित्यादिधातिरन्यत्वमित्यन्तः पाठस्त्रुटितः B.
२१–०स्तुत गश्च B.
* '०पीतरनाम' ( इतरत्+नाम ) इत्युचितम् ।

संवत्सरप्रधान उत्तरोऽर्धर्चः । संवत्सरस्तुतिरित्यर्थः । संवत्सरः संवसन्तेऽस्मिन् भूतानि संवासो मैथुनं तद् भूतानि संवत्सरे[1] कुर्वन्ति तान्यत्र संवत्सरादन्यस्य कालस्याभावात् । ग्रीष्मो गृह्यन्तेऽस्मिन्* रसा आदित्येन । वर्षा वर्षत्यासु पर्जन्यः । हेमन्तो हिमवान् मत्वर्थे तप्रत्ययः पर्वतो मरुत्त इति यथा ।

हिमं पुनर्हन्तेर्वा । हन्ति हि सद्रोपे[2]धिवनस्पतीन् । हिनोतेर्वा वृद्धयर्थस्य वर्धते हि तत् स्वस्मिन् काले यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते[3] । अभिगत्य सम उत्परयादिभि-स्त्रिभिरभिसन्तिष्ठन्तीत्यर्थः । कथं पुनर्ज्ञायते[4] संवत्सरप्रधान उत्तरोऽर्धर्च इति, यावता[5] विनाग्रीष्मादिरूपकल्पनयाऽन्यस्यापि कस्यचित् संभवत्येवेयं स्तुतिः ? उच्यते[6] । संवत्सरस्तुतिप्रायस्त्वाद[7]स्यवामीयसूक्ते तं संवत्सरं सर्वमात्राभिः सर्वावयवैः स्तौति[8] मन्त्रदृग् दीर्घतमाः—

पञ्चारे चक्रे परिवर्तमाने तस्मिन्ना तस्थुर्भुवनानि विश्वा ।
तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः[9] ॥

इत्यत्र तावत् पञ्चर्तुतया । पञ्चारे चक्रे-ऋतवः पञ्च हेमन्तशिशिरौ तुल्यप्रभावत्वात् समासेनैकः । इतरे चत्वारस्ते अरभूता यस्य तत्[10] पञ्चारस्तस्मिन् चक्रे संवत्सराख्ये । परिवर्तमाने तस्मिन् प्रकृतप्रतिनिर्देशोऽयं पूर्वस्यामृचि 'अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षडर आहुरर्पितम्' इति यत् प्रकृतं तस्मिन्नातस्थुरास्थितानि आरूढानीत्यर्थः । भुवनानि भूतजातानि । विश्वा सर्वाणि । तस्य नाक्षो[11]ऽक्षभूत आदित्यः । तप्यते[12] भूरिभारो बहुभारेण सर्वभूतैर्बहुभारोऽपि यत्सनादेव पुराण एव सन् तप्यते[13] नापि शीर्यते । सनाभिः सह नाभ्या । नाभिस्त्रय ऋतवो ग्रीष्मो वर्षा[14] हेमन्त इत्येते । आदित्यमण्डलं वा । 'पञ्चर्तवः संवत्सरस्य[15]' इति ब्राह्मणम् । पञ्चर्तुतयैव स्तौति । स च 'हेमन्तशिशि-

१-'ता (ति) वर्ता क्रामतेर्वा इति धात्वन्यत्वम्' इत्यारभ्य 'संवत्सरे कुर्वन्ति' इत्यन्तः पाठो द्विर्लिखितः C.

* 'ग्रस्यन्तेऽस्मिन् रसाः' इति मूले ।

२-सदौषधि C.

३-'समवप्रविभ्यः स्थः' [८।३।२२] इति पाणिनीयानुशासनानुरोधेनात्र कुतो नात्मनेपदमिति विचारणीयम् । ४-जायते C.

५-यावन्ता B. C. यावन्त्या B.

६-उच्यन्ते B. C.

७-'प्रायस्त्वा ( यत्वा B. ) दमानि मूक्ते' इत्येवमादर्शपुस्तकेषु पाठः । अस्माभिस्तु तथा परिशोध्य लिखितः ।

८-॰ति कि मन्त्र॰ B.

९-[ ऋ॰ १।१६४।१३ ] 'पञ्चारे चक्रे परिवर्तमाने' इत्येव प्रतीकम् B. C.

१०-अत्र 'सः' इति पाठो युक्तः ।

११-न अक्षर अक्ष C. १२-तेप्यते C.

१३-तप्यते C. १४-ग्रष्म वर्ष B. ग्रीष्मा वर्षे C.

१५-[ ऐत॰ ब्रा॰ १।१ ]

रयोः[1] समासेन'। समासः[2] संक्षेपः। तुल्यस्वभावत्वादेकीकरणम्।

'षडर आहुरर्पितम्' इति षड्ऋतुतया।

पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम्।
अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितम्[3] ॥

पञ्चर्तवः पादा यस्य स पञ्चपादः[4]तं पितरं पातारं वा सर्वस्य। द्वादशाकृतिं द्वादश[5] मासा आकृतिराकारो यस्य स द्वादशाकृतिस्तम्। दिवो[6] द्युलोकस्य। परे अपरे[7] अर्धे तात्स्थ्यादत्र ताच्छब्द्यं मञ्चाः[8] क्रोशन्तीति यथा। परस्मिन्नर्धे यः स्थित आदित्यस्तत्रेत्यर्थः। पुरीषिणं वृष्ट्युदकेन[9] तद्वन्तं संवत्सरमाहुर[10]र्पितमित्येतदनुषङ्गः[11] स्याद् येनादित्यमाहुरर्पितं[12] केचित्[13]।

अथेमे अन्ये उपरे उपरि स्थितमिति शेषः। विचक्षणं विविधदर्शनकरमादित्यम्[14]। सप्तचक्रे चक्रेणा[15]चरणात् क्रमणात् चक्रा रश्मयस्ते सप्त आदित्यद्वारेण सम्बन्धिनो यस्य सः[16] सप्तचक्रस्तस्मिन्। षडरे षड्भिररभूतैर्युक्ते तस्मिन् संवत्सरचक्रे आहुरर्पितम्। यदर्पितं[17] तदधीनं तद् भवति। अतोऽत्रार्पितत्वेन अधीनत्वं लक्ष्यते[18] अधीनमाहुः। केचित्संवत्सरमादित्यस्या[19]यत्तमाहुः। अन्ये आदित्यं संवत्सरस्य। कथं पुनः संवत्सर आदित्यायत्तः[20], आदित्यो वा संवत्सरस्य? उच्यते[21]। संवत्सरस्तावदहोरात्रनिर्वर्त्यः[22]। तेन स तस्यायत्तः। आदित्यस्यापि संवत्सरावयव[23]भूतैर्ऋतुभिस्तावदस्य[24] तीव्रत्वमन्दत्वे क्रियेते। गतेश्च

१–'योः' इति त्रुटितम् C.
२–'सः' इति त्रुटितम् C.
३–[ ऋ० १।१६४।१२ ] 'पञ्चपादं' इत्येव प्रतीकम् B. C.
४–पादं तं B. C.
५–०तिं वा दश B. ०ति वा दश C.
६–द्युलोकस्य C.
७–चपरे B. C.
८–अश्वाः C. अयमपि पाठः B.
९–०दकेण C.
१०–'माहुर' इति त्रुटितम् B.
११–०षंग न्यायेना० C.
१२–०रन्वितं C.
१३–केनचित् B.
१४–०मादित्यः B.
१५–चक्रना० C.
१६–'स' इति नास्त्यादर्शपुस्तकेषु।
१७–'द' इति नास्त्यादर्शपुस्तकेषु।
१८–वक्ष्यते B.
१९–०दित्यमस्या० B. C. अत्र मकारोऽधिक एवेत्यस्माभिरपसारितः।
२०–आदित्यो यत्तः B. 'आदित्यस्यायत्तः' इति पाठः साधीयान् भवेत्।
२१–'उच्यते' इति न दृश्यते B.
२२–निवर्त्यः B.
२३–०त्सरस्यावय० C.
२४–तावत्य B. तावस्य C. दकारस्त्रुटितोऽस्माभिरेवात्र निवेशितः।

कालवैषम्यं[1] दक्षिणोत्तरादिदिग्गमनभेदश्च[2]। अतः सोऽपि संवत्सरायत्तः।

अराः प्रधृता नाभौ। प्रत्यृताः[3] प्रतिगताः प्रोता इत्यर्थः। षट् पुनः षड्ऋतवोऽभिमतार्थस्य[4]। षट् संख्याभिभूयस्त्वादभिभवन्ति।...........................................

[ इति नवमस्या-( चतुर्थस्या-) ध्यायस्य
सप्तविंशः खण्डः।
चतुर्थोऽध्यायश्च समाप्तः[5] ]

———

१–वैषम्यदक्षि॰ B. C.

२–दिजमन B. C.

३–प्रत्यकृता C. 'प्रधृता नाभौ' नास्ति B.

४–षड्संख्यामिति शेषः। इतः परमाध्यायपरिसमाप्तिः समस्तोऽपि पाठस्त्रुटित आदर्शपुस्तकेषु।

५–आदर्शपुस्तकेष्वत्र खण्डादिसमाप्तिनिर्देशो न दृश्यते।

# अथ पञ्चमोऽध्यायः ।

## [ प्रथमः पादः । ][1]

..............................................................................................

..............................................................[2] ।

[ तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् ।
मित्रो यत् पान्ति वरुणो यदर्यमा[3] ॥ ]

..............................................................[4] । तदा 'युष्मभ्यमिति वा' इति वचनात् । मित्रो यत् पान्ति व्यत्ययेनेदं बहुवचनमेकवचनस्य स्थाने । पाति रक्षति । वरुणश्च[5] यद् यच्चार्यमा ।

अन्ध इत्यन्नवगतम् । कथम्, यावता 'अदेर्नुम् धौ च[6]' इत्यसुप्रत्ययेऽस्त्यवगमः ? उच्यते[7] । अनादृत्येमं संस्कारं भाष्यकार आङ्पूर्वस्य ध्यायतेरित्यवगतं मन्यते । अनेकार्थं च अन्ननामैतत् तमोवचनं च वक्ष्यते । अत्र यदन्ननाम[8] तस्याध्यानीयं भवतीत्यवगमः । आभिमुख्येन हि ध्यातव्यं सर्वेणान्नं प्रीतेः शरीरस्थितेश्च तदायत्तत्वात्[9] । निगमः—

अध्वर्यवो भरतेन्द्राय सोममामत्रेभिः सिञ्चता मद्यमन्धः ।
कामी हि वीरः सदमस्य पीतिं जुहोत वृष्णे तदिदेष वष्टि[10] ॥

गृत्समदस्य । हे अध्वर्यवः । भरत हरत हविर्धानादुत्तरवेदिदेशम् । इन्द्राय इन्द्रार्थं सोमम् । हृत्वा आ अमत्रेभिः[11] पात्रैश्चमसाख्यैरासिञ्चत अग्नौ जुहुतेत्यर्थः । मद्यं मदनीयमेतत्[12] ।

---

१–अत्रादर्शपुस्तकेषु पादादिप्रारम्भनिर्देशो न दृश्यते ।

२–अत्राध्यायादावेव भूयान् पाठस्त्रुटितः । सस्निं वाहिष्ठो दूतो वावशान इति चतुर्णां पदानां व्याख्यानसमभमपि त्रुटितम् ।

३–[ ऋ० ८।२५।१३ ] वार्यपदस्यावशिष्टव्याख्यानबोधसौकर्यायैव तत्पदोदाहरणत्वेन मूले निर्दिष्टोऽयं मन्त्रोऽस्माभिरत्रोल्लिखितः । आदर्शपुस्तकेषु खण्डितपाठमध्यगतत्वादस्य निर्देशो नास्ति ।

४–अत्रापि वार्यपदव्याख्यानस्य कश्चन प्राथमिको भागस्त्रुटितः ।

५–आदर्शपुस्तकेषु 'वरुणश्च या यश्चार्यमा' इति पाठो वर्तते ।

६–[ उणा० ४ । २०६ ] आदेर्नान्धौ च B. अदेर्नाद्धौ न C.

७–उच्चयते B.

८–यमदन्नाम B.

९–तत दायत्तवान् B. ततदायत्तद्वात् C.

१०–[ ऋ० २ । १४ । १ ] 'अध्वर्यवो भरत' इत्येव प्रतीकम् B. C.

११–अमत्रं हि B. अमत्रे हिः C.

१२–मद्यमुपनीयते तत् B. मद्यमुदनीयमेतत् C.

अन्धोऽन्नम्[1] । कामी हि यस्मात् कामयते वीर इन्द्रः । सदमस्य पीर्ति[2] सदैवास्य पानम् । जुहोत[3] जुहुत च । वृण्वे वरिष्ठ सवनीयादि हविः । तदिदं इच्छन्द्रोऽत्राप्यंर्थ तदप्येष वृषा वृष्टि[4] कामयत एव ।

अमत्रं पात्रम् । अमा अस्मिन्नदन्तीत्यस्य निर्वचनम् । किं पुनरमा इत्यंतेनोच्यते ? अमा पुनरमत्र भवत्यपरिमाणम्, न हि यत्पात्रे दत्तं तस्य[5] परिमाणमस्ति । ये यदन्ति तेषां पात्र पानात् पीयते हि तेनोदकादि । तमोऽप्यन्ध इत्युच्यते । अत्र निर्वचने नास्मिनं* ध्यानं[6] भवतीति । अविद्यमानं[7] ध्यानमस्मिंस्तदिदमन्धः । किं पुनर्ध्यानम् ? दर्शनम्, तद्धि तमसि न भवति आलोकाभावात् । निगमो भाष्यकारेण न दर्शितः । स दर्शयितव्यः । 'यो विद्वतः सुप्रतीकः सदृङ्ङसि'[8] इति पुरस्ताद्यायम् 'अपि त्विदमन्तिकनामैवाभिप्रेतं[9] स्यात्' इत्यत्र[10] व्याख्यातम्+ । अदर्शनमन्धन्तम इत्यभिभाषन्ते[11] । किमर्थमेतत्[12] ? अन्यत्रापि ध्यायतिर्दर्शने[13] प्रयुज्यत इत्यस्य प्रदर्शनार्थम् । यदा ह्यन्तर्वेश्मनि मेघैर्वा निरुद्धे चन्द्रमसि बहुलेन तमसाऽत्यन्तदर्शनस्याभावः । तदेवं भाषन्ते[14] अन्धन्तम इति । अन्धमविद्यमानं ध्यानमत्यन्तदर्शनरहितमित्यर्थः । अर्यमैपीतरो[15] निद्रयोपहतचक्षुरुत्खाताक्षो वा[16] न पश्यति सोऽन्ध एतस्मादेव दर्शनाभावात् । तस्य प्रसङ्गेन निगम उच्यते—

स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदन्धः ।
कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत्[17] ॥

दीर्घतमसः । स्त्रीत्वपुंस्त्वयोरेकत्रासम्भवात् स्त्रीशब्दोऽत्र क्रियानिमित्तस्त्रातुर्वाचकः पुंशब्दोऽपि पुरुमनसः[18] । स्त्रियः सतीस्तमोपनयना[19]न्नपक्त्यादिना[20] कृत्स्नस्य जगत इत्यर्थः । तान् रश्मीन्[21] । उ इति पदपूरणः । मे मह्यं पुंसः पुरुमनसो बहुमनस आत्मादि-

१–'अन्न' इत्येव B. C.
२–वीर्ति C.
३–मूलमन्त्रे 'जुहोत' इत्येवं पाठः ।
४–आदर्शपुस्तकेषु 'वृष्टि' इति पाठः ।
५–दत्त तेऽस्य B.
६–'किं पुनरमा इत्येनेनोच्यते' इत्यत आरभ्य 'नास्मिन् ध्यानं' इत्यन्तः पाठस्त्रुटितः C.
७–॰मानस्य नास्मिन् B.
८–[ ऋ॰ १।९४।७ ]
९–अतिदमन्त्रक ('क' नास्ति B.) नामै॰ B. C.
१०–[ निरु॰ ३।११ ]
११–इत्यपि भाषन्ते B.
१२–किमर्थः मतत् C.
१३–ध्यायति ददर्शने C.
१४–भायन्ते यत इति B.
१५–॰मवीतरो C. १६–पा C.
१७–[ ऋ॰ १।१६४।१६ ] 'स्त्रियः सतीः' इत्येव प्रतीकम् B. C.
१८–मनन C. १९–तपोपन॰ B.
२०–॰नानप B. C. २१–रश्मिन् C.
* 'नास्मिन्' इत्युचितम् ।
+ 'व्याख्यातः' इत्युचितम् ।

विषयस्य मननस्य स्थानस्य कारणभूतानीत्यर्थः[1]। आहुर्ब्रह्मविदः। कथम्? आदित्यान्तरपुरुषो हि बुद्ध्याधिदैवतं तदवयवभूताश्च[2] रश्मयः। तेनैते बुद्धिमधिष्ठाय ब्रह्मविदः सर्वानात्मादीनर्थान् प्रकाशयन्ति[3]। अत उच्यते बहुनो ज्ञानस्य कारणभूतानाहुरिति। तांश्च पश्यन्[4] पश्यन्ति[5]। अक्षण्वान् अक्षशब्देनात्र ब्रह्मज्ञानमुच्यते क्षितायुकरत्वाद्[6] ब्रह्मज्ञानवान्। न विचेतदन्धो न विजानात्यन्धस्तद्रहितः[7] सन्[8]। अपिच कविर्मेधावी यः पुत्रो बहुनोऽहस्त आत्मज्ञानस्य ज्ञाता परिनिष्ठितविद्यश्चेत्यर्थः[9]। स तान् ईमिति[10] पदपूरणः, आचिकेत जानाति नेतरः। यश्च तान् विजानाद् विजानाति स पितुरपि पिता पितृस्थानीयः पालयिता वा असद् भवति।

असश्चन्तीत्यनवगतम्। उदाहरणे रोदस्यादिसमानाधिकरण्याद् द्यावापृथिवीविशेषणम्। अतोऽर्थान्तरासंभवादक्षरवर्णसामान्याच्च[11] युक्तरूपम् 'असन्यमाने'[12] 'अप्युदस्यन्तौ'[13] इति चेत्यवगमं[*] दर्शयति द्यावापृथिव्यावभिधेये। उदारणम्—

[ इति दशमस्या-(पञ्चमस्या-) ध्यायस्य
प्रथमः खण्डः[14] ]

---

१—अत्र 'ज्ञानस्य कारणभूतानित्यर्थः' इति पाठो युक्तः स्यात्।

२—भूताश्चर० B.

३—आदर्शपुस्तकेषु 'प्रकाशयति' इत्येकवचनान्त एव पाठः।

४—मूलमन्त्रे 'पश्यन्' इति पाठः।

५—पश्यति B.

६—क्षितयुक० B. अयं पाठः सन्दिग्ध एव।

७—तद्रनितः B.

८—अत्र 'सन्' इति पाठो युक्तो भवेत्। तद्रहितो ब्रह्मज्ञानरहितः सन्नित्यर्थः।

९—अत्र 'बहुवचन बहुवचन वाहस आत्मज्ञानस्य ज्ञा निति विद्यश्चेत्यर्थः' इति पाठः C. पुस्तके वर्तते। B. पुस्तके तु 'बहुवचन वाह''''''श्चेत्यर्थः' इति वर्तते। मध्ये कश्चन पाठस्त्रुटितः। अस्माभिस्त्वर्थानुसारी पाठः परिशोध्योपरिष्टान्निर्दिष्टः।

१०—अत्र 'ईमिति पदपूरणः आचिकेत' इत्येतावान् पाठस्त्रुटितः C.

११—अथोऽर्था० C.

१२—'असज्यमाने' इति भाष्यानुसारी पाठो युक्तः। अत्र 'माने' इति त्रुटितम् C.

१३—'अप्युदस्यन्त्यौ' इति भाष्यानुसारी पाठो युक्तः। अयं पाठस्त्रुटितः C.

१४—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

* '०वगमं' इति युक्तम्।

## [ अथ द्वितीयः खण्डः । ][1]

असश्चन्ती भूरिधारे पयस्वती घृतं दुहाने सुकृते शुचिव्रते ।
राजन्ती अस्य भुवनस्य रोदसी अस्मे रेतः सिञ्चतं यन्मनुर्हितम्[2] ॥

भारद्वाजस्य । संश्चतिकर्मा[3] । शुद्धोऽपि चात्र संपूर्वार्थे द्रष्टव्यः । असंगच्छमाने असज्जमाने परस्परेणा[4]संमिश्रीभवन्*त्योः विक्षिपन्त्यावाश्रिताने[5] । भूरिधारे भूरिणो भूतजातस्य ज्योतिषां च धारयित्र्यौ । पयस्वती उदकवत्यौ । घृतं वृष्टिलक्षणमुदकम् । दुहाने क्षरतो वर्षत इत्यर्थः । सुकृते तादर्थ्ये एषा चतुर्थी शोभनयागादिकर्मचारिणो यजमानस्यार्थाय । शुचिव्रते शुद्धकर्माणौ ।

परोऽर्धर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । राजन्ती राजतिरैश्वर्यकर्मा ईशाते[6] । अस्य भुवनस्य भूतजातस्य । रोदसी द्यावापृथिव्यौ । अस्मे अस्मदर्थः[7] । रेत[8] उदकनामैतत् । उदकं सिञ्चतं[9] क्षारयतम् । कीदृशम् ? यन्मनुर्हितं मनुष्येभ्यो हितम् । यत्संपत्करं तदित्यर्थः ।

वनुष्यतीत्यनवगतम्[10] । हन्तिकर्मेत्यर्थावगमं दर्शयति । यतो नायं हन्त्यर्थत्वे तु[11] प्रसिद्धः । अनवगतसंस्कार इत्यनेन[12] शब्दावगमः । अनवगताधिकारे च सति पुनर्वचनमुभयानवगतत्वप्रदर्शना[13]र्थमिति केचित् । वनुयामत[14]रुष्यत्यादीनामन्येषा[15]मपि हन्त्यर्थेऽवगतत्वप्रदर्शनार्थमिति भाष्यकाराभिप्रायः । तथाच वक्ष्यति–तरुष्यति[16]रप्येवंकर्मेति । एतदुक्तं भवति । पुनर्वचनं बुद्धिविघट्टनमात्र[17]मत्र किमपीति । तच्च प्रदर्शितमेव । तत्र वनोतेः कण्ड्वा[18]-

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० ६।७०।२ ] 'असश्चन्ती भूरिधारे' इत्येव प्रतीकम् B. C.
३–अनर्थकमिदम् । अत्र कश्चन पाठस्त्रुटितः स्यादिति भाति ।
४–०णासिमिश्री० B.
५–'न्' इति त्रुटितम् C.
६–आदर्शपुस्तकेषु 'ईशाते' इति पाठः ।
७–अस्मादर्थः C. अत्र 'अस्मदर्थम्' इति पाठो युक्तो भवेत् ।
८–'रेतः' इति त्रुटितम् C.
९–सिञ्चकं क्षा० C. १०–मनुष्यतीत्यवगतम् C.
११–अत्र 'हन्त्यर्थत्वेऽतिप्रसिद्ध.' इति पाठः साधीयान् भवेत् ।
१२–आदर्शपुस्तकेषु 'इत्यन' इत्येव । तत्र 'ने' इति त्रुटितं स्यात् ।
१३–०नार्थः इति C.
१४–त्वेनुयाम रुपेत्या० C. ०म रुपेत्या० B.
१५–०मन्येनापामपि C.
१६–मुद्रितनिरुक्तमूलपुस्तके 'तरुष्यतिरप्येवंकर्मा' इति पाठः ।
१७–अत्र '०मात्रं नात्र किमपीति' इति पाठः कदाचित् स्यात् ।
१८–अत्र 'कण्ड्वादिप्रक्षेपाद् यक् प्रत्ययः' इति पाठः साधीयान् भवेत् ।
* '०भवन्त्यौ' इति युक्तम् ।

द्विप्रक्षेपाद् यत्प्रत्ययः । सत्सन्नियोगेन च वनुणपो द्रष्टव्यः । उदाहरणम्—

यदिन्द्राग्नी जना इमे विह्वयन्ते तना गिरा ।
अस्माकेभिर्नृभिर्वयं सासह्याम पृतन्यतो,
वनुयाम वनुष्यतो नभन्तामन्यके समे [2]

नाभाकस्यार्षम् । यच्छन्दो यदेत्यस्यार्थे यदा हे इन्द्राग्नी जना इमे ओऽस्माकीनाः परे [4] च युयुत्सवो विह्वयन्ते विविधं युद्धार्थं परस्परमाह्वयन्ते । तना गिरा सन्ततया वाचा । अथवा तनेति धननाम निमित्तार्थे चात्र तृतीया द्रष्टव्या । धनेन निमित्तभूतेन, प्रयोजनस्य च निमित्तत्वेन विवक्षा । जित्वा परेषां स्वभूतं धनं विलुम्पयिलुमित्यर्थः । गिरा नामाभिजननादियुक्तया वाचा । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तेन युवयोः प्रसादेन । अस्माकेभिः छान्दसत्वाद् वृद्धयभाव आस्माकैरभियोक्तृपुरुषैः सह वयं सासह्याम अत्यर्थमभिभवेम । कान् ? पृतन्यतो येऽस्माभिः सह संग्रामं कर्तुमिच्छन्ति तान् शत्रूनित्यर्थः । वनुयाम हन्याम च वनुष्यतो प्रतस्तान् । नभन्तां न मा भवन्तु मा भूवन्नित्यर्थः । कुत्सिता अन्ये अन्यके अस्मद्द्विषः । समे समशब्दः सर्वादिः सर्वपर्यायः सर्व एवेत्यर्थः । संग्रामे ह्यभिभवनव्यतिरेकेण वध एव संभवतीति सामर्थ्यात् हन्तिकर्मत्युक्तम् ।

दीर्घप्रयज्युमिति विषयभूमानं दर्शयितुमाख्यातमुदाजहार—

इन्द्रावरुणा युवमध्वराय नो विशे जनाय महि शर्म यच्छतम् ।
दीर्घप्रयज्युमति यो वनुष्यति वयं जयेम पृतनासु दूढ्यः [14] ॥

वसिष्ठस्य । हे इन्द्रावरुणौ युवमध्वराय यज्ञाय नोऽस्माकं विशे मनुष्याय जनाय पुत्रादिकाय जनाय च परिचारकाय महि महत् शर्म सुखं यच्छतं दत्तम् । किञ्च दीर्घप्रयज्युं दीर्घप्रवृत्तयज्ञमग्निहोत्रसमादिकमस्माकम् । अति यो वनुष्यति अतीत्यवधममीत्यस्य स्थाने योऽभिवनुष्यति अभिजिघांसति । यजमानविशेषणं चैतत् । दीर्घप्रततयज्ञं

---

१—अयं सन्दिग्धः पाठः ।
२—[ ऋ० ८।४०।७ ] 'यदिन्द्राग्नी' इत्येव प्रतीकम् B. C.
३—स्माकिनः C. ४—पर ( पि ) B.
५—विधयन्ते C. ६—अथा C.
७—द्रष्टव्या B. ८—सता C.
९—अस्माकैः C. १०—सासह्याम C.
११—अभ्यर्थम० C
१२—प्रलह्यं वयं त्वां न मा B. प्रतस्तान् नभन्तां न मा C.
१३—०मे ह्यभि० C.
१४—[ ऋ० ७।८२।१ ] 'इन्द्रावरुणा युवम्' इत्येव प्रतीकम् B. C.
१५—'मह' इति त्रुटितम् 'त्' इत्यस्य स्थाने 'त्' इत्येव पाठः C.
१६—सुखः C.
१७—'दीर्घप्रयज्युं' इति त्रुटितम् B.
१८—दीर्घ प्रत० B.

नित्यानामग्निहोत्रादीनां कर्मणां कर्तारं यजमानमभिवनुष्यति । वेयं[1] यच्छन्दश्रुतेस्तच्छन्दोऽध्याहार्यः । तं जयेमं[2] पृतनासु संग्रामेषु दूढ्यो जयकर्मा[3] तच्छन्दसामानाधिकरण्योपपत्तेर्विभक्तिविपरिणामः । दूढ्यं दुर्धीकं[4] पापबुद्धिमित्यर्थः ।

निर्वचनप्रसक्तमाह । पापः पाता रक्षिता अपेयानामरक्षितव्यानां त्याज्यानाम् । पिबतेर्वा कृत्यः, अपातव्यानां प्रतिषिद्धानां सुरादीनाम् । अकार्यमात्रोपलक्षणं [5]चैतत् । अकार्याणां कर्तेत्यर्थः । पापत्यमानः, अथवा विपर्यासकृत्याऽर्थं पात्यमानः । अवादेव[6] अधो नरकमेव पतति[7] प्रायश्चित्ताकरणाद् नोर्ध्वमिति पापः । अधोभावविशिष्टार्के[8] पततेः पाप इत्यर्थः । तथाच स्मरणम्—

व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते ।
व्यसन्यधोऽधो व्रजति स येत्यव्यसनं मृदुः[10] ॥

इति । अथवा किंच एतेन अवाङ्[11] नामादिति । पाप्येतेरेव[12] पापो विहिताकरणाद्[13] नोर्ध्वमिति पापो विहिताकरणात् प्रतिषिद्धसेवनाच्च । नित्यमत्यर्थं श्रेयसः पततीति पततेर्यङ्लुगन्तात् पचाद्यचि तलोपः । ङप्रत्ययो[14] वा छान्दसत्वात्[15] । एवं पातेः पिबतेर्वा[16] पापः । अन्ये[17] 'त्वया वयं मघवन्[18]' इत्युदाहरन्ति ।

तरुष्यतिरप्येवंकर्मेति[19] । यत्कर्मा वनुष्यतिर्हन्त्यर्थे । धात्वन्तरमनवगतमिति केचित् । अन्ये तु 'तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्याम्[20]' इति हन्ति विनाशयति व्यपोहतीति हन्त्यर्थे तरतेः प्रयोगदर्शनान्नेदमर्थानवगतम् । किन्तर्हि ? उकारयकारानवगमात् शब्देनावगतमेवैतद्[21] इति वर्णयन्ति । उदाहरणम्—

---

१–'व' इति त्रुटितम् 'यं' इत्येव B.
२–जयाम B.
३–जयकर्म C.
४–दुर्धिकं C.
५–'प' इति त्रुटितम् C.
६–अपा देव C.
७–'पतिः' इत्येवादर्शपुस्तकेषु पाठः ।
८–अथ सन्दिग्धः पाठः ।
९–अत्र 'स यात्यव्यसनं मृतः' इति पाठो युक्तो भवेत् ।
१०–[ अनुपलब्धमूलमिदं वचनम् ]
११–अपापा B.
१२–पाप्येरेव B.
१३–'विहिताकरणात्' इत्याधिकमेवात्र भाति ।
१४–धप्रत्ययो वा B, ङप्रत्ययो वा C.
१५–एन्दस॰ C.
१६–अत्र 'व' इति त्रुटितम् C.
१७–'अन्ये' इत्यस्मात् पूर्वे B. पुस्तके 'दधतेः' C. पुस्तके च 'धतते' इदि पाठ उपलभ्यते । पर मयमधिक एवात्र पाठ इति भाति ।
१८–[ ऋ॰ १।११२।१ ]
१९–तरूपतिर॰ C.
२०–[ अनुपलब्धमूलमिदं वचनम् ]
२१ शब्दनाग॰ C.

ऋभुर्ऋभुभिरभि वः स्याम विभ्वो विभुभिः शवसा शवांसि ।
वाजो अस्माँ अवतु वाजसाताविन्द्रेण युजा तरुषेम वृत्रम्[1] ॥

वसिष्ठस्य । ऋभुरिति मेधाविनाम । व्यत्ययेन चात्रैकवचनं बहुवचनस्य स्थाने । ऋभवो मेधाविनो वयम् । ऋभुभिर्ऋभुर्विभ्वो वाज इत्येतैर्देवैः सह । अभि वैः स्याम अधिभवेम युष्मान् शत्रून् । नच केवला मेधाविनः । किं तर्हि ? विभुर्बलवत्त्वान्निग्रहे चानुग्रहे च समर्थो विभुरुच्यते । तेनायमर्थः । विभ्वो वयं विभुभिर्निग्रहानुग्रहसमर्थैर्विभुप्रभृतिभिर्वा तैरेव देवैः सह । शवसा बलेन सेनाख्येन शवांसि युष्माकं स्वभूतानि बलानि सेनाख्यानि अभिस्याम इति सम्बन्धः । वाजो वाजश्च देवोऽस्मान् अवतु रक्षतु । क ? वाजसातौ संग्रामे[6] इन्द्रेण युजा युज्यत इति युक् सहायः इन्द्रेण सहायेन तरुषेम[8] हन्याम । कम ? वृत्रं शत्रुम ।

भन्दना इत्यस्य धात्वर्थानवगमं रूपानवगमश्च[9] दर्शयितुं निगमोपक्षेपः । तत्र 'भदि कल्याणे सुखे च[11]' इति पाठाद् भन्दतेः स्तुत्यर्थत्वमप्रसिद्धमिति अर्चतिकर्मसु पाठं दर्शयन्नाह-भन्दतेः स्तुतिकर्मणः स्तुत्यर्थे वर्तमानस्येति । अतएव चोख्यातं प्रथममुदाहरति[12] । 'पुरुप्रियो भन्दते' इति । रूपमपि भन्दतेर्ल्युटि[13] नपुंसके भावे भन्दनमिति स्यात् । स्त्रियां भन्दनीति । भन्दनाशब्दस्योभयानवगतस्य पश्चादुदाहरणम्-'स भन्दना उदियर्ति' इति-।

पिता यज्ञानामसुरो विपश्चितां विमानमग्निर्वयुनं च वाघताम् ।
आ विवेश रोदसी भूरिवर्पसा पुरुप्रियो भन्दते धामभिः कविः[14] ॥

विश्वामित्रस्य । पिता पालयिता यज्ञानाम् । असुरोऽसुः प्रज्ञा रो मत्वर्थे[15] प्रज्ञावांश्च । विपश्चितां मेधाविनां मध्ये । विमानं विनिर्माणहेतुत्वात्[16] । विनिर्माता चाग्नि-[17]

---

१-[ ऋ० ७।४८।२ ] 'ऋभुर्ऋभुभिः' इत्येव प्रतीकम् B. C.
२-विद्या B, विभ्या C.
३-'वा' इति पाठ आदर्शपुस्तकेषु ।
४-शमन्धो C.
५-शवांसि C.
६-'संग्रामे' इत्यस्मात्पूर्वं B. पुस्तके 'मामेदः संग्रामे' इत्यधिकः पाठः ।
७-सभायः C.
८-तरुषेम C.
९-रूपानवगमं B, ...
१०-[ धा० १।१२ ]
११-'च' इति नास्ति B.
१२-०दाहरति C.
१३-'ल्युटि' इति त्रुटितम् B.
१४-[ ऋ० ३।३।४ ] 'पिता यज्ञानाम्' इत्येव प्रतीकम् C. B.
१५-'रो मत्वर्थे प्रज्ञावांश्च' इति त्रुटितम् B.
१६-०र्माण...हेतुत्वात् B.
१७-चाग्निः B.

हविर्नयनद्वारेण कृत्स्नस्य जगतः । वसुनश्च प्रज्ञानभूतं च प्रथस्योपक्रान्तः[1] पोयतान् ऋत्विजां[2] मध्ये । एवंविशिष्टः किं चकार ? उच्यते । आविवेश आविष्ट आविशति वा । रोदसी द्यावापृथिव्यौ । भूरिवर्पसा[3] बहुरूपेणात्मना । तथाच बहुरूपत्वे 'तमू अकृण्वे[4]न्त्रेधा भु भुवे कम् ऋत्वीसे[5] अतिमं[6] इति च मन्त्रलिङ्गम् । आविदयं[7] च पुरुप्रियः बहूनामृत्विग्यजमानानामिष्टः । भन्दते[8] देव्यहोतृत्वात् स्तौति । कान् ? सामर्थ्यात् देवान् । धामभिः[9] स्वैर्जन्मभिर्नामभिर्वा, कविभिर्मेधावी । एवं तावद्[10] विनैव यत्तच्छन्दाध्याहारकल्पनया अत्रैकवाक्यता । अन्ये तु पिता यज्ञानामित्यादिगुणो योऽग्निस्तं पुरुप्रियो बहुकामो यजमानो भन्दत इति यत्त[11]च्छन्दाध्याहारकल्पना ।

नामभूतस्योदाहरणम्—

स भ॑न्दना उदि॑यर्ति प्रजाव॑तीर्विश्वायु॑र्विश्वाः॑ सुभ॒रा अह॒र्दिवि ।
ब्रह्म॑ प्रजाव॑द्रयिमश्व॑पस्त्यं पी॑त इन्द्विन्द्रमस्मभ्यं॑ याचतात्[12] ॥

अत्रेः । स भन्दना इति तच्छ[13]न्दश्रुतेर्यच्छन्दोऽत्राध्याहर्तव्यः । [14]यो यत्र उपन[15]ते सोमं स्तोष्यामीति जन्म[16]नः प्रभृति भि[17]ष्याद् सोयं स्तोता भन्दनाः स्तुतीरुदियर्ति उदीरणं समुच्चारणम्, उच्चारयति । किंविशिष्टाः ? प्रजा[18]वतीः प्रजाशब्देन जन्यमानत्वादाहुतय उच्यन्ते, ताभिस्त[19]द्वतीराहुतीसंयुक्ता[20] इत्यर्थः । प्रजालिङ्गा वा । विश्वायुः 'छन्दसीणः'[21] इत्युणि[22]

१—०स्योपक्रान्त' C.
२—अत्र 'वाघतां' इति मूलानुसारी पाठो युक्तः ।
३—वर्चसा C.
४—आकृन्वेन् C.
५—कत्वीसे C.
६—इदमेकस्य मन्त्रस्य प्रतीकं बहूनां वेति भ्रष्टविपर्यस्ताक्षरत्वान्न ज्ञायते ।
७—अत्रादर्शपुस्तकेषु 'आविरव' इति पाठः ।
८—'भन्दते' इत्यस्मात्पूर्वं B. पुस्तके 'शति वा रोदसी द्यावापृथिव्यौ' इत्यधिकः पाठः ।
९—'नामभिः' इति नास्ति C.
१०—तावद्विनैव यत्तच्छन्दो ध्या० C.
११—'त्त' इति B. पुस्तके 'च्छन्दा' इति च C. पुस्तके त्रुटितम् ।
१२—[ ऋ० ९।८६।४१ ] 'स भन्दना' इत्येव C. 'स भन्दना उदियर्ति' इति च B.
१३—'तच्छन्दश्रुतेर्य' इति नास्ति C. 'तच्छन्द' इति तु B. पुस्तकेऽपि नास्ति ।
१४—'यो' इत्यस्मात्पूर्वमत्रादर्शपुस्तकेषु 'द' इत्यधिकम् ।
१५—उपनयने C.
१६—'न्म' इति त्रुटितम् C.
१७—भिष्याक् C. अतः परं B. पुस्तके 'पान' इति C. पुस्तके च 'वान' इत्यधिक इव पाठो दृश्यते ।
१८—प्रजापतिः C.
१९—अत्र 'तद्वतीः' इति पाठो युक्तो भवेत् ।
२०—'आहुतिसंयुक्ता' इति पाठः साधुः स्यात् ।
२१—[ उणा० १ । २ ] 'छन्दसि णः' इति पाठ आदर्शपुस्तकेषु ।
२२—इत्यृणि B.

आयुर्गन्ता सर्वत्राप्रतिहतगतिः सर्वप्रज्ञातेत्यर्थः । अन्नवचनो वा आयुशब्दः । हविर्लक्षणैरन्नैः सर्वान्नो विश्वः सर्वाः सर्वप्रकाराः संभृता अभवन्[1] गुणैः । कदा उदियर्ति ? उच्यते । अहर्दिवि रात्रावहनि चेत्यर्थः । एतज्ज्ञात्वा मह्य अन्नं व्रीह्यादि । प्रजावत् प्रजासहितम् । रयिं धनं च । कीदृशम् ? अश्वपस्त्यं यादृशेनाश्वैः पत्यते गम्यते[3] तादृशं सारवद्य बहु चेत्यर्थः । पीतः सन् हे[4] इन्दो इन्द्रमस्मभ्यमस्माकमर्थाय[5] याचतात्, आशिषि लोट्, याचस्व ।

आहन इत्यनवगतार्थरूपस्य[6] 'अन्येन मदाहन' इत्युदाहरणोपक्षेपः । आहंसीवेत्यादि समाधिप्रदर्शनम्[7] । आहन्तीति समाधिः । कथम् ? संवादसूक्ते 'को अस्य वेद प्रथमस्याह्नः'[8] 'जायेव पत्ये तन्वं रिरिच्यां'[9] इत्येवं[10] यस्यै[11] यः सभायोगं[12] प्रत्यभियोगस्तां प्रत्याह—

न तिष्ठन्ति न नि मिषन्त्येते देवानां स्पश इह ये चरन्ति ।
अन्येन मदाहनो याहि तूयं तेन वि वृह रथ्येव चक्रा[13] ॥

मैवं मंस्थाः रहो वर्तत इति । यतः क्षणमपि [14]न तिष्ठन्ति नोपरमन्ति नोदासते रन्ध्रान्वेषणपरा इत्यर्थः । [14]न निमिषन्ति नच प्रमाद्यन्ति यत्नेन यो यत् करोति तन्निरीक्षन्ते[15] इत्यर्थः । के ? एते देवानां स्वभूताः स्पशः स्पाशयितारः कृतानां[16] कर्मणां चिह्नयितारः कृतानां कर्मणाम्[17] । 'द्यौर्भूमिरापो हृदयम्'[18] इत्यादयो वृत्तज्ञाश्चारा[19] इह लोके ये चरन्ति ते[20]

---

१–भवत C. २–उदियश C.
३–गत्यते C. ४–'हे' इति नास्ति B. इन्द्रो C.
५–इन्द्र मह्यमस्माक० C.
६–०तार्थ रूपस्य B. ०तार्थ रूपन्य C.
७–'नम्' इति नास्त्यादर्शपुस्तकेषु । तत्र 'प्रदर्श' इत्येव पाठः ।
८–[ ऋ० १० । १० । ६ ]
९–[ ऋ० १० । १० । ७ ] 'रिरिच्यां' इत्यस्य स्थाने B. पुस्तके 'संविधि (धी)' C. पुस्तके च 'संविप्रधि (धी)' इति पाठः ।
१०–इत्येवः C. ११–यस्या B.
१२–सभायोगः प्रकृताभियोगस्तं B, सभायोगं प्रकृताभियोगस्तो C.
१३–[ ऋ० १०।१०।८ ] 'न तिष्ठन्ति' इत्येव प्रतीकम् B. C.
१४–आदर्शपुस्तकेष्वत्रायं 'न' कारो नास्ति, अर्थवशान्मूलानुसारित्वाचास्माभिरेवात्र निहितः ।
१५–निरीक्षेत B. C.
१६–कृन्ताना C.
१७–'कृतानां कर्मणा' इत्यधिक एवात्र पाठोऽनावश्यकत्वात् पूर्वेण गतत्वात् ।
१८–'आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥' इति याज्ञवल्क्यव्यवहाराध्याये दिव्यप्रकरणे १०२ श्लोकस्य मिताक्षराटीकायाम् ।
१९– चारा C. २०–एतत् C.

ज्ञात्वा । अन्येन मत् मत्तः केनापि लोकद्वयाविरुद्धैतरकर्मसंबन्धेन पुरुषेण सह । आहनः लोकेऽपि या अप्रतिरूपमप्रतियोग्यं भाषते सोच्यते आहंसीव भाषमाणेति[1] । अतश्चा- सभ्यभाषणादयोग्यवचनाद् आङ्पूर्वस्य हन्तेरप्रत्यये आहन्तीत्याहना इत्येतद्रूपं भवति । तस्य संबुद्धौ आहनः । असभ्यवचना मामाह । तूयं याहि गच्छ । नूयं तूर्णं क्षिप्रं याहि सामर्थ्यान्मिथुनम् । गत्वा च तेन तेनैवोचितेन पत्या सह विवृह[4] 'वृह उद्यमने' धर्मार्थकामानुद्यच्छ उत्कृष्टान् कुर्वित्यर्थः । उत्कृष्टानां हि तेषां करणमुद्यमनम्[5] । कथमिवोद्यच्छ? उच्यते । रथ्येव रथ्या इव । रथावयवभूते इव । यथा रथावयवभूते चक्रा द्विवचनस्य स्थानेऽयमाकारः, चक्रे रथमुद्यच्छतस्तद्वदित्यर्थः । एवमत्र आहंसीवे- त्यादिना भाष्येण आहन्तीत्यवगमः प्रदर्शितः । इतिहासदर्शनस्यैतत्[10] ।

नित्यपक्षे तु–यम आदित्यो यम्योपि[11] रात्रिः सोच्यत इति । प्रातस्तद्रुच्छन्तः[12] सायं चास्तमयमाना न तिष्ठन्ति । तैमांस्येवं घ्नन्तो[13] रश्मयो नच निमिषन्ति न क्षणमपि प्रमाद्यन्ति, एते[14] देवानां स्पर्शः[15] स्प्रष्टारश्चरा देवानां लोकपालानामिह...........रन्ति[16] तैश्च सह प्रतिद्वन्द्वाभावात् तदवस्थानं नास्ति, अतोऽन्येन मत् । दर्शनादिनिवृत्त्याद्यष्टाङ्गं[17] ब्रह्मचर्यमित्याह । नित्यपक्षे[18] तु काचिद् ब्राह्मणी पत्यौ प्रव्रजिते[19] कामार्ता प्रव्रजीतीति[20] योज्यम् । लोपामुद्रेति मुद्रेत्युरसेकलुतोरसेको[21] विनयाच्छिन्नमन्मथा । अन्यत्समानम् । अथवा पत्युर्गमने[22] ब्रह्मचर्यनिर्विण्णा भार्याऽस्याम्[23]वस्थायां नोपेक्षयितव्येत्यर्थः आर्तवे ।

---

१–॰माणे अपि B.
२–तियमि C. अत्र 'अतो यमि !' इति पाठो युक्तः स्यात् ।
३–त्र्ययन् C. ४–विवह B.
५–[ cf. धा॰ ६ । ५७ ]
६–॰यमाना C. ७–॰मियोयच्छ B. C.
८–रतथ्या C. ९–॰यश्रीभूतमत इव B.
१०–॰नस्यैतन B. C.
११–अत्र 'यम्यपि' इति युक्तं स्यात् ।
१२–प्रातः तद्र॰ B. १३–मोस्येवं C.
१४–'साते' इति पाठ आदर्शपुस्तकेषु ।
१५–अत्र 'स्पशः' इति पाठो युक्तः ।
१६–अत्र कश्चन पाठस्त्रुटितः ।
१७–'शार्शदि (दि B.) निवृत्याष्टांग' इत्यादर्श- पुस्तकेषु पाठः । अस्माभिस्त्वर्थानुसारित्वादयं पाठः परिकल्प्य निर्दिष्टः । तथाच ब्रह्मचर्य- निरूपणे पुराणम् —
स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं वदन्ति ब्रह्मवादिनः ।
[ब्रह्मवै॰ २,१९,२६–२७]
१८–अत्र 'अनित्यपक्षे' इति पाठः स्यात् ।
१९–प्रवृपिते B. प्रवृषीते C.
२०–प्रवृवातीति B. प्रवृवीतीति C.
२१–अयं सन्दिग्ध इव पाठः, यथादृष्ट एव लिखितो- ऽस्माभिः ।
२२–पर्तुगमन C. २३–॰र्यास्य ममवस्था॰ C.

तथाच 'पर्यग्रे ब्रजेच्चैनाम्[1]' 'सर्वत्र वा प्रतिषिद्धवर्जम्[2]' इति स्मरणमेतन्मन्त्रलिङ्गमूलं दृष्टमिति ।

सोमो अक्षा इत्यनवगतम् । ऐकपदिके[3] च द्विपदोपादानं विशेषप्रतिपत्त्यर्थम्[4] । को विशेषः[5] ? सोमसमानाधिकरणस्याख्यातभूतस्य[6] 'अनूपे गोमान्' इति गोविषयस्याक्षा इत्येतस्य ग्रहणं यथा विज्ञायेत । अक्षसूक्तादिषु नामभूतस्याक्षशब्दस्य ग्रहणं मा विज्ञायीति । अनेकार्थं च । आचार्यगोविप्रतिपत्तेः । विप्रतिपत्तिश्च भाष्ये प्रदर्शितैव । अत्र ययोरुदाहरणयोस्त्रय[7] एते आख्यातशब्दास्तत्र[8] पूर्वस्मिन्नुदाहरणे अश्नोतेरक्षाः । तस्य च 'उदितो वा[9]' इति विभाषितेट्त्वात् लुङि[10] सिचि अनिट्पक्षे अष्टेत्येनत्रगमः[11] । इट्पक्षे अशिष्टेति[12] । द्वितीय उदाहरणे पूर्वः क्षीयतेरपरः[13] क्षरतेः । तत्राप्यक्षयिषीदक्षारीदिति चावगमः । शाकपूणेस्तु सर्वत्रैवाक्षैषीदिति । उदाहरणम्—

[ इति दशमस्या-(पञ्चमस्या-)ध्यायस्य द्वितीयः खण्डः । ]

---

१–[ मनु० ३ । ४५ ]
२–[ अनुपलब्धमूलमिदं वचनम् ]
३–ए (C.) क परित्येक च द्विपद्विपदोपादान B, C.
४–०पत्यर्थः C.   ५–विशेषं C.
६–'त' इति वर्णो नास्त्यादर्शपुस्तकेषु ।
७–त्रयोरु० C.
८–आख्यानश० B. C.
९–[ पा० ७ । २ । ५६ ]
१०–लुटि B.
११–आष्मेत्यनवगतः C.
१२–आशिष्टेति C.
१३–पूर्व क्षीयतेः क्षरतेः B. ०यतेर क्षर० C.

# [अथ तृतीयः खण्डः[1] ।]

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः ।
यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि[2] ॥

विश्वामित्रेणोरिन्द्रस्तुतिः । न यस्येन्द्रस्य माहात्म्यमिति शेषः, अथवा यस्येति षष्ठी द्वितीयास्थाने यमिन्द्रम् । द्यावापृथिवी 'वा च्छन्दसि[3]' इति पूर्वसवर्णः, द्यावापृथिव्यौ । न धन्वशब्दोन्तरिक्षवचनः । तथापि परेणान्तरिक्षशब्देन पौनरुक्त्य[4]प्रसङ्गात् क्रियानिमित्तो द्रष्टव्यो धन्वतेर्गतिकर्मणः । तेन च गन्तृस्वभावमुदकमुच्यते । नापि धन्व नदीसमुद्राधिकरणमुदकम् । नान्तरिक्षं नाद्रयो नापि हिमवदादयः पर्वता व्याप्तवन्तो व्याप्नुवन्ति वा । किं तर्हि ? सोमो अक्षाः सोम एवैको व्याप्तवान् । कथं पुनर्गम्यते सोम एव व्याप्नोतीति ? उच्यते । यत् पञ्चम्या अत्र लुग् द्रष्टव्यश्छान्दसत्वात् । यस्मादस्य सोमस्य षष्ठीश्रुतेर्जन्यजनकसम्बन्धेन सम्बन्धि[5]नानेन पीतेन जन्यमान इत्यर्थः । कोऽसौ ? मन्युः[6] क्रोधः, अधि उपरि नीयमानः[7] । केषाम् ? [8]सामर्थ्यात् शत्रूणाम् । शृणाति[9]हिंसायां हिनस्ति । वीळु संस्तब्धं वीर्यमदावलिप्तम् । किं पुनस्तत् ? सामर्थ्यात् शत्रुजातम् । रुजति भिनत्ति[10] । स्थिराणि दृढानि च मेघवृन्दानि । अत्र न यस्येति यच्छब्दश्रुतेः साकाङ्क्षत्वाद् वयं[11] स्तुम इति वाक्यशेषः । एवमश्नोतेरक्षा इत्येके आचार्या[12] मन्यन्त इति शेषः ।

द्वितीयमुदाहरणम्—

अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।
समुद्रं न संवरणान्यग्मन् मन्दी मदाय तोशते[13] ॥

ससर्पीणाम् । अनूपे अनुगता आपो यस्मिन् असौ तृणोदकप्रदेशो[14]ऽनूप उच्यते

१–अत्रादर्शपुस्तकेषु खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १० । ८९ । ६] 'न यस्य द्यावापृथिवी' इति B. 'न यस्य द्या' इत्येव C.
३–[ पा० ६ । १ । १०५ ]
४–पौनरुक्त्याप्रसङ्गात् B. C.
५–'सम्बन्धी नानेन' इत्येवं पाठ आदर्शपुस्तकेषु ।
६–मृगुः C.
७–नीयमानं C.
८–केषां सोम० C.
९–शृणोति हिं० C.
१०–भिनत्त्यत्रि C.
११–वयव C.
१२–आचाय्मा C.
१३–[ ऋ० ९ । १०७ । ९ ] 'अनूपे गोमान' इत्येव प्रतीकम् B. C.
१४–०प्रभेदो C.

तस्मिन्। गोभिः सह[1]। अश्वेकवाक्यतायै यदा तदेत्यध्याहारः। यदा अक्षाः छान्दसत्वाद् वर्तमाने लुक्षियेति[2] निवसति तदा सुपुष्टत्वात् गवां सोमः पय आश्रयं दुग्धाभिस्तृतीयैषा पञ्चम्याः स्थाने सामर्थ्यादपिशब्दलोपश्च द्रष्टव्यो दुग्धाभ्योऽपि[3] गोभ्योऽक्षाः क्षरति। दुग्धा अपि पुनर्दुह्यन्त एव। न निर्दुग्धा भवन्तीत्यर्थः[4]। कथं च क्षरति। उच्यते, समुद्रं न समुद्रमिव या समुद्रं संवरणानि[5] संवरणशब्देनात्र संवरणस्वभावकानि स्रोतांस्युच्यन्ते तानि अग्मन् अगमन् अविच्छेदेन गच्छन्ति। एवमूर्ध्वःप्रदेशं[6] पयांसि सर्वाङ्गेभ्यो गच्छन्ति, किमर्थम्। सान्नाय्ययागादिषु इन्द्रस्य मदाय मदार्थम्[7]। तृप्तौ तृप्त्यर्थः। तृप्तश्च सन् स इन्द्रो[8] मन्दी स्तुत्या। तोशतिर्वधकर्मा[9] हन्ति विनाशयति[10]। कम्। सामर्थ्याद् यजमानस्य शत्रूनित्यर्थः।

एवं चायं क्षियतिनिगमः पूर्वः[11] क्षरतिनिगम इति द्वितीयः पक्षः। यश्च तु शाकपूणिपक्षः उभे क्षियतिनिगमा इति तृतीयः। तथा 'न यस्य' इत्यस्य[12] तावदेवं योजना। यस्येति षष्ठी सप्तम्यर्थे यस्मिन्निन्द्रे [13]न द्यावापृथिव्यौ नाप्युदकं नान्तरिक्षं नापि पर्वताः[14] क्षयन्ति। किं तर्हि। सोम एवैकोऽक्षाः क्षियेति[15] निवसति आहारत्वात्। उत्तरोऽर्धर्चः[16] समानव्याख्यानः[17]। अनूपे गोमानिति। तत्रापि अनूपे[18] गोमान् गोभिः सह यदाऽक्षाः क्षियति निवसति तदा सोमः पय आश्रयो दुग्धाभिः[19], सप्तम्यर्थे एषा तृतीया। अपि च पूर्ववत् दुग्धास्वपि[20] गोषु अक्षौ[21] निवसत्येव। दुग्धास्वपि पयो[22] वियत एव। [23]न निर्दुग्धा गावः शक्यन्ते कर्तुमित्यर्थः। किमल्पको निवसति। न। समुद्रं न संवरणानीत्युक्तं प्रभून इत्यर्थः। समानमन्यत्। लोपाश इत्याद्यतिरिक्तपाठः। केचित्त्वर्थाः।

श्वात्रमित्यनवगतम्[24]। क्षिप्रनामेत्यभिधेयवचनम्। आश्वतनमिति प्रतिवचनेम[25]।

---

१–अत्र 'गोमान्' इति शेषो योज्यः। अथवा मूलगतो 'गोमान्' इति पाठः कदाचिदितस्त्रुटित एव स्यात्।
२–क्षीयति C.
३–मुग्धमभ्योऽपि C.
४–भवतीत्यर्थः C.
५–॰रणादि C.
६–एवं मूर्धः C.
७–मदार्थः C.
८–इद्रु C.
९–तोगतिर्वधकर्मा C.
१०–पिता नाशयति B. वितानाशयति C.
११–पूर्वे B.
१२–न यस्येत्यत्रतावदेवं B, C.
१३–॰मिन्द्र स B, ॰मिन्द्र न C.
१४–पर्वतान् B. पर्वता C.
१५–क्षयति B.
१६–समाप्य (न C.) व्याप्यतं नो (ना C.) B. C.
१७–B. पुस्तके 'इति' इति C. पुस्तके 'ति' इति च नास्ति।
१८–अनोपे होमान् C.
१९–दुग्धोभिः C.
२०–मुग्धास्वपि C.
२१–अक्षाणि व॰ B. अक्षान्नि॰ C.
२२–वियो वियत एव C.
२३–ने B.
२४–श्वामित्रमित्य॰ C.
२५–इदं वाक्यं त्रिलिखितम् C.

# [ अथ तृतीयः खण्डः । ]

न यस्य द्यावापृथिवी न धन्व नान्तरिक्षं नाद्रयः सोमो अक्षाः ।
यदस्य मन्युरधिनीयमानः शृणाति वीळु रुजति स्थिराणि[2] ॥

विश्वामित्रेणोरिन्द्रस्तुतिः । न यस्येन्द्रस्य माहात्म्यमिति शेषः, अथवा यस्येति षष्ठी द्वितीयास्थाने यमिन्द्रम् । द्यावापृथिवी 'वा च्छन्दसि'[3] इति पूर्वसवर्णः, द्यावापृथिव्यौ । न धन्वशब्दोऽन्तरिक्षवचनः । तथापि परेणान्तरिक्षशब्देन पौनरुक्त्यप्रसङ्गात्[4] क्रियानिमित्तो द्रष्टव्यो धन्वतेर्गतिकर्मणः । तेन च गन्तृस्वभावमुदकमुच्यते । नापि धन्व नदीसमुद्राधिकरणमुदकम् । नान्तरिक्षं नाद्रयो नापि हिमवदादयः पर्वता व्याप्तवन्तो व्याप्नुवन्ति वा । किं तर्हि ? सोमो अक्षाः सोम एवैको व्याप्तवान् । कथं पुनर्गम्यते सोम एव व्याप्नोतीति ? उच्यते । यत पञ्चम्या अत्र लुग् द्रष्टव्यश्छान्दसत्वात् । यस्मादस्य सोमस्य षष्ठीश्रुतेर्जन्यजनकसम्बन्धेन सम्बन्धिनानेन[5] पीतेन जन्यमान इत्यर्थः । कोऽसौ ? मन्युः[6] क्रोधः, अधि उपरि नीयमानः[7] । केषाम्[8] ? सामर्थ्यात् शत्रूणाम् । शृणातिर्हिंसायां[9] हिनस्ति । वीळु संस्तब्धं वीर्यमदावलिप्तम् । किं पुनस्तत् ? सामर्थ्यात् शत्रुजातम् । रुजति भिनत्ति[10] । स्थिराणि दृढानि च मेघवृन्दानि । अत्र न यस्येति यच्छब्दश्रुतेः साकाङ्क्षत्वाद् वयं[11] स्तुम इति वाक्यशेषः । एवमश्रोतेरक्षा इत्येके आचार्या[12] मन्यन्त इति शेषः ।

द्वितीयमुदाहरणम्—

अनूपे गोमान् गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।
समुद्रं न संवरणान्यग्मन् मन्दी मदाय तोशते[13] ॥

सप्तर्षीणाम् । अनूपे अनुगता आपो यस्मिन् असौ तृणोदकवद्देशोऽनूप[14] उच्यते

---

१–अत्रादर्शपुस्तकेषु खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १० । ८९ । ६ ] 'न यस्य द्यावापृथिवी' इति B. 'न यस्य द्या' इत्येव C.
३–[ पा० ६ । १ । १०५ ]
४–पौनरुक्त्याप्रसङ्गात् B. C.
५–'सम्बन्धी नानेन' इत्येवं पाठ आदर्शपुस्तकेषु ।
६–मधुः C.
७–नीयमानं C.
८–केषा सोम० C.
९–शृणोति हिं० C.
१०–भिनत्स्थि C.
११–वयव C.
१२–आचारमा C.
१३–[ ऋ० ९ । १०७ । ९ ] 'अनूपे गोमान' इत्येव प्रतीकम् B. C.
१४–०वभेशो C.

तस्मिन्। गोभिः सह[1]। अत्रैकवाक्यतायै यदा तदेत्यध्याहारः। यदा अक्षाः छान्दसत्वाद् वर्तमाने लुङ्क्षियेति[2] निवसति तदा सुपुष्टत्वात् गवां सोमः पय आश्वं दुग्धाभिस्तृतीयेया पञ्चम्याः स्थाने सामर्थ्यादपिशब्दलोपश्च द्रष्टव्यो दुग्धाभ्योऽपि[3] गोभ्योऽक्षाः क्षरति। दुग्धा अपि पुनर्दुह्यन्त एव। न निर्दुग्धा भवन्तीत्यर्थः[4]। कथं च क्षरति। उच्यते, समुद्रं न समुद्रमिव या समुद्रं संवरणानि[5] संवरणशब्देनात्र संवरणस्वभावकानि स्रोतांस्युच्यन्त तानि अगमन् अगमन् अविच्छेदेन गच्छन्ति। एवमूर्ध्वःप्रदेशं[6] पयांसि सर्वाङ्गेभ्यो गच्छन्ति, किमर्थम्। सान्नाययागादिषु इन्द्रस्य मदाय मदार्थम्[7]। तृप्तौ तृप्त्यर्थः। तृप्तश्च सन् स इन्द्रो मन्दी स्तुत्या[8]। तोशतिर्वधकर्मा[9] हन्ति विनाशयति[10]। कम्। सामर्थ्यात् यजमानस्य शत्रूनित्यर्थः।

एवं चायं क्षियतिनिगमः पूर्वः[11] क्षरतिनिगम इति द्वितीयः पक्षः। यदा तु शाकपूणिपक्षः समे क्षियतिनिगमा इति तृतीयः। तदा 'न यस्य' इत्यस्यैव तावदेव[12] योजना। यस्येति षष्ठी सप्तम्यर्थे यस्मिन्निन्द्रे[13] न द्यावापृथिव्यौ नाप्युदकं नान्तरिक्षं नापि पर्वताः[14] क्षयन्ति[15]। किं तर्हि। सोम एवैकोऽक्षाः क्षियेति निवसति आहारत्वात्। उत्तरोऽर्धर्चः समानव्याख्यानः[16]। अनूपे गोमानिति[17]। तत्रापि अनूपे[18] गोमान् गोभिः सह यदान्नमक्षाः क्षियति निवसति तदा सोमः पय आश्वं दुग्धाभिः[19], सप्तम्यर्थे एषा तृतीया। अपि च पूर्ववत् दुग्धास्वपि[20] गोषु अक्षाः[21] निवसत्येव। दुग्धास्वपि पयो[22] विद्यत एव। न[23] निर्दुग्धा गावः शक्यन्ते कर्तुमित्यर्थः। किमल्पको निवसति। न। समुद्रं न संवरणानीत्युक्तं प्रभूत इत्यर्थः। समानमन्यत्। लोपाश इत्यायतिरिक्तपाठः। केचित्त्वर्थाः।

श्वात्रमित्यनवगतम्[24]। क्षिप्रनामे अभिधेयवचनम्। आश्वतनमिति प्रातिपवचनम्[25]।

---

१–अत्र 'गोमान्' इति शेषो योज्यः। अथवा मूलगतो 'गोमान्' इति पाठः कदाचिदितस्त्रुटित एव स्यात्।
२–क्षीयति C. ३–सुग्धमभ्योऽपि C.
४–भवतीत्यर्थः C. ५–०रणादि C.
६–एवं मूर्धः C. ७–मदार्थः C.
८–स्तुत्य C. ९–तोशतिर्वधकर्मा C.
१०–पिता नाशयति B. विताना[शयति] C.
११–पूर्वे B. १२–न यस्येत्यतनावदेवं B. C.
१३–०निन्द्र स B, ०मिन्द्र न C.
१४–पर्वतान् B. पर्वतां C. १५–क्षयति B.
१६–समाख्य (न C.) व्याख्यातं नो (ना C.) B. C.
१७–B. पुस्तके 'इति' इति C. पुस्तके 'ति' इति न मास्ति।
१८–अनोपे होमान् C. १९–दुग्धोभिः C.
२०–सुग्धास्वपि C.
२१–अक्षाणि प० B. अक्षामिव० C.
२२–वियो विद्यत एव C. २३–ते B.
२४–श्वामित्रमित्य० C.
२५–इदं पादयं निलिखितम् C.

आश्वतनमततेरो[1]कारस्य मध्यमानु[2]प्रवेशेन वर्णलोपव्यापत्यादिना आश्वतनः क्षिप्रगमनश्च। अत्रोदाहरणम्—

यो होतासीत् प्रथमो देवजुष्टो यं समाञ्जन्नाज्येना वृणानाः।
स पतत्रीत्वरं स्था जगद्यच्छ्वात्रमग्निरकृणोज्जातवेदाः[3] ॥

मूर्धन्वतो वामदेवस्यार्षम्। यः कृतो[4]ऽग्निः होतासीत् प्रथमो मानुषाद्धोतुर्देवजुष्टो[5] देवप्रियो देवसेवितो वा। यं[6] समाञ्जन् समुक्षितवन्तः। आज्येन आघाराज्यभागादिसाधनभूतेन। आवृ[7]णानाः संभजमानाः। किं तस्य। उच्यते। स[8] पतत्रि पक्षिजातम्। इत्वरं गमनशीलं सरीसृपादि। स्था[9] स्थावरं च वृक्षादि। जगत् जंगमं च यं[10]द्गवादि, यच्छब्दश्चुनेस्तच्छब्दोऽध्याहार्यः। तत्सर्वं श्वात्रं क्षिप्रं अग्निरकृणोत्, करोतिना क्रियासामान्यवचनेन क्रियाविशेषो लक्ष्यते सामर्थ्यात्। आह किं हि। दहनाद् यदग्निः क्षिप्रं कुर्यात्। तेन अद[11]हद् दहतीत्यर्थः। दावा[12]त्मको युगान्तकाल[13]लक्षणो वा। जातवेदा इति जातवित्तो जातविद्यो वा।

ऊतिरित्यनवगतम्। सन्त्यल्पप्रयोगा[14]ः कृतोपि तत्रा[15]प्येकेऽल्पनिष्पत्तय इत्युक्तम्[16]। अतो रक्षणतर्पणमात्रं[17] विषयत्वमनवगममिहा[18]भिप्रेतं न त्वनवगतसंस्कारलक्षणम्। कुत एतत्। निपातनस्मरणात् 'ऊतियूतिजूतिसा[19]ति' इति। ततोऽर्थश्च संस्कारश्चोभयमवगम्यते[20]। नैवम्। सत्यपि निपातने प्रकृत्यादिविभागानवगमादनवगतत्वमिच्छति। निपातनाद्धि साधुत्वमात्रं गम्यते न प्रकृत्यादिविभागः। अत एव लोकवेदप्रसिद्धोपि जठरशब्दो निगमेषु पठितः प्रकृत्यादिविभागायेति। ननु ऊतिशब्दे प्रकृत्यादिविभागो 'ज्वरत्वरस्रिव्यविमवामु[21]' इत्युपदर्शितः। एवं तर्हि कृतिनार्थ[22]संज्ञात्वात् क्षिनि[23]

१–०ततेकारस्य C.
२–'मध्यमनुप्रवेशेन' इति पाठः कदाचित् स्यात्।
३–[ ऋ० १०।८८।४ ] 'यो होतासीत्' इत्येव प्रतीकम् B. C.
४–कृतोऽग्निर्होतासीत् C. 'कृताग्निर्होतासीत्' इत्यपि पाठः B.
५–देविजुष्टः C. ६–'यं' इति त्रुटितम् B.
७–वृणानो C. ८–'स' इति त्रुटितम् B.
९–'स्था' इति त्रुटितम् B. १०–यं गवादि C.
११–अदहन् दहन्तीत्यर्थः B.
१२–दाहात्मको B. दावात्मको C.
१३–कालक्षण B. काललक्षणा वा C.
१४–प्रयोगः C. १५–तत्राल्पेके C.
१६–[ निरु० २।२ ]
१७–'०मात्रविषयत्वमनवगतम्' इति पाठो युक्तः स्यात्।
१८–०ह्यनभिप्रे० B.
१९–[ पा० ३।३।९७ ] 'ऊतिजातिसाती (ती C.) ति' इति पाठ आदर्शपुस्तकेषु।
२०–०गम्यमत C.
२१–[ पा० ६।४।२० ]
२२–अयं सन्दिग्धः पाठः। २३–क्षिनि C.

चाद्युदात्तत्वेन भवितव्यम् । अयं चान्तोदात्तः । तस्मा[1]न्निपातनमेवाश्रयणीयम् । निपा[2]तेने चाविभाग इत्युक्तम् । अथनास्त्यर्थप्रतीतिवचनम् । उदाहरणम्—

आ त्वा रथं यथोतये सुम्नाय वर्तयामसि ।
तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते[3] ॥

प्रियमेधो[4] नाम तस्यार्षम् । आकारो वर्तयामसीत्यनेन सम्बध्यते । त्वा त्वां रथो यथा हि कश्चिदूतये गमनाय रथमावर्तयेत् तद्वत् वयं सुम्नाय सुखायास्मत् आवर्तयामो हविषा स्तुत्या वाभिमुखीकुर्मः । कीदृशं त्वम् । तुविकूर्मि[5] बहूनां रसप्रदानादीनां[6] कर्मणां[7] कर्तारम् ऋतीषहं प्रतिपक्षं[8] प्रति गन्तॄणां सेनानामार्तीनां[9] वा दुःखानामभिभवितारम् । हे इन्द्र शविष्ठ[10] अतिशयेन बलवत्[11] । सत्पते सतां पालयितः ।

हासमाने इत्यनवगतम्[12] । तदुपरिष्टात् 'प्र[13] पर्वतानाम्' इति चतुर्दशे[14] प्रसङ्गाद् व्याख्यास्यामः । 'हा[15]सेति स्पर्धायाम्' इत्यादिनाप्यदं [16]त्वेनवगतस्थानमिति धात्वर्थानवगमात् पठितम् ।

पड्भिरित्यनवगतम् । पा[17]नैरिति वा स्पा[18]र्शनैरिति वेत्यवगमः । उदाहरणम्—

एवा महो असुर वक्षथाय वम्रकः पड्भिरुप सर्पदिन्द्रम् ।
स इयानः करति स्वस्तिमस्मा इषमूर्जं सुक्षितिं विश्वमाभाः[19] ॥

वम्र[20]नाम्नो वैखानसस्यार्षम् । एवमधस्त्या[21]सु ऋक्षु उक्तेन प्रकारेण । हे असुर प्रज्ञावन्[22] प्राणवान् वा । महो महतोऽन्नादेः । वक्षथाय[23] वहनाय प्रापणायेत्यर्थः[24] । वम्रको वम्रकनामायमृषिः । अथवा ह्रस्वनामैतत् ह्रस्वप्रमाणको[25] वामनक इत्यर्थः । पड्भिः पानैः[26]

---

१–तस्यां B. तस्यान् C.
२–निपातते C.
३–[ ऋ० ८ । ६८ । १ ] 'आ त्वा रथं' इत्येव प्रतीकम् B. C.
४–०यमेधोधा C.
५–तुविकूर्मी C.
६–'प्र' इति नास्ति C.
७–कर्माणि C.
८–प्रतिपक्षपक्षं C.
९–आर्तवानां C.
१०–शविष्म C.
११–वहवेत् C.
१२–०नवगतः C.
१३–'प्र' नास्त्यादर्शपुस्तकेषु । [ ऋ० ३।३३।१ ]
१४–[ निरु० ९ । ३९ ]
१५–हसति B. [ निरु० ९।३९ ]
१६–अयमयथार्थः पाठः । अस्माभिस्त्वादर्शपुस्तकानुसारेणैवात्र लिखितः ।
१७–यानैरिति C.
१८–'स्पर्शनैरिति' अयमादर्शपुस्तकेषु पाठः ।
१९–[ ऋ० १० । ९९ । १२ ] 'एवा महः' इत्येव प्रतीकम् B. C.
२०–वद्र् नाम्नो C.
२१–०मधस्त्यमृक्षु C.
२२–'वा' इति त्रुटितम C.
२३–पक्षथाय C.
२४–इतीत्यर्थः C.
२५–प्रमाणतः C.
२६–यानैः C.

सोमस्य स्पर्शनैर्वा[1] बन्धनैः स्पर्शनैस्तस्य गुणानां स्तुतिलक्षणैरित्थं द्रुतः[2] सम्बन्ध इत्यर्थः। उपसर्पद् उपसर्पति भवन्तमिन्द्रम्[3]। आत्मन[4] एवायं परोक्षरूपेण प्रथमपुरुषेण निर्देशः। अहं[5] यज्ञक इत्यंभूत उपसर्पामीत्यर्थः। स[6] भवान् इयानो गम्यमान उपलभ्यमान इत्यर्थः। करति[7] लोडर्थे[8] पञ्चमैः[9] करोति। स्वस्तिमनाशम्। अस्मै यज्ञकाय। इषमूर्जं अन्नं च रसं च शालिगोधूमादिकं गुडघृतादिकं चेत्यर्थः। सुचितिं शोभनं च निवासम्। विश्वं सर्वं चान्यदपि यथाभिलषितं धनादि[10]। आभा[11] आभरतु आहरतु।

ससमित्यनवगतम्। सस स्वप्न इति ससम्। अष्टौ मासान् स्वपिति[12] माध्यमिकं ज्योतिस्तदुच्यते। स्वपनमित्यर्थप्रतीतिवचनम्[13]। उदाहरणम्—

प्र मातुः प्रतरं गुह्यमिच्छन् कुमारो न वीरुधः सर्पदुर्वीः।
ससं न पक्वमविदच्छुचन्तं रिरिह्वांसं रिप उपस्थे अन्तः[14] ॥

अग्नेरार्षम्। सप्तेर्वा[15] वौजम्भरस्य। प्रातरनुवाके विनियोगः शस्यते। प्रशब्दः[16] पदपूरणः सर्पदित्यनेन वा सम्बध्यते। मातुर्जनयित्र्याः प्रतरं प्रकृष्टतरं प्रीत्यतिशयहेतुः[17]। गुह्यं संवरणीयम्। स्त्रीस्वभावप्रदर्शनं[18] चैतत्। कम्। सामर्थ्यात् स्तनप्रदेशं पानमिच्छन्। कुत एतत्। दार्ष्टान्तिके रिरिह्वांसमित्यास्वादस्य श्रवणात् दृष्टान्तेऽपि तदेव गम्यते। तत्सामर्थ्यादुच्यते पानमिच्छन्निति। कुमारो न कुमारे[19] इव यथा कुमारो बालः सर्पति[20] एवं दावात्मकोऽग्निर्वीरुधो[21] नदीकक्षनिदेशस्था[22] गुच्छगुल्मवल्लीलतावितानरूपा[23] ओषधीः प्रसर्पति प्रेत्येव[24] उपेत्येतस्य स्थाने उपसर्पति। उर्वीर्बह्वीः। किं च तत्रोपसर्पन्तं ससं[25] न

१–स्पार्शनैर्वा C.

२–अत्र 'स्तुत.' इति 'श्रुतः' इति वा पाठः साधीयान् भवेत्। B. पुस्तके 'द्रुतः' इति त्रुटितमेव।

३–इन्द्रः C.

४–'आत्मान.' इति पाठ आदर्शपुस्तकेषु।

५–अहः C. ६–संभतारा C.

७–करन्ति C.

८–'लो' इति त्रुटितम् C. 'लोडर्थे' इत्यस्मात्पूर्वं B. पुस्तके 'प्रो' इति C. पुस्तके च 'ओ' इत्यधिकः पाठः। वस्तुतस्त्वमे करोतीत्यर्थनिर्देशात् 'लोडर्थे' इत्यस्य स्थाने 'लडर्थे' इति युक्तः पाठो भाति।

९–पञ्चमं B. १०–धानादि C.

११–आभाः C.

१२–'ति' इति त्रुटितम् B. स्वनिति C.

१३–स्वपनमित्यर्थः प्रतिनिर्वचनम् B. स्वपनमित्यर्थः प्रतिनोच्चनम् C.

१४–[ऋ॰ १०।७९।३] 'प्र मातुः' इत्येव प्रतीकम् B.C.

१५–'वा' इति त्रुटितम् B. १६–प्रशब्दः C.

१७–अत्र '॰हेतुम्' इति युक्तः पाठो भवेत्।

१८–रीरिह्वांसं B. रीरिभ्यांसं C. १९–कुमार C.

२०–सर्पः यत B. सर्पे यत C.

२१–वि॰धः C.

२२–इच्छ C. २३–विनान C.

२४–वेत्येव वेत्येतस्य B. वेत्येव उपेत्यतस्य C.

२५–सेसन्न सेपन यथा C.

8412

स्वपनं यथा एतद्दृष्टौ भासात् स्वपनशीलं निर्व्यापारमनभिव्यक्तं[1] क्वापि निलीनं वर्षासु पक्वं सदभिव्यक्तमित्यर्थः । किं पुनस्तत् । भाष्यकार आह[2] । माध्यमिकं ज्योतिर्विद्युदाख्यम् । सर्वदा अदर्शनादनित्यं ईषन्नष्टस्वभावकं[3] वा । सर्वमेव वेत्ति[4] विन्दति वा उपलभते एवमविन्दन् सर्वमेव जानाति उपलभते वा पश्यतीत्यर्थः । शुचन्तं दीप्यमानम् । रिरिह्वांसं 'लिह आस्वादने'[5] वकारस्य[6] रेफापत्तिरास्वादयन्तम् । किम् । सामर्थ्यादुपसर्पणकर्मभूता ओषधीः । रिपः पृथिवीनामैतत् । उपस्थ इत्यपि सप्तमी षष्ठ्यर्थे । पृथिव्या अवयवभूतस्योपस्थस्याप ओषध्यादयश्चोपेत्य यत्र तिष्ठन्ति स उपस्थः कच्छनिर्झरादिदेशः[7] । तस्यान्तः मध्ये । तद्विवाविददिति । अनद्यतने[8] लङ् अवेदिति[9] भवितव्यम् । लाभार्थस्यापि विन्ददिति विचारणा सर्वथियोरर्थासम्भवादप्रसङ्ग एव तस्मादुदाहरणस्याश्रितस्यानुकरणमेवेदं विन्ददिति पठितव्यम्[10] । तत्रैतद् यति रूपं जाज्वल्यमानमिति मध्यमं द्वावात्मकयोः साधारणं विशेषणम् ।

द्विता इत्यनवगतम् । द्वैधं द्विधेति वेत्यवगमः ।

> यस्त्वद्धोता पूर्वो अग्ने यजीयान् द्विता च सत्ता स्वधया च शम्भुः ।
> तस्यानु धर्म प्र यजा चिकित्वोऽथा नो धा अध्वरं देववीतौ[11] ॥

वैश्वामित्रः कर्ता[12] नाम तस्यार्षम् । प्रातरनुवाके विनियोगः । अग्निरुच्यते । यस्त्वत् त्वत्तः पूर्वो होता 'हु[13] दानादनयोः' वृष्टिर्लक्षणानामपां[14] दाता मध्यमोऽग्निः । आहोता[15] वो । हे अग्ने पार्थिव यजीयान्[16] वृष्टिहेतुत्वादतिशयेन यष्टा । द्विता च द्विधा[17] च यस्य सत्ता । मध्यमे च स्थाने वैद्युतात्मना उत्तमे चादित्यात्मना । स्वधया स्वधेत्युदकनाम[18] उदकेन च वृष्टिलक्षणेन यः[19] शम्भुर्भवति । तत्रान्तर्णीतण्यर्थः[20] । सुखस्य भावयिता सर्वप्राणिनाम् । तस्यानु धर्मशब्दः कर्मवचनोऽनु पश्चाद्भावे तस्य सम्बन्धि यत्

---

१–०पारं नाभि० C. २–आग B, अग C.
३–दृष्टं नष्टस्व० B. C. ४–वेत्ति C.
५–[ धा० २ । ६ ] आसादने C.
६–अत्र 'लकारस्य' इति युक्तः पाठः ।
७–कष्टनि० B. कष्टनिर्भरादि C.
८–अनन्यतेने C.
९–अपेदिति C.
१०–कम्पिता B. कंवीता C.
११–[ ऋ० ३ । १७ । ५ ] 'यस्त्वद्धोता' इत्येव प्रतीकम् B. C.
१२–कत नाम B. संदिग्धः पाठः ।
१३–[धा० ३ । १ ] 'हु' इति नास्ति B.
१४–पृष्ठलक्ष० C.
१५–आह्वाता चो C. अयमनवगतार्थः पाठः । कदाचिदत्र 'आह्वाता वा' इति पाठः स्यात् ।
१६–यशियान्य स्फुटि C.
१७–विधा च C.
१८–स्वधयेत्यु० B.
१९–'न यः' इत्येवं 'न' कारोऽधिकः B. पुस्तके ।
२०–०न्तर्णीतण्य० C.

कर्मलक्षणं वृष्टिलक्षणं[1] वा तदनु तस्य पश्चात् तेन वृष्टी वृत्तायां[2] वा तेन चोपस्थापितः[3] सन्नित्यर्थः । प्र यज प्रकर्षेण यज देवान् । चिकित्वन्[4] हे प्रज्ञावन् । अथ अनन्तरं च । नः अस्माकं स्वभूतम् । अध्वरं यज्ञवाटम् । धाः छान्दसत्वाद् वर्तमाने लटि अडभावो निषेहि स्थापय । क । देववीतौ[5] देवानां कान्तौ काम्ये देवानां काम्यं कुर्वित्यर्थः ।

म्रा इत्यनवगतम् । वरणा म्रात्याश्चेत्यवगमः[6] । उदाहरणम्—

गोभिर्यदीमन्ये अस्मन्मृगं न म्रा मृगयन्ते ।
अभित्सरन्ति धेनुभिः[8] ॥

मेधातिथिप्रियमेधयोरार्षम् । गोभिः[9] गोशब्देनात्र सोम उच्यते । 'प्रति त्यं चारुमध्वरं गोपीथाय[10]' इति यथा । यच्छब्दो यदर्थे । ईमप्यर्थे । तेनायमर्थो गोभिः सोमैः । इत्थंभूतलक्षणा तृतीया धेनुभिरिति च सोमैरित्थंभूता गृहीताः सोमाः सन्त इत्यर्थः । [11]यदीं यद्यपि अन्ये अस्मद् अस्मत्त ऋत्विग्यजमाना[12]ः । मृगमिव यथा मृगं महता यत्नेन[13] म्रा[14] वरणा वरिनारो नेष्ठारोऽह्वतिकृततत्त्वसामान्यं[15] वा । म्रा म्रात्यस्थानीया[16] लुब्धकादय इहाभिप्रेताः । तद्वदिन्द्रं मृगयन्ते । अभित्सरतिर्गतिकर्मा अधिगच्छन्ति । धेनुभिः धेनुरिति वाङ्नाम । वाग्भिश्च स्तुतिलक्षणाभिः । यद्यपीति श्रुतेस्तथापीत्यध्या[17]-हार्यम् । परस्य चैकवाक्यता योज्या । [18]अस्मानेव मतीन्द्र आगच्छत्विति वाक्यशेषो-ध्याहार्यः । भाष्ये तु म्रात्या[19] इत्येवमनुगम्यमानस्येत्युक्तम् । प्रैषा इत्येतदर्थप्रापणार्थवचनम् । प्रैषाः प्रेष्याद्[20] उत्सेधजीविनः[21] कर्मकरास्त एव लुब्धकादय उच्यन्त इति द्रष्टव्यम् ।

वराह इत्यनवगतमनेकार्थम् । मेघ इत्यभिधेयवचनम् । वराहार[22] इत्यवगमः । वरमुदकलक्षणमाहारो यस्येति वा वरमुदकमाहरतीति वा कर्मोपपदे वराहारः सन् वराहः । उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य तृतीयः खण्डः । ]

---

१—'वृष्टिलक्षणं' इति नास्ति B. २—सत्तायां B.
३—पोपस्था॰ C. ४—चिकित्व हे प्रज्ञावत C.
५—देवर्पितौ C. ६—अत्रा इत्य॰ C.
७—म्रात्या चेत्य॰ C.
८—[ऋ॰ ८ । २ । ६] 'गोभिर्यदी (दि C.) मन्ये' इत्येव प्रतीकम् B. C.
९—'गोभिः' इति द्विर्लिखितम् C.
१०—[ऋ॰ १ । १९ । १ ] गोवीथाय C.
११—आदर्शपुस्तकेष्वत्र 'यदि' इति पाठः ।
१२—ऋगित्रयममानाः B. ऋत्वियैममानाः C
१३—'न' इति त्रुटितम् C.
१४—म्रा परणा परिनारो B. म्रा मरणा परितारो C.
१५—अह्वधीकृततत्त्वसामान्यं वा C. अयमादर्शपुस्तकेषु स्थितः पाठोऽनवगतार्थ एव । कदाचिदत्र 'आहुतिकृततत्त्वसामान्यं वा' इति पाठो भवेत् ।
१६—म्रा म्रात्यस्था॰ C. १७—श्रुतिस्तथावीत्य॰ C.
१८—अभिनव मतीन्द्रमागच्छतु B. अभिनैव प्रतीन्द्रमागच्छतु C.
१९—म्रामा B. म्रामा C. २०—प्रेष्यान् B.
२१—॰धजीवनः C. २२—पराहार C.

## [ अथ चतुर्थः खण्डः ][1]

अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना ।

मुषायद्विष्णुः पचतं सहीयान् विध्यद् वराहं तिरो अद्रिमस्ता[2] ॥

नोधस आर्षम् । अस्य इदु[3] पदपूरणौ अस्येदु मातुः वृत्तिद्वारेण कृत्स्नस्य जगतो निर्माता यज्ञस्तस्यावयवभूतेषु[4] सवनेषु प्रातःसवनादिषु । महः पितुं महः[5] सोमलक्षणमन्नं पपिवान्[6] पीतवानिन्द्रः । चारु अन्ना[7] चारूणि चरुपुरोडाशादीनि अन्नानि क्रियासाकाङ्क्षत्वाद् भक्षितवानिति शेषः । किञ्च मुषायत् मुषितवान् मुष्णाति मोदकानि[8] । विष्णुः व्यापी कृत्स्नस्य जगतः[9] कदा यत्[10] । पचतं परिपक्वमाप्ययोग्यमित्यर्थः[11] । सहीयान् सहो बलं तेन तद्वान् अतिशयेन बलवानित्यर्थः । विध्यद्वराहं विध्यति च वराहं मेघम् । तिरः प्राप्तः सन् । अद्रिमस्ता[12] अद्रिः[13] सर्वेषां तं साधु क्षेप्ता वज्रक्षेपणशीलो[14] वा ।

अयमपीतरोऽसुरवराहः पशुवराहो वा एतस्मादेव वराहारत्वाद् वराहरणत्वाद् वा । तत्रासुरवराहस्य श्रुत्या निर्वचनं प्रदर्शयति 'वरमाहारमाहार्षीदिति'[15] । मेघेऽप्येतत्समानम् । वृहति मूलानीत्यादि सामान्येनोपक्षितस्य पशुवराहस्य निर्वचनम् । वृहति[16] उद्यच्छति वक्रेण खनति वनेषु मूलानीति । वृहेर्वराह इत्यर्थः । वरं वरमित्येकस्य[17] वरशब्दस्य[18] निवृत्तिः । वरशब्दाद् वृहेश्च वराह[19] इति श्रुतिर्द्रष्टव्या[20] ।

---

1—आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।

2—[ ऋ० १ । ६१ । ७ ] 'अस्येदु मातुः' इत्येव प्रतीकम् B. C.

3—इत B. इषु C.

4—०स्य यवभू० B.

5—'ण' इति त्रुटितम् B.

6—पविवान् वीत० C.

7—चार्वन्नं B.

8—'क्रिमिका' इति पाठ आदर्शपुस्तकेषु ।

9—जगति C.

10—कदा यत् C. अयं पाठः सन्दिग्ध एव ।

11—माप्ययोग्य० C. अयमनवगतार्थः पाठः ।

12—अद्रिः अस्ता B.

13—'अद्रिश्च वज्रः' इति पाठोऽत्र भाति ।

14—०णशिलो वा C.

15—मूलनिरुक्ते '०हार्षीरिति' एवं पाठः । [निरु० ५।४]

16—'ग्रहृति उद्यच्छ' इत्यादर्शपुस्तकेषु पाठः ।

17—परे परमि० C.

18—परश० C.

19—'वराच' इत्यादर्शपुस्तकेषु पाठः ।

20—श्रदति द्रष्टव्या C.

अ[1]सुरवराहस्योदाहरणम्—

विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः ।
शतं महिषान् क्षीरपाकमोदनं
वराहमिन्द्र एमुषम्[2] ॥

कुरुसुतेरार्षम् । नैरुक्तपक्षेण प्रथमं तावन्मेघ एव योजयति । विश्वा इत् पदपूरणः । इन्द्र उच्यते यानि वर्षाणि त्वया पतितानि[3] तानि विश्वानि सर्वाणि भ्राता[4] विष्णुः आदित्यः स्वरश्मिभिराभरत् आहरति । कीदृशो विष्णुः । उरुक्रमो बहुगतिः । त्वेषितस्त्वयाधीष्टो ऽभ्यर्थित इत्यर्थः । न चोदकान्येव[5] केवलानि शतं महिषान् शतसंख्याकांश्च[6] महिषाख्यान् पशून् । अथवा शतशब्दो बहुनाम महिष इत्यपि महन्नाम बहून् महतश्च[7] । कान् । सामर्थ्याद्[8] यज्ञान् । स्तोतॄ आहरत् आहरति ददातीति सम्बन्धः । क्षीरपाकमोदनं क्षीरपाकं चोदनरसपायसं[9] भोजनार्थमित्यर्थः । वेऽहमिन्द्रः[10] वराहं वराहारं वा कृष्णमेघं[11] हन्तीति शेषः । कीदृशम् । एमुषम् आ[12] इत्यस्योपसर्गस्थं[13] छान्दसोऽयमेकार आमुषम[14]आरोपणयोग्यमुदकधन्तमित्यर्थः । एवमिदं तावदेतं[15] मन्त्रद्वयस्यापि नित्यपक्षेण वराहशब्दस्य मेवविपर्ययेत[16]यैव योजना ।

ऐतिहासिकास्तु हि अन्येते ऋचावन्यथा व्याचक्षते । अत्र च चरकब्राह्मणे पठितमितिहासमाचक्षते । 'विष्णुर्यज्ञः स देवेभ्य आत्मानमन्तरधात् । तमन्यदेवता नाविन्दन् इन्द्रस्त्वंवेत[17] । स इन्द्रमब्रवीत् को भवानिति । तमिन्द्रः[18] प्रत्यब्रवीत् अहं दुर्गा[19]णामसुराणां[20] च हन्ता । ततोऽयं वराह एमुषं[21] एकविंशत्याः पुरां पारे[22] अश्मन्मयीनां[23]

१–आदर्शपुस्तकेष्वत्र 'अ' इति नास्ति ।
२–[ ऋ० ८।७७।१० ] 'विश्वेत्ता विष्णुः' इत्येव प्रतीकम् B. C.
३–पतिताश्च C. ४–ता तानि C.
५–न चोदका० B.
६–संख्यांश्च महिष्याख्यान् B.
७–महताश्च C. ८–सामर्थात् यज्ञात् C.
९–चोदनरसायसं C.
१०–आदर्शपुस्तकेषु 'भावानविन्दः (न्दत B.)' इति पाठः ।
११–कृष्णमेघोः C.
१२–'मुषं आ' इति नास्ति B. 'आ' इति तु C. पुस्तकेऽपि न दृश्यते ।
१३–०सर्गस्थान्द० B.
१४–एमुषमा० B. आमुषमा० C.
१५–'तावदेषां म०' इत्यादर्शपुस्तकेषु पाठः ।
१६–आदर्शपुस्तकेषु 'विपये तयैव' इति पाठः ।
१७–'इन्द्र स्वचेत्' इत्येवमादर्शपुस्तकेषु पाठः ।
१८–तदिन्द्रः B.
१९–अ दुर्गा० B. अन्दुर्गा० C.
२०–०राणामधुराणां च C.
२१–एमुषं B. एमुषा C.
२२–पुरां वारे C.
२३–अश्मन्मयीनां B. अश्मन्मयीपिनां C.

वसति तस्मिन्नसुराणां वसु वाममस्ति तमिमं जहीति । तस्येन्द्रस्तोः[1] पुरो हित्वा हृदयमविध्यात् । अथ यत्र यद्[*]ासीत् तद्विष्णुरामरदिति' । तदेतदेतेन मन्त्रद्वयेनोच्यते ।

अस्येदु[2] मातुरिति । सामान्यव्याख्यानं पूर्वार्धर्चेऽर्म[3] । एवं पीतसोमो भक्षितच[4]र्वा- धन इन्द्रो विध्यद् हृद् हृदये विद्धवान् । वराहं वराहनामानमसुरं वराहाकारं वा । तिरः प्राप्तनामैतत्, प्राप्तः स[5]न्नित्यर्थः । अद्रिमस्तेत्युक्तार्थम् । मुषायद् विष्णुस्तश्चैव च मुषितवान् विष्णुर्नारायणः । पचतं परिपक्वं मोपयोगयमतिशयेन बलवान् । किं पुनर्मुषितवान् ? उच्यते । विश्वेत्ता[6] तानि तत्र धनानि सर्वाणि[7] शतं महिषान् क्षीरपाकं चौदनं पक्वनान्नमेतद्[8]ौदनं वराहमसुरमिन्द्र एमुषनामानं हृदये विध्यदिति वाक्यशेषः । समानमन्यत् पूर्वेण । एवमितिहासपक्षे[9] काः श्रुत्यानयादित्यायेते ऋचौ । पशुवराहस्य प्रसिद्धत्वान्निगमोदाहरणं न दर्शितम् ।

अङ्गिरसो वराहा उच्यन्ते । उदाहरणम्—

स ईं सत्येभिः सखिभिः शुचद्भिर्गोधायसं वि धनसैरदर्दः ।
ब्रह्मणस्पतिर्वृषभिर्वराहैर्घर्मस्वेदेभिर्द्रविणं व्यानट्[10] ॥

अथास्यस्यार्षम् । बार्हस्पत्यैषा प्रकृतौ[11] बृहस्पतिम् । ईमिति पदपूरणः सत्येभिः सत्यैर[12]वितथैः । सखिभिर्मघवधादिषु सहयोगित्वात् सखिभूतैः स्तुत्यस्तोतृलक्षणे[13] सख्ये वर्तमानैः शुचिभिर्दी[14]प्यमानैः । गोधायसं गोमन्तं गन्धयति राधयति वा मेघस्तं गोधायसम् । वीत्यमदर्द इत्यनेन सम्बध्यते । धनसैर्धनस्योदकलक्षणस्य हविर्लक्षणस्य वा संभ[15]र्तृभिः सहयोगलक्षणा तृतीया एवंगुणैरङ्गिरो[16]भिः सह अदर्दो मध्यमः प्रथ[17]मस्य स्थाने व्यत्ययेन, व्यदर्दद् विदारितवान् । ब्रह्मणस्पतिर्ऋग्यजुःसामलक्षणस्य ब्रह्मणोऽधिपतिः । वृषभिर्नित्यमेव हविषां व[18]र्षितृभिः सद्भिरित्यर्थः । वराहैः परस्योदकस्य भर्तृभिः ।

---

१—वामपुरोहितत्वा B.

*—'यदासीत्' इत्यस्य स्थाने 'यत्र आसीत्' इति पाठो युक्तो भाति । अयं चेतिहासो मैत्रायणीसंहितायां [ ३।८।३ ] स्थले, तैत्तिरीयसंहितायां च [ ६ । २ । ४ ] स्थले श्रूयते ।

२—अस्येदु ( द B. ) मातुरिति B. C.

३—पूर्वार्धर्चः B. ४—०ता ... B.

५—स .. र्थः B. सद्यर्थः C.

६—'विश्वे मायानि' इत्यादर्शपुस्तकेषु पाठः ।

७—'णि' इति त्रुटितम् C. ८—०मेवौदनं C.

९—पक्षे च का श्रुत्यानयादित्यावेदे C. अयं व्यत्ययविपर्यस्ताक्षरः पाठः संदिग्धः ।

१०—[ ऋ० १०।६७।७ ] मन्त्रप्रतीकं नास्ति B. C.

११—०षा स प्रकृतौ बृहस्पतिः C.

१२—'अ' इति त्रुटितम् C.

१३—'लक्षणैः सख्ये' इत्यादर्शपुस्तकेषु पाठः ।

१४—द्विप्यमानैः C. १५—संभर्तृभिः C.

१६—०ङ्गिरसोभिः C.

१७—प्रथमं प्रथमस्य B.

१८—हविषा पपतिभिः B. हविषा वेपतिभिः C.

घर्मस्वेदैभिर्घर्मो यज्ञः स्विदिः क्षरणार्थः क्षरणं च गमनम्, यज्ञं प्रति गन्तृभिरित्यर्थः। विदाय च द्रविणं धनमुदकाख्यम्। व्यानट् व्याप्ताति कर्मार्थं विविधं प्राप्तवान्।

अत्रोच्यते। कथं पुनरस्सत्यङ्गिरःशब्देनाङ्गिरसोऽत्र वराहा उच्यन्त इति गम्यते? उच्यते। सखिभिरित्यनेन तेषामुपादानात्। अङ्गिरसो हि बृहस्पतेः सखायः। तथाहि अत्रैव सूक्ते जागते बृहस्पतेः सखिव्यपदेशोऽङ्गिरसां दृश्यते।

ऋतं शंसन्त ऋजु दीध्याना दिवस्पुत्रासो असुरस्य वीराः।
विप्रं पदमङ्गिरसो दधाना यज्ञस्य धाम प्रथमं मनन्त [10]॥

सत्यं स्तुवन्तः ऋजु दीध्याना ध्यायन्तो दिवो दीप्तस्याग्नेः पुत्रासः पुत्रा आङ्गिरसो-ऽप्यङ्गारेभ्यो जाता इत्युक्तमङ्गारेष्वङ्गिरा इति। द्युलोकस्य वा पुत्रस्थानीयाः। कीदृशस्य द्युलोकस्य वा? असुरस्य असुरिति प्रज्ञानाम प्राणनाम वा रो मत्वर्थे प्रज्ञावन्तः प्राणवन्तो वा। वीराः विक्रान्ताः शूराः। विप्रं विप्रं यत्पदात्ममाख्यस्थानम्। अङ्गिरसो दधानाः धारयन्तश्चेतसा जिज्ञासमाना इत्यर्थः। कीदृशं पदम्? यज्ञस्य धाम स्थानम्। प्रथममात्माख्यम्। आत्मा हि यज्ञस्य प्रथमं स्थानम्। सर्वदेवतानां तद्विकारत्वात्। द्रव्यदेवतात्यागरूपश्च यागः। तदुच्यते यज्ञस्य धाम प्रथममात्माख्यम्। मनन्त अत्यन्तं ज्ञातवन्त इत्यर्थः।

एवमियता ऋक्स्वरूपेणाङ्गिरसां स्तुतिर्न बृहस्पतेः। बार्हस्पत्ये चेदं सूक्ते पठ्यते। अतोऽस्य बार्हस्पत्यत्वसिद्ध्यर्थं यत्तच्छब्दावध्याहृत्य उत्तरयर्चा—

हंसैरिव सखिभिर्वावदद्भिरश्मन्मयानि नहना व्यस्यन्।
बृहस्पतिरभिकनिक्रदद्गा उत प्रास्तौदुच्च विद्वाँ अगायत् [17]॥

इत्येनया सहैकवाक्यता योज्या। येऽङ्गिरसो यज्ञस्य धाम प्रथमं मनन्त तैः

---

१–घर्मस्वेदितिभिः C.
२–स्ति B. 'यज्ञ प्रति' इति द्विर्लिखितम् C.
३–स्य.ननत् C. ४–पुररस० C.
५–०द्देनाङ्गिर० B.
६–'तेषाम्' इत्यस्य स्थाने 'कषाम्' इति पाठ आदर्शपुस्तकेषु।
७–दि B. हि C.
८–तथ वि B.
९–आदर्शपुस्तकेषु 'जगने रे' इति पाठः। अत्र 'बार्हस्पत्ये' इति पाठः संगतो भाति।
१०–[ ऋ० १०।६७।२ ] 'ऋतं शंसन्तं' इत्येव प्रतीकम् B. C.
११–'प्रज्ञानाः' इति पाठ आदर्शपुस्तकेषु।
१२–प्राणनामा B.
१३–अमाख्य B. आमाख्य C.
१४–अमनन्त C. १५–एवमिया C.
१६–'उत्तरयच्चा' इति पाठ आदर्शपुस्तकेषु।
१७–[ ऋ० १०।६७।३ ] 'हंसैरिव' इत्येव प्रतीकम् B.C.
*–'अङ्गिरसः' इत्युचितम्।

सखिभिः सह हंसैरिव वावदद्भिरत्यर्थं स्तोतृलक्षणाः स्तुती[1]र्वदद्भिः सहयोग[2]लक्षणा तृतीया, वदद्भिरेवं गुणैरङ्गिरोभिः सह । अश्मन्मयानीव अश्म[3]मयसदृशानीव अ[4]तिदृढानि । कानि ? महनानि सम्बन्धनानि । कस्य ? सामर्थ्यान्मेघस्य । व्यस्यन् विक्षिपन् मेघं घ्नन्नित्यर्थः । कः ? बृहस्पतिरभिक्रन्दयति उच्चारयै[5]ति । गाः शब्दलक्षणा वाचः । उत्प्रास्तौद् उदित्ययमगायदित्यनेन सम्बध्यते, उदगायच्च उद्गायति च विद्वान् वेदार्थतत्त्ववित् ।

यद्यपि वस्तु[6]तोऽभिक्रन्दि[7]तानि मनुष्या यजमानऋत्विजः कुर्वन्ति न बृहस्पतिस्तानि करोतीत्युच्यते । एवमत्र बृहस्पतेः सखिव्यपदेशस्याङ्गिरसां दर्शनात् 'सं[8] हं सखिभिः' इत्यत्र[9] सखिशब्देन तेषामुपादानम् । तस्मादस्यामृच्यङ्गिरश्शब्देन अङ्गिरसोऽत्र वराहा उच्यन्त इत्युपपन्नम् ।

अथापीत्यादि । देवगणा मरुतो रुद्रा इत्येवमादयो वराहा उच्यन्ते, मन्त्रे यथा दृष्टं तथा पठितम् । अङ्गिरसां च मध्यमदेवगणत्वेऽपि ऋषित्वात् पृथग् ग्रहणम् । वराहशब्देनापि मध्यमं[10]देवग्रहणसामान्येन ये[11] उच्यन्ते उच्यन्तां को दोषः । उदाहरणम्—

एतत्त्यन्न योजनमचेति सस्वर्ह यन्मरुतो गोतमो वः ।
पश्यन् हिरण्यचक्रानयोदंष्ट्रान् वि धावतो वराहून्[12] ॥

राहूगणस्य गौतमस्यार्षम् । युज्यन्ते प्राणा[13]धियोजनमनेन शत्रव इति योजनं सेनालक्षणं बलमिहाभिप्रेतम् । एतत्त्यद् युष्मदीयं बलम् । मा[14]चेति न चेत्यते न ज्ञायते केनचित् सस्वः अन्तर्हितं ना[15]म । ह[16]शब्दस्तु पदपूरणः । देवतामाहात्म्यादन्तर्हितं युष्मदीयं बलं केनचि[17]दपि न चे[18]त्यते न दृश्यत इत्यर्थः । तत् कीदृशम् ? उच्यते । यद् बलं हे मरुतः, अहं गौतमः साकाङ्क्षत्वात् स्तुतवानिति वाक्यशेषः । वो[19] युष्मान् पश्यन् । हिरण्यचक्रान् हिरण्य[20]शब्दोऽत्रापि 'ताद्धितेन कृत्स्नवन्निगमा भ[21]वन्ति' इत्येवं हिरण्मये वर्तते । हिरण्मयानि

---

१—०क्षणा स्तुतिर्व० C. २—०योगल० C.
३—'म' इति त्रुटितम् C.
४—आदर्शपुस्तकेषु 'अस्तदृढानि' इति पाठः ।
५—'उच्चारयन्ति' इत्यादर्शपुस्तकेषु पाठः ।
६—'वस्तुनः' इत्यादर्शपुस्तकपाठः ।
७—अभिक्रन्दनानि C. ८—सं स्व तेभिः B.
९—'त्र' इति त्रुटितमादर्शपुस्तकेषु ।
१०—'मध्यमे देव०' इत्यादर्शपुस्तकपाठः ।
११—'यदुच्यन्ते' इति पाठ आदर्शपुस्तकेषु ।
१२—[ऋ० १।८८।५]'एतत्त्यन्न' इत्येव प्रतीकम् B.C.
१३—प्राणापियोज० C.
१४—'नामे (चे C.) ति नचेत्यनेन ना (ज्ञा C.) यके निचित्' इत्यादर्शपुस्तकेषु पाठः ।
१५—'०हितनाम' इत्यादर्शपुस्तकपाठः ।
१६—'ह' इति नास्त्यादर्शपुस्तकेषु ।
१७—'०निदमपि' इत्यादर्शपुस्तकपाठः ।
१८—चेत्यते B.
१९—'वः' नास्त्यादर्शपुस्तकेषु ।
२०—०ण्यशब्दात् B. ०ण्यशब्दान् C
२१—[नि० २।५] हवन्ति B. C

रथचक्राणि येषां मरुतां ते हिरण्यचक्रास्तान् हिरण्मयचक्ररथस्थानित्यर्थः[1]। अयो दंष्ट्रा[2]-स्थानीयत्वात् रथस्य उद्धि[3]त् अत्र दंष्ट्रे उच्यते[4]। अयोमयरथोद्धिन् लोहमयो द्विकरस्थानित्यर्थः[5]। विघावन इतश्चेतश्च विविधं धावनः। वरा[6]न् वरमुत्कृष्टं श्रेष्ठमिति पर्यायाः। हुशब्दो ह[7]न्तेर्वा हरतेर्वा ह्वयतेर्वा जुहोतेर्वा [8]जानार्थस्य। उ[9]त्कृष्टस्य शत्रोराहन्तॄन् उदकस्याहर्तॄन् देवानामाह्वातॄन् हविषो वा भक्षयितॄन्।

स्वसराणीत्यनवगतम्। अहानीत्यभिधेयवचनम्। स्वयं सारि[10]णीत्यर्थावगमः। स्वयमेव तानि गच्छन्ति नहि कश्चित् सारयन् दृश्यते। अपिवा स्वरादित्य एनानि सारयति। तदुदयास्तमयाभ्यां तानि गमयति। उदाहरणम्—

विश्वे देवासो अप्तुरः सुतमा गन्त तूर्णयः।
उस्रा इव स्वसराणि[11]॥

विश्वेदेवाः। किंविशिष्टाः? अप्तुरोऽप्[12]चिति उदकवचनमन्तरिक्षनाम[13] वा। तुरशब्दस्तुर्वतेर्हिंसार्थस्य। प्लवनं च गमनं प्लवतेर्ग[14]त्यर्थत्वात्। अप्सु उदके अन्तरिक्षे वा। क्षीते[15]रस्य कुर्वीनारम्। अप्सु वा गन्तारः[16]। उदकेऽन्तरिक्षे वा अप्रति[17]हतगमनशक्तय इत्यर्थः। अथवा तुरशब्दोऽन्त[18]र्णीतस्य तरतेः [19]स्तोतार आदित्यं प्रत्यभिगमयितारः। रश्मयो हि नैरुक्तानां विश्वेदेवाः, ते च रसानामादातारः। अथवा 'आप्लृ[20] व्याप्तौ' इत्यस्य तृजन्तस्य षष्ठ्येकवचन एतद्रूपम्। स्तुतिभिर्हविर्भिश्च देवानाप्तुर्यजमानस्य [21]सम्भृतं सुतं सोमम्। आगन्त[22] आगच्छत। आग[23]न्तेति च मध्यमपुरुषश्रुतिसामर्थ्याद्

१–स्थानीत्यर्थः B. C. २–दंष्ट्रस्था० B.
३–संदिग्धमिदं पदम्।
४–'उच्य' इत्येव B. 'ते' इति नास्ति C.
५–योः यरथोद्विवद् लोहं यो द्विकरस्थानीत्यर्थः B. अयं भ्रष्टविपर्यस्ताक्षरः पाठोऽनवगतार्थः। यथादृष्टमेवास्माभिर्लिखितः।
६–'पराभून परमुत्कृष्ट' इत्यादर्शपुस्तकेषु पाठः। B. पुस्तके 'पराभूर' इति नास्त्येव।
७–भन्तेर्वा C.
८–अत्र 'दानार्थस्य' इति 'अदनार्थस्य' इति वा पाठः संगतो भवेत्।
९–अस्य वाक्यस्य स्थाने आदर्शपुस्तकेष्वित्थं पाठः–'उत्कृष्टस्य शत्रोग (स्त्रा C.) हर्तृन्वा-दुदकस्यापा (ह्व C.) हत्वारे (रे C.) वानां हविषो वा भक्षं पितॄन्'।
१०–सारिणीत्यर्थरगम' C.
११–[ऋ० १।३।८] 'विश्वेदेवासः' इत्येव प्रतीकम् B. C.
१२–'अप्च' इत्येवादर्शपुस्तकेषु पाठः।
१३–०क्षगाम० B. १४–'र्थ' इति त्रुटितम् C.
१५–क्षितस्य C. अयं पाठो भ्रष्टविपर्यस्ताक्षरोऽनवगतार्थ एव। १६–गन्तारम् B.
१७–अप्रतिगत ग० C. १८–०न्तर्णीत० C.
१९–सन्दिग्धमिदं पदमनवगतार्थमेव।
२०–अप्तुया B. आप्तुया C. [धा० ?]
२१–सम्भृतः C. २२–'आगते' इत्यादर्शपुस्तकेषु पाठः।
२३–आगच्छन्तेति C.

विश्वेदेवासः, अप्तुर इत्येते आमन्त्रितप्रथमे[2] व्याख्यातव्ये । हे विश्वेदेवा अप्तुरः[3], यूयमागच्छत इति[4] । तूर्णयः क्षिप्रनामैतत्, क्षिप्राः । कथम् ? उस्रा इव स्वसराणि उस्रा[5] इति गोनाम रश्मिनाम वा । स्वसराणीत्यहर्नाम । यथा दोहार्थं गावः समस्ता रश्मयोऽहानि[6] धृत्वा गच्छन्ति तद्वत् समस्ता आगच्छतेत्यर्थः ।

शर्या इत्यनवगतम् । इषव इत्यभिधेयवचनम्[7] । शरमय्य इत्यवगमः । शरविकारश्चात्र संस्कारविशेषोऽभिप्रेतः । संस्कार्या[8] हि शरा इषव उच्यन्ते । प्रायविषयो वा मयट् शरप्रायाः शरमय्यः शरमयं स्रुवमयमिति यथा । निर्वचनप्रसक्तं[9] शरं निराह । शरः शृणातेर्हिंसार्थस्य । हिंसागतमेव प्रायेणोदाहरणम्—

> अर्धभि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षितम् ।
> शर्याभिर्न भरमाणो गभस्त्योः[10] ॥

इयरुणश्रुतस्त्योरार्षम् । हीति अभिशब्दश्चैकः[11] पदपूरणः । तृदि हिंसार्थे । अभिपोतौ[12] उच्यते । अभितर्तर्दिथेत्यर्थः[13], अभिहिंसितवान् सोममभिषुतवानित्यर्थः[14] । श्रवसा श्रवणीयेन अभिघातजेन ग्रावशब्देन[15] । उत्सं न उत्सम्[16] इति कूपनाम कूपमिव यथा कूपं[17] कश्चित् कचित् कूपखननपाषाणकुट्टकादिभिः[18] । कीदृशं कूपम् ? जनपानं जनाः पिबन्ति यस्मिन् तं जनपानम् । अक्षितमक्षीणोदकं[19] कर्तुं हिंस्यात् कुट्टयेत् तद्वदेव पानं सोममक्षीणं सर्वदेवानां समर्थमित्यर्थः । शर्याभिर्न द्वितीयोपमा । शरमयीभिरिषुभिः । यथा कश्चिद् भरमाणो धारयन् । किम् ? धनुः । गभस्त्योर्गभस्ती[20] इति बाहुनाम[21] । तत्सम्बन्धस्तु[22] हस्तयोर्द्रष्टव्यः । सप्तमी तृतीयास्थाने बाहुसम्बन्धाभ्यां हस्ताभ्यामभिहिंसितैः[23] स्यात्

१—'आतुरः' इत्यादर्शपुस्तकेषु पाठः ।

२—आमन्त्रत B. अमन्त्रत C.

३—आप्तुरः B. ४—०च्छते कि C.

५—उस्र इति C.

६—रश्मयो गा (वा) नि B.

७—इवेत्यभिधेय B. इत्यधेय C.

८—अत्र 'संस्कृताः' इति 'संस्कारेण' इति वा पाठः स्पष्टार्थो भवेत् ।

९—प्रशस्तं B. प्रशस्तः C.

१०—[ऋ० ९।११०।५] 'अभ्यभि' इत्येव प्रतीकम् B.C.

११—शब्दस्तश्चैकः B.

१२—अभिपोदा C.

१३—अभीततर्दिथे० B. ०तर्दित्यर्थः C.

१४—०भिषुतवानसीत्यर्थः C.

१५—ग्रामशब्देन C.

१६—'उत्स' इति नास्ति B. उत्सत्र C.

१७—रूपं C. अत्राग्रे कूपपदस्थाने सर्वत्र रूपपदप्रयोग एव C. पुस्तके ।

१८—खननं B. खाननं C.

१९—'अक्षितं' नास्त्यादर्शपुस्तकेषु ।

२०—नभस्त्योः C.

२१—आदर्शपुस्तकेषु 'बहुनाम' इति पाठः ।

२२—०न्धात्तु हस्तयो द्रष्टव्यः C.

२३—०भिसंसितः B. ०भिसिंसितः C.

सहृत्। एवं पदान्तरसम्बन्धसामर्थ्यात् दार्या इवेव इत्युपपन्नम्। अङ्गुल्य इत्युपपाठस्तोपः। अङ्गुलिनामत्वेन पठितत्वात्[2] पाठसिद्धित्वादभिधेयस्य।

अर्क इत्यनेकार्थम्। अर्चतेरौणादिकः कर्मसाधनः। यस्माद्देवमर्चन्ति। मन्त्रैः करणसाधनैः[3]। अन्ये कर्तृसाधनः[4]। अर्चतिरपि जीवनार्थः। जीवन्ति हि तेन भूतानि। अतश्च[5] धात्वर्थानवगमात्, अथापि घञ्[6]स्मरणात् पचादिष्वमिफल[7]त्वानुपपत्तेरनवगमः। वृक्षः प्रसिद्ध एव अर्चतिश्चात्र कटुकगावार्थः। यतो[8] दर्शयति स वृक्षो[9] वृतः कटुकिम्रा। वृषत्वादिषु[10] वृधादिषु वा वृक्कृतत्वात् प्रक्षेप्तव्यः। देवमन्त्रयोरेकमेवोदाहरणम्। अन्ने[11] मृग्यम्। अत एव केचिन्न पठन्त्येवान्ने[12]। तथा[13] वृक्षे प्रसिद्धत्वादनुपन्यासः। उदाहरणमस्य[14]—

[ इति दशमस्या-( पञ्चमस्या-) ध्यायस्य
चतुर्थः खण्डः[15]। ]

---

१–'त्' इति त्रुटितम् C.

२–अङ्गुलीनामत्वेन पठितत्वात्तो सिद्धि० B. वाक्यमिदं भ्रष्टविपर्यस्ताक्षरत्वादनवगतार्थमेव।

३–साधनं C. अत्र 'मन्त्रे करणसाधनः' इत्येव पाठः संगतो भवेत्।

४–साधनाः B. अत्र 'अन्ने कर्तृसाधनः' इति पाठः संगतो भाति।

५–'व्रतश्च धात्वर्थादिवगमात्' इत्यादर्शपुस्तकेषु पाठो दृश्यते।

६–घड् C.

७–अयं सन्दिग्धः पाठोऽनवगतार्थः। यथादृष्टमेवास्माभिर्लिखितः।

८–'यत्वो' इत्यादर्शपुस्तकेषु पाठः।

९–'वृक्षः' इत्यादर्शपुस्तकेषु पाठः।

१०–वृधवादिषु C. इदं वाक्यं भ्रष्टविपर्यस्ताक्षरमनवगतार्थमेव।

११–'अभे मृग्यम्' इत्यादर्शपुस्तकपाठः।

१२–'०न्त्येवाग्नि' इत्यादर्शपुस्तकपाठः।

१३–रक्ता B. अत्ता C. अत्र कदाचित् 'अथ' इति पाठो भवेत्।

१४–०हरणं स्य C.

१५–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्निर्देशो न दृश्यते.

# [ अथ पञ्चमः खण्डः[1] । ]

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे[2] ॥

गायतिरर्चतिकर्मा । गायन्ति स्तुवन्ति त्वाम् । के ? गायत्रिणो गायत्रं साम[3] ते त[4]द्वन्त उद्गातारः । नच त एव केवलाः । किं तर्हि ? अर्चन्ति स्तुवन्ति अर्कं देवं[5] त्वाम् [6]अर्किणो मन्त्रोऽप्यर्क उच्यते तद्वन्तो होतारोऽपि । [7]ब्रह्माणो ब्राह्मण ऋत्विक् तत्पुरुषास्तु [8]ब्राह्मणाः शं[9]स्योनीन[10]वेदस्येदं बहुवचनम् । ब्राह्म[11]णो अपि त्वां हे शतक्र[12]ते बहुकर्मन् बहुयज्ञ इन्द्र । [13]उद्वंशमिव येमिरे यथा [14]हि कश्चिद् वं[15]शमुद्यच्छति एवमुद्येमिरे उद्य[16]च्छन्ति उत्क्षिपन्तीत्यर्थः ।

नियमप्रसङ्गादाह । वंशो व[17]नशयो जायत इत्यर्थः । वननाद्वा वंशाभिप्रायमेतत् । स [18]हि संसेव्यते मनोहारिस्वरत्वाद् गीतिव्यसनिभिः श्रूयते ।

पविरित्यनवगतमनेकार्थं च । रथनेमिरित्यभिधेयवचनम् । रथश्चक्रधारेत्यर्थः । [19]वज्रोऽपीति । अतोऽनेकार्थम् । इह तूदाहरणे रथसम्बन्धान्नेमिरित्युच्यते । यद् यस्माद् विपुनाति विपाटयति भूमिम् । पुनातेरर्थान्तरवृत्तित्वमनवगमत्वम् । औणा[20]दिक इकारो नामक[21]रणो द्रष्टव्यः । उदाहरणम्—

उत स्म ते परुष्ण्यामूर्णा वसत शुन्ध्यवः ।
उत पव्या रथानामद्रिं भिन्दन्त्योजसा[22] ॥

श्यावा[23]श्वस्यार्षम् उतशब्दोऽप्यर्थे । स्मशब्दश्[24]चार्थे । अपिच ते प्रकृता मरुतः ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य च निर्देशो न दृश्यते ।

२–[ ऋ० १।१०।१ ] 'गायन्ति त्वा' इत्येव प्रतीकम् B. C.

३–सोम C. ४–'व' इति न दृश्यते C.

५–अत्र 'देवं' इति पाठो युक्तो भाति ।

६–अर्कैंम: मन्त्रात्रार्थे C.

७–'ब्राह्मण:' इत्यादर्शपुस्तकपाठः ।

८–ब्राह्मण: B. ब्राह्मण C.

९–च्छंस्योनी C. अयं सन्दिग्धोऽनवगतार्थः पाठः

१०–०नवस्येदं B.

११–'ब्राह्मणोऽपि' इत्यादर्शपुस्तकपाठः ।

१२–शतक्रतो C. १३–उद्विशमिव C.

१४–'हि' इति न दृश्यते B.

१५–कंसशमु० B. वंशसमु० C.

१६–उद्यच्छन्ति C. १७–वनेशे C.

१८–स भि स० C. १९–वज्रोवीति C.

२०–ऊणादिक C.

२१–'नामकरणे' इत्यादर्शपुस्तकपाठः ।

२२–[ऋ० ५।५२।९] 'उत स्म ते' इत्येव प्रतीकम् B.

२३–श्यावाश्वस्यार्षम् C.

२४–'स्मशब्दार्थे' इत्यादर्शपुस्तकपाठः ।

परुष्ण्याम् इरावतीं परुष्णीत्याहुः । माध्यमिका वा वाक् परुष्णी पर्ववत्त्वात्[2] तस्याम् । ऊर्णाः छन्नाः वसत व्यत्ययेनायं मध्यमपुरुषः वसन्ति न्यवतिष्ठन्तीत्यर्थः[3] । शुन्ध्यवः[4] शोधयितारः मेघस्य यावत्तत्रोदकं सञ्चार्यस्यापनेतार[5] इत्यर्थः । अथवा शुन्ध्युर्मद्गुरुच्यते[6] । लुप्तोपमं चेदं द्रष्टव्यम् । शुन्ध्यव इव । यथा मद्गव इरावत्यां नद्यां छन्ना वसन्ति व्यवतिष्ठन्ते तद्वन्मरुत इत्यर्थः । उत अपि च[7] पव्या नेम्या चक्रधारया रथानामवयवभूतया । अद्रिं मेघम् । भिन्दन्ति[8] मेघस्योपरि रथेन चङ्क्रम्यमाणा रथचक्रधारया मेघान् विदारयन्तीत्यर्थः । ओजसा बलेन । कालभेदाद् द्वे कर्मणी मरुताम् । वर्षाभ्योऽन्यत्राष्टौ मासान् छन्ना वसन्ति न स्वयं दृश्यन्ते[9] नाप्येषां किञ्चित् कर्मेत्यर्थः । वर्षासु त्वाविर्भूतरूपा रथचक्रधारया अद्रिं[10] भिन्दन्ति[11] । ब्राह्मणमप्यस्मिन्नर्थे उदाहरन्ति । सान्तपनीयं हविः प्रकृत्य श्रूयते—

देवा वै वृत्रस्य मर्म नाविन्दन्
तं मरुतः क्षुरेणे[12] तीक्ष्णधारया व्यैयुः[13] ।

---

१–अत्र सर्वत्रापि परुष्णीपदस्थाने वरुष्णीपदप्रयोग एव C. पुस्तके दृश्यते ।

२–पर्वतत्वात् C.

३–वतिष्ठ-तीत्यर्थः C. 'न्यव' इत्यस्य स्थाने क्वचित् 'व्यव' इति पाठः स्यात् । परस्मैपदोपगतस्य तिष्ठतेः परस्मैपदत्वं चिन्त्यम् । 'समवप्रविभ्यः स्थः [पा० १।३।२२]' इत्यनेनात्मनेपदविधानात् ।

४–शुध्य च C.

५–'०दकं सञ्चार्यस्या०' इति पाठः संगतो भवेत् । अत्र 'तत्रोद' इत्यस्मात्परं 'कं सञ्चा०' इत्यस्माच्च पूर्वं B. पुस्तकेऽयमधोगतः पाठो दृश्यते–'नप्रदर्शनार्थं जैपत्राय जयतामायत्यर्थः । अर्थप्रापवचनं चेदं संग्रामार्थो हि मद इहोपात्तः । जयकरश्च मदः संग्रामार्थे भवति न संमोहकरः । मधु सोममित्यौपमिकमुपमाप्रयुक्तं मधुसादृश्यात् स्वादुत्वादेः मधु सोम मादयतेः विनापि चन्द्रेन सोमे मधुशब्दस्य प्रवृत्तिनिमित्तान्तरवचनमेतत् । मादयतेर्वा मधु सोममित्यर्थः । मद तृप्तौ तृप्यन्ति सोमेन देवताः । इदमपीतरन्मधु माक्षिकं भ्रामरक्षौद्रं वा एतस्मादेव धातोः । तेनापि हि तृप्यन्ति पातारः ।
इति स्कन्दस्वामिकृतायां निरुक्तटीकायां,
नवमस्याध्यायस्य चतुर्थः पादः ।'
अयं च पाठो जठरपदव्याख्यानावसरे चतुर्थस्य नवमे द्रष्टव्यः । अत्र प्रमादाद् केनचिल्लिखितः । 'चतुर्थः पादः' इत्यस्य च स्थाने 'प्रथमः' इति पाठो दृष्टः ।

६–शुद्धिमुद्गुरु० B.

७–प्रपि च B. प्रवि च

८–'भन्दति' इत्यादर्शपुस्तकपाठः ।

९–'दृश्यते' इत्यादर्शपुस्तकपाठः ।

१०–निद्रिं C.

११–'भिन्दति' इत्यादर्शपुस्तकपाठः ।

१२–'क्षुरपविना' इति मुद्रितमूले पाठः ।

१३–[ मैत्रा० सं० १।१०।१४ ]

मिश्रेण विपूर्वस्तु पृथक् विश्लिष्टसर्वाङ्गबन्धनं कुर्वन्त इत्यर्थः । तस्मादुपपन्नं पवी[1] रथनेमीति ।

वक्ष[2] इत्यनवगतमनेकार्थं च । तत्तु प्रसङ्गेन व्याख्यातं वहेः । 'उपो अदर्शि' इत्यत्र[3]।

धन्वेत्यनवगतम् । अन्तरिक्षमित्यभिधेयवचनम् । धन्वन्ति गच्छन्ति धवं सन्ति[4] अस्मादाप इति निर्वचनम् । धन्वना इत्यवगमः । 'धन्वना गा[5]' इति च धनुषि च[6] प्रयोगदर्शनादनेकार्थत्वमदर्शनार्थ उपन्यासो द्रष्टव्यः । उदाहरणम्—

य: परस्या: परावतस्तिरो धन्वातिरोचते ।
स नः पर्षदति द्विषः[7] ॥

अग्निपुत्रस्य वत्सस्यार्षम् । य[8] इत्यग्नेर्निर्देशः सूक्तस्याग्नेयत्वात् । योऽग्निः[9] परस्याः परावतो[10] यद्दूरं तस्मादत्यन्तदूरादित्यर्थः । तिरःशब्दस्य 'विभाषा कृञि[11]' इति गतिसंस्मरणं[12] च श्रूयते, नद्यौत्र[13] क्रियापदमध्याहार्यं तिरस्कृत्य । धन्व अन्तरिक्षमन्तरालव[14]र्तिनमतिरोचते सुदीप्य इत्यर्थः । अथवा तिर इति प्राप्तनाम । अत्रो[15]न्युपसर्गश्चेतेस्तत्रापि क्रियापदो[16]पन्यासे उक्तं प्रयोजनम् ।[17]......... ।

सिनमि[18]त्यनवगतम् । अन्नमित्यभिधेयवचनम् । सिनाति भूतानीति[19] धातुदर्शनम् । 'षिञ्[20] बन्धने' इत्यस्य कर्तरि औणादिको नक्[21] प्रत्ययः । उदाहरणम्—

इमा उ वां भूमयो मन्यमाना युवावते न तुज्या अभूवन् ।
क्वत्यदिन्द्रावरुणा यशो वां येन स्मा सिनं भरथः सखिभ्यः[22] ॥

---

१–पविरथने B. परिरथने॰ C.
२–लक्षण इत्य॰ B. लक्षणमित्य॰ C.
३–[निरु॰ ४।१६]
४–'धवं सन्ति' इति सन्दिग्धः पाठः । कदाचिदत्र 'अधो वसन्ति' इति पाठः स्यात् ।
५–[ऋ॰ ६।७५।२] धन्वनागा C.
६–अयं 'च' कारोऽधिक एव भाति ।
७–[ऋ॰ १०।१८७।२] 'यः परस्याः' इत्येव प्रतीकम् B. C.
८–'य' इति त्रुटितम् B.
९–'योनिः' इत्यादर्शपुस्तकपाठः ।
१०–परावतं यद्दूरंस्तस्मा॰ B. C.
११–[पा॰ १।४।७१] कृञिरिति B. कृणीरिति ।
१२–स्मरणात्त श्रू॰ C.
११–'यत्र' इत्येवमादर्शपुस्तकपाठः ।
१४–॰न्तरा उपवर्ति॰ B.
१५–अमीत्युप॰ C. अयं पाठः सन्दिग्धः ।
१६–क्रियोपन्यासे B.
१७–अत्रादर्शपुस्तकेषु भूयान् पाठस्त्रुटित इति प्रतीयते ।
१८–'सिनमित्यनवगतम् । अन्नमित्याभिधेयवचनम्' । एतदपि त्रुटितग्रन्थभागान्तर्गतमेव वाक्यद्वयम् । अस्माभिरेवात्र लिखितम् ।
१९–सिनासि भूतानीति C.
२०–[धा॰ ९ । ५] षिङ् C.
२१–[उणा॰ ३ । २] नकं C.
२२–[ऋ॰ ३।६२।१]'इमा उवां' इत्येव प्रतीकम् B. C.

विश्वामित्रस्यार्षम् । इमा इति सामर्थ्यात् स्तुतीनां प्रतिनिर्देशः । इमाः स्तुतयः । उकारः[1] पदपूरणः । मां युवाम् । किंविशिष्टाः स्तुतयः । भृमयो भ्रमणशीलाः । मन्यमानाः मन्यतेरर्चतिकर्मण एतद् रूपम् । अर्चन्त्यः स्तुवन्त्यः । युवाभ्यां युष्मद्धते[2] युवां स्तुत्यतया यष्टव्यतया च यस्तद्धामस्मै युष्मं च । तुञ्ज्या[3] तुञ्जतेर्दानार्थस्य पूर्ववत् । सम्प्रति दाना-हरता [4]स्वप्रतिपद्यत इत्यर्थः । पृच्छात्वाभ्यदिन्द्राय वरुणः[5] । कार्यकारणयोरभेदोपचारात् कार्यशब्दस्यायं कारणे प्रयोगः । यद्वासः कारणभूतं दानसामर्थ्यम् । वां युवयोः । येन स्मशब्दः पादपूरणः । सिनम[6]र्द्धम । भाथः प्रापयथो दत्त इत्यर्थः । सरिभ्यः स्तुत्यरते तृ-लक्षणे च सख्ये वर्तमानेभ्योऽस्मदादिभ्यः ।

इत्थाँ[7] इत्यनवगतः । संस्कार्यत्वं च निपातनादनेकार्थत्वं च तत्पुनरेतत् [8]अमुथा इत्येतेन व्याख्यातमर्थमे[9] । यथासाविधं[10] तेन कृतनिर्वचनेन पदद्वयेन प्रथमो[11]परस्तन्तरो अस्मादिति प्रकृत्यर्थः । यथेत्युपमानमिति तथाशब्दार्थः । एवमर्थेति व्याख्यातम् । यथा चायममुथेति एवमित्थेत्यपि । अयमेकै[12]तरो युष्मान् । तथा इति चोपमायामि[13]ति एवमनेन प्रकारेण अमुथेत्येतेन व्याख्यातं द्रष्टव्यम् । अनेकार्थत्वं च यथा हेतौ चेति प्रकारवचने हेत्वर्थतायामुपमायां च द्रष्टव्यम् । उदाहरणम्—'अत्राह गोरमन्वत' इति तत्पुनर्न-[14]घर्मे प्रसङ्गेन व्याख्यातम् 'अमुत्र चन्द्रमसो गृहे' इति[15] ।

सचा इत्यनवगतो निपातः । सहेत्यर्थः । उदाहरणम्—

अग्निनेन्द्रेण वरुणेन विष्णुनादित्यै रुद्रैर्वसुभिः सचाभुवा ।
सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना[16] ॥

श्यावाश्वस्येयमार्षम् । अग्निना इन्द्रेण वरुणेन विष्णुना आदित्यै रुद्रैर्वसुभिः

---

१–उकारः पादपूरणम् B. इकारः पादपूरणम् C.
२–'युष्मन्धने' इत्यादर्शपुस्तकपाठः ।
३–तुञ्जातुजते जनार्थं B. तुञ्ज्यां तुज० C. ।
४–सम्प्रानहेरताम प्रति० C. भ्रष्टविपर्यस्ताक्षरः सन्दिग्धोऽयमनवगतार्थः पाठः ।
५–अयं विपर्यस्ताक्षरः पाठो नावगतः ।
६–सिनमन्तम् B. सिनममन्तम् C.
७–'इता' इत्यादर्शपुस्तकपाठः । आर्थस्य निपात इत्यस्यापेक्षया पुंप्रयोगः । अन्यथा तु 'अनवगतम्' नपुंसकं स्यात् ।
८–इमुथा B. अमृधा C.
९–[ निरु० ३ । १६ ]
१०–'यथासाविद्य' इति 'यथासाविध्य' इति वा पाठोऽत्र भवेत् ।
११–'प' इत्यस्य स्थाने 'व' इति वर्तते C.
१२–'क' इत्यस्य स्थाने 'त' इति पाठः C.
१३–'चोपमायामिति' इत्यादर्शपुस्तकपाठः ।
१४–[ निरु० ४ । २५ ]
१५–अत्रत्यापदव्याख्याने भूयान् पाठो विपर्यस्ताक्षरोऽन्यथाभूतश्चादर्शपुस्तकेषु । अस्माभिस्तु साम्प्रतम'नवबुध्यमानो यथादृष्टमेवात्रलिखितः ।
१६–[ऋ० ८ । ३५ । १] मन्त्रस्य प्रतीकम् 'श्यावाश्वस्येयमार्षम्' इति च नास्त्यादर्शपुस्तकेषु ।

सचाभुवा सहभुवौ । सचाशब्दः[1] सहार्थे । सर्वत्र च सहयोगलक्षणा तृतीया, सहभुवौ सहभाविनौ अग्न्यादिभिः सहिताविति अर्थः । सजोषसौ संप्रीयमाणौ, * उषसा सूर्येण सोमं पिबतमश्विना हे अश्विनौ ।

चिदित्येष निपातोऽनुदात्तः[2] पुरस्तादेव पदे[3] व्याख्यातः । 'चिदित्येषोऽनेककर्मा' इति । 'चतुरश्चिद्ददमानात्[4]' इत्यादि । स एव रूपसामान्यात्, अथापि पशुनामेह भवति नैगमे प्रकरणे । स चोदात्तश्चिनोतेश्चयतेर्वा । उदाहरणम्—

चिदसि मनासि धीरसि

अनेन च यजुषा सोमक्रयणी गौरुच्यते । चिदसि सर्वा[6] इति परस्तात् तच्छब्द-श्रुतेर्यच्छब्दाध्याहारः कर्तव्यः । यात्वञ्चितास्यां[5] भोगाः क्षित्यादयः । या वा चेतसे सा सिञ्चितासि[9] भोगैश्चिद्रूपा चासीत्यर्थः । मनासीति मन्यतेः[10] कान्तिकर्मण एतद्रूपम् । कमनीयासि[11] । धीरसि धीरिति[12] कर्मनाम प्रज्ञानाम[13] वा कर्म चासि कर्म वा प्रज्ञा[14] वा । तत्कारणत्वाच्चैवमुच्यते । कर्मणः प्रज्ञाया हेतुरसीत्यर्थः । त्वयां हि तस्यां बुद्धिकर्मणी तायेते । दक्षिणा चासि दक्षिणाद्रव्यमध्ये गौश्चाश्वश्चेति समाम्नानात्[15] । यज्ञियासि यज्ञार्हा चासि । क्षत्रिया चासि क्षत्रशब्दो धनवचनः स्वार्थे तद्धितो धनं चासि । अर्हार्थे एव वा धनमर्हसीत्यर्थः । अदितिरसि अदीना[16] अक्षीणा चासीत्यर्थः । उभयत-श्शीर्ष्णी उभयतः शिरो यस्याः सा उभयतः शिरसा[17]ऽङ्केत्यर्थः । कथम्? मुखत आत्मनः स्वभूतेन पृष्ठतः प्रसवकाले प्रजायमानस्यापत्यस्य[18] या त्वमेवं चासीत्यर्थः । आदिरसि[19] अदीना अक्षीणा चासीत्यर्थः[20] । सा नोऽस्माकं सुप्राची सुप्रगमना क्रयार्थं सोमं प्रति । सुप्रतीची सुप्रगमना निष्क्रीता च सती अस्मान् प्रति एधि । ऊंमल[21] मित्र इत्यादिभ्यः ।

---

१–'व्द' इति त्रुटितमादर्शपुस्तकेषु ।
२–निपातो नानुदात्तः B. C.
३–[ निरु० १ । ४ ]
४–[ ऋ० १ । ४१ । ९ ॥ निरु० ३ । १६ ]
६–[मैत्रा० सं० १ । २ । ४] चिदसि मनासि' इत्येव प्रतीकम् B. C.
७–सान्ना C. अत्र 'मना' इति भाति ।
८-अयं पाठः सन्दिग्धः ।
९-भोगः B. १०–'सि' इति नास्ति C.
११-'कान्तिक०' इत्यादर्शपुस्तकपाठः ।
* 'संप्रीयमाणौ' इति युक्तम् ।
१२–कननीयायासि (मि C) B. C.
१३–धीरिति नास्त्यादर्शपुस्तकेषु ।
१४–प्रज्ञा वा नाम वा B. C.
१५–प्रज्ञ वा C.
१६–'साम्नातात्' इत्यादर्शपुस्तकपाठः ।
१७–'आदीना' इत्यादर्शपुस्तकपाठः ।
१८–सन्दिग्धोऽनवगतार्थः पाठः ।
१९–'न' इति त्रुटितम् B.
२०–अन्द्रिरसि B.
२१–'प्रति' इति न दृश्यते B.
२२–विपर्यस्ताक्षरः सन्दिग्धः पाठः ।

गच्छति क्रयणाय त्वाम्। पथि वा देवी पन्थातु पूषा च पथि रक्षतु अध्वनि पातु अध्वनि रक्षतु। इन्द्रायाध्यक्षाय कृताकृतस्यावेक्षणार्थं सर्वदा। अधि उपरि अक्षिणी यस्य सोऽध्यक्ष उच्यते। तेनेन्द्रस्यैव विशिष्टस्यार्थोऽयमर्थः। अन्वेनं माता मन्यतां माता अत्र उपसर्गश्रुतिसामर्थ्यात् मन्यतेः सर्वत्रानुषङ्गः। अनुमन्यतां च पिता अनुभ्राता च। किंविशिष्टः? सगर्भ्यः समाने गर्भे भवः। अनुसखा सयूथ्यः समाने यूथे भवः। या च तेऽनुमन्यते सा भेदेपि दौनादियुगे देवमच्छअभिःभिगच्छ इन्द्राय इन्द्रार्थाय। कतमं देवम्? सोमम्। अभिगनवतीश्चवर्ती सतीम्। रुद्रस्त्वा त्व मावर्तयतु। स्वस्ति क्रियाविशेषणमेतत्। कथमावर्तयतु? अविनाशम्। किंविशिष्टो रुद्रः? सोमः सखा यस्य तेन चापत्यौ पुनरेहि अस्मान् प्रतीति शेषः। चिदित्यस्य व्याख्यानं चित-कृत्यादि।

आ इत्याकार उपसर्गो यः पुरस्तादेव 'आ इत्यर्वागित्यर्थे' इत्यत्र व्याख्यातः। पुनैश्च अथाप्युपमार्थे दृश्यत इति निपात इत्युक्तः। इहाध्यर्थं इत्याह। अध्यर्थश्च 'अधीत्युपरिभाव' इत्युक्तम्। उदाहरणे पदविभागं दर्शयितुमाह। अत्र आँ अपः अग्ने अध्य इत्यर्थकथनम्। उदाहरणम् इति।

कर्तु प्रियाय धाम्नेमनामहे स्वक्षत्राय स्वयशसे महे वयम्।
आमेन्यस्य रजसो यदभ्र आँ अपो वृणाना वितनोति मायिनी[15]

प्रतिभानोरायम्। कमिति सुखनाम अतश्चतुर्थ्या अदादेशः। उकारः पदपूरणः। सुखाय प्रियाय च धाम्ने धाम्नः स्थानाय स्वर्गाय सुखं प्रियं च स्वर्गाख्यं स्थानं प्राप्तुमित्यर्थः। मनामहे याच्नाकर्माये याचामहे। कान्? विश्वेदेवान्। कुत एतत्। सूक्तस्य वैश्वदेवत्वात्। कीदृशाय धाम्ने? उच्यते। स्वक्षत्राय क्षत्रं धनं स्वयमेव यस्मिन्नाश्रितं धनम्। स्वयशसे स्वयमेव च यशः कीर्तिलक्षणं यस्मिंस्तस्मै। महे महते। वयमामेन्यस्य मेन्यं मा-

१-धाम B.
२-पदि B. वदि C. ३-अति B.
४-प्रसर्गश्रुत सा० B. प्रसर्गश्रु० C.
५-भेदे वि दाना० B C. ६-वामं देवम् B.
७-०तीणवती B. अयं सन्दिग्धः पाठः।
८-आविनाशम् C.
९-अयं सन्दिग्धः पाठः।
१०-अयं सन्दिग्धः पाठः।
११-[निरु० १। ३]
१२-इपुनश्च B. अत्र कदाचित् 'अत्र पुनश्च' इति पाठो भवेत्।
१३-[निरु० १। ३]
१४-० त्यर्थः कथनम् B. C.
१५-[ ऋ०५।४८।१ ] 'कदु प्रियाय' इत्येव प्रतीकम् B. C.
१६-' प्रतिहानो रा० ' इत्यादर्शपुस्तकपाठः।
१७-' किमिति ' इत्यादर्शपुस्तकपाठः।
१८-' क्षत्रवन्धनं ' इत्यादर्शपुस्तकपाठः।

तव्यमतिमहत्त्वात् सर्वदेवाभिमुख्येन मातव्यं न कदाचिदपि मितं[1] निर्मातृतया[2] जगतः। आमेयो रजोऽन्तरिक्षलोकस्तस्य रजसः षष्ठीश्रुतेः सम्बन्धिनि अभ्रे आ रजससम्बन्धिनोऽभ्रस्याधि उपरि स्थितेति वाक्यशेषः । अप उदकादीनि[3] तृणानि[4] संभजमाना वृष्टिं ददतीत्यर्थः। यदुक्तविशेषणं स्थानं तत् प्राप्तिस्थितिहेतुभूतसम्पादनद्वारेण वितनोति विस्तारयति। मायिनी माया प्रज्ञा[5] प्रज्ञावती[6]। का[7] पुनरसौ ? सामर्थ्यान्माध्यमिका[8] वाक्।

द्युम्नमित्यनवगतम्। द्योततेरिति धातुनिर्देशः । द्योतनमित्यर्थंगमः[9] । यशो वा अन्नं वेत्यभिधेयवचनम्। उदाहरणम्—

> "शतं ते शिप्रिन्नूतयः सुदासे सहस्रं शंसा उत रातिरस्तु ।
> जहि वधर्वनुषो मर्त्यस्यास्मे द्युम्नमधि रत्नं च धेहि[11]" ॥

शिप्रे हनू नासिके वा ताभ्यां तद्वान्[12] ऊनयस्तर्पणानि धाम्नो गमनानि वा सन्तु अस्मिन् यज्ञे नित्यप्राप्तत्वं नित्यागमनं[13] वेत्याशास्महे । सुदासे सुदाः कल्याणदानो यजमानस्तस्मै सुदासे[14] कल्याणदानस्य यजमानस्यानुग्रहार्थमित्यर्थः । नच केवलं बहूनि तर्पणान्येवं गमनानि[15] वा। किं तर्हि ? सहस्रं शंसाः स्तुतयः । उत रातिर्दानं[16] सवनीयपुरोडाशादेः। अस्तु भवतु अस्मिन् यज्ञे। किञ्च जहि विनाशय। किम्[17] ? वधः वज्रनामेदमायुधमात्रोपलक्षणं चेह द्रष्टव्यम् । स्वमायुधमित्यर्थः । अस्मान् वनुषो हिंसितुमिच्छतो मर्त्यस्य[18] मनुष्यस्य स्वभूतम्। अस्मे अस्माकम्। द्युम्नं यशोऽन्नं वा। अधि मर्त्यस्य[19] स्थाने । रत्नं चानेकप्रकारं पद्मरागादि धेहि निधेह्यस्मभ्यमित्यर्थः।

इति स्कन्दस्वामिकृते विवरणसमुच्चये दशमस्या-
[ पञ्चमस्या[20]-] ध्यायस्य प्रथमः पादः।
[ पञ्चमश्च खण्डः समाप्तः[20] ]

# [अथ दशमस्य (पञ्चमस्य) द्वितीयः पादः][1]

ओं पवित्रम्[2]। किमर्थमिदम्, यावताऽस्मिन्[3] प्रकरणेऽनेकार्थमनवगतं व्याख्यायते? अवगतञ्चैतत्, 'पुवः[4] संज्ञायाम्[5]' इति। इतो नामकरणार्थमस्त्ययमवगमः किन्तु संज्ञायामिति प्रत्ययान्तोपाधिः। स[6] चायं प्रकृतिप्रत्ययसमुदायं कुशातृणविशेषविषयतया रूढो मन्त्रादौ बहुमन्त्रः पवित्रमुच्यते।

एवं तर्हि 'कर्तरि चर्षिदेवतयोः[7]' इत्येवं भविष्यति[8]। एवमपि ऋषिदेवतयोरित्युच्यते। मन्त्रो न देवता नापि ऋषिः। उच्यते। दर्शनाद् ऋषिर्मतो वेदः। वेदस्[10]ह्यदिव्यचक्षुरेतद्[11] दृश्यते न पश्यतीति ऋषिर्मन्त्रः[12] इत्युपपन्नो मन्त्रे पवित्रशब्दस्यावगमः। रश्म्यादिषु च देवतात्वात्।

एवं तर्ह्य[13]नेकार्थत्वादुपन्यासः। स च[14] मन्त्रादिषु करणसाधनः। अग्न्यादिषु [15]कर्मसाधनः। तदेतत् 'पवित्र पुनातेः, मन्त्रः[16] पवित्रम्' इत्यादिना भाष्यकारेण दर्शितम्। उदाहरणम्—

> येन देवाः पवित्रेणात्मानं पुनते सदा।
> येन सहस्रधारेण पावमानीः पुनन्तु[17] नः॥

ऋषिः, तस्यार्षम्। येन कारणभूतेन देवा दातारो हविषाम्, के? सामर्थ्याद् ऋत्विग्य[18]जमानाः पवित्रेण मन्त्रेणात्मानं पुनते[19] शोधयन्ति। सदा सर्वदा। तेन किंविशिष्टेन? सहस्रधारेण धारेति वाङ्नाम सहस्रमित्यपि बहुनाम बह्वी धारा वा ऋग्यजुःसामलक्षणा[20]मौवा विशेषाभावेन सम्बन्धिनी यस्य सः सामान्येन सहस्रधारेण पवमानः

---

१–अत्र C. पुस्तके पादस्य प्रारम्भो नैव निर्दिष्टः।
२–प्रवि० C. ३–०तास्मि प्र० C.
४–स्तुव B. C.
५–[ पा० ३।२।१८५ ] सञ्ज्ञायामि C.
६–'स चायं प्रकृतिप्रत्ययान्तोपाधिः' इत्यधिकः पाठोऽत्र वर्तते।
७–[ पा० ३।२।१८६ ] देवत० B. C.
८–अवगम इति शेषः।
९–नामनि B. C.। एतच्च सत्यनेनापि योगेनावगमो न सम्भवति। तथाच पवित्रपदनिर्वचनमत्रावश्यकमेव तत्प्रकृतिप्रत्ययावगमनार्थमिति सिद्धान्तिवचनम्।
१०–० त्वादि० C. ११–० रेत द्द० C.
१२–ऋषिभिर्मन्त्र० B.C. १३–तह्यनेका० C.
१४–च न मन्त्रा० C. १५–कर्म सा० B. C.
१६–०नानेर्नु० प० B. ० न्त्रः प्र० C.
१७–[ साम०, उ०, ५।२।८।५ ] 'पावमान्यः पुनातु माम्' इति दुर्गवृत्तौ मूलमन्त्रपाठः।
१८–० त्वग्यज० C.
१९–० णात्मानं. पुनाते शोधयति C.
२०–ऋगादिलक्षणाभिरित्यर्थः। अत्र '० लक्षणभाग' इति पाठो युक्तः स्यात्।

पूयमानः सोमः पुनातु नोऽस्मानिति ।

रश्मयः पवित्रम् । उदाहरणम्—

वाचस्पतये पवस्व वृष्णो अंशुभ्यां गभस्तिपूतः ।

देवो देवानां पवित्रमसि येषां भागोऽसि[2] ॥

वाचोऽधिपतिरिन्द्रस्त[3] * पवस्व[4] क्षर पवतेः[5] क्षरार्थत्वात्[6] । कीदृशस्येन्द्रस्यार्थाय ? वृष्णो वर्षितुः[7] । कुतः क्षर ? उच्यते । अंशुभ्यां व्यत्ययेनेदं द्विवचनं[8] बहुवचनस्य स्थाने अंशुभ्यः । अंशुशब्देन लतावचनात् लताभ्य इत्यर्थः । गभस्तिपूतः गभस्तिभी रश्मिभिः पूतोऽसि योऽरण्ये । किञ्च देवस्त्वं दानादिगुणो देवानां दातॄणां हविषामृत्विग्यजमानानां पवित्रमसि प्रापयितासि[9] । केषाम् ? येषां भागोऽसि भज्यत इति भागः[10] । ये त्वां यज्ञे वा भजन्त[11] इत्यर्थः ।

अन्ये तुल्यत्वात् प्रीतिप्रतीतस्य[12]—

पवमान महार्णो वि धावसि सूरो न चित्रो अव्ययानि पव्यया ।

गभस्तिपूतो नृभिरद्रिभिः सुतो महे वाजाय धन्याय धन्वसि[13] ॥

इत्युदाहरन्ति । पवमान अत्रिणामार्षम्[14] । हे पवमान सोम । महि महत्[15] । अर्णं उदकं[16] वसतिः[17] ये पर्येकधनाख्यम् । विधावसि विविधं गच्छसि त्वम्[18] । सूरो न सूर्य[19] इव यथा सूर्यश्चित्रो[20] विचित्ररश्मिना[21] तेजसा वा मृदुमध्यादिमात्रतया[22] वैचित्र्यात् विचित्र-

१–' पुन ' इत्यन्त एवादर्शपुस्तकेषु पाठः ।

२–[ मैत्रा० सं० १।३।४ ] ' वाचस्पतये ' इत्येव प्रतीकम् B. C.

३–' ० पतयोरिन्द्रः ' इत्यादर्शपुस्तकपाठः ।

४–लवस्व B. ५–वचतेः B. पचतेः C.

६–' त्वात्तत्वात् ' इत्यादर्शपुस्तकपाठः ।

७–' वर्षितः ' इत्यादर्शपुस्तकपाठः ।

८–' द्विवचनं ' नास्त्येव C. बहुवचनं B.

९–त्रापयितासि C. अत्र ' पावयितासि ' इति पाठो युक्तः ।

१०–भार्गं C. ११–जजस्व B. जजन्तस्व C.

१२–'प्रीति' इति नास्ति C. 'अन्ये' इत्यादिरयं सन्दिग्धोऽनवगतार्थः पाठः ।

* 'त्यार्थाय' इत्यंशोऽत्र त्रुटितः स्यात् ।

१३–[ऋ० ९।८६।३४] 'पवमान महार्णः' इत्येव प्रतीकम् B.C.

१४–अत्र 'पवमान इति त्र्याणामार्षम्' इति पाठो युक्तो भाति । अथवा 'त्रयाणामार्षम्' इति 'त्रिगणानामार्षम्' इति वा पाठो भवेत् । पवमान इति त्वधिकमेव ।

१५–'महि महन्' इत्यादर्शपुस्तकपाठः ।

१६–'उदितं' इत्यादर्शपुस्तकपाठः ।

१७–वसति ये पर्येकधनाख्यं C. अयं विपर्यस्ताक्षरः सन्दिग्धोऽनवगतार्थः पाठः ।

१८–गच्छति सि त्वं C.

१९–'सूम' इत्यादर्शपुस्तकपाठः ।

२०–सूर्यः श्वत्रः B. सूर्यश्वत्रः C.

२१–वचप्ररश्मिना B. २२–मुदमध्यादि० B.

मननीयौ पूजनीयौ[1] भौमरसलक्षणं रश्मिभिर्गच्छतीति तद्वत् । अव्ययानि अवि[2]शब्देनात्र अविमयो गृह्यते इत्येवमूर्णा उच्यते नायमर्थः । अविविकार ऊर्णा तन्मयानि अव्ययानि दशापवित्राख्यानि । गभस्तिपूतो गभस्तिभी रश्मिभिः पूतोऽसि योऽरण्ये[3] । नृभिर्मनुष्यै-र्ऋत्विग्यजमानादिभिः । अद्रिभिरभिषवग्रावभिः । सुतोऽभिष्टुतः[4] । धन्वसि गच्छसि । किमर्थम् ? महे महते वाजाय अन्नाय धन्याय धनाय च । यजमानस्य बह्वन्नं धनं च तथा स्यादित्येवमित्यर्थः[5] । अथवा धन्वसि द्रोणकलशं वा देवान् प्रति ।

ननु मन्त्रद्वये रश्मीनां पवमानसम्बन्धमात्रं गम्यते नाभिधानं पवित्रशब्देन । एवञ्च 'पवित्रवन्तः परि वाचमासते'[6] इत्युदाहरणम् । तच्चोपरिष्टाद् व्याख्यास्यते ।

आपो हि पाविका[7] इति पवित्रमुच्यन्ते ।

शतपवित्राः स्वधया मदन्तीर्देवीर्देवानामपि यन्ति पाथः ।

ता इन्द्रस्य न मिनन्ति व्रतानि सिन्धुभ्यो हव्यं घृतवज्जुहोत ॥[8]

वसिष्ठस्यार्षम् । बहून्यवयवानि पवित्राण्युदकानि यासु ताः शतपवित्राः बह्व्य इत्यर्थः । स्वधया अन्नेन सह । मदन्तीः 'मद तृप्तौ'[9] 'वाच्छन्दसि'[10] इति पूर्वसवर्णः । सर्वप्राणिनस्तर्पयन्त्य इत्यर्थः । देवीर्दे[11]वमाप: । देवानां पाथोऽन्न सोमाख्यम् । अपियन्ति[12] गच्छन्ति । ता इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यास्ता इन्द्रस्य स्वभूतानि न मिनन्ति हिंसायां न हिंसन्ति व्रतानि कर्माणि मेघवधे[13]ना अन्यानि । मेघहननादन[14]न्तरमेव क्षरन्तीत्यर्थः । अक्षरन्तीषु[15] हि तासु तद्विसितः[16] कर्म स्यान्निष्फलत्वात् । अतस्ताभ्यः[17] सिन्धुभ्यो हव्यं हविर्घृतवद् घृतसंयुक्तं जुहोत ।

शतपवित्रा इत्यस्यार्थस्य[18] कथनं बहूदका इति । अग्न्यादयोऽपि पवित्रमुच्यन्ते ।

---

१–विचित्रमाथनीयौ वा पूजनीयौ भौमि (B.C) रस. C. अयं सन्दिग्धोऽनवगतार्थः पाठः ।

२–अव्य (B.) यानि अविशब्देनाथावि (वि C) तायी तेने (न C.) त्येवमूर्णा B. C.

३–'योरयेण्य' इत्यादर्शपुस्तकपाठः ।

४–स्तुतोऽभिष्टुतः B.

५–'एवं तवा' इत्यादर्शपुस्तकपाठः ।

६–[ऋ० ९।७३।३ ॥ निरु० १२।३२]

७–'वाविका' इत्यादर्शपुस्तकपाठः ।

८–[ऋ० ७।४७।३]'शतपवित्राः'इत्येव प्रतीकम् B.C.

९–[धा० १०।१७२]धातुपाठे 'तृप्तियोगे' इति पाठः।

१०–[पा० ६।१।१०५] वा⋯ऽसि B.

११–'देव्य आपः' इति पाठो युक्तो भाति ।

१२–'अपीयन्ति' इत्यादर्शपुस्तकपाठः ।

१३–'मेघवधात्' इति पाठो युक्तो भवेत् ।

१४–'न' इति त्रुटितम् । C.

१५–अक्षरसन्तीषु B.

१६–तद्भिः सित कर्म C. कदाचिदत्र 'तद्विसितं कर्म' इति पाठो युक्तः स्यात् ।

१७–'ताभ्यां' इत्यादर्शपुस्तकपाठः ।

१८–०स्यार्थकथनं C

तेऽपि हि पावयन्ति जगत् स्वेन स्वेन स्पर्शनादिद्वारेण। उदाहरणम् 'अग्निः पवित्रं' इत्यादि निगदव्याख्यानम्[1]।

तोद इत्यनवगतम्। तुग्र इति धातुनिर्देशः। इदमयुक्तं वर्तते। किमत्रायुक्तम्[2]? यदि तावत् तुदेरकर्तरि कारके घञ् तुग्रते ततस्तोद इत्येव भवितव्यम्। अथ कर्तरि[3]… ………। ननु च[4] सलक्षणः कः क्रियते ततस्तुदतीति तुद इति प्राप्ते तोद इत्यनवगतम्। किन्तु तुग्रतेरित्ययुक्तं तुदतेरिति स्यात्। एवं तस्य पठितं धात्वन्तरमेव तुग्रतिः, अर्धृतकृतत्वाद्वा[5] हुरण्यतिवत्। तुग्रत्यर्थयनि[6] द्रष्टव्यः। तच्च फॉलादिकमुच्यते[7]। नातो लोके तुग्रत इत्यवगमः[8]। अत उपपन्नं तोद इत्यनवगतम्। तुग्रत इति तोदो गृहस्थः। उदाहरणम्—

[इति दशमस्या-(पञ्चमस्या-)ध्यायस्य
षष्ठः खण्डः[9]]

---

१–निगमव्याख्यानम् B.
२–किमत्र B. किमत्रा C. एवं चात्र B. पुस्तके 'अयुक्तम्' इति C. पुस्तके च 'युक्तम्' इति त्रुटितमिति भाति।
३–अत्र कश्चन पाठस्त्रुटित इति भाति।
४–'च' स्थाने 'प' इति पाठः C.
५–कृत्वून् कृतत्वा द्रुर० B.
६–अयं सन्दिग्धः पाठो नावगतः।
७–फलादिक० B.
८–इत्यनवगमः B.
९–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते।

## [ अथ सप्तमः खण्डः ][1]

पुरु त्वा दाश्वान् वोचेऽरिरग्ने तव स्विदा ।
तोदस्येव शरण आ महस्य[2] ॥

दीर्घतमसः । पुरु बहु । किम ? सामर्थ्यात् हविः । यत् त्वद्देवत्यं[3] यच्चान्यदेवत्यं तत्सर्वं दाश्वान् तुभ्यं ददहम्[4] । त्वामेव[5] वोचे ब्रवीमि । किम ? सामर्थ्यात् आगच्छ इति । [6]आह्वयामीत्यर्थः । अत्रैकवाक्यतायै[7] यस्मात् तस्मादित्यध्याहार्यम् । तस्मादत्र त्वामेव वोचे यस्माद् अरिरीश्वरस्त्वं[8] सर्वहविषाम्[9] । हे अग्ने अन्यदेवतानामपि त्वय्येव हव्यस्य[10] होमात् । यस्माच्च तत्र[11] स्विद्देवार्थे तवैवाहं स्वभूत इति शेषः । आकारः पादपूरणः[12] । कथमिव स्वभूत इति ? उच्यते । तोदस्येव[13] तुदति भृत्यजनान् तैर्वा तोद्यमात्मन इच्छतीति गृहस्थोऽत्र तोदोऽभिप्रेतः । यथा तोदस्य गृहस्थस्य महस्य महतः शरणे गृहनामेदम्, गृहे आत्मीये चैव[14] किञ्चित् सर्वं स्वभूतं भवति तद्वदहमित्यर्थः । प्रसिद्धं[15] त्वमेव नान्यदेवतान्तरम् । अरिरमित्रः प्रसिद्धस्योपादानं[16] यथा अरिर्ऋच्छतेर्गत्यर्थस्य शत्रून् प्रति गच्छत्यसौ तैर्वा अर्यते । एवमीश्वरोऽपि तेन तेन भूतानुग्रहेण सर्वप्रवृत्तिर्गतिः । [17]अर्यतेर्वार्थो भृत्यजनेन । यद् यस्माद् अन्यदेवत्या अप्यग्नावाहुतयो हूयन्ते सवनीयादि[18]देवेभ्यो विभजन्ते भृत्यजनेभ्य इत्येवमेतद् दृष्ट्वा उपलभ्य पतिस्त्वं सर्वहविषामित्येवमवश्यद् मन्त्रदृक् ।

---

१–आदर्शपुस्तकेऽत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १।१५०।१] 'पुरु त्वा दाश्वान्' इत्येव प्रतीकम् C. B.
३–त्वद्देव यच्चान्य देव B
४–अत्र ' अददाम् ' इति पाठो युक्तः स्यात् ।
५–त्वामेव C
६–' आ ' इति न दृश्यते B.
७–अतो B.
८–' ईश्वरस्त्व ' इत्यादर्शपुस्तकपाठः ।
९–' ह ' इति त्रुटितम् B.
१०–' हस्मात् ' इत्यादर्शपुस्तकपाठः । पदमिदं त्रुटितम् B. ' होमात् ' इत्यस्य स्थाने ' होमान् ' इति पाठः B.
११–तपस्वी देवार्थे B. तपस्विदे० C.
१२–पदपूरणः B.
१३–तोदस्यैव B. तोस्येव C.
१४–अत्र ' वा ' इति पाठः C.
१५–' प्रसिद्धस्त्वमेव ' इति पाठोऽत्र भाति ।
१६–' प्रसिद्धस्योपादानं यथा ' इत्ययं पाठः ' अरिरमित्रः ' इत्यस्मात् पाठात् पूर्वं पठितः संगतो भवेत् । ' यथा ' इत्यस्य पदस्य स्थाने च ' यतः ' इति पाठो युक्तः स्यात् ।
१७–' अर्यते वार्थो भृत्य० इति पाठो युक्तो भाति ।
१८–देवेभ्यतोपि भज० C.

स्वञ्चा इत्यनवगतम् । सुगमन इत्यर्थः । उदाहरणम्—

सं भानुना यतते सूर्यस्याजुह्वानो घृतपृष्ठः स्वञ्चाः ।

तस्मा अमृध्रा उषसो व्युच्छान् य इन्द्राय सुनवामेत्याह ॥[1]

आङ्गिरसस्यात्रेरार्षम् । तस्मा अमृध्रा[2] इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यस्य यजमानस्य संयजते संगच्छते । भानुना दीप्त्या रश्मिना सूर्यस्य स्वभूतया आजुह्वानो[3] आहूयमान आहवनीयः । घृतपृष्ठो घृतमाहुतिलक्षणं पृष्ठे यस्य स घृतपृष्ठो घृतेन वा स्पृष्टो घृतपृष्ठः । स्वञ्चा अञ्चतिर्गत्यर्थः सुगमनः सुष्ठु प्रज्वाल्य इन्द्रं यजत इत्यर्थः । तस्मै तादर्थ्ये यथा चतुर्थी षष्ठ्यर्थे वा तदर्थं तस्य वा । अमृध्रा मृधिर्हिंसार्थः, अहिंसिताः । उषसो व्युच्छान् व्युच्छन्ति कुर्वन्तीत्यर्थः । न च केवलाय तस्मै । किं तर्हि ? यो दारिद्र्याद् यष्टुमशक्नुवन्[4] केवलं श्रद्धालुतया विनार्थं सोममिन्द्राय सुनवामेत्येवमाशंसनमाह तस्मा अपि ।

शिपिविष्टो विष्णुरिति एकविषयत्वादेकोदाहरणत्वाच्च युगपदुपन्यासः । तयोश्चैकविषयतां दर्शयति-विष्णोरित्यादिना । तत्र शिपिविष्ट इत्येवं तदनेकार्थं कुत्सितप्रशंसाविषयत्वेन । अनवगतत्वं च नेतरत् । विष्णुरिति विशतेर्व्यश्नोतेर्वा । चेष्टाव्यप्ता वेत्यगमः स चादित्य इहाभिप्रेतः शिपिविष्ट इति च । क्रियानिमित्तत्वे[5] एव चासंविज्ञानपदत्वादेव दैवतेनाम्नातम् । तयोः पूर्वं कुत्सितार्थीयमौपमन्यवो[6] मन्यते । उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य

सप्तमः खण्डः[7] ]

---

१–[ ऋ० ५ । ३७ । १ ] ' सं भानुना ' इत्येव प्रतीकम् B. C.

२–तस्मा ( स्या B. ) अमृद्रा B. C.

३–०ह्वानं आहूयमानं B.

४–०क्नुवन् एव चार्य सि० C.

५–दैवतेनम्नातम् B. अयं सन्दिग्धः पाठः ।

६–०तार्थीय० B. तापिय B.

७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते ।

# [ अथ अष्टमः खण्डः ][1]

किमित्ते[2] विष्णो परिचक्ष्यं[3] भूत्प्र यद्ववक्षे शिपिविष्टो अस्मि ।
मा वर्पो अस्मदप गूह एतद् यदन्यरूपः समिथे बभूथ[2] ॥

वसिष्ठस्य । परा च । किं क्षेपे इत पदपूरणः । किं ते तव विष्णो परिचक्ष्यं[3] परीत्ययं प्रशब्दस्यार्थे चक्षिङ् ख्यापनायाम् । प्रख्यापनीयमेतद् रूपं[4] भूद् भवति । अश्लीलोपमायोगान्नैतत्[5] प्रख्यापनीयमित्यभिप्रायः । अथवा परिपूर्वः ख्यातिः परिवर्जने अवक्षिप्तमवधीतमुक्तादेव कारणात् परिवर्जनीयमित्यर्थः । प्रशब्दो ववक्ष इत्यनेन सम्बध्यते । कतमद्रूपं यद् ववक्षे प्रब्रवीषि प्रदर्शयसीत्यर्थः । कस्मै ? सामर्थ्यादस्मदादिभ्यः । शिपिविष्टः सामर्थ्यादन्तर्नीतोपमानमेतत्[6] शिपिविष्ट इव यादृशः शेपो निर्वेष्टितस्तादृशोऽस्मीति उदितमात्रादप्रतिपन्नरश्मिरस्यामवस्थायामारक्ततां प्रतिपन्नः । मा वर्पो वर्प इति रूपनाम । मा अस्मत् अस्मासु मित्यर्थः । अपगूहः[7] 'गुहू संवरणे'[8] मा संवरणं प्रकटय एतत् प्रख्यापयैतदित्यभिप्रायः । युक्ततममुच्यते[9] यदन्यरूप एव कोऽप्यस्यन्तदीप्तः । समिथे[10] संग्रामे । केन सह ? सामर्थ्यात् तमोभिर्बभूथ भवति । मध्यन्दिनसमये एवमित्ययमौपमन्यवो मन्यते । मया ज्ञनःवा[11] ।

आचार्यमतेन यदा तु शिपयो[12] बालरश्मय उच्यन्ते तैराविष्ट[13] इति, एवमेतत् प्रशंसानामैवाभिप्रेतं स्यात् । तद्रूपेणैवं व्याख्येयम् । किं प्रश्ने । इदेवार्थे । मा वर्पो अस्मदिति परस्ताद् रूपश्रुतेरिहाप्येतद्रूपं[14]मित्यध्याहार्यम् । तेनायमर्थः । किमेतदेव रूपं तव हे विष्णो अप्रख्यातमिव परिचक्ष्यं[15] प्रख्यापनीयं[16] भूद् भवति । युक्ततममुच्यते[17] । उदयोत्तरकालभाविनी या अवस्था तस्यां वर्तमानो यत् तद् ब्रवीषि शिपिविष्टोऽस्मि[18] बालरश्मिभिराविष्टो-

1-आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
2-[ऋ० ७।१००।६] 'किमित्ते' इत्येव प्रतीकम् B. C.
3-परिचक्ष्य B.
4-रूपमभूत् B.
5-योगाय नै (न C.) तत् B. C.
6-०न्तर्णीतोप० C.
7-'अपगूहः' इत्यादर्शपुस्तकपाठः ।
8-[धा० १।८२१] गुह गूहः B. गूहगह C.
9-समे दुच्यते यान्यरूप C.
10-गमिथे B.
11-अयं पाठः सन्दिग्धः । अत्र कदाचित् 'पाशिका वा' इति पाठो भवेत् ।
12-'शितयो' इत्यादर्शपुस्तकपाठः ।
13-तैर विष्ट इति C.
14-'द्रूर' इति मुद्रितम् B.
15-चरिचक्ष्यं C.
16-नीयमभूत् B.
17-यक्ततमदुच्यते C.
18-शिपिविष्टोऽस्मि C.

रमीत्यर्थः । किमेतदेव रूपम् ? तेनेत्युच्यते । अन्यदप्यस्ति रूपं तन्मोपगूह[1] इत्यादि समानं पूर्वेण ।

भाष्ये तु परिपूर्वश्चक्षिर्वर्जनार्थः[2] । किमित्ते तव विष्णो अप्रख्यानं भवति परिचक्ष्यं परिवर्जनीयम् । अश्लीलोपमायोगादप्रख्यापनीयं[3] प्रब्रूम इति पाठः । प्रशंसानामत्वे[4] तु किन्ते विष्णो अप्रख्यातमेतद् भवति । अप्रख्यातमेवेत्यर्थः । परिचक्ष्यं भूत प्रख्यापनीयं सद् यदुत प्रबूप[5] इति वा पाठः । वर्प इति रूपनाम तद्धि आश्रयमावृत्य तिष्ठति सत इति कर्त्रसाधारणम्[6] । संयतरश्मिः संयतरूपो भवसीति द्रष्टव्यम्[7] । संगृहीतरश्मिर्वा । उपात्तरश्मिभिराविष्टः कोमलमयूखाभिरुदयोत्तरकालभाविन्यामवस्थायां वर्तमानस्य यत् कुत्सितार्थीयमिव दृश्यते ।

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
अष्टमः खण्डः[8] ]

---

१–'मावगूह' इत्यादर्शपुस्तकपाठः ।
२–चक्षिर्व्यञ्जनार्थः B.
३–योग प्रा (प्ता) दप्र° B.
४–'प्रशंसो ना°' इत्यादर्शपुस्तकपाठः ।
५–प्रभूपे C.
६–कर्त्रसाधा° C.
७–अत्र 'द्रष्टव्यम्' इति पाठो भवेत् ।
८–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ नवमः खण्डः ]

प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ।
तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके[२] ॥

प्र तत्ते तव अद्य हे शिपिविष्टाख्य नामार्य ईश्वरोऽहं स्तोमानां च करणे समर्थ इत्यर्थः। अथवा शिपिविष्टस्यैव तद् विशेषणमर्यं इति। अनामन्त्रितत्वाच्चैकवाक्यभावाय यस्मात्तस्मादित्यध्याहारः कर्तव्यः। यस्मादर्य ईश्वरस्त्वमसि तस्मात् प्रशंसामि। वयुनानि प्रकाशरूपाणि कान्तिलक्षणानि ज्ञानानि वा सर्वार्थविषयाणि तावकीयानि। विद्वान् जानन्। तमिति तच्छ्रुतेर्यच्छब्दाध्याहारः। यतश्चै[३]तन्नामासि तं त्वा सर्वावसं[४] गृणामि[५] स्तौमि। तवसं[६] महत्त्वमेतत्। महान्तमुदयोत्तरकालभाविनीष्ववस्थासु वर्तमानमित्यर्थः। तवसं महान्तम्। अतव्यान् तवते[८]र्वृद्ध्यर्थस्य 'तुरछन्दसि' इति तृचन्तादीयसुनि स्तौदिलोपेन तव्यानिति रूपम्। न तव्यान् अतव्यान् अतिशयेनावर्द्धितः[१४] प्रज्ञया अत्यन्तमहमल्पप्रज्ञ इत्यर्थः। क्षयन्त क्षियन्तं निवसन्तम्। अस्य रजसः लोकस्य[१५] त्रिसंज्ञस्य षष्ठीश्रुतेरेकदेशमते पराके दूर इत्यर्थः। पराके दूर इत्यस्य निर्वचनं पराक्रान्ते गत इत्यर्थः।

आघृणिरित्यनवगमः[१६]। आहतदीप्तिरागतक्रोधो वेत्यर्थः। अतश्चानेकार्थमपि[१७]। ज्वलतिकर्मसु[१८] क्रोधकर्मसु वा घृणिशब्दस्य पाठात्। दीप्तिनामत्वमङ्गीकृत्योदाहरणम्—

एहि वां विमुचो नपादाघृणे सं सचावहै ।
रथीर्ऋतस्य नो भव[२०] ॥

भरद्वाजस्यार्षम्। एहि आगच्छ। वां त्वशब्दस्यायं[1] छान्दसत्वात् तकारलोपस्त्वम्। हे विमुचो नपात् संहारकाले प्रसित्वा प्रजाः पुनः सृष्टिकाले विमुञ्चतीति प्रजापतिस्तस्य नपात् पौत्रम्। कथं पुनः प्रजापतेः पौत्रत्वम्? उपनिषत्सु[2] कृत्स्नस्य जगतोऽद्भ्यः, अपांश्च[3] प्रजापतिः स्रष्टा[4] ततस्तदुत्पत्तिश्रुतेः। अपत्यमात्रनाम वा नपाच्छब्दः प्रजापतेरपत्यभूतः। आघृणे[5] आगतदीप्ते पूषन् संसचावहे पूषापेक्षं च द्विवचनम्। अहं च त्वं च आवां परस्परं सेवावहे। अहं त्वां[6] हविषा च संसेवे त्वमपि मां सेवस्व सेवितुं मामिच्छस्व। रथीः सारथिस्थानीयो नेता ऋतस्य यज्ञस्य नो भवेति। क्रोधवचनत्वे त्वन्यदुदाहरणं कर्तव्यम्।

पृथुज्रया[7] इत्यनवगतम्। पृथुजव इत्यवगमः। 'ज्रि[8] अभिभवे' इत्यस्येदं रूपम्। वेगेनान्यानभिभविता महाजव इत्यर्थः। उदाहरणम्—

यं नु नकिः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम्।
इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः[9] ॥

विश्वामित्रस्यार्षम्। इन्द्र उच्यते। यन्नुशब्दः पदपूरणः। नकिर्न कश्चिदित्यर्थः[10]। पृतनासु संग्रामेषु। स्वराजं स्वयं राजितारमात्मना[11] दीप्यमानमित्यर्थः। द्विता द्वैधशरीरेण सेनालक्षणेन बलेन च। तरति शक्नोत्यर्थेऽयं तरतिर्द्रष्टव्यः शक्नोति जेतुमिति शेषः। नृतमं प्रकृष्टमनुष्याकारमत्यन्तशूरमित्यर्थः। हरिष्ठां हर्योरास्थानम्। यश्च इनतमोऽतिशयेनेश्वरः। सत्वभिः 'षणु[12] दाने' इत्यस्य। सत्वानो दातारो मरुत इहाभिप्रेतास्तैः सहायैः। यो ह शूषैर्बलैश्च[13] सेनाख्यैः करणभूतैः। पृथुज्रया[14] पृथुजवः। अमिनाद्[15] मिनातिर्वधकर्मा हिंसितवान् हिनस्ति वा। आयुर्जीवितम्। कस्य? दस्योः[16]। उपलक्षयितुं तच्छ्रुतेः[17] साकाङ्क्षत्वाद् वयं स्तुम इति वाक्यशेषः।

अथर्युमित्यनवगतम्[18]। अतनवन्ततिरित्यवगमः[19]। अततेरथरादेशः[20]। युनामिकरणः[21]।

[ इति दशमस्या (पञ्चमस्या-) ध्यायस्य नवमः खण्डः[22] ]

---

१—॰स्यायशायं छा॰ B.
२—॰षत् सुहृत् तस्य जगद्भ्यः B. ॰षत् सुकृत सुस्य जगतोभ्यः C.  ३—अपौश्च C.
४—स्रष्टा C.  ५—अघृणे B.
६—'त्वा' इत्येव द्विलिखितमादर्शपुस्तकेषु।
७—पृथुतण्यया B. पृथुतजुया C.
८—[धा॰ १।९७२] जृ B. जृ B.
९—[ऋ॰ ३।४९।२] 'यं नु नकिः' इत्येव प्रतीकम् B.C.
१०—कश्चदित्यर्थः C.
११—अत्र 'राजितारं' इति पाठो युक्तो भवेत्।
१२—[धा॰ ८।२] षुणु C.  १३—बश्चै B.
१४—पृथुज्यया B. पृथुजया C.
१५—अमीनात् C.  १६—यस्येदम् B.
१७—शच्छुतेः C.  १८—अथ्वर्युमि॰ B.
१९—॰मित्यनवगमः B. ॰मित्यानवगमः C.
२०—'अततेरथरादेशः' इत्यादर्शपुस्तकपाठः।
२१—युनमिकरणः B. करणे C.
२२—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते।

# [ अथ नवमः खण्डः[1] ]

प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ।

तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके[2]॥

प्र तत्ते तव अद्य हे शिपिविष्टाख्य नामार्य ईश्वरोऽहं स्तोमानां च करणे समर्थ इत्यर्थः। अथवा शिपिविष्टस्यैव तद्र विशेषणमर्यं इति । अनामन्त्रितत्वाद्यैकवाक्यभावाय यस्मात्तस्मादित्यध्याहारः कर्तव्यः। यस्मादर्य ईश्वरस्त्वमसि तस्मात् प्रशंसामि । वयुनानि प्रकाशरूपाणि कान्तिलक्षणानि ज्ञानानि वा सर्वार्थविषयाणि तावकीयानि । विद्वान् जानन् । तमिति तच्छ्रुतेर्यच्छब्दाध्याहारः। यतश्चैतन्नामासि[3] तं त्वा सर्वाविस्थं[4] गृणामि[5] स्तौमि । तवसं महद्नामैतत्[6]। महान्तमुदयोत्तरकालभाविनीष्ववस्थासु वर्तमानमित्यर्थः[7]।तवसं महान्तम्। अतव्यान् तवतेर्वृद्ध्यर्थस्य[8] 'तुश्छन्दसि'[9] इति तृन्नन्तादीयसुनि[10] त्वादिलोपेन[11][12] तव्यानिति[13] रूपम्। न तव्यान् अतव्यान् अतिशयेनावर्द्धितः[14] प्रज्ञया अत्यन्तमहमल्पप्रज्ञ इत्यर्थः। क्षयन्तं क्षियन्तं निवसन्तम्। अस्य रजसः सोमलोकस्य[15] द्विसंज्ञस्य पष्ठीश्रुतेरेकदेशमते पराके दूर इत्यर्थः। पराके दूर इत्यस्य निर्वचनं पराक्रान्ते गत इत्यर्थः।

आघृणिरित्यनवगमः[16]। आहृतदीप्तिरागतक्रोधो वेत्यर्थः। अतश्चानेकार्थमपि[17]। ज्वलनामसु[18] क्रोधनामसु[19] वा घृणिशब्दस्य पाठात् । दीप्तिनामत्वमङ्गीकृत्योदाहरणम्—

एहि वां विमुचो नपादाघृणे सं सचावहै ।

रथीर्ऋतस्य नो भव[20]॥

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ऋ० ७।१००।५] एतन्मन्त्रप्रतीकं नास्ति B. C.
३–यतश्च (श्चे B.) तन्नामासि तन्त्वा (त्वा B.) त सा० B. C.
४–'सर्वा' इति द्विलिखितम् B.
५–गृह्णासि C.
६–तव समृद्ध्नामैतत् B. ०सम्महद्नामैतत् C.
७–महान्तमु० B.
८–तपनेर्वृ० C.
९–[पा० ५।३।५९] तन् (तृ C.) छन्दसि B. C.
१०–'तनन्वा' इत्यादर्शपुस्तकपाठः।
११–'च' इति त्रुटितम् C.
१२–अत्र 'तुरित्यादिलोपेन' इति पाठो भवति। तुरिष्ठेमेयस्सु [पा० ५।४।१५४] इत्यनेन ईयसुनि तनो (चो) लोपविधानात्।
१३–'तव्यानीति' इत्यादर्शपुस्तकपाठः।
१४–०नावर्न्धितः प्रत्यया B.
१५–'सो' इति त्रुटितम् C.
१६–आघृणरित्य० B.
१७–०र्थमवि C.
१८–बलं नाम आ B. ज्वलं नाम अ C.
१९–नमसु B.
२०–[ऋ० ६।५५।१] 'एहि वां' इत्येव प्रतीकम् B.C.

भरद्वाजस्यार्षम्[1]। एहि आगच्छ। वां रथशब्दस्यायं छान्दसत्वात् तकारलोपस्त्वम्। हे विमुचो नपात् संहारकाले ग्रसित्वा प्रजाः पुनः सृष्टिकाले विमुञ्चतीति प्रजापतिस्तस्य नपात् पौत्रम्। कथं पुनः प्रजापतेः पौत्रत्वम्? उपनिषत्सु[2] कृत्स्नस्य जगतोऽद्भ्यः, अपां[3] च प्रजापतिः स्रष्टा[4] ततस्तदुत्पत्तिश्रुतेः। अपत्यमात्रनाम वा नपाच्छब्दः प्रजापतेरपत्यभूतः। आघृणे[5] आगतदीप्ते पूषन् संसचावहै पूषापेक्षं च द्विवचनम्। अहं च त्वं च आवां परस्परं सेवावहै। अहं त्वां[6] हविषा च संसेवे त्वमपि मां सेवस्व सेवितुं मामिच्छस्व। रथीः सारथिस्थानीयो नेता ऋतस्य यज्ञस्य नो भवेति। कोधवचनत्वे त्वन्यदुदाहरणं कर्तव्यम्।

पृथुज्रया[7] इत्यनवगतम्। पृथुजव इत्यवगमः। 'ज्रि अभिभवे'[8] इत्यस्येदं रूपम्। वेगेनान्यानभिभविता महाजव इत्यर्थः। उदाहरणम्—

यं नु नकिः पृतनासु स्वराजं द्विता तरति नृतमं हरिष्ठाम्।
इनतमः सत्वभिर्यो ह शूषैः पृथुज्रया अमिनादायुर्दस्योः[9]॥

विश्वामित्रस्यार्षम्। इन्द्र उच्यते। यन्नुशब्दः पदपूरणः। नकिर्न कश्चिदित्यर्थः[10]। पृतनासु संग्रामेषु। स्वराजं स्वयं राजितारमात्मना[11] दीप्यमानमित्यर्थः। द्विता द्वेधशरीरेण सेनालक्षणेन बलेन च। तरति शक्नोत्यर्थेऽयं तरतिर्द्रष्टव्यः शक्नोति जेतुमिति शेषः। नृतमं प्रकृष्टमनुष्याकारमत्यन्तशूरमित्यर्थः। हरिष्ठां हर्योरास्थानम्। यश्च इनतमोऽतिशयेनेश्वरः। सत्वभिः 'षणु[12] दाने' इत्यस्य। सत्वानो दातारो मरुत इहाभिप्रेतास्तैः सहायैः। यो ह शूषैर्बलैश्च[13] सेनाख्यैः करणभूतैः। पृथुज्रया[14] पृथुजवः। अमिनाद्[15] मिनातिर्वधकर्मा हिंसितवान् हिनस्ति वा। आयुर्जीवितम्। कस्य? दस्योः[16]। उपलक्षयितुं तच्छ्रुतेः[17] साकाङ्क्षत्वाद् वयं स्तुम इति वाक्यशेषः।

अध्र्युमित्यनवगतम्[18]। अतनवन्ततिर्येवगमः[19]। अततेरथरादेशः[20]। युनामिकरणः[21]।

[ इति दशमस्य (पञ्चमस्या-) ध्यायस्य नवमः खण्डः[22] ]

---

१—०स्यायशायं छा० B.
२—०पत् सुहृत् तस्य जगद्भ्यः B. ०पत् सुकृत सुस्य जगतोभ्यः C. ३—अपोश्च C.
४—स्रष्टा C. ५—अघृणे B.
६—'त्वा' इत्येव द्विलिखितमादर्शपुस्तकेषु।
७—पृथुजय्या B. पृथुजुया C.
८—[धा० १।९७२] जृ B. जृ B.
९—[ऋ० ३।४९।२] 'यं नु नकिः' इत्येव मन्त्रांशम् B.C.
१०—कश्चिदित्यर्थः C.
११—अत्र 'राजितारं' इति पाठो युक्तो भवेत्।
१२—[धा० ८।२] षणु C. १३—बलैः B.
१४—पृथुज्यया B. पृथुज्रया C.
१५—अमीनात् C. १६—यस्येदम् B.
१७—शच्छ्रुतेः C. १८—अध्युर्यमि० B.
१९—०मित्यनवगमः B. ०मित्यानवगमः C.
२०—'अततेरथरादेशः' इत्यादर्शपुस्तकपाठः।
२१—युनमिकरणः B. करणं C.
२२—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते

# [ अथ दशमः खण्डः । ][1]

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम्।
दूरेदृशं गृहपतिमथर्युम् [2] ॥

वसिष्ठस्यार्षम्। अग्निं नरो मनुष्या ऋत्विजः । दीधितिभिरङ्गुलिनामैतत्[3] अङ्गुलीभिः। योक्त्रमुत्तरारणिं[4] वा परिगृह्य ताभिरिति शेषः। अरण्योः सकाशात्। हस्तच्युती तृतीयायां पूर्वसवर्णः हस्तच्युत्या हस्तप्रच्यावनेन जयन्तीत्यर्थः। प्रशस्तं दूरेदृशं दूरे यो दृश्यस्तम्। दूरे वसतो वा[5] देवान् पश्यतीति गृहपतिं यज्ञस्वामिनम् अथर्युमतनयन्तं[6] देवान् प्रति गमनवन्तमित्यर्थः।

धीयन्ते[7] कर्मसु धीयन्ते[8] वा पुरुषैः कर्मसाधनानि। आरणी[9] यस्मादेते प्रत्यृतो गतो-ऽग्निः[10]। कुत एतत्? तत उत्पत्तेः। समरणात् संगमनात् तयोर्जायते[11] इति।

काणुकेत्यनवगतमनेकार्थं च। कान्तकानीत्यादयोऽवगमाः। उदाहरणमः—

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
दशमः खण्डः। ][12]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ऋ० ७।१।१]'अग्निं नरः' इत्येव प्रतीकम् B.C.
३–दीधितीभिः C.
४–०रणीः वा C.
५–'वासतो वा' इत्यादर्शपुस्तकपाठः। अत्रान्तिमो 'वा' नास्ति C.
६–अथर्यमातन० B. अथर्युमश्रुतन० C.
७–'धीयते' इत्येव द्विर्लिखितम् B. C.
८–धायन्ते C.
९–अत्र 'अरणी' इति पाठो युक्तः स्यात्।
१०–अत्र 'प्रतिगतोऽग्निः' इति पाठः साधुर्भाति।
११–ज्ञायत B. जज्ञायत C.
१२–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

# [ अथ एकादशः खण्डः ][1]

एकया प्रतिधा पिबत् साकं सरांसि त्रिंशतम् ।
इन्द्रः सोमस्य काणुका[2] ॥

कुरुसुतेरार्षम् । प्रतिधा प्रणिधानेन एकेन मनसः प्रणिधानेन अवधारणेनेत्यर्थः[3] । अपिबत्[4] पीतवान् पिबति वा । किम् ? सरांसि । कियन्ति ? त्रिंशतं त्रिंशत्संख्याकानि । कः ? इन्द्रः सोमस्य सम्बन्धीनि । कीदृशानि सरांसि ? काणुका कान्तकानीति वा आहवनीयं प्रति गमनानीत्यर्थः । कृतकानीति वा ऋत्विग्भिः संस्कृतानीत्यर्थः । अथवा इन्द्रविशेषणमेतत्, इन्द्रः काणुका कान्तो वल्लभः सोमस्य । अथवा कणेशब्दः श्रद्धाप्रतीघातेऽस्ति 'कणेमनसी श्रद्धाप्रतीघाते'[6] इति तस्य काणुका इति रूपं क्रियाविशेषणं च । कथमपिबत् ? काणुका श्रद्धा प्रतिहता व्याहृतेत्यर्थः[7] । तदेतद् भाष्यकारो दर्शयति-कणेघात इति वा । कणेहत इत्यादिना च लौकिकं प्रयोगं दर्शयति । कणेहतोऽश्वः[8] कान्तिहत इत्यस्यैव पर्यायवचनम् । अत्रकामो[9] हि प्रतिहतश्रद्ध उच्यते । तस्यापभ्रंशः[10] कणितोऽश्वः कणितो दस्य इति कणेहत इत्यर्थः ।

त्रिंशत्सरांसीत्युक्तम् । कानि पुनः सरांस्युच्यन्ते ? तत्रैतस्मिन् सन्देहे एतद् याज्ञिकाः स्वमतं वेदयन्ते ज्ञापयन्ति । याज्ञिकानां तावदेतन्मतमित्यर्थः[11] । माध्यन्दिने सवने त्रय उक्थ्यविशेषः[12] । 'इन्द्राय त्वा-इति त्रिभिरुक्थपर्यायैश्चरन्ति'[13] इति वचनात् । तेषामेकैकस्मिन्नुक्थ्यविग्रह[14] उच्यते । अस्या अंशो दश दश च मासाः । ते तु सीधुसरकस्थानीयत्वात्[15] त्रिंशत् सरांसीत्युच्यन्ते इति । तत्स्थस्य वचनात् तत्पानव्यपदेशः । त्रीणि भाजनानि इषितानि[16] यथा । तदेतद् भाष्यकार आह-त्रिंशदुक्थपात्राणीत्यादिना[17] नैरुक्तानां मतम् ।

१-आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२-[ऋ० ८।७७।४] 'एकया प्रतिधा' इत्येव प्रतीकम् B. C.

३-अवधारणेन्यर्थः C.

४-अपिबत C.

५-कणेशब्दः शब्दाप्रतिघाते सति B. C.

६-[पा० १।४।६६] कणे मनसि श्रद्धाप्रतिघाते C.

७-'व्याहृते चेत्यर्थः' इत्यादर्शपुस्तकपाठः ।

८-हतोश्वः C. अत्र 'अश्वः' इति पदमसंगतमिव भाति । कदाचित् 'कणेहतश्च कान्तिहत इत्यस्यैव पर्यायवचनम्' इति पाठोऽत्र भवेत् ।

९-अत्र कामो. हि C.

१०-कस्यापभ्रंशः B. तस्यापभ्रंशः C.

११-'मतं' इति द्विर्लिखितम् C.

१२-उक्थ्य B. उक्त्य C.

१३-उक्थ्यप...चैश्वन्ति C.

१४-उक्थ्यवि० C.

१५-'शीतुमरक' इत्यादर्शपुस्तकपाठः ।

१६-शिलानि C.

१७-'उक्थ्य' इत्यादर्शपुस्तकपाठः ।

पक्षस्य पञ्चदशाहानि पञ्चदश रात्रयः। एवं त्रिंशदपरपक्षस्याहोरात्राः। त्रिंशत् पूर्वपक्षस्य। ततः किम्? उच्यते। तत्रैनाश्चन्द्रमसि भवाश्चान्द्रमस्यः चन्द्रमसः सम्बन्धिन्यः। चान्द्रमस्य आगामिन्यः पुनः पूर्वपक्षापरपक्षयोरागमिष्यन्तीत्यागामिन्य आपो भवन्ति। यदागमनात् पूर्वपक्षे प्रत्यहोरात्रं चन्द्रमा वर्धते। किं तासाम्? उच्यते। रश्मयस्ता अपरपक्षे पिबन्ति यत्क्षयात् प्रत्यहोरात्रं चन्द्रमाः क्षीयते। ता अहोरात्रविभागेन पूर्वपक्षापरपक्षयोर्वृद्धिक्षययुक्ता आपस्त्रिंशत् सरांसीत्युच्यन्त इति। तत्र सरःशब्द उदकनामसु पाठाद् उदकवचनः। इन्द्र आदित्य ईश्वरश्च। सोमोऽपि चन्द्रमा इति। एवं मन्त्रे व्याख्येयम्। त्रिंशत् सरांस्युदकानि सोमस्य चन्द्रमसोऽवयवभूतानि। ईश्वर आदित्यः पिबतीत्यर्थः। साकं सह एकेनैव क्षणेनेति समानमन्यत्। एतच्च पानाप्यायनं मन्त्रान्तरेऽपि दृश्यते। यथाह भाष्यकारः–तथापि निगम इति। द्वयोरेकमेवोदाहरणम्—

यथा देवा अंशुमाप्याययन्ति यमक्षितिमक्षितयः पिबन्ति।
तेन न इन्द्रो वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः[4]॥

राजयक्ष्मगृहीतस्य आदित्ये चरौ याज्यैषा। यमक्षितिमित्युद्देशार्थो यच्छब्दः। द्वितीयः पादः पूर्वमुपक्रमितव्यः। यच्छब्दश्रुतेस्तच्छब्दाध्याहारः प्रथमे पादे कर्तव्यः। यमेकस्याः कायाधुर्त्वात् क्षयाभावाद् अक्षितिमक्षितयो रश्मयोऽपरपक्षे कलाः पिबन्ति तथा देवास्ता एव रश्मयोऽंशुं चन्द्रमसं पूर्वपक्षे आप्याययन्ति यथैव भागशस्तेनैव प्रकारेण एवं त्वां यक्ष्मगृहीतमिन्द्रो वरुणो बृहस्पतिश्चाप्याययन्तु। भुवनस्य भूतजातस्य गोपा गोप्तारः। एवमियं नैरुक्तपक्षे योजना।

अध्रिगुरित्यनवगतमनेकार्थं च। मन्त्र इत्यभिधेयवचनम्। गव्यधिकृतत्वादिति हेतुवचनम्। गोशब्दश्चात्र पशुमात्रोपलक्षणः। यागादिष्वधिकृतत्वाद्धिकृतो गवीति। अधिकृतपशुरित्यवगमः। अथवा संशासीनमेवाभिप्रेतं स्यात्। कथम्? उच्यते। अयं संशा-

१–होरात्रः B. ०होरात्रिः C.
२–'तासाम्' इत्यादर्शपुस्तकपाठः।
३–एते च पानाप्यायने (येन C.) मन्त्रान्तरेपि दृश्यते (न्ते B.) B. C.
४–[मैत्रा० सं० ४।३।७] 'यथा देवा' इत्येव प्रतीकम् B. C.
५–'य' इति त्रुटितम् B.
६–ध्रुवत्वात् C. अयं सन्दिग्धः पाठः।
७–अक्षितिः क्षतयो (या C.) B. C.
८–कलां C.
९–देवाः तमिव C.
१०–'एवं' इत्यधिकमेवात्र भाति।
११–गृहीकमिन्द्रो C.
१२–अध्रिगुरित्यवगतम् B. अद्रि इरित्यवगतम् C.
१३–जगादि० C.
१४–'संशासन' इति पाठोऽत्र युक्तो भवेत्। मुद्रितमूलपुस्तकेषु तु 'प्रशासनमेव' इति 'प्रशासनामेव' इति च पाठो वर्तते।

सेन[1] इति शब्दोऽस्ति भावसाधनः संशिष्टः संशासनं प्रेषणमित्यर्थः । अस्ति कर्मसाधनम्[2] । संशास्यतेऽसाविति संशासनम् । सकृच्छ्रुतोऽपि चायं सामर्थ्यान्मन्त्रावृत्त्या[3]दिकल्पनयात्रोभयसाधनोऽप्युपादीयते । भावसाधनेन आरभध्वमित्यादयो लोडन्ता लक्ष्यन्ते[4] । कर्मसाधनेन आशास्यमाना अध्रिग्वादयः शमितार अत इदमिदं चैकदेशमेवं च कुरुतारभध्वं संशासनशब्दात्मत्वात् । संशासनमेवाभिमतं स्यादित्येवमुच्यत इति युक्तम् । यद्ययं मन्त्रः संशासनैः[5] । अतः किम ? अत एतत् । अध्रिगुशब्देनाभिधानम्[6] । यत आह तच्छब्दैरवाधिवि[7] । संशासनशब्दोऽध्रिग्वादिरस्मिन्नस्तीति । अतोऽध्रिग्वादिशब्दादध्रिगुरिति ।

ननु तच्छब्दवत्त्वे वैशिष्ट्येऽध्रिगुशब्देनाभिधानं लोडेति[8] कुत एतत् ? उच्यते । अभिधानं स्वाभाविकं तुल्ये हेतौ कश्चिन्न वृक्षमूलादागत इति यथा । तद्वदत्रापीति कर्मः[9] । अथवा आख्यातत्वाद् आख्यातेन[10] हि सत्वभूतस्याभिधानासम्भवात् । अध्यापित्वादनेकत्वाद्यारभध्वमित्यादिनास्याभिधानम् । शमितृशब्देनापि तस्य सामान्यशब्दत्वादध्रिग्वाद्यापभृतीनां च मध्ये अध्रिगोर्मुख्यत्वाद् अध्रिगुशब्देनाभिधानं तच्छब्दवत्त्वादिति युक्तम् । तच्छब्देन चोभयस्यापि प्रतिनिर्देशाद् यस्मिन्[11] प्रैष उपदेश उभयमस्ति अध्रिगुशब्दः प्रैषं च तयोरेवोपन्यस्यति 'अध्रिगो शमीध्वम' इत्यादिना । अस्मिन्श्चोह्यानूहेऽपि[12] च विचारस्य मीमांसाविषयत्वात् ऊहस्य प्रतिपत्तौ न[13] व्याकरणस्य व्यापारान्निरुक्तव्यापारस्तेनेह व्याख्यातृभिरक्षरमात्रं[14] विध्रियते[15] ।

दैव्याः शमितार उत मनुष्या आरभध्वमुपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधं प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्य उदीचीनाँ अस्य पदो निधत्तात् सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं पृथिवीं शरीरमेकधास्य त्वचमाच्छ्यतात् पुरा नाभ्या अपिशसो वपामुत्खिदतादन्तरे वोष्माणं वारयताद् श्येनमस्य वक्षः कृणुतात् प्रशसा बाहू शला दोषणी कश्यपेवांसा छिद्रे श्रोणी कवषोरू स्रेकपर्णाष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद् गात्रं गात्रमस्यानूनं कृणुतादूवध्यगोहं पार्थिवं खनतादस्ना रक्षः संसृजताद्वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रविता रवच्छमितारः अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगो[16] ।

---

१–संशासनोस्ति' इत्यादर्शपुस्तकपाठः ।
२–अत्र 'कर्मसाधनः' इति वा पाठो भवेत् ।
३–मन्त्रावृत्त्या० C.
४–'लोडन्तालक्ष्यन्ते' इति पाठ आदर्शपुस्तकेषु ।
५–संशासनैः C. ६–'ध' इति त्रुटितम् B.
७–शब्दैरध्रिग्वा० C. ८–सन्दिग्धमिदं पदम् ।
९–कर्मः C. १०–आख्यातेन C.
११–यस्मिन्नर्थप्रैष C. १२–'अपि च' इति न दृश्यते C.
१३–'न' इति नास्ति C. १४–'० क्षरमात्रं' इत्येव पाठः B.
१५–'विध्रियते' इत्यादर्शपुस्तकपाठः ।
१६–[ मैत्रा० सं० ४।१३।४ ] 'दैव्याः शमितारः' इत्येव प्रतीकम् B. C.

दैव्या देवानां स्वभूताः । हे शमितारोऽध्रिग्[1]वापप्रभृतयः । अपि च मनुष्या अध्वर्युप्रभृतयः सर्वे एवारभध्वम् । किम् ? सामर्थ्यात् पशुं संज्ञपयितुं सं[2]ज्ञपनायोपनयत । मेध्या मेधस्य यज्ञस्य स्वभूताः । [3]दुरो द्वाराणि य[4]ज्ञगृहद्वाराणीत्यर्थः । सामीप्योपलक्षणं चैतत् । यज्ञसमीपमुपनयतेत्यर्थः । आशासानाः प्रार्थयमानाः । मे[5]धपतिभ्यां तादर्थ्ये एषा चतुर्थी मेध इति यज्ञनाम तत्साधनत्वादत्र पशुर्वै मेध इति तस्य मेधस्य पती स्वामिनौ देवते अग्नीषोमौ तयोरर्थायेत्यर्थः । मेधं पशुम् । प्रशब्[6]दः 'तस्योल्[7]मुकं परस्ताद्धरन्ति' [8]इति विधानात् परस्ता[9]च्छब्दार्थे द्र[10]ष्टव्यः । प[11]रस्ताच्चास्मै पशोरर्थाय । अग्निम् उल्[12]मुकमित्यर्थः । भ[13]रत हरत प्रापयत शरणार्थं रक्षार्थं चेत्यभिप्रायः । स्तृणीत स्तृणीत च । यत्रैव निपात्य संज्ञपयिष्यते तत्र बर्हिर्दर्भाणीत्यर्थः ।

अन्वेनं माता मन्यताम् । अनु[14]मन्यतां धर्मार्थिमस्यैवोत्थापथिमेनं पशुं हन्यमानं माता । अनुमन्यतां च पिता अनुमन्यतां च भ्रा[15]ता । किंविशिष्टः ? सगर्भ्यः स[16]माने गर्भे भवः । अनु सखा अनुमन्यतां च सखा सयूथ्यः समाने यूथे भवः । उदीचीनां संज्ञ[17]पयंश्च संज्ञप्यमानस्योदङ्मुखान् प[18]दान्निधत्तात् स्था[19]पय । सूर्यं चक्षुर्गमयतात् सूर्यप्रभवत्वाच्च सूर्यमेव प्रत्यस्य चक्षुर्गमयन्ति । स[20]र्वेषां म्रियमाणानामेषधर्म इत्येतद्वचनं यथान्यायमरणपरिग्रहम् । वातं प्रति प्राणमन्ववसृजतात् मुखना[21]सिकाभ्यां वायुं वा[22]रयं श्वासं संज्ञप[23]येतेत्यर्थः । श्येनं श्येनाकारमस्य वक्षः कृणुतात् कृणुत प्र[24]शंसा शास्त्रेणेतिकेचित् । स्वधित्याकाराविन्यपरे । अथवा प्रशस्तौ बा[25]हू कृणुतादिति सम्बन्धः । शला दोषणी बाह्वोरुपरितने द्वे दो[26]षानित्ये-

१–अध्रिग्वाप C. २–सज्ञापनाय B.
३–'दुरः' इति त्रुटितम् B. ४–यज्ञे गृह॰ B.
५–'मेधावतीभ्यां' इत्यादर्शपुस्तकपाठः ।
६–'प्र' इति त्रुटितमादर्शपुस्तकेषु ।
७–॰स्योन्मुकं C.
८–'इति' इति नास्त्यादर्शपुस्तकेषु ।
९–'परस्तात्च्छब्दार्थे' इत्यादर्शपुस्तकपाठः ।
१०–द्रष्टव्यम् B.
११–प ( पु C. ) रस्ताच्चास्य पशो॰ B, C.
१२–उदकं B, अन्मुकं C.
१३–'हरत' इत्यादर्शपुस्तकपाठः ।
१४–अनुमन्यतां C.
१५–'भ्रा' इति त्रुटितमादर्शपुस्तकेषु ।
१६–समानेन C.
१७–संज्ञन्तपयश्च C ॰पयश्च B.
१८–पदान् C. अत्र 'उदङ्मुखान् पादान्' इति पाठः साधीयान् भवेत् ।
१९–अत्र 'स्थापयति' इति 'स्थापयेत्' इति वा पाठः साधीयान् भवेत् ।
२०–सर्वेषामप्य॰ C. २१–मुखानासीकाभ्यां C.
२२–'वारयत' इति पाठो युक्तो भवेत् ।
२३–संज्ञपयेत्यर्थः C. अतः परं भूयसो मन्त्रभागस्य व्याख्यानमादर्शपुस्तकेषु न दृश्यते ।
२४–'प्रशसा' इत्यादर्शपुस्तकपाठः ।
२५–'बहुकृतादिति' इत्यादर्शपुस्तकपाठः ।
२६–अत्र 'दोषमित्येतेन' इति युक्तं स्यात् ।

तेन शब्देनोच्यते[1]। शलाकाकारे दीर्घे इत्यर्थः। कश्यपेवांसा कच्छाविव कच्छपौ तदाकारावंसौ। अच्छिद्रे श्रोणी साकल्यमेवाच्छिद्रत्वम्। कवपोरु कवषस्याकारावूरू[2]। स्रेकः करवीरस्तद्वर्णाकारौ[3] सर्वत्र कृणुतादिति सम्बन्धः। षड्विंशतिश्चास्य वङ्क्रयः पर्शवस्ता[4] अनुष्ठ्या[5] अनुष्ठानेन यत्नेन निश्चयेन वा कृत्स्नम् उच्च्यावयताद् उत्कृन्तत। एवं गात्रं[6] गात्रमस्यानूनं कृणुताद् अनतिरिक्तं च कृणुतात्। कुतः? ऊवध्यगोहं भक्षिततृणादि यदजीर्णं पशोरुदरे तिष्ठति तदूवध्यमित्युच्यते यस्मिन् गूह्यते[7] प्रजायते[8] स ऊवध्यगोहस्तं च पार्थिवं गर्तं दर्वेभ्रं[9] खनतात् खनत। अस्ना[10] असृक् शब्दस्य लोहितवचनस्य 'पद्दन्नोमास् हृद्'[11] इत्येवसमद्धादेशः। ततस्तृतीया लोहितेन च रक्षः संसृजतात् संयोजेत[12]। तद्धि[13] पशो रक्षसां भागः।

या उद्ध्रियते वपा[14] तस्याः समीपे तत्सदृशो वनिष्टुर्नाम पशोरवयवः, तां चास्यावयवस्य कस्यचिदयशसः ख्यापयिता कश्चिद् दुर्जनो विगुणकर्मकरेण[15]निमित्तमयशस्येन ख्यापयिष्यति। हे शमितारः, एतच्च ज्ञात्वा हे अध्रिगो शमीध्वमेनं पशुम्। सुशमि[16] शमीध्वं शमितं च शमयध्वं च शीघ्रं मा विलम्बिढ्वं[17] मा वा शङ्कां कुध्वं हिंसेति। धर्म एवेयं हिंसा शास्त्रविहितत्वात्। अस्य पशोरुत्कर्षहेतुत्वात्। तथा चैतरेयकब्राह्मणे 'पशुर्वै नीयमान' इत्यादिभिः हिंसास्तुतिर्द्रष्टव्या। हे अध्रिगो हे अपाप प्राधान्यख्यापनार्थमत्र केवलस्याध्रिगोरपापस्य चामन्त्रणम्। प्रैषस्तु सर्वेषां देवानां शमितृणां चेति तच्छब्दपरत्वाद्[18]देवास्य मन्त्रस्य अध्रिगुशब्देनाभिधानमित्युक्तम्।

अनेकार्थतां दर्शयन्नाह—अध्रिरपीत्यादि। उदाहरणम्—

तुभ्यं श्चोतन्त्यध्रिगो शचीवः स्तोकासो अग्ने मेदसो घृतस्य।

कविशस्तो बृहता भानुनागा हव्या जुषस्व मेधिर[19]॥

कुशिकपुत्रस्य गाथिनः। तुभ्यं त्वदर्थमित्यर्थः। श्चोतन्ति क्षरन्ति। अध्रिगो हे अधृत-

---

१–'उच्येते' इति पाठोऽत्र युक्तो भवेत्।
२–कवपेंसा॰ B. कवर्मांसा॰ C.
३–'॰स्तत्पर्णा॰' इति युक्तं भाति।
४–'पर्शवस्ता' इत्यादर्शपुस्तकपाठः।
५–अनूष्ठु B. अनूष्ठ C.
६–'गात्रं' इत्यादर्शपुस्तकपाठः।
७–गृह्यते B. ८–प्रजायते C.
९–गर्तेभ्र भूं C. १०–अप्ता B. अस्ना C.
११–[ पा॰ ६।१।६३ ]
१२ 'संयोजयत' इति युक्तम्।
१३–ततन्धि B ततद्धि C.
१४–च वा B.
१५–कारण B.
१६–'सुशमी' इत्यादर्शपुस्तकपाठः।
१७–'विलम्बध्वं' इति युक्तम्।
१८–परा तदेवास्य B. परात्रे देवास्य C.
१९–[ ऋ॰ ३।२१।४ ] 'तुभ्यं श्चो (श्च्यो B.) तन्ति' इत्येव प्रतीकम् B. C.

# [ अथ द्वादशः खण्डः ][1]

आपान्तमन्युस्तृपलप्रभर्मा धुनिः शिमीवाञ्छरुमाँ ऋजीषी ।

सोमो विश्वान्यतसावनानि नार्वागिन्द्रं प्रतिमानानि देभुः[2] ॥

रेणोत्पर्यम् । अर्धर्चेन सोमो चेन्द्रो वाभिधीयते । यदा सोमस्तदा आपान्तमन्युरित्यादीनां पदानामयमर्थः । मन्युर्दीप्तिरापादिता संस्कारेणोत्पादिता दीप्तिर्यस्य स आपान्तमन्युः समुत्पादितदीप्तिरित्यर्थः । तृपलप्रभर्मा तृपलमिति तृपिः सामर्थ्यात् क्षिप्रार्थः । प्रभर्मेति प्रपूर्वत्वाद् भरतेर्भावे मनिन् प्रत्ययः । अभिषवग्रावभिस्तृपलं क्षिप्रं प्रभर्म प्रहरणं[3] यस्मिन् स तृपलप्रभर्मा । धुनिः पवमानाशङ्कया कम्पिता पात्राणाम्[4] । शिमीवान् शिमीति कर्मनाम यागेन संस्कारकर्मणा कर्मवान् । शरुमान[5] शरुर्हिंसा अभिषवणलक्षणा तया हिंसावान् । ऋजीषी[6] ऋजीषवांश्च सोमः ।

यदा पुनरिन्द्रस्तदा दीप्तिर्वा[7] क्रोधो वा सोमपानेनापान्तमन्युरुत्पादितदीप्तिर्वा उत्पादितक्रोधो वा तृपलप्रभर्मा तृपलं क्षणं क्षिप्रं दृढं चोच्यते[8] कर्तरि मनिन् । तेनायमर्थः । तृपलं क्षिप्रं दृढं वा शत्रुषु प्रहरतीति क्षिप्रप्रहारी । धुनिर्भयेन कम्पयिता शत्रूणाम् । शिमीवान् अत्र वधादिकर्मभिः कर्मवान् । शरुमान शत्रुहिंसया हिंसावान् ऋजीषवांश्चेन्द्रः । अतसावनानि 'तं धक्ष्यतसं शुष्कमे' इत्यादौ[9] दर्शनात्[10] अतसाद्विवृक्षगहनानि । अप्युदकानि प्रतिमानानि । अप्युपयनानि[11] । वाक्यार्थस्तु[12] यदान्येनार्धर्चेन[13] सोम उच्यते नैघण्टुकं च सोमकर्म तदैवं व्याख्येयम् । उत्पादितदीप्तित्वादिगुणः सोमो यानि च विश्वानि[14] सर्वाणि अतसावनानि[15] वृक्षे गहनानि[16] वनानि चोदकानि तानि प्रतिमानानि उपमानानि[17] उपमानत्वेनोपन्यस्तानि सन्ति । न इन्द्रं देभुर्दभ्नोतिर्वधकर्मा[18] न घ्नन्ति ततो हि न्यूनगुणत्व[19]-

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२—[ ऋ० १०।८९।५ ] 'आपान्तमन्यु' इत्येव प्रतीकम् B. C.

३—'प्र' इति न दृश्यते B.

४—अत्र 'कम्पयिता पत्राणाम्' इति पाठो भवेत् ।

५—'शरुमान्' इति त्रुटितम् C.

६—'ऋजीषी' इति नास्त्यादर्शपुस्तकेषु ।

७—'दीप्तिर्वा' इत्यतः परमादर्शपुस्तकेषु 'पुरं सोमपानेनापा ( वा C. ) न्तमन्यु.' इत्यधिक एव पाठो दृश्यते ।

८—चोष्यते B. चोव्यते C.

९—[ ऋ० ४।४।४ ]

१०—०त्यादनदर्शे० B.

११—अप्यप० B. अप्यवपवना C.

१२—'वा' इति त्रुटितम् C.

१३—अत्र 'यदानेनार्धर्चेन' इति पाठो युक्तो भाति ।

१४—'नि' इति त्रुटितम् C.

१५—'अत्रसानि' इत्यादर्शपुस्तकपाठः ।

१६—अत्र 'वृक्षगहनानि' इति पाठो युक्तो भवेत् ।

१७—'उपमानानि' इति नास्ति B.

१८—दभ्नोतिर्वध० C.

१९—'न्यूनं गुणत्व०' इत्यादर्शपुस्तकपाठः ।

मिन्द्रस्य हननं तत्र कुर्वन्ति प्रत्युत अर्वागिन्द्राद् भवन्ति न्यूनगुणानीत्यर्थः। एतद् भाष्य-कार आह[1]-इन्द्रप्रधानेत्येके नैघण्टुकं सोमकर्मेति।

उभयप्रधानेत्यपरं दर्शनं यदा तदेप[2] वाक्यार्थः । योऽयमुत्पादितदीप्तित्वादिगुणः सोमः सर्वाण्यतसानि वनानि तृप्तिद्वारेण तत्प्रभवत्वाद्[3] वृक्षवना[4]नाम् । तदाकारैश्चैवमुच्यन्ते सोमः सर्वाण्यतसानि चेति। चतुर्थेन तु पादेन इन्द्रस्य स्तुतिरुक्तेनैव प्रकारेण। एवं चोभयप्राधान्यम्। अथवा यदान्येनार्धर्चेन इन्द्र उच्यते तदान्येनार्धर्चेन यत्तच्छब्दावध्याहार्यौ। चतुर्थेन पादेन सम्बन्धयितव्यः। उत्पादितदीप्तित्वादिगुणो यस्त इन्द्रं न प्रतिमानानि देभुरिति। तृतीयेन तु पादेन सर्वप्रभवत्वेन सोमस्य स्तुतिरिति। एवमुभय-प्रधानता। इन्द्रप्रधानपक्षे च तृतीय एव पादे[5] नैघण्टुकं सोमकर्मेत्युच्यते पादत्रयेण त्विन्द्र एव। पादो नैघण्टुकस्तु न यं[6] इति।

अयमपि चतुर्थप्रकारः सम्भवति। शिमीति[7] पठ्यमानस्यैव निर्विघ्नस्योपन्यासः शमयतेः शमयति हि तदनिष्टं व्याध्यादिकमिति। अथवा पालयितुमिष्टं सम्पादयितुं रसादन्यदसारमतिरिच्यते। तच्चैनद् ऋजीषम्। कस्मादिति चेत् ? अपार्जितमपवर्जितमवनीयं[9] वावभृथार्थं तस्यासौ प्रतिपत्तिस्तेन तद्वान् सोमः।

अथेन्द्रस्य कथमृजीषित्व[10]मित्याह—अथाप्ययमैन्द्रो निगम इन्द्रस्यापि ऋजीषित्वे लिङ्गं भवति।

ऋजीषी वज्री वृषभस्तुराषाट् छुष्मी राजा वृत्रहा सोमपावा।
युक्त्वा हरिभ्यामुप यासदर्वाङ् माध्यन्दिने सवने मत्सदिन्द्रः[11]॥

अत्रेरार्षम्। ऋजीषी ऋजीषवान्। वृषभो वर्षिता। तुराषाड् सहेरभिभवार्थस्य णिः, तूर्णमभिभविता शत्रूणाम्। शुष्मी बलवान्। राजा ईश्वरः। वृत्रहा असुरस्य मेघस्य वा हन्ता। सोमपावा सोमानां च पाता। युक्त्वा[12] हरिभ्याम्। कथम् ? सामर्थ्यात् सरथे[13] उपयासत् लोऽर्थेऽयं पञ्चमः, उपयातु। अर्वाग् अस्मद[14]भिमुखः। उपगम्य च माध्यन्दिने सवने मत्सेत्[15] अयमपि लोऽर्थ एव तृप्यतु। कः ? इन्द्रः।

---

१–'आह' इत्यादर्शपुस्तकपाठः।
२–'तदेप' इत्यादर्शपुस्तकपाठः।
३–'०तप्रवत्वात् C.
४–वृक्षवना ( न B. ) नात् B, C.
५–पादो C.
६–वाक्यमिदं सन्दिग्धमेव।
७–'कमीति' इत्यादर्शपुस्तकपाठः।
८–'अथ' इति नास्त्यादर्शपुस्तकेषु।
९–०मपनीयं B. १०–०जीषत्व० B.
११–[ऋ० ५। ४०। ४] 'ऋजीषी वज्रीति' इत्येव प्रतीकम् B. C.
१२–युक्ता B. १३–सरथम् B.
१४–'अस्मादभि०' इत्यादर्शपुस्तकपाठः।
१५–'म' इति त्रुटितम् 'त्सत्' इत्येव पाठः B.

हर्योरश्वयोरस्येन्द्रस्य स्वभूतयोः स भाग ऋजीषं धानाश्च। एवं हि हर्यो-ऋजीषित्वम्। इन्द्रे किमायातम्? उच्यते। तद्वन्तो[1] यस्य सन्ति स तद्वान् भवति यथा साधनवन्तो[2] भृत्या यस्य सन्ति[3] तत्साधनेन राजापि साधनवान् व्यपदिश्यते। धनवन्तश्च यस्मिन् सन्ति तन्नगरं धनवदिति तद्वदित्यभिप्रायः। भागशब्देन[4] प्रसङ्गेन धानाशब्दं निराह। भ्राष्ट्रे भर्जनार्थं फलके च किरणार्थं निहिता भवन्ति[5][6]। दधातेर्धाना इत्यर्थः। हर्योरस्य स भाग इति नेयं स्वमनीषिकेति। निगमं दर्शयति—

धानासोमानामिन्द्राद्धि च पिब च बभ्रा ते हरी धाना उप ऋजीषं जिघ्रतामा रथचर्षणे सिश्चत। यत्त्वा पृच्छाद् वृषन् पत्नी कामीमदथा इत्यस्मिन् सुन्वति यजमाने तस्मै किमारथाः सुम्र सुवीर्ये यशस्यागुर उक्थं यथस्चीकमतोतो तत्तथाभूद्धोतर्यज[7] ॥

अस्ति[8] तृतीयसवने हारियोजनो[9] नाम ग्रहः। तस्यैष प्रैषः। धानानां सोमानां च हे इन्द्र अद्धि[10] पिब[11] च यदद्नीयं तदद्धि[12] धाना यदपि[13] पेयं तत् पिब सोमम्। बभ्रां[14] भसेर्लोट् प्रथमाद्विवचने तसि श्लौ[15] द्विर्वचने[16] कृते उपधालोपे[17] घत्वजश्त्वानि[18] भक्षयतां च। ते तव स्वभूतौ। हरी अश्वौ। किम्? धानाः। उपऋजीषं जिघ्रतां[19] घ्राणेन अस्तत्पूर्वकत्वाद्[20] भक्षणं लक्ष्यते, ऋजीषं च भक्षयन्तामित्यर्थः। नच पिबेत् केवलम्। किं तर्हि? आ रथ-चर्षणे सिञ्चत[21] आसिञ्च च पयः[22]पानार्थं रथचर्षणे 'यो हि[23] वां मधुनो दृतिराहितो रथ-चर्षणे। ततः पिबतमश्विना[24]' इत्यादौ[25] मन्त्रान्तरे दर्शनात्। तेन[26] कृपस्थापनार्थं रथस्य

१–द्वन्ता C. अयं पाठः सन्दिग्धः।
२–सावनभवन्तो B. साधनगवन्तो C.
३–सन्ति य तत् C.
४–'शब्दे प्रसं॰' इत्यादर्शपुस्तकपाठः।
५–भ्राष्टेभेञनार्थः फलकेशकिरणार्थे B. भ्राष्टेभेज-नार्थः फलकेशीकरणार्थम् C.
६–भवति B.
७–[कुन्तापाध्याये प्रैषः ६६] 'बभ्रां ते हरी' इत्येव प्रतीकम् B. C.
८–अस्ती तु C.
९–योजने B.
१०–अन्धि B.
११–विब च C.
१२–तद्धानाः B. तदद्य ताना C.
१३–यदल्पं B. यदल्पि C. अत्र 'यदस्ति' इत्यपि पाठः सम्भवति।
१४–बद्धाम्भसे लो ( ल्लो C. ) द् B. C.
१५–'श्लौ' इत्यादर्शपुस्तकपाठः।
१६–द्विवचने B.
१७–'॰लोपः घत्व॰' इत्यादर्शपुस्तकपाठः।
१८–जस्त्वानि C. १९–छीघ्रतो C.
२०–अत्रायं 'अ' कारोऽधिक एव भाति।
२१–'सिश्चता' इत्यदर्शपुस्तकपाठः।
२२–'पथ' इत्यादर्शपुस्तकपाठः।
२३–यो भवान् म॰ B.
२४–[ऋ॰ ८।५।१९]
२५–इत्यादौ B. इत्याददन C.
२६–वाक्यमिदं सन्दिग्धमेव, नावगतोऽर्थः।

मुष्टिकं रथचर्पणं उच्यते । तात्स्थ्यात् तद्वर्तित्वात्ताच्छब्द्यम्[1] । मुष्टिकस्थे हतौ आसिञ्चेति सम्बन्धः । गतं सन्तं यदि त्वा वृषन् हे वर्षिन् पत्नी भार्या गंधी[2] पृच्छयात् पृच्छेत् कामीमदया इति 'मद् तृप्तौ'[3] क्व[4] अतोतृप इति । अतो ब्रूया अस्मिन् अमुकनाम्नि सुन्वति सोमाभिषवं कुर्वति यजमाने इति । ततोऽसौ[5] पुनर्यदि पृच्छेत् तस्मै परितुष्टः सन् किमयास्याः किं दत्तवानसीति । ततो ब्रूयाः । सुष्ठु सुवीर्ये शोभनं शरीरेन्द्रियसामर्थ्यलक्षणम् । यज्ञस्यागुर उद्र्वं[6] यज्ञस्य च आगुर आगूर्णस्य च उद्र्वं[6] समासिम । किं बहुना । यद्यदचीकमत यच्च यत् कामितवान् । उत उतशब्दोऽर्थ्यर्थे[7] तच्छब्दाच्च परो द्रष्टव्यः । उकारः पदपूरणः । तदपि मम प्रसादेन सर्वं तथैवाभूदिति । त्वमपि होतर्यज तमिन्द्रं मा चिलम्बिष्ठाः ।

अत्र भाष्यकारो वध्रामिति[8] रूपसिद्धयादेशमर्थं दर्शयति-आदिनेत्यादिना । वेप्रहितेनोपश्लेषितेन द्विर्वचनेन कृत इत्यर्थः । उपधामादत्ते लुम्पति 'घसिभसोः'[10] इत्येवमलोपः । वमस्तिरतिकर्मेत्यर्थकथनम् । चतुर्थपादं[11] व्याचष्टे-नार्वागित्यादिना ।

इमशेत्यनवगतमनेकार्थं च । इम शरीरं तस्यै[12] व्यापिनी इमाशिनीत्यवगमः । कुल्या नदी[13] चाभिधेया । उदाहरणम्—

कदा वसो स्तोत्रं हर्यत आव इमशा रुधद्वाः ।
दीर्घं सुतं वाताप्याय[14] ॥

कुरसपुत्रस्य[15] दुर्मित्रस्यार्षम् । कदा कस्मिन् काले अपि नाम स कालः[16] स्यात्

---

१-तात्स्थ्याद्वर्ति ताच्छब्द्यम् C.

२-सन्दिग्धमिदं पदम् ।

३-[धा० १०।१७२] 'तृप्तियोगे' इति धातुपाठे पाठः ।

४-अत्र क्वेति पदात्परमादर्शपुस्तकेषु कश्चन पाठो भ्रमाल्लिखितः । एतन्मन्त्रव्याख्यानान्तरगतः स पाठस्तत्रैव दर्शयिष्यते ।

५-तत्र तास B. तत्र तासौ C. अत्र 'तत्रासौ' इत्यपि पाठः सम्भवति ।

६-'उद्र्वं' इत्यादर्शपुस्तकपाठः ।

७-अत्र 'ऽप्यर्थे' इति पाठो युक्तः ।

८-'वध्रां' इत्यादर्शपुस्तकपाठः ।

९-अयमेव पाठः पूर्वमन्त्रव्याख्यामध्ये लिखितः । आदर्शपुस्तकेषु त्वयं भ्रष्टविपर्यस्ताक्षर इत्थं पाठः-'वपहितेनोपश्लेषि (ष C.) तेन द्विर्वचनेन कृत इत्यर्थः उपधा (सा B.) वादं ते (त B.) लुमत्रति घसिहसोरित्येव मल (C.) कर्मेत्यकथनं (न C.) मा (नो C.) र्वागित्यादिना' ।

१०-[पा० ६।४।१००]

११-'तनुजपदं व्याचष्टे' इत्यादर्शपुस्तकपाठः । अयं च पाठ आदर्शपुस्तकेषु लेखकैः 'आदिनेत्यादिना' इत्यनन्तरमेव लिखितः ।

१२-तस्या व्या० C. १३-नाधी C.

१४-[ऋ० १०।१०५।१] 'कदा वसो' इत्येव प्रतीकम् B. C.

१५-कुत्सपुत्रस्य दुर्मित्रस्य वार्षम् C.

१६-कलस्यात् B. कालस्यात् C.

यस्मिन् वसो हे प्रशस्य धनवन् वा। स्तोत्रं हर्यते कामयमानाय। अत्रेर्ययं रुचद्दित्यनेन सम्बन्धयितव्यः[2]। अवारुधत् त्वामपरोरस्यति[3]। वाः वारयिष्यति च। कदा सोमः सम्पत्स्यत इत्यभिप्रायः। कथमिव? [4]इमशा लुप्तोपममेतत् इमशेव कुल्येव उदकानि। नाडीव[5] वा [6]शरीरि अन्नपानरसम्। दीर्घमिति स्तोत्रस्य विशेषणम्। सुतं सोमं प्रतीतिः। सप्तम्यर्थे वा द्वितीया। [7]यः सुते सोमे वाताप्याय उदकनामैतत्, उदकाय वृष्ट्युदकार्थमिति शेषः।

इति स्कन्दस्वामिकृते निरुक्तविवरणसमुच्चये
दशमस्या-( पञ्चमस्या-)[8] ध्यायस्य
द्वितीयः पादः समाप्तः।

---

[ द्वादशश्च खण्डः ][9]

---

१—अत्रेय्य यत्र ह० B. अत्रेय्य यत्र धदि० C.
२—'०तव्यम्' इत्यादर्शपुस्तकपाठः।
३—वामय० B.
४—'इम' इति त्रुटितम् B.
५—नालीव वा C.
६—शरीरी B.
७—'यः' इति न दृश्यते C.
८—अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु।
९—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ दशमस्य ( पञ्चमस्याध्यायस्य )[१] तृतीयः पादः ][२]

[३]उर्वशीत्यनवगतम् । उरुर्वा महान्[४] । अप्सरा इत्यभिधेयकथनम् । उर्वश्यश्नुत इत्यादि व्युत्पत्तिकथनम्[५] । उरु महत्[६] स्थानं यशो वा व्याप्नोतीति उर्वशीत्यवगमः[७] । ऊरुभ्यामश्नुते[८] सम्भोगकाले कामिनं वशीकरोति शिल्पोचार[९]कुशलेत्यर्थः । उर्वशिनीत्यव[१०]गमः । उरुर्वा महान् वशः कामोऽस्य महेच्छेत्यर्थः । व्यधिकरणे वा बहुव्रीहिः, बहुषु कामो ऽस्याः[११], बहूनां वा कामो यस्यामिति । उरुवशेत्यवगमः[१२] ।

अर्थकथने प्रसक्तमप्सरःशब्दं[१३] निराह । अप्सारिणीत्यप्सराः, अन्तरिक्षे वा विचरन्ती उदके वा तत्प्रभवत्वस्मरणात् । स्त्रीजलक्रीडाभिप्रायेणाप्सरः । अपिवेत्याद्यप्सरःशब्दस्य निर्वचनान्तरविवक्षया अप्सरःशब्दं[१४] तावन्निराह । रूपनामेत्यर्थकथनम् । अप्सातेर्धातोः अप्सातिश्च वाक्षेपेऽनिव्यक्तवचनोऽत्र कल्प्यते । [१५]प्सातेर्भक्षणार्थस्य नञ्पूर्वोऽयं निर्देशः । तद्धि नियमेनाभक्ष्यं भवति[१७] नहि[१८] तद् भक्ष्यते । किं तर्हि ? आदर्शनीयं[१९] द्रष्टव्यं व्यापनीयं वा । कर्तृकरयो[२०] र्बाहुलेन । नाप्सातेरप्सः[२१] । किं तर्हि ? आप्नोतेः[२२] सोऽन्तकरणं ह्रस्वत्वम् । व्याप्यते[२३] नेत्रेण नयनाश्रयो द्रष्टव्यमित्यप्सः ।

स्पष्टं दर्शनाय नञ्पूर्वस्य स्पर्शेः स्पर्शनार्थस्य सकारपकारविपर्ययेण वर्णलोपेन चाप्स इति शाकपूणिर्मन्यते न स्पर्शनाय । एतदुक्तं भवति । अस्पष्टमवद्धं स्पर्शनाय । कस्य तर्हि स्पष्टम् ? दर्शनाय चेत्यस्मिन्नर्थे[२४] एतद् वचनमप्येतु[२५] इति भक्षस्य निर्गम[२६] इति शेषः ।

---

१-अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।
२-पादारम्भनिर्देशो नास्ति C.
३-ओं उर्वशित्य० C.   ४-महत् C.
५-०त्तिवचनम् C.
६-'त्' इति त्रुटितम् C.
७-०त्यनवगमः B.
८-०रुभ्यां वाश्नु० C.
९-शिल्पोचार० C.
१०-ऊर्वशीनीत्य० C.
११-कामोस्सस्यां वः C.
१२-उरुप(त्य) शेत्यवगमः C.  १३-०प्सराशब्दं C.
१४-अप्सारसशब्दं B. अप्सारशब्दं C.
१५-सन्दिग्धोऽयं पाठः । कदाचिदत्र 'भक्षणनिवृत्तिवचनतोऽत्र' इति पाठो भवेत् ।
१६-स्फातेर्भक्ष० B.
१७-तद्धिनियमेनारुक्षणवति B.C.
१८-नि ह तत् B.
१९-०र्शनी ( नि B. ) यमस्सः B. C.
२०-कतकत्यो बाहुकेन C. सन्दिग्ध एवायं पाठः ।
२१-नापतेरप्सः B.   २२-[ धा० ५ । १४ ]
२३-सव्यते न न ( नास्ति B. ) नाश्रयो B. C.
२४-०यैवास्मि० B. ०येवेस्मि० C.
२५-०मप्य इति B.
२६-'म' इति त्रुटितम् C.

अप्सोनीयमिति[1] यदुक्तं तत्स्वमनीषिकाशङ्काविनिवृत्तये निगमोपन्यासः—

> यद् ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये ।
> यदेनश्चकृमा वयं यदप्सश्चकृमा वयम् ।
> यदेकस्यापि धर्मण्येतत्तदवयजामहे स्वाहा[2] ॥

करम्भपात्रहोमे दम्पत्योर्[3]यजमानयोरयं मन्त्रः । यद् ग्रामे यदरण्ये यच्चारण्ये यत्सभायां गृह इत्यर्थः । यदिन्द्रिये इति सप्तमी तृतीयार्थे[4], इन्द्रियेण प्रजननाख्येन । यदेकस्यापि यच्चावयोरेकस्यापि यच्च समुच्चितयोर्धर्मणि[5] धर्मशब्दः कर्मवचनस्तृतीयार्थे पपा सप्तमी, कर्मणा यदप्सो यच्चाभक्ष्यभक्षणं चकृमा वयं 'अस्मदो द्वयोश्च[6]' इत्येवमिदं द्वयोर्द्वेबहुवचनं कृतवन्तो वयम् । यदेनश्च यच्चान्यदपि किञ्चिन्मनसा व्यभिचारात् पापं चकृमा वयं कृतवन्तो वयं तत्सर्वमनेन करम्भपात्रहोमेन अवयजामहे अवपूर्वो यजिरपनयनार्थः । स्वाहेति प्रदानार्थो निपातः । अस्मिन्निगमेऽप्सशब्दोऽभक्ष्ये दृष्ट इत्येतद्वयस्मादप्सातेरप्सो नाम[7] इति ।

यच्चोक्तं 'व्यापनीयं वा' इति तत्रापि निगमं दर्शयति 'अप्सो नाम' इति व्यापिन इति । आप्नोतेर्व्याप्त्यर्थस्याप्स इति रूपम् । तत्रैव निगमः—

> पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः ।
> स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणा यजस्वा-
> श्विनाध्वर्यू सादयतामिह त्वा[8] ॥

द्वितीयाग्निचये आश्विनीनामिष्टकानामेकस्यामयमुपधानमन्त्रः । पृथिव्याः पुरीषमसि त्वं पृथ्वीं व्याप्नोषि । तव अप्सो नाम व्यापिनो यद्रूपं तत् त्वमसि तदात्मिका[9] त्वमसीत्यर्थः । तां[10] त्वा विश्वे सर्वे अभिगृणन्तु अभिष्टुवन्तु देवाः । त्वमपि स्तोमपृष्ठा स्तोमैः पृष्ठैः[11] स्तुता सती सतीत्यर्थः । घृतवती घृतेन[12] व्याघारणाख्येनोदकेन वा प्रलेपगते[13]

---

१–अप्स्वानीय° B.
२–[ काठ° सं° ५ । ४ ]    ३–यदि द्वियै B.
४–अत्र 'अपिशब्दाच्च' इति पाठः समीचीनो भवेत् ।
५–धर्मि ( र्मी B. ) शर्मशब्दः B. C.
६–[ पा° १ । २ । ५९ ]
७–'अप्सो नाम' इत्यतः परं 'इति । यच्चोक्तं इत्यारभ्य 'त्वं पृथ्वीं व्याप्नोषि । तव अप्सो नाम' इत्यन्तः पाठो नास्त्यादर्शपुस्तकेषु । आद्यं 'अप्सो नाम' इति पाठं द्वितीयमवबुध्य लेखकेन तन्मध्यगतः पाठो भ्रमान्न लिखित इति भाति । अस्माभिरेवायं परिकल्प्यार्थानुसारमत्र निवेशितः ।
८–[ मैत्रा° सं° २।८।१ ]
९–'तदाश्विका' इत्यादर्शपुस्तकपाठः ।
१०–'त' इत्यादर्शपुस्तकपाठः ।
११–'पृष्ठैः' इत्यादर्शपुस्तकपाठः ।
१२–'घृ' इति त्रुटितमादर्शपुस्तकेषु ।
१३–प्रलेपगते C. सन्दिग्धोऽयं पाठः ।

तद्वती इहाग्नौ सीद । सा त्वं प्रजावत् प्रजासहितमस्मै अस्मभ्यं द्रविणानि यजस्व धेहि । सा त्वं न स्वतन्त्रा सीदसि । किं तर्हि ? अश्विनौ अध्वर्यू देवानामध्वरं कामयितारौ सादयतामिह त्वाम् ।

एवमप्सशब्दं निरुच्य उत्तरार्धविवक्षया—तद्रा भवति । तदित्यनेनाप्सशब्द-वाच्यं रूपमनयोर्वेदया आत्तं साकल्येन गृहीतमित्यर्थः । अस्मिंस्तु पक्षे निदान इत्यस्य उत्तरार्धं इत्यभिप्रायः । अत्र च नित्यपक्षे केचिद् उर्वशी विद्युद् वायुः पुरूरवा इति मन्यन्ते । सा च उरु अन्तरिक्षमश्नुते प्रभया । इह तु इतिहासपक्षमास्थाय तस्या उर्वश्या दर्शनादित्यादि तदर्थाभिधायिन्येषा ।

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
त्रयोदशः खण्डः[१०] ]

---

१—'तद्वति' इत्यादर्शपुस्तकपाठः ।

२—अस्मे B.

३—सीतति B. सीदति C.

४—कर्माय र सादत्वामिह B. कामीय ता र साद-त्वामिह C.

५—तत्र B. मतत्रा C.

६—शब्दं वाच्य B. शब्दवोच्य C.

७—'०योर्वेत्या' इत्यादर्शपुस्तकपाठः ।

८—अयं सन्दिग्धः पाठः । कदाचिदत्र 'रा दाने इत्यस्य उत्तरस्यार्थ इत्यभिप्रायः' इति पाठो भवेत् ।

९—अन्तिरक्ष B.

१०—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ चतुर्दशः खण्डः ][1]

उतासि मैत्रावरुणो वसिष्ठोर्वश्या ब्रह्मन् मनसोऽधि जातः ।
द्रप्सं स्कन्नं ब्रह्मणा दैव्येन विश्वे देवाः पुष्करे त्वाददन्त ॥[2]

वसिष्ठस्य स्तुतिरिन्द्रस्यार्षे[3] संवादो वा तेषाम् । उतशब्दोऽप्यर्थे । अप्यर्थश्च समुच्चयः । किं समुच्चीयते ? जते'''कं तावन्मनोः प्रजायते मान'''तवजन्मरीचिरङ्गिसमिति स्वराणाम्[4] । अप्यसि मैत्रावरुणम् । अन्ये तु पूर्ववेर्गापेक्षं[5] समुच्चयं मन्यते । ततश्च सापि व्याख्यायते ।

विद्युतो ज्योतिः परि संजिहानं मित्रावरुणा यदपश्यतां त्वा ।
तत्ते जन्मोतैकं वसिष्ठागस्त्यो यत्त्वा विश आजभार ॥[6]

विद्युतः परि उपरि[7] ज्योतिः सञ्जिहानं संगच्छमानमेकीभवत् पिण्डीभूतं[8] तेजः शरीरमित्यर्थः । मित्रावरुणौ यदपश्यतां दृष्टवन्तौ[9] त्वाम्[10] । तत्ते तव जन्म एक हे वसिष्ठ । उत अपि अन्यद् द्वितीयम् । कतमत् ? उच्यते । मित्रावरुणयोः सकाशात् । कथम् ? अगस्त्य ऋषिरिदं यदागमत्[11] विशो मनुष्यान् प्रति आगतस्तदा[12] वसिष्ठोऽपि । अतः सहागमनाद् अगस्त्यो वसिष्ठमाहृतवानित्युच्यते[13] । एवमस्यामृचि उतशब्देन[14] समुच्चयार्थदर्शनाद् मित्रावरुणयोः सकाशाद् यज्जन्म प्रदर्शितं तस्यैवोत्तरयर्चा प्रकारोपवर्णनं क्रियते ।

तत्र चोतशब्दोऽपि चेत्यस्यार्थे । उतासि अपि चानेन द्वितीयेन जन्मप्रकारेणासि मित्रावरुणयोरपत्यमित्यर्थः । हे वसिष्ठ । कतमेन ? उच्यते । उर्वश्या अप्सरसोऽधि उपरि हे ब्रह्मन् यन्मनश्चित्तमभिलाप इत्यर्थः । कस्य ? तन्निर्देशसामर्थ्यान्मित्रावरुणयोस्ततस्त्वं

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२—[ऋ० ७।३३।११] 'उतासि' इत्येव प्रतीकम् B. C.

३—अत्र 'वसिष्ठस्यार्षे तस्यैव स्तुतिरिन्द्रस्य वा संवादो वा तेषाम् ।' इति पाठो युक्तः स्यात् ।

४—जतेन्मवन्तावन्मनोः प्रजायते मानसन्तव जन्ममरीचिः श्यंगिरसमिति स्वराणाम् C. अस्य वाक्यस्य पाठो भ्रष्टविपर्यस्ताक्षरोऽनवगतार्थ एव ।

५—अत्र 'पूर्ववर्गापेक्षं' इति पाठो युक्तो भवेत् ।

६—[ऋ० ७।३३।१०]

७—'उपरि' इति द्विलिखितम् C.

८—पिण्डीतं C.

९—'यद' इति B. 'द' इति C. पुस्तके च त्रुटितम् ।

१०—'या' इत्यादर्शपुस्तकपाठः ।

११—यदात्य B. यदात्वद C. सन्दिग्ध एवात्र पाठः । अस्माभिरर्थानुसारमत्र क्रियापदं निवेदितम् ।

१२—आहर्त तदा B. आगतम तदा C.

१३—आहृतवान् B.

१४—अत्र 'उतशब्दस्य' इति पाठो युक्तो भवेत् ।

जातः। तस्या दर्शनात् तयोः स्वभूतं द्रप्सं[1] द्रप्सशब्देना[2]नेत्यन्तच्छन्नानि बहुलं यत्नमुच्यते। तच्चेह सामर्थ्याद्रेतः स्कन्नम्। ब्रह्मणा दैव्येन देवानां स्वभूतेन ऋगादिलक्षणेन तृतीया[3]स्तुतेः स्तुवन्त इति शेषः। विश्वे सर्वे देवाः पुष्करेऽन्तरिक्षे भूमावपतितमेव त्वा तेषां त्वत्कारण-भूतं बीजमित्यर्थः। अददन्त ददिर्धारणार्थः, धारितवन्त इत्यर्थः। चतुर्मुखेन वा ब्रह्मणा सह विश्वे देवा इत्यर्थः। अथवा[4] त्वदीयेनैवान्तरात्मना ब्रह्मणा क्षेत्रज्ञेन निमिशापाद् विशीर्ण[5]-शरीरेण वा धृतमिति शेषः।

द्रप्सः सम्भृत उपचितार्थः सन्[6] प्सातीति प्सा[7] भक्षणे। भक्षणेन चात्र संभोगहेतुत्वं लक्ष्यते संभोगहेतुमित्यर्थः। भक्षणीय एव वा स्त्रीयोन्या[8]। संभरतेः प्सातेश्च[9] द्रप्स इत्यर्थः। पुष्करस्यान्तरिक्षनामसु पठ्यमानस्यैव[10] निर्विवक्षयाऽनेकार्थत्वप्रदर्शनाय चोपक्षेपः। पोषयति भूतान्यवकाशदानेनोदकधारणादिना चोपकारेण। उदकमपि पुष्करं देव-पितृमनुष्याणां पूजाकरत्वात्। पूजयितव्यं वा देवतारूपत्वात्। 'आपो वै सर्वा देवताः[11]' इति श्रुतेः। पूजयितव्यं पुष्करमित्यर्थः। इदमपीतरत् पद्मं पुष्करमेतस्मादेव धातोः। तेनाप्युच्यैते[12] पूज्यते वा तदेवं शोभनत्वात्। वपुष्करं[13] वा सन्[14] वकारलोपेन[15] पुष्करं शोभाकरमित्यर्थः। अक्षरवर्णसामान्यात् सुमनस्सामान्याद्वा प्रयुक्तं पुष्पं निराह-पुष्पं पुष्पतेस्तद्[16] विकसितं भवति। एवमितिहासपक्षे।

नित्यपक्षे[17] तु उर्वशी विद्युद् वशिष्ठोऽत्याच्छादित उदकसंघातः। वसुनिमित्त-त्वाद्वा वसुमत्तमः। मित्रावरुणावपि वाय्वादित्यौ विश्वे देवा रश्मयः। एकवाक्यतायै चात्र तच्छब्दाध्याहारः कर्तव्यः। तेनायमर्थः। यत् पूर्वं तावत् पृथिव्यां भवः पार्थिवः। उत असि मैत्रावरुणो मित्रावरुणाभ्यां वाय्वादित्याभ्यामाकृष्टः सन् तत्सम्बन्धान्मैत्रा-वरुणो मित्रावरुण[18]सम्बन्धीत्यर्थः। हे वसिष्ठ आच्छादयितृतम वसु[19]निमित्तत्वाद्वा वसु-मत्तम उदकसंघात उर्वश्या उर्वन्तरिक्षव्यापिन्या विद्युतः। अधि धात्वर्थत्वानुवादो जात

१–'द्रप्सं' नास्त्यादर्शपुस्तकेषु।
२–अथमावात्वयरामाप्तेः सन्दिग्धः पाठः।
३–'अत्र तृतीयाश्रुतेः' इति पाठः स्यात्।
४–अथ वा C. ५–वीशीर्ण C.
६–सन्नप्सा॰ C. सन्नप्सातीयः B. ७–प्सा B.
८–स्त्रियोण्य B. स्त्रियोन्य C. ९–प्सातेश्च B.
१०–'पाठमा॰' इत्यादर्शपुस्तकपाठः।
११–[ऐ॰ ब्रा॰ २। १६॥ कौ॰ ब्रा॰ ११। ४]
१२–सन्दिग्धमिदं पदम्।
१३–'व' इति त्रुटितमादर्शपुस्तकेषु।
१४–अत्र 'सत' इति पाठो युक्तो भवेत्।
१५–वकारलोपेन C.
१६–'पुष्पः' इत्येव पाठ आदर्शपुस्तकेषु। अत्र 'पुष्पते॰' इत्युचितम्।
१७–'नित्यपक्षे' इति नास्त्यादर्शपुस्तकेषु। C. पुस्तके 'तु' इत्यपि नास्ति।
१८–'मित्रावरुण' नास्त्यादर्शपुस्तकेषु।
१९–'व' इति त्रुटितम् C.

उत्पन्नः। हे ब्रह्मन् परिवृढ उपचाराद्ब्राह्मणो[1]ऽन्यस्य हेतुभूत। मनसः। निमित्तलक्षणा [2]चैषा पञ्चमी तन्मनसोऽवसम्बन्धात् संकल्पो लक्ष्यते। स मित्रावरुण[3]योप्राणां संकल्पनिमित्तत्वादित्यर्थः। द्रप्सं सं[4]मितं भक्षयितव्यं चोदकसंघातं स्कन्नं मुक्तं ब्रह्मणा दैव्येन दिवि भवेनादित्येन विश्वे देवा रश्मयो मध्यमाया··············प्रावृषि पुष्करेऽन्तरिक्षे त्वां धारि[5]नवन्तः। एवं सिन्ध्वादीनामप्युर्वशीत्वे मन्त्रा यथासम्भवं योजनीया इति।

[6]वयुनमित्यनवगतमनेकार्थं च[7]। वेतेर्धातो[8]र्वयुनमित्यवगमः। कान्तिर्वेत्यभिधेयम्। अत्रोदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या-)ध्यायस्य
चतुर्दशः खण्डः ][9]

---

१–'ब्राह्मणो' इत्यादर्शपुस्तकपाठः।
२–अत्र 'मनसोवसम्बन्धात्' इति 'तन्मनसोऽवसम्बन्धात्' इति वा 'मनसश्च ( तन्मनसश्च ) सम्बन्धात्' इति वा पाठो भवेत्।
३–०णर्वप्राणां C.
४–संमतं B.
५–धारिभवन्तः C.
६–वंयुन० C.
७–'च' नास्त्यादर्शपुस्तकेषु।
८–वेधर्मधीतो वयु० C.
९–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

# [ अथ पञ्चदशः खण्डः ][1]

स इत्तमोऽवयुनं ततन्वत् सूर्येण वयुनवच्चकार ।
कदा ते मर्ता अमृतस्य धामेयक्षन्तो न मिनन्ति स्वधावः[2] ॥

भरद्वाजस्यार्षम् । अत्रेतिहासमाचक्षते । वृत्रः किल महत्तमस्ततान । तेनावृतं सर्वम्[3]प्रज्ञानं बभूव । तं तत[4]न्वत् सूर्यं दिव्यारोपयाञ्चकारेति । तदेतेनार्धर्चेनोच्यते । स इदेवार्थे स एव प्रकृत इन्द्रः । अवयुनम्[5] अकान्तमप्रज्ञानं[6] वा निरुद्धसर्व[7]दृष्टिपथमित्यर्थः । ततन्वद् अत्यन्तं ततवद् विस्तीर्यमाण[8]मित्यर्थः । सूर्येण वयुनवत् कान्तिमत् प्रज्ञानवद्वा चकार । वृत्रं हत्वा सूर्यं दिव्यारोपितवान् । कः ? इन्द्रः । प्रातः प्रातश्च सूर्यमुद्गमयन् अस्तं च नयति । परोक्ष[9]र्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । कदा कस्मिन् काले । ते तव स्वभूतम् । मर्ता मनुष्याः । अमृतस्य अमरणधर्मणः । धाम स्थानं वेद्याख्यमभिप्रेतम् । इयक्षन्त इत्यपि यजतेः सन्नन्तस्यादिलोपेन रूपं तव स्थानं वेद्याख्यमियक्षन्तः स्नाने[10]त्यादि हिंसन्ति । सर्वदाननोदिसंस्कारैः संस्कुर्वन्तीत्यर्थः । स्वधावः स्वधान्नमुदकं वा तेन तद्वत् ।

वाजपस्त्यमित्यनवगत[13]म् । वाज[14]पतनमित्यवगमः । उदाहरणम्—

तं सखायः पुरोरुचं यूयं वयं च सूरयः ।
अश्याम वाजगन्ध्यं सनेम वाजपस्त्यम्[15] ॥

अम्बरीषस्य ऋजिश्वनश्चार्षम् । पात्रमानीयमतः सोम उच्यते । तं प्रकृतं सोमम् । सखायः समानख्याना ऋत्विजः । पुरोरुचं सर्वस्य पुरतोऽग्रतो रुग् दीप्तिर्यस्य तं पुरोरुचम् । यूयं वयं च सूरयः स्तोतृनामैतत् स्तोतारः । अश्याम अ[16]श्नुमः । कीदृशं सोमम् ? वाजगन्ध्यं[17] वाजेनान्नेन सक्त्वादिना मिश्रयितव्यम् । प्राप्य च सनेम संभजेमहि । वाजप[18]स्त्यं वाजं

१-आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२-[ ऋ० ६ । २१ । ३ ] 'स इत्तमः' इत्येव प्रतीकम् B. C.
३-सर्वे प्रज्ञाने B.
४-हतत्वन्दुः C.
५-वयुनः B.
६-०ज्ञानवो B.
७-दृष्टपथ० C.
८-'ण' इति त्रुटितम् B.
९-'त्यक्ष' इति त्रुटितम् B.
१०-'स्नानन्तसा०' इत्यादर्शपुस्तकपाठः ।
११-अत्र कश्चन पाठस्त्रुटित आदर्शपुस्तकेष्विति प्रतीयते ।
१२-अत्र 'न' कारोऽधिक एव भाति ।
१३-वाजवस्त्यमित्यनवगतः B.
१४-'ज' इति त्रुटितमादर्शपुस्तकेषु ।
१५-[ ऋ० ९ । ९८ । १२ ] 'तं सखायः' इत्येव प्रतीकम् B. C.
१६-आस्याम अश्नुतः C.
१७-वाजपस्त्यं B. वाजगर्भ्यं C.
१८-वाजवर्ण C.

चान्नं पतनं च परमेतद्ग्राह्यमस्माकमिति मन्यमानाः पतन्ति यस्मिन् देशे तमित्यर्थः ।

वाजगन्ध्य[1]मित्यनवगतम् । गध्य[2]त्युत्तरपदं वाच्यमत्रापि गन्ध्य[3]मित्येवात्रानवगतमित्यर्थः । अत्र च मन्त्र[4]क्रममनादृत्य निगमसमाम्नायक्रमेणैवोपन्यासः । तद्धि[5] व्याख्येयतया प्रकृतत्वात् । उदाहरणं पूर्वमेव[6] 'तं सखायः[7]' इति ।

गध्य[8]मित्यनवगतम् । गृह्णातेरिति धातुनिर्देशः । ग्राह्यमित्यवगमः । आत्मना मिश्रयितव्यमित्यर्थः । उदाहरणम्—

यासि कुत्सेन सरथमवस्युस्तोदो वातस्य हर्योरीशानः ।
ऋज्रा वाजं न गध्यं युयूषन् कविर्यदहन् पार्याय भूषात् ॥[9]

वामदेवस्यार्षम् । इन्द्र उच्यते । यासि त्वं कुत्सेन सहयोगलक्षणे तृतीया कुत्सनाम्ना प्रियसखेन ऋषिणा सह । सरथं[10] क्रियाविशेषणमेतत् समानो रथो यस्मिन् याने तत् सरथं यासीति साधु पतन्ति समानेन रथेन यासीत्यर्थः । अवस्युरवस्तर्पणमात्मानं सोमेन तत्कामः । तोदस्तोदकः प्रेरयिता वातस्य वातादपि शीघ्रतर इत्यर्थः । स्यादेतत् । शीघ्रत्वादनधीनाश्व इति हर्योरात्मीययोरश्वयोरीशान ईश्वरो वदयाश्व एवेत्यर्थः । ऋज्रा ऋजुना । केन ? सामर्थ्यान्मार्गेण । वाजं न वाजमिव अन्नमिव । गध्यं[11] ग्राह्यं भोज्यमात्मना[12] मिश्रयितव्यं भक्षयितव्यमित्यर्थः । युयूषन् 'यु मिश्रणे'[13] मिश्रयितुमिच्छन् विभक्षयिषुः सोममित्यर्थः । कविर्मेधावी कदा ? उच्यते । यदहन्[14] पार्याय पारणाय प्राप्तये तव यज्ञं प्रति भूषाद् भवति । यस्मिन्नहनि त्वं यज्ञं प्राप्नोषि तस्मिन्नित्यर्थः ।

गध्येति[15]रित्यनवगतम् । धातोरर्थस्य चानवगमात् । अतश्चाह-गध्यति[16]र्मिश्रीभावकर्मेति । अत्र विगृह्य[17]माणस्य मिश्रीभावाद् गृह्णात्यनुगम एव लक्ष्यते यस्मिन् कर्मणि मिश्रीभवनं तत् कर्मेत्यभिप्रायः । उदाहरणम्—

---

१—गन्ध्य इत्य॰ B. गन्ध इत्य॰ C.
२—'गन्ध्यतिरत्तरपदं वाचं ये चात्रापि' इत्यादर्शपुस्तकपाठः ।
३—'गन्छत्येवात्रा॰' इत्यादर्शपुस्तकपाठः ।
४—मन: क्रम॰ B.
५—अत्र 'तथाहि' इति पाठो युक्तो भवेत् ।
६—'व' इति त्रुटितमादर्शपुस्तकेषु ।
७—॰सायमित्य॰ B.
८—गन्ध्य इत्य॰ B. गन्ध्यमित्य॰ C.
९—[ ऋ॰ ४ । १६ । ११ ] 'यासि कुत्सेन' इत्येव प्रतीकम् B. C.
१०—'स' इति त्रुटितमादर्शपुस्तकेषु ।
११—गन्ध्यं C
१२—'भोज्यात्मना' इति पाठः साधीयान् भवेत् ।
१३—[ धा॰ २ । २३ ]
१४—यदहत् वार्याय वारणाय C.
१५—'गन्ध्यतीत्य॰' इत्यादर्शपुस्तकपाठः ।
१६—गन्ध्यमिति मिश्री॰ B. गन्ध्यति मि॰ C.
१७—अत्रापि च गृह्य॰ C.

आगंधिता परिगधिता या कशीकेव जङ्गहे ।
ददाति मह्यं यादुरी याशूनां भोज्या शता[1] ॥

भावयव्यस्य[2] । स स्वया भार्यया रोमशया संभुङ्क्ष्व[*] मामित्युक्तस्तामनयर्चया[3] प्रत्याह । तेनेयमृक् चरूप[4] जायापत्यौ वै ऋचौ संवादौ । आगंधिता आगृहीता[5] आमिश्रिता[6] अवयवैर्गाढं[8] परिष्वक्ता सतीत्यर्थः । परिगधिता[9] सर्वतोऽन्तर्बहिश्च मिश्रिता आलिङ्गन-चुम्बनपुरस्सरं प्रक्षिप्तप्रजनना स्वानुरागं[*] संभोगाय परिगृहीता च सतीत्यर्थः । या[10] कशीकेव 'दिवे पशोने[11]' इति हि श्रूयते । स हि नकुलप्रकारः[12] । अश्वमेधे मन्त्रेषु प्रयोग-दर्शनात् । कशाशब्दः पूतिकेशवचनम्[13] । तस्मात् 'जातेरस्त्रीविषयात्[14]' ईकारः स्त्रीप्रत्ययः । पूतिकेशी[15] कशीकेव सा यथा पूतिकेशी सम्भोगकाले गृह्णीयात् तद्वत् । जङ्गहे तदत्र गमिः सामर्थ्याद् ग्रहणार्थः, गृह्णाति पूतिकेशीव परिष्वज्येत्यर्थः । परिष्वज्य च ददाति मह्यम् । यादुरी[16] यादुरित्युदकनाम[17] रो मत्वर्थे रेतोलक्षणकेनोदकेन तद्वती[18], भूम्नि[19] च मत्व-र्थीयः । प्रभूतं रेतः क्षरन्ती आविर्भूतस्नेहरसेत्यर्थः । ईकारश्छान्दसः । याशूनां[20] शता याशु-[21]

1–[ ऋ० १ । १२६ । ६ ] 'आगतो परि' इति पाठः प्रतीकत्वेनादर्शपुस्तकेषु निर्दिष्टो वर्तते । अत्र 'आगधिता परि' इति पाठो युक्तो भवेत् ।

2–'भावयव्यप्यन्य स्वया' इत्यादर्शपुस्तकपाठः । अत्र 'ह्य' इत्यपि त्रुटितमस्ति C.

* अत्र 'संभुङ्क्ष्व' इति युक्तम् ।

3–'०यर्हया' इत्यादर्शपुस्तकपाठः ।

4–चरु च जायापत्यौ वे ऋचौ संवादः C. अयं पाठः सन्दिग्ध एव ।

5–'ग' इति त्रुटितमादर्शपुस्तकेषु ।

6–'आगृणीता' इत्यादर्शपुस्तकपाठः ।

7–'मिता' इत्येव पाठ आदर्शपुस्तकेषु ।

8–'व' इति त्रुटितम् B. वैयवे गाढं C.

9–'गन्धिता' इत्यादर्शपुस्तकपाठः ।

* 'सानुरागं' इति युक्तम् । 10–यं कशी० C.

11–[ यजु० २४ । २६ ॥ मैत्रा० सं० ३ । १४ । ७ ] 'कशानीति' इत्यादर्शपुस्तकपाठः ।

12–प्रकारम् B.

13–अत्र 'वचनः' इति पुंलिङ्गपाठो युक्तः स्यात् ।

14–[पा० ४।१।६३] जातेरविषयात् B. जातेरस्ति विषयात् C.

15–आतिकेशि केशि केव सा यथा। पूतिकेशी सम्भोगकाले गृह्णीयात् तद्वर्जयेत् । तदनमिस्सामर्थ्यात् ग्रहण-रथं गृह्णाति पूतिकेशीव परिष्याज्ये इत्यर्थः B. आतिकेशिकेशिमकव सा यथा पूरि केशी सम्भोगकाले गृह्णीयात् तद्वर्जयेम भगमिस्सा-मर्थ्यात् ग्रहणारथमगृह्णाति पूतिकेशीव परि-पाज्ये इत्यर्थः ।

16–'यादुरी' इति त्रुटितम् C.

17–यादुरीत्यु० B. योदुरीत्यु० C.

18–त्वदती B. त्वदति C

19–तथाच मतुप्सूत्रे [पा० ५।२।९४] पतञ्जलिः— 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥' इति ।

20–द याशून शेता B. दयाभ्रण चेता C.

21–यशूशब्दः B. यशुशब्दः C.

शब्दः सम्भोगे, सम्भोगानां शतानि च। य[1]च्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। सा भोज्या[2] सा भोगार्हा सम्भोगयोग्या[3]। स्वम[4]त्यन्तबालत्वान्न तावदेवंरूपेत्यर्थः।

कौरयाण इत्यनवगतम्। कृतयान इत्यवगमः। शत्रून् प्रति कृतमेव यानं येन नित्यं कृतगमन इत्यर्थः। हस्त्यश्वर[5]थेत्यादि साङ्ग्रामिकं कृतमा[6]कल्पितं प्रयाणाभिमुखं[7] यानं यस्य। उदाहरणम्—

यं मे दुरिन्द्रो मरुतः पाकस्थामा कौरयाणः।
विश्वेषां त्मना शोभिष्ठमुपेव दिवि धावमानम्[8]॥

मेधातिथिर्दानमनयाचष्टे। यमिति रोहितस्य ऋषभस्य प्रतिनिर्देशः। कुत एतत्? उत्तरस्यामृचि—

रोहितं मे पाकस्थामा सुधुरं कक्ष्यप्राम्।
अदाद्रायो विबोधनम्[9]॥

इति पाकस्थाम्नस्तस्य दानदर्शनात्। अतोऽयमर्थः। यं रोहितमृषभं मे मह्यं दुदु॰ र्दत्तवन्तः। के? इन्द्रो मरुतश्च। पाकस्थामा स्थाम[10]शब्दो लोके प्राणे प्रसिद्धः पाकः परिपक्को महान्[11] स्थामो यस्य सः पाकस्थामा[12] महाप्राणश्चेत्यर्थः। भोजो नाम राजा कौरयाणः शत्रून् प्रति कृतयानः। विश्वेषां सर्वेषां वृषभाणां मध्ये त्मना[13] 'मन्त्रेष्वाङ्यादेः[14]' इत्याकारलोपः, आत्मना एवं शोभिष्ठमतिशयेन शोभावन्तम्। महता नादेन उपदिवि धावमानमिव। दिवि द्वितीयार्थे सप्तमी। दिवमाकाशेनैव गच्छन्तमित्यभिप्रायः। यच्छ्रुतेः साकाङ्क्षत्वात् तच्छब्दोऽध्याहार्यः। तमहं प्रतिगृहीतवानिति शेषः।

अथवा यमिति सप्तम्यर्थे द्वितीया। उत्तरयर्चा[15] चैकवाक्यता। यस्मिन् काले मह्यं[16] दत्तवन्त इन्द्रादयो दानानि। यस्मिन्निति श्रुतेस्तस्मिन्नित्यध्याहार्यम्। तस्मिन्नेव सर्वेषां मध्येऽतिशयेन शोभावन्तं महता नादेन बृहता उपधावमानमिव दिवि रोहितं वृषभं मे मह्यं पाकस्थामा[17] महाबलो भोजो राजा सुधुरं सम्यग्गृह्य[18]मानत्वात् शोभना धूर्यस्य

१—'य' इति त्रुटितम् C. यशब्दश्रु॰ B
२—'भोग्या' इत्यादर्शपुस्तकपाठः। ३—॰गयोग्य B.
४—स्वमत्यन्तत्वाल्वाम्नातावन्वमेवंरूपेत्यर्थः' इत्यादर्शपुस्तकपाठः।
५—अस्त्यश्वर॰ B. अस्त्यश्वर॰ C.
६—'कृताकल्पितं' इत्यादर्शपुस्तकपाठः।
७—'॰मुखयानं' इत्यादर्शपुस्तकपाठः।
८—[ऋ॰ ८।३।२१] 'यं मे दुः' इत्येव प्रतीकम् B.C
९—[ऋ॰ ८।३।२२] १०—'स्तामश' इत्यादर्शपुस्तकपाठः।
११—मानं स्थामे यस्य B. C.
१२—पाकस्थावान् महा॰ B. C.
१३—आत्मानं B आत्मना C.
१४—[पा॰ ६।४।१४१] ॰थ्याद्यादेः B.C.
१५—'उत्तरयर्चा' इति नास्त्यादर्शपुस्तकेषु।
१६—मह्य B. महा C. १७—वाकस्थामा C.
१८—'॰गृह्यमा॰' इत्युचितम्।

तं सुघुरं सम्यग्वोढारमित्यर्थः । कक्ष्यप्रां कक्ष्यया पाशेनापूरयितारं पीवरं[1] बलवन्तमित्यर्थः । अदाद् दत्तवान् । रायो गोधनस्य विबोधन विबोधनकरं मन्थनकरमित्यर्थः ।

तौरयाण इत्यनवगतम् । तूर्णयान इत्यवगमः । क्षिप्रगमन इत्यर्थः । उदाहरणम्—

जातं यस्त्वा परि देवा अभूषन् महे भराय पुरुहूत विश्वे ।
स तौरयाण उप याहि यज्ञं मरुद्भिरिन्द्र सखिभिः सजोषाः ॥[5]

स तौरयाण उपयाहि उपगच्छ अस्मद्यज्ञम्[6] । नच केवल एव । किं तर्हि ? मरुद्भिः सह । इन्द्र । सखिभिः सह । सजोषाः संप्रीयमाणः । जातं[7] जातमात्रमेव । यद् व्यत्ययेनेदं नपुंसकम्, यं त्वा[8] त्वाम् । परीत्ययमभूषन्नित्येतेन सम्बध्यते, देवाः पर्यभूषन् परिगृहीतवन्तः । किमर्थम् ? महे महते भराय संग्रामाय पुरुहूत[9] स्तोतृभिः । कतमे देवाः ? विश्वे सर्वे ।

अह्रयाण[10] इत्यनवगतम् । अह्रितयानोऽलज्जितयान[11] इत्यर्थः । यो हि अर्थितो[12] दातुं न शक्नोति स ह्रीतो* गच्छति तदस्य नास्ति, अतः श्लाघ्यगमन इत्यभिप्रायः । उदाहरणम्—

त्वया वयं सधन्य १ स्त्वोतास्तव प्रणीत्यश्याम वाजान् ।
उभा शंसा सूदय सत्यतातेऽनुष्ठुया कृणुह्यह्रयाण[13] ॥

वामदेवस्यार्षम् । त्वया अग्निना सह वयं सधन्याः समानधना दर्शपौर्णमासचातुर्मास्यपशुसोमादियागक्रियायां[14] साधारणधना इत्यर्थः । यतस्त्वोता[15]स्त्वया रक्षिता यस्माच्चैवमतो ब्रूमः[16] । तव प्रणीती तृतीयायाः पूर्वसवर्णस्तवैव प्रणीत्या प्रकर्षेण धनेन त्वदुपदेशेनेत्यर्थः । अश्याम प्राप्नुयाम वाजान्[17] अन्नानि[18] । किंच उभा उभौ[19] च प्रकाशयशसी ते प्रत्यक्ष-

१—श्रीवरं C.

२—उदात् C.

३—' ०धनकमरं मन्ध ( न्थC. ) नकारमित्यर्थः ' इत्यादर्शपुस्तकपाठः ।

४—'न' इति त्रुटितमादर्शपुस्तकेषु ।

५—[ ऋ० ४।४।१४ ]

६—अस्मिन् यज्ञ B. अस्मन यशं C.

७—'जातं' इति त्रुटितम् B.

८—'त्वा' इत्येव द्विर्लिखितम् B. C.

९—'पुरुहूतं' इत्यादर्शपुस्तकपाठः ।

१०—अश्रियाण B. अभ्रयाण C.

११—०लिकमान C

१२—अत्र 'अर्थिने' इति चतुर्थ्यन्तपाठः साधीयान् भवेत् ।

*—अत्र 'ह्रीतो' इति स्यात्

१३—[ ऋ० ४ । ४ । १४ ] 'त्वया वयं' इत्येव प्रतीकम् B. C.

१४—पूर्णमास्या चातुर्मास्य ( सा B. ) पशु० B. C.

१५—'त्वोता' इति नास्ति B. C.

१६—भ्रूमत् B. भ्रूमत् C.

१७—'वाजानी' इत्येवादर्शपुस्तकपाठः ।

१८—'सिंच तुमैव' इत्यादर्शपुस्तकपाठः ।

१९—उभौ च ( थ C. ) प्रकाशयश्री ( श्री C. ) श्रुते B. C.

परोक्षौ[1] वा सन्निकृष्टविप्रकृष्टौ[2] वा शंसाशंसौ अस्माकं पापानां शंसितारौ। मूदय[3] 'पूद[4] क्षरणे' क्षरय । सत्यताते सत्याय तनोति[5] यस्मिन् वा तायते स सत्यतातिः तस्य सम्बोधनं हे सत्यताते तस्य[6] तनितः। तथाच स्मरणम्—

'नाग्निर्ददाह रोमापि सत्येन जगति स्थितः[7]।'

इति सर्वं चेदमनुष्ठुया[8] अनुष्ठानेन कृणुहि कुरु देहे अहयाण[9] अलंजयान[10]।

हरयाण इत्यनवगतम्। हरमाणयान इत्यवगमः । शत्रूणां जीवनस्य हरणमेवं[11]-शीलं यानं यस्य स हरमाणयानः। शत्रुजीवितानां[12] हन्तेत्यर्थः। उदाहरणम्—

ऋज्रमुक्षण्यायने रजतं हरयाणे ।
रथं युक्तमसनाम सुषामणि[13] ॥

सुषाम्णः पुत्रो वरुर्नाम स राजा यद्[14] यानं प्रादाद् विश्वमनसे। तदसौ विश्वमना[15] ऋषिरनयाचष्टे। उक्षा नाम कश्चिद् वरोः[16] पूर्वजस्तस्यापत्यमुक्षण्यायनः छान्दसत्वाद् वृद्ध्यभावः, 'यस्य च भावेन[17]' इत्येवं चैषा सप्तमी । तच्छृतेश्च लक्षणभूतयोर्यक्रिया-पदाध्याहारः। तेनायमर्थः। ऋज्रमृजुगामिनम्[18] । उक्षण्यायने वरौ[19] राजनि ददति सति। किम् ? रजतं रजतमयं रजतसदृशं वा। हरयाणे शत्रुजीवितैश्वर्यादिहर्तृयाने[20] रथं[21] युक्तमश्वा-भ्याम्। असनाम संभक्तवन्तो वयं लब्धवन्त इत्यर्थः । सुषामणि सुषामणीति पितृशब्देन सोऽयमित्यभिसम्बन्धात् पुत्रस्याभिधानं बभ्रुर्मण्डु[22] इति यथा। सुषामणपुत्रे वरौ[23] वित्यर्थः। अथवा साम सौम्यं[24] सुखमिति पर्यायाः[25] सुष्ठु सुख इत्यर्थः।

---

१–॰रोक्षे वौ वा निकृ॰ B. ॰रोचे परोक्षे वौ वा सन्नि॰ C.

२–॰कृष्टा वा B.

३–'यद' इत्येवादर्शपुस्तकपाठः।

४–[धा॰ १ । ३५] पूङ् (इ C.) रक्षणे B. C.

५–'स्तनोति' इत्यादर्शपुस्तकपाठः।

६–अत्र 'सत्यस्य तनितः' इति 'सत्यतनितः' इति वा पाठः संगतो भवेत् ।

७–[अनुपलब्धमूलमिदम्]

८–॰नुष्ठया B. ॰नुष्ठया अनुष्ठानेन C.

९–'अभ्ययाण' इत्यादर्शपुस्तकपाठः।

१०–अलं अयानः B.

११–'भरण' इत्यादर्शपुस्तकपाठः।

१२–'शत्रुजीवि॰' इत्यादर्शपुस्तकपाठः।

१३–[ऋ॰ ८ । २५ । २२]

१४–स यदूत् B. यदूतं C.

१५–विश्वमना C.

१६–पूरो: B. परोः पूर्वजजः C.

१७–[पा॰ २।३।३७]

१८–ऋजुम B.

१९–'परो' इत्यादर्शपुस्तकपाठः।

२०–शत्रुजीवितं तैश्च (थ B.) यादिहर्तियाने B C.

२१–'रथः युक्तं' इत्यादर्शपुस्तकपाठः।

२२–बभ्रूमण्डुः B.

२३–'परावि॰' इत्यादर्शपुस्तकपाठः।

२४–'सामत्वं' इत्यादर्शपुस्तकपाठः।

२५–'विपर्ययाः' इत्यादर्शपुस्तकपाठः।

आरित इत्यनवगतम्। 'ऋ गतौ'[1] इत्यस्य। ऋच्छतेराङ्पूर्वस्य निष्ठायामिदं रूपमिति केचित्। यास्कपदकारौ तु[2] प्रत्यृत[3] इति विवरणादवग्रहकारणाच्च[4] अर्तेर्यङ्लुगन्तस्येदं रूपमिति मन्येते। तस्यै[5] हि यङ्लुकि 'उरत्'[6] इत्यभ्यास ऋकारस्यात्वे[7] 'रुग्रिकौ च लुकि'[8] इति रुकि निष्ठायाश्छान्दसत्वादिटि[9] ऋकारस्य यणादेशो 'रो रि'[10] इत्यभ्यासलोपे[11] ढ्रलोपदीर्घत्वे चारित[12] इति। ण्यन्तस्य वा लुगभावश्छान्दसत्वात्। तेनान[13]वगम आरित[14] इति। ऋते[15] इत्यवगमः। प्रत्यृत इति धातुप्रत्यययोः प्रदर्शनमात्रम्। उदाहरणम्—

यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणि कर्मणि स्थिरः।
वीळोश्चिदिन्द्रो यो असुन्वतो वधो मरुत्वन्तं सख्याय हवामहे[16]॥

कुत्सस्य। यः प्रकृत इन्द्रोऽश्वानां गवां वशी ईशिता। गोपतिर्गोशब्दोऽत्राप्[17]वचनः स्तुतिवचनः स्तोतृवचनो वा पतिशब्दोऽधिपतिवचनः पालयितृवचनो वा। अपां वा स्तोमस्य स्तुतीनां वाधिपतिः स्वामी स्तोतॄणां पालयितेत्यर्थः। आरितो यश्च प्रत्यृतः कर्मणि कर्मणि यागस्य स्तोमान् स्तोमशब्दो यज्ञोपलक्षणो यज्ञं प्रति गत इत्यर्थः। स्थिर[18] आपरिसमाप्तेरविचाली[19]। वीळोश्चित्[20] चिदप्यर्थे संस्तब्धस्यापि अत्यन्तदृढस्यापि असुरादेरिन्द्रो य* असुन्वतः सोमाभिषवमकुर्वतो वधः 'हनश्च वधः'[21] इत्येवमादेर्[22]श्छान्दसत्वात् कर्तर्यप्रत्ययो द्रष्टव्यस्तेन हन्तेत्यर्थः। यच्छ्रुतेः[23] साकाङ्क्षत्वात् तच्छब्दोऽध्याहार्यः। मरुत्वन्तं मरुद्भिः सहितमिन्द्रं सख्याय मनुष्याणां देवैः सह स्तुत्यस्तोतृलक्षणः सम्बन्धः सख्यं[24] तदर्थं हवामहे स्तोतुमाह्वयाम इत्यर्थः।

---

१—[धा० १।९६१]
२—क्र B.
३—प्रत्यकृत C.
४—०रणाभवग्राहाका० C.
५—यस्य हि B.
६—[पा० ७।४।६६]
७—'कारस्यात्ये' इत्यादर्शपुस्तकपाठः।
८—[पा० ७।४।९१]
९—०दिट्का ( टका C. ) रस्य यणादेशः B. C.
१०—[पा० ८।३।१४] रुरित्यभ्या० B. C.
११—[पा० ६।३।१११] ढलोपे दी० B. घूलोपदी० C.
१२—'चारिग इति' इत्यादर्शपुस्तकपाठः।
१३—'न' इति नास्ति B.
१४—अरितेति C. १५—दित B. द्दित C.
१६—[ऋ० १।१०१।४] 'यो अश्वानां' इत्येव प्रतीकम् B. C.
१७—'प्' इति न दृश्यते B. C. अत्र '०त्राब्वचनः' इत्युचितम्।
१८—'स्थिर' इत्यादर्शपुस्तकपाठः।
१९—अविचालि B. अपिचालि C.
२०—विन्दोश्चित् C. * 'यः' इत्युचितम्।
२१—[पा० ३।३।७६]
२२—'०मादिभ्यश्छा०' इति पाठो युक्तो भवेत्।
२३—तच्छ्रुतेः······यच्छब्दो B.
२४—सख्याम् B.

म्रन्द्रीत्यनवगतम् । रूपतश्चार्थतोऽपि । तदुभयं दर्शयति-म्रन्द्री म्रन्दतेर्मृदुभावार्थस्येति । उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या-) ध्यायस्य
पञ्चदशः खण्डः । ]

---

१–म्रदीत्यन॰ C.
२–वृन्द्री वृन्देः मृदु॰ B. म्रन्द्री म्रन्देर्मृदु॰ C.
३–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो । दृश्यते ।

## [ अथ षोडशः खण्डः । ][1]

नि यद् वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद् मन्दिनो रोरुवद्वना ।
प्राचीनेन मनसा बर्हणावता यदद्या चित् कृणवः कस्त्वा परि[2]॥

सव्यस्यार्षम् । नीत्ययं वृणक्षीत्यनेन सम्बध्यते । यच्छब्दो यस्मादर्थे । निवृणक्षि रौधादिकस्य[3] 'वृजी वर्जने'[4] इत्यस्येदं रूपम् । वारणार्थस्य[5] चात्रासम्भवादावर्जनार्थत्वं[6] द्रष्टव्यम् । निवर्जयसि प्रापयसीत्यर्थः । यद् यस्मात् । क्व ? श्वसनस्य[7] शब्दकारिणो वायोः । मूर्धनि उपरि । नच केवलस्य वायोरेव, किं तर्हि ? शुष्णस्य विशोषयितुरादित्यस्य । मन्दिनः[8] पाकेनाम्रादीनां मृदुभावकारिणः । रोरुवत् स्तयित्नुशब्दं कुर्वन् । वना वनान्युदकानि[10] वृष्टिलक्षणानि । कथमादित्यस्य[11] मूर्धनि वनानीन्द्रः स्थापयति[12]? उच्यते । तत्समर्थाचरणान्यतस्तेन भूमौ पतितानि रश्मिभिरादित्यस्य मूर्धनि स्थाप्यन्ते स एवेन्द्रः स्थापयतीति व्यपदिश्यते । प्राचीनेन प्रागन्वितेन पराङ्मुखेन मनसा उत्साहयतेत्यर्थः । निबर्हतीति वधकर्मसु पाठाद् बर्हणा[13] हिंसा मेघस्य तद्वता मेघहिंसापरेण मनसेत्यर्थः । यद् यस्मादद्य । चिदप्यर्थे । अद्यापि कृणवः करोष्येवेदं कर्म । यस्मादिति श्रुतेस्तस्मादित्यध्याहारः । तस्माच्च कस्त्वा[14] त्वां प्रति परि । अध्यर्थे वा परिः- कस्तवाधिकोऽन्यस्तवोपरि । सर्वस्य त्वमुपरि न कश्चित्तवोपरीत्यर्थः । भाष्ये वनानीव[15] घेनानीति पाठात् सामर्थ्याच्च मेघस्येति शेषः । यतो न मेघवधमन्तरेणावर्जनं सम्भवति । अतश्च वाशब्दद्वयस्यापपाठः[16] ।

इदानीं मन्दीत्यस्य[17] मृदुभावार्थतां प्रतियोगिपदान्तिरसमवधानेन[18] स्पष्टयिष्यन्नुदाहरणान्तरं दर्शयति–अमन्दन्त चीळिता इति । उदाहरणम्—

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ऋ० १।५४।५] 'नियद्वृणक्षि' इत्येव प्रतीकम् B, C.

३–रुधादित्यस्य B. रौधादित्यस्य C.

४–[धा० ७।२४] प्रजीवरत्वणे B. C.

५–वरणार्थस्य C. ६–प्रापन्धसी० C.

७ श्वसनशब्दस्य B. C. अत्र 'शब्द' इत्यधिक एव पाठः प्रतीयते ।

८–'योः' इति मुद्रितमादर्शपुस्तकेषु ।

९–वृष्टिन पाकेना० B. मन्दिन पाकेना० C.

१०–वनाद्युदका० C. ११–कथं नरादित्यस्य B.C.

१२–स्थापनायति B. C.

१३–ब्रह्मणा B. बह्मणा C.

१४–कत्वा C. 'कः' इति नास्ति B.

१५–मुद्रितनिरुक्तमूलपुस्तके तु 'वनानीति वा मेघेनेति वा' इति पाठ उपलभ्यते ।

१६–पदशब्द०B. 'शब्दद्वय' इति द्विर्लिखितम् C.

१७–०नीमद्''' मृदु० B. ०नीं वृ''' मृदु० C.

१८–पद (दा C.) न्तात् तरसम० B. C.

तद्देवानां देवतमाय कर्त्वमश्रथ्नन् दृळ्हाव्रदन्त वीळिता ।

उद्गा आजदभिनद् ब्रह्मणा वलमगूहत्तमो व्यचक्षयत् स्वः ॥[1]

निर्धारण एषा षष्ठी देवानां मध्ये । देवतमाय[2] कर्मसम्बन्धव्यतिरेकजनितायाः षष्ठ्याः स्थान एषा चतुर्थी । देवतमस्यातिशयेन दानादिगुणयुक्तस्य ब्रह्मणस्पतेः कर्त्वं[3] कर्म । कतमत् ? उच्यते । अश्रथ्नन्[4] शिथिलीभवन्ति दृळ्हा दृढान्यपीति[5] । किञ्च अव्रदन्त[6] वीळिता वीळितानि संस्तम्भानि[7] अत्यन्तकठिनानि ओषधिवनस्पत्यादिबीजानि शिथिलीभवन्ति च विपरीतगुणानि भवन्ति[8] प्रतिद्वन्द्वीभूतानि मेघवृन्दानि च । न चैतावदेवास्य कर्म । किं तर्हि ? उद्गा आजद् उदाजद् उद्गमयति गा वृष्टिलक्षणाः[9] । अभिनद्[10] भिनत्ति च[11] ब्रह्मणा परिवृढेन । केन ? सामर्थ्याद् वज्रेण । वलं[12] मेघम् । वलेक्षणेन[*] वा ब्रह्मणा स्तूयमान इति शेषः । अगूहद्[13] गूहतश्च विद्युद्वलयविलसितैः[14] शार्वरं तमः । व्यचक्षयत्[15] चक्षिर्दर्शनार्थे,[16] अदर्शयद्[17] नमसो[x] ऽपप्रकरणेन स्व आदित्यम्[18] वीळयतिश्च व्रीडयतिश्च संस्तम्भनार्थे, संस्तम्भश्च दृढ कौठिन्यमुच्यते[19] । पूर्वेण श्रुतेन अव्रदन्त इति व्रन्दिना मृदुभावार्थेन सह प्रयुज्यते मन्त्रेषु[20] । तत्रानयोः[21] संस्तम्भार्थत्वेन प्रतिद्वन्द्वीभावान्मुक्तसंशयं म्रन्दी मृदुभावार्थ इति गम्यते । रामार्जुनवत् । तथाचोक्तम्—'साहचर्यं विरोधिता'[22] इति[23] । व्रीळयतेम्रन्दिना[24] सह प्रयोगो द्रष्टव्यः ।

निष्पर्षीत्यनवगतम् । स्त्रीकाम इत्यभिधेयवचनम् । पुंश्चल्य इत्यर्थः । विनिर्गतपर्शो[25]

---

१–[ऋ० २।२४।३] 'तद् देवाना' इत्येव प्रतीकम् B. C.

२–देवतम॰ B.

३–'कर्तव्यं' इत्यादर्शपुस्तकपाठः ।

४–अश्रुथ्नन् B. अश्रद्धन् C.

५–दृढादीति B. दृब्धादीति C.

६–अव्रदन्त वीलका B. C.

७–'संस्तम्भ्यानि' इत्यादर्शपुस्तकपाठः ।

८–'भवन्तः' इत्यादर्शपुस्तकपाठः ।

९–गामवृष्टिलक्ष॰ B. गादवृष्टि॰ C.

१०–'अद्रिः' इत्यादर्शपुस्तकपाठः ।

११–'॰त्ति परि च' इत्यादर्शपुस्तकपाठः ।

१२–पर्लं C. * अत्र 'वयीलक्षणेन' इति स्यात् ।

१३–अगृहन् C.

१४–अयं पाठः सन्दिग्धः ।

१५–॰यविलयसितैः C.

१६–'॰क्षयन्' इत्यादर्शपुस्तकपाठः ।

१७–'॰र्शयन्' इत्यादर्शपुस्तकपाठः ।

×'स्वः आदि॰' इति 'स्वरादि॰' इति वा युक्तम् ।

१८–'आदित्य' इत्येव पाठः B.

१९–दष्यकधिन्ये मुच्यते B. दृढय काधिन्ये मुच्यते C.

२०–श्रुतेन पद्न्नेति वृडि नासः मुधुगाचोऽर्थेन सह B. श्रुतेन प्रदन्तेति वृन्दिनास मृधुगवोर्थेन सह C.

२१–'तत्रानन्नीया' इत्यादर्शपुस्तकपाठः ।

२२–'वृडि B वृन्दि C.

२३–'॰धिता' इत्युचितम् [ काव्यप्रकाशे २ उल्लासे वाक्यपदीयादुद्धृतम् ]

२४–॰तेर्वन्दिनः B. तेर्वन्दिना C.

२५–॰तपासा B. ॰तवासा C.

इत्यनगमः। विनिर्गतं नित्योत्थितं[1] पसः शेपो यस्येति बहुव्रीहिः। स्त्रीव्यत्ययोऽन्यपदार्थः[2]। पसः पुनः सपतेः 'षप[3] समवाये' इत्यस्य स्पृशत्यर्थस्य विपरीतस्य। स्पर्शश्चात्र[4] सुरतस्य सुखातिशयोऽभिप्रेतः, न त्वगिन्द्रियविषयसंस्पर्शमात्रकम्, सपति स्पर्शयति सुखयतीति। उदाहरणम्—

प्रति यत्स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात्।
अध स्मा नो मघवन् चर्कृतादिन् मा नो मघेव निष्षपी परा दाः॥[5]

कुत्सस्यार्षम्। प्रतिशब्दो धात्वर्थानुवादी अदर्शीत्येतेन सम्बध्यते यच्छब्दो यस्मादर्थः[6], यस्मात् स्या तच्छब्दसमानार्थस्त्यच्छब्दः, त्यच्छब्दश्रुतेर्योगार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। या त्वया काङ्क्षिता स्तुतिः सा। नीथा स्तुतिरत्र नीथोच्यते 'नीथाविदो जरितारः'[7] इति यथा। स्तुतिरदर्शि ईदृशा[8] अस्माभिरालोचिता कृतेत्यर्थः। कृता च सती दस्योरोको नाच्छा[9] ओक इति निवासस्थानमुच्यते अच्छेति व्याप्तुमित्यस्यार्थः[10]। यथा कश्चिद् राजा स्वस्य शत्रोर्निवासस्थानमाप्तुं महता यत्नेन शीघ्रं च गच्छेत् तद्वत्। सदनं सर्वस्तुतीनां स्थानमाश्रयं भवन्तमिमं[11]। जानती गाद् गता[12] प्राप्ता। अध अथ[13] एतस्मात् कारणात्। स्म इति पदपूरणम्। नस्तुतीयार्थं एषा षष्ठी, अस्माभिः। हे मघवन् अत्यर्थं चर्कृतीर्त[14]। किम्? सामर्थ्याद्[15] धनमधारयत्। इत् पदपूरणः। मा नः अस्मान्मा परादाः परादाति[16] सामर्थ्याद् विनाशार्थः[17] परित्यागार्थो[18] वा विनीनशः[19] परित्याक्षी[20]र्वा[21] इति। कथम्? मघेव निष्षपी स्त्रीभोगसक्तहृदयो दासीपतिर्यथा दास्यादिभ्योऽददाद् मघानि धनानि विनाशयति परित्यजति वा मा नस्त्वं तथा परादा इति।

तूर्णाशमित्यनवगतम्। शब्दतश्चार्थतश्च। अत आह उदकमिवेयम्। तूर्णमश्नुते

१–नित्योद्गतं सपः शे० B
२–स्त्रीत्यनन्यपदा ( पाद C ) र्थः B.
३–[धा० १।४०१] सप समवाये B. C.
४–स्पर्शश्चात्र स ( त C. ) मारतस्य B. C.
५–[ऋ० १।१०४।५] 'प्रति यत्स्या' इत्येव प्रतीकम् B.C.
६–'अर्थः' इति त्रुटितम् C.
७–[ऋ० ३।१२।५]
८–तद्दृशा B. तद्दृशा C.
९–०शोकननं वाच्छा ( अच्छ C. ) B. C.
१०–अच्छत्यस्याप्तु० B. C.
११–'भवन्त' इत्यादर्शपुस्तकपाठः।
१२–गत प्राप्ता B.
१३–'अथ' इत्येव त्रिलिखितम् B. C.
१४–चर्कृत्यार C.
१५–०द्ध्यः पारयत् C. धर्य पाठः प्रतिभाति।
१६–विसर्गो नास्त्यादर्शपुस्तकेषु।
१७–'०नाशार्थे' इत्यादर्शपुस्तकपाठः।
१८–०त्यागार्थो वा C.
१९–'विविनशः' इत्यादर्शपुस्तकपाठः।
२०–०त्याक्षिर्वा C.
२१–विरि B. विति C.

व्याप्नोति एवं निर्वचनेन[1] तूर्णशब्दस्य क्रियाविशेषणत्वेन सकर्मकत्वात् कर्मोपपदाभावात् पर्दाचिकेचिद्[4] स्यादिति चेद् अश्नुत इत्यर्थे तूर्णं च तदशश्च तूर्णाशः* । एवमपि ताच्छील्यानवगमः । अथाप्यशनमाशस्तूर्णमाशोऽस्येति तथापि ताच्छील्यस्यानवगतिः । तस्मात्तूर्णाशीति भाव्यम् । उदाहरणम्—

प्रति श्रुताय[7] वो धृषत् तूर्णाशं न गिरेरधि ।
हुवे सुशिप्रमूतये[8] ॥

मेधातिथेः । प्रतीति कर्मप्रवचनीयश्रुतेस्तद्योगिक्रियाशब्दोऽध्याहार्यः । श्रुतायेत्यपि व्यत्ययेन चतुर्थी द्वितीयार्थे । व इति बहुवचनमेकवचनस्य स्थाने । तेनायमर्थः । आरमीयं यागं प्रतिश्रुतं विख्यातं वा त्वामिन्द्र धृषत् क्रियाविशेषणमेतद् द्रष्टव्यम् । धृष्टं प्रगल्भं निःशङ्कमित्यर्थः । तूर्णाशं[9] न उदकमिव । यथा वृष्टयर्थिनो बहूपकारसमर्थमुदकम्[10] । गिरेरधि उपरि स्थितमिति शेषः, आह्वयेयुः । एवमहं हुवे[11] ह्वयतेरात्मनेपदोत्तमैकवचने बाहुलकेन शपो लुक् सम्प्रसारणमुवङ्‌देशो[12] चैतद् रूपम् । आह्वयामि सुशिप्रं[13] सुहनुं सुनसं वा । किमर्थम् ? ऊतये तर्पणाय पालनाय वात्मनः ।

क्षुम्यमित्यनवगतम् । अहिच्छत्रकमभिधेयम्[14] । यत् क्षुभ्यत[15] इति हेतुवचनम् । यद्यस्माद्यत्नेनैव शक्यं क्षोभयितुम् । क्षोभ्यमिति न्याय्यम्[16] । उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या-) ध्यायस्य
षोडशः खण्डः[17] ]

---

१–निर्वचने B, निर्वचन C.
२–'तूर्णा' इत्यादर्शपुस्तकपाठः ।
३–'स' इति नास्ति C.
४–पचादिकेचिद् C. अयं पाठः सन्दिग्धः ।
* अत्र 'तदशश्च तूर्णाशम्' इति युक्तम् ।
५–'च्छी' इति त्रुटितम् B.
६–'ग' इति त्रुटितम् B. C.
७–[ऋ० ८।३२।४] 'प्रति श्रुताय' इत्येव प्रतीकम् B. C.
८–'धृषत्' इत्यादर्शपुस्तकपाठः । ९–तूर्णशं न C.
१०–बभूव कार० C.
११–भुवे C. १२–देश वैतद् C.
१३–आ (अ C.) शीप्रं B. C. 'सुशिप्रं' इत्युचितम् ।
१४–क्षुदिच्छत्र० B क्षुभिच्छत्र० C.
१५–'क्षुर्यभ्यत' इत्यादर्शपुस्तकपाठः ।
१६–०त्य न्यायम् B. क्षोभमित्यन्न्यायम् C.
१७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ सप्तदशः खण्डः ][1]

कदा मर्तमराधसं पदा क्षुम्पमिव स्फुरत् ।

कदा नः शुश्रवद्गिर इन्द्रो अङ्ग ॥[2]

गोतमस्य राहूगणस्यार्षम् । कदा कस्मिन् काले । मर्तं मनुष्यम्[3] । अराधसं हविर्लक्षणेन[4] धनेन रहितमयष्टारमित्यर्थः । पदा क्षुम्पमिव 'स्फुरति स्फुलति' इति वधकर्मसु पाठात् स्फुरतिरभिहार्थे[5] । यथाहिः कश्चित् क्षुम्पमाक्रमत् पादेन स्फुरेत् हन्यात् तद्वत् स्फुरिष्यति वधिष्यतीत्यर्थः । कदा नः कदा वास्माकं सर्वदा यष्टॄणां शुश्रवत्[7] श्रोष्यति[8] गिर इन्द्रो अङ्ग क्षिप्रम् । अयष्टॄन्[9] कदा निग्रहीष्यति यष्टॄंश्चास्मान् स्तुतिश्रवणादनुग्रहीष्यतीत्यर्थः । अनाराधयन्तमित्यर्थप्राप्तं वचनं न दारिद्र्यात्, किं तर्हि? नास्तिक्याश्रद्धानतया अयष्टारमित्यर्थः । अवस्फुरति शृणोतीति पाठः, अवस्फुरिष्यतीति वेति । अङ्गेति निपातः क्षिप्रार्थः । तस्यार्थो[10] विदितमेवेति[11] । यद्धि क्षिप्रं तदन्वितमेवात्यन्तलभ्रमेवेति[12] । अङ्कितमित्यङ्गशब्दसमाधिः[13] । अगियमेगीत्यनेन नत्यर्थस्य[14] ।

निचुम्पुण इत्यनवगतमनेकार्थं च सोमोऽभिधेयः । स चोदाहरणसामर्थ्याद् ऋजीषरूपशुमाभिप्रेतः । निचान्तपृण इति भ्रान्तिवचनम् । निचान्तो भक्षितः प्रीणातीति निचमनेन[15] प्रीणातीति निचुम्पुणशब्दस्यार्थवचनम् । भक्षणेन तर्पयतीति । उदाहरणम्—

[ इति दशमस्या-(षष्ठमस्या-) ध्यायस्य
सप्तदशः खण्डः ][16]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ऋ० १।८४।८] 'कदा तर्नमराधसं' इत्येव प्रतीकम् B. C.

३–मर्तः ऋतुष्यम् B. मर्तं ऋतुष्यम् C.

४–अराधदुं ( सुं C. ) वाखिल्लक्षयेय' इत्यादर्शपुस्तकपाठः ।

५–[निरु० २।१९] 'स्फुरति स्फुलति इति वधकर्मसु पाठात्' अयं पाठस्त्रुटितः C.

६–०भिमार्थे C. अत्र '०भिहननार्थे' इति '०भिमवार्थे' इति वा पाठः संगतो भवेत् ।

७–'शुश्रूवत्' इत्यादर्शपुस्तकपाठः ।

८–श्रोष्यरि C.

९–'अयस्मिन्' इत्यादर्शपुस्तकपाठः ।

१०–कस्यार्थो C.

११–विदितमे० B.

१२–अयं सन्दिग्ध एव पाठोऽनवगतार्थः ।

१३–'०त्यभ्रश०' इत्यादर्शपुस्तकपाठः ।

१४–अयं सन्दिग्धोऽनवगतार्थः पाठः ।

१५–'नि' इति त्रुटितमादर्शपुस्तकेषु ।

१६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ अष्टादशः खण्डः ][1]

पत्नीवन्तः सुता इम उशन्तो यन्ति वीतये ।
अपां जग्मिर्निचुम्पुणः[2] ॥

पत्न्यः पालयित्र्य आपो वसतीवर्यस्ताभिस्तद्वन्तः[3] । सुता[4] अभिषुता इमे गृहस्थाश्च । सोममुशन्तः[5] सामर्थ्यादिवशब्दलोपो[6] द्रष्टव्यः कामयमाना इव । किम् ? पानमात्मनः[7] । यन्ति गच्छन्ति इन्द्रम् । किमर्थम् ? पीतये पानाय । अपां जग्मिरपामिति षष्ठी द्वितीयार्थे । तच्छ्रुतेर्वा[8] मध्यमिति वाक्यशेषः । अपः प्रति अपां वा मध्यं जग्मिः 'आदृगमहन' इत्येवं किमन्तमेतत् ? गमनशीलः साधु वा गन्तेत्यर्थः । कः पुनरसौ ? निचुम्पुण ऋजीषरूपः सोमः स हि 'अवभृथकाले ऋजीषमप्सु[9] प्रास्यन्ति' इति वचनादप्सु प्रक्षिप्यते । तदुच्यते अपः प्रति गमनशीलः साधु वा गन्ता चापां मध्यमिति ।

अनेकार्थतां दर्शयितुमाह–समुद्रोऽपीत्यादि । निचमनेन नियमेनाचम्यन्ते[*] इति निचमनमुदकं तेन पूर्यते । पर्यायो[12] निगमः । अवभृथोऽपि कर्मविशेषः सोऽप्येवमुच्यते कस्मात् ? नीचैरस्मिन् । क्वणन्तीति नीचैः[13] शब्देन कर्म कुर्वन्तीत्यर्थः । अवभृथेष्टौ 'अप्यानमुपांशु चरन्ति[14]' इति वचनात् । नीचैर्वा रिक्तान्यधोमुखानि पात्राणि दधति अप्सु सृजन्ति । के ? सामर्थ्यादृत्विजः ।

अवभृथ निचुम्पुण निचेरुरसि निचुम्पुणः ।
अव देवैर्देवकृतमेनोऽयक्ष्यव मर्त्यैर्मर्त्यकृतं पुरुराव्णो देव रिषस्पाहि[15] ॥

सोमपात्राण्यनेन मन्त्रेणाप्सु प्रास्यन्ते । अवभृथकर्मणो हि मन्त्र[16] देवता वरुणः । तदेव वा कर्माभिरुच्यते 'शृणोत ग्रावाणः' इति यथा । हे अवभृथ अवभृथस्य चामन्त्रणम् । निचुम्पुण वरनाम । निचेरुरसि नीचैश्चरणधर्मा त्वमसि । समासत्वात् पररूपः ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ०८।९३।२२ ] 'पत्नीवन्तः सुता' इत्येव प्रतीकम् B. C.
३–एतथा हितास्तद्वन्तः B. C.
४–'ता' इति त्रुटितम् B. C.
५–'सोमः' इत्यादर्शपुस्तकपाठः ।
६–'शब्दलोपो द्रष्टव्यः' इति त्रुटितम् B.
७–पान ( B. C. ) मात्मने B.
८–[ पा० ३।२।१७१ ]
९–निरप्सु B. निरप्सू C.
१०–[अनुपलब्धमूलमिदं वचनम्] 'प्सु' इति त्रुटितम् B
११–'वाो' इत्यादर्शपुस्तकपाठः ।
* –'चम्यत' इति युक्तं स्यात् । १२–पर्याया C.
१३–'चशब्देन' इत्यादर्शपुस्तकपाठः ।
१४–[अनुपलब्धमूलमिदं वचनम्]
१५–[ यजु० २० । १८ ] 'अवभृथ निचुम्पुण' इत्येव प्रतीकम् B C.
१६–'मन्त्रः' इति युक्तं स्यात् ।

नीचैः कवणनधर्मा य ईदृशोऽसि सोऽवदेवैर्देवकृतमेनोऽयक्षीत्यनेन सम्बध्यते । देवैरिति सहयोगलक्षणा तृतीया । अवपूर्वो यजिरत्ययजने द्रष्टव्यः । तेनायमर्थः । देवैः सह देवकृतं देवापराध[1]जनितमित्यर्थः । किं पुनस्तत् ? एनो यदस्माकं पापं तदवयक्षि अवयज[2] अपगमयेत्यर्थः । एवमेव अवमर्त्यैर्मर्त्यकृतमपनयमवमर्त्यैर्[3]मनुष्यैः सह मर्त्यकृतं[4] मनुष्यैरस्माभिः कृतं पुरुषापराधजमेनः । पुरुराव्णो देव रिषस्पाहि उर्व्या[6] विस्तीर्णया अस्मादेव[5] रिषो हिंसायाः पाहि रक्ष । निचुम्पुण निचुङ्कुणेत्येतद् व्याख्यातव्यम् । कवणतेरिति शेषः । द्वावप्येतौ क्रियासम्बन्धेनावभृथविषयावित्यर्थः । तथा व्याख्यातम् ।

पदि[7]रित्यनवगतम् । गन्तुरभिधेयः[8] । पत्पद्यत इति हेतुवचनम् । यस्मादसौ नित्यमाकाशे[9] पद्यते गच्छति । तदिदं[10] गमिधासीत्येवं तत् प्रत्ययान्तोयं गन्त्यं गन्तेत्यर्थः । पदान्तरसम्बन्धाच्चात्र[11] पक्षयभिधेयः । उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
अष्टादशः खण्डः[12] । ]

———

१—देवोपरोध B. देवोपराध C.

२—अपजावगमये B. C.

३—०मवनये C. 'भवमर्त्यैः मर्त्यकृतमपनयं ( यने B. )' इति द्विर्लिखितः पाठः B.

४—'मर्त्यकृतं' इति नास्ति B.

५—उरोरान: B. उरोः आनः C.

६—'उर्व्या विस्तीर्णया अस्मादेव' इति पाठः सान्दिग्धोऽनवगतार्थ एव ।

७—पदि इतरित्य० B

८—०भिधेयम् C.

९—'का' इति मुद्रितम् B.

१०—अस्य वाक्यस्य पाठः सन्दिग्ध एव ।

११—'०च्चातावस्य०' इत्यादर्शपुस्तकपाठः ।

१२—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथैकोनविंशः खण्डः । ][1]

सुगुरसत् सुहिरण्यः स्वश्वो बृहदस्मै वय इन्द्रो दधाति ।
यस्त्वायन्तं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति[2] ॥

कक्षीवत आर्षम् । अग्निरुच्यते । सुगुः शोभना दृष्टादृष्टप्रयोजनसामर्थ्याद् गावो यस्य सः[3] सुगुः । असद् भवति । एवमेव सुहिरण्यः स्वश्वश्च । बृहन्महद्वा[4]स्मै । वयोऽन्नमेतत्, अन्नमिन्द्रो दधाति ददाति चास्मै सर्वाः सम्पदः । कस्मै ? उच्यते[5] । यस्त्वा त्वां सायं प्रातश्चाग्निहोत्रमायन्तमागच्छन्तं वसुना हविर्लक्षणेन धनेन । प्रातरित्वः 'इण् गतौ'[6] इत्यस्येदं क्वनिपि रूपं प्रातरेवाग्निहोत्रार्थमागामिनित्यर्थः । मुक्षीजा जालपाशिका पदिं पक्षिणम् । यथा मक्षीजया[7] जालपाशिकया कश्चित् कुमारः पक्षिणं सिनुयात् एवमुत्सिनाति । उदित्येष समित्येतस्य[8] स्थाने 'षिञ् बन्धने'[9] बन्धनं संरोधः,[10] स चापि योऽभ्यर्चनापूर्वः स इहाभिप्रेतः । अनया रज्ज्वा हि बन्धः सम्यग् बध्नाति अत्यन्तं संघणद्धीत्यर्थः । अतिथेरतिथिस्थानीयस्यै[11] । एवं चेदमग्नेरतिथित्वं मन्त्रान्तरे 'जुष्टो दमूना अतिथिर्दुरोणे[12]' इति[13] । मोचनाद् मुच्यते हि सा बध्यमानेषु पक्षिषु, आमुच्यन्ते वा पक्षिणः, पादे तन्यते वासौ प्रसार्यते पक्षिबन्धनैः[14] पाशजालरूपा चेति मुक्षीजा[15] ।

पादुरित्यनवगतम् । पद्यतेरिति[16] धातुनिर्देशः 'पद गतौ'[17] इत्यस्य । पदनं पाद

[illegible] ।
आविः स्वः कृणुते गूहते बुसं स पादुरस्य निर्णिजो न मुच्यते[18] ॥

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १।१२५।२ ] 'सुगुरसत्' इत्येव प्रतीकम् B. C.
३–'सः' नास्त्यादर्शपुस्तकेषु ।
४–'वा' इति त्रुटितम् B. C.
५–'तस्मै यस्य सर्वाः सम्पदः उच्यन्ते' इत्येवमादर्शपुस्तकेषु पाठः ।
६–[ धा० १।१३५ ]
७–मुक्षिजया कथित ( C. ) वा B.
८–मि ( स C. ) दित्ये B. C.
९–[ धा० ९।१५ ]
१०–'सं' इति न दृश्यते B.
११–'स्य' इति त्रुटितम् B.
१२–'स्य' इति नास्त्यादर्शपुस्तकेषु ।
१३–[ ऋ० ५।४।५ ]
१४–बन्धने पाश० B. C.
१५–'जा' इति नास्ति B. मुक्षिजा C.
१६–'पादयतेः' इत्यादर्शपुस्तकपाठः ।
१७–[ धा० ४।६१ ]
१८–[ ऋ० १०।२७।२४ ] 'सा ते जीवातुः' इत्येव प्रतीकम् B. C.

वसुभ[1]कस्यार्थम । तच्छ्रुतेरत्र यच्छब्दोऽध्याहार्यः[2] । उत्तरस्मिन्नर्धर्चे यच्छब्दसम्बन्धाच्च स एव व्याख्यानकाले प्रथममुपक्रमितव्यः । यद् रश्मिद्वारेण गत्वा आविः स्वः कृणुते आविष्कुरुते प्रकाशयति । स्वः[3] सर्वपर्यायोऽयम्, सर्वम् । उदकनाम वा स्वं रश्मिभिः पर्याप्नुमानो यदुदकमाविष्कुरुते । आदित्यो वा स्वरित्युच्यते, आविष्कुरुते भासमादित्यः । गच्छते सर्वं संवृणोति च रश्मिभिराच्छते चेत्यर्थः । अथवा[4] सा देवता ते नैव[5] जीवातुः 'जीवेरातुः'[6] प्रत्ययो भावे जीवनं जीवातुर्जीविकाहेतुरित्यर्थः । किम् ? सामर्थ्याद् योगं स्तुतिं च मा स्म एतादृगुपकृतस्यापगूः प्रत्युत कुरुष्वेत्यभिप्रायः । समर्ये[10] संग्रामनामेदम्, संग्रामे सप्तमीश्रुते-र्वर्तमान इति शेषः । केन सह संग्रामः ? सामर्थ्याद् मृत्युना, सर्वप्राणिनां हि सर्वदैव मृत्युना सह संग्रामो जीवितस्येष्टत्वात्, मृत्योश्च[11] तदपहरणे सर्वदा प्रवृत्तत्वात् । अत्र भाष्यकार आविष्कुरुते भासमादित्य इति भासमित्येतद्[12] व्यवहरन् स्वःशब्दमादित्यवचनं मन्यते न सर्वपर्यायमुदकवचनं[13] चेति गम्यते ।

इति निरुक्तविवरणसमुच्चये
दशमस्या-( पञ्चमस्या-[14] ) ध्यायस्य
तृतीयः पादः ।
[ एकोनविंशश्च खण्डः
समाप्तिः । ]

---

१–'वसुकस्या०' इत्यादर्शपुस्तकपाठः ।
२–०कोमाहार्यः C.
३–'स्वमसर्व०' इत्यादर्शपुस्तकपाठः ।
४–'अथवा' इत्यस्मात् पूर्वं 'साम:' इति C. पुस्तकेऽधिकः पाठो वर्तते ।
५–न वा B. नव C.
६–जीवतु B.
७–[ उणा० १।७८ ] सूत्रमिदं नास्ति B. C.
८–जीविकां B. नास्त्येव C.
९–पादं B.
१०–'समये' इत्यादर्शपुस्तकपाठः ।
११–'मृत्यो' इति द्विर्लिखितम् B. C.
१२–तामामि० B. तामभि० C.
१३–'वचन' इति त्रुटितम् C.
१४–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तके ।

# अथ [ पञ्चमस्याध्यायस्य ][1] चतुर्थः पादः

वृक इत्यनवगतमनेकार्थं च। चन्द्रमा इत्यभिधेयः। विवृतैर्ज्योतिष्क[2] इत्यादयोऽवगमाः। विवृतं स्पष्टं व्यक्तं ज्योत्स्नारूपं ज्योतिरस्य न नक्षत्राणामिवाव्यक्तम्। विवृतं वा नक्षत्रादि[3]र्ज्योतिरमुष्मिन्नुदितेऽपि[4]। न ह्रासयादित्ययत् प्रच्छादयतीत्यर्थः[5]। अविकृतत्वं वा शीतत्वात्। औष्ण्यं हि प्रकृतं ज्योतिषि[*] अग्न्यादौ दर्शनात्[6]। ह्रासवृद्धिभ्यां[7] वाऽल्पत्वेन[8] महत्त्वेन विवृतं ज्योतिरस्मिन्। विक्रान्तं दिगन्तराणि ज्योतिरस्य। नक्षत्रादिभ्यः प्रकृष्टमित्यर्थः। वृकश्चन्द्रमाः[9]। उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
विंशः खण्डः।[10] ]

---

१–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. अयं पादनिर्देशात्मकः सर्वोऽपि पाठो नास्ति C.

२–विवृतज्ज्यो० C.

३–०त्रादि वा ( व B. ) ज्योति० B. C. अत्र 'वा' इति 'व' इति वाधिक एव पाठः।

४–०दितेऽपि C.

५–त्यर्थमवि० C.

६–औष्ण्यं हि प्रतं ज्यो० B.

* 'ज्योतिषि' इति युक्तं स्यात्।

७–भ्यामृ० C.　८–वात् यत्वेन विवृतं C.

९–वृतश्चन्द्रमाः C.

१०– आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते

# [ अथैकविंशः खण्ड । ][1]

अरुणो मासकृद् वृकः पथा यन्तं ददर्श हि ।
उज्जिहीते निचाय्या तष्टेव पृष्ठ्यामयी वित्तं मे अस्य रोदसी[2] ॥

त्रितस्य कूपे[3] पतितस्यैतदार्षम् । अरुण[4] आरोचनः प्रकाशते प्रकाशको जगत । मासकृद् मासानां कर्ता । मन्त्रे तु मासः प्रदर्शनं यत आह अर्धमासानां चेति[5] । विरूपैकशेषो वा मासार्धमासानां चेति । विरूपैकशेषो वा मासार्धमाससंवत्सरऋत्वयनाहो-[6]रात्राणामित्यर्थः । वृकश्चन्द्रमा यथा स्वेन यन्तं गच्छन्तं ददर्श[7] । कम[8] ? चन्द्रमसस्सम्बन्धादिशीते[9] श्रवणेन च यज्ज्ञानं तदिहाभिप्रेतम् । पथ एकत्वेन निर्देशात् तेन पथान्यस्य गमनासम्भवात् तत्सामर्थ्यान्नक्षत्रगणम् । हीति पदपूरणः[10] । केचिदेवशब्दस्यार्थे इति वर्णयन्ति नक्षत्रगणमेव न मामिति । यदि पश्येद् उद्धरेत् कूपादित्यभिप्रायः[11] । उज्जिहीते 'ओहाङ् गतौ'[12] इत्यस्यैतद्रूपम् । निचाय्येति[13] चायतिर्दर्शनार्थः प्रसिद्धः । निचाय्य[14] दृष्ट्वा चोज्जिहीते ऊर्ध्वं गच्छति सामर्थ्याधीन येनास्य नक्षत्रेण योगस्तेन तेन सैहोत्तिष्ठती-[15]त्यर्थः । क इव ? तष्टेव यथा तक्षा नित्यं निकुटितत्वात् पृष्ठ्यामयी पृष्टिरिति[16] पृष्ठमुच्यते तस्यामामयो रोगस्तद्वान् पृष्ठ्यामयी समुपजातपृष्ठवेदनो[17] विश्रमार्थं मन्दमुत्तिष्ठेत तद्व-[20]दित्यर्थः । वित्तं[18] मे अस्य 'विद ज्ञाने'[19] श्रवणेन च ज्ञानमिहाभिप्रेतम् । शृणुतं मे मम । अस्येति अस्येति* षष्ठी द्वितीयार्थे इदं यच्च इति शेषः । अथवा अस्येति दुःखस्य प्रतिनिर्देशमपि जानीतं ममेदं कूपपातनिमित्तदुःखं[21] विज्ञाय चौर्यानुग्रहस्वभावैकतया[22] मामितैः[23] कूपादुत्तारयतमित्यर्थः । हे रोदसी द्यावापृथिव्यौ ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ ऋ० १।१०५।१८ ] 'अरुणो मा' इत्येव प्रतीकम् B. C.

३–ति (C.) तस्य रूपे पचति तस्यैत० B. C.

४–अनुणः C.

५–इदं वाक्यं द्विर्लिखितमादर्शपुस्तकेषु 'विरूपैकशेषः' इत्यस्य स्थाने B. पुस्तके 'विरूपशेषः' इत्येव पाठः ।

६–ऋत्वयनाहोरा० C.

७–'द' नास्ति B. C. 'दर्श' इत्येव ।

८–कं च B.

९–'सम्बन्धादिज्ञाने' इति पाठोऽत्र समीचीनो भवेत् ।

१०–पूरणम् B.

११–रूपादित्य० B. C.

१२–[धा० १।७]

१३–निचार्येति B. C.

१४–निचार्य C.

१५–समोत्ति० C.

१६–पृष्टिरिति B. C.

१७–वेदने निश्रमा० B.

१८–मास्य B.

१९[धा० २।५४]

२०–मन्त्रस्येति B. म आस्येति C.

* इदमत्राधिकमेव ।

२१–रूपपा (ता C.) त नि० B. C.

२२–अत्र 'चार्यानुग्रहस्व०' इति पाठो युक्तो भवेत् ।

२३–रुद्धादक C.

२४–मामितः रूपादु० C.

मासकृदिति यदेतदेकं पदं तदभिप्रायेणैतदेवं भाष्यकारेण व्याख्यातम् । शाकल्यस्य तु द्वे एव पदे । अस्य कोऽभिप्रायः ?[1] उच्यते । यथा यन्तमिति[2] वचनात् पुनः पुनर्दर्शनाच्च सकृदिति सकृद्दर्शनादनादरः[3] ख्याप्यते । सकृदपि निचार्य[4] तत उज्जिहीते ऊर्ध्वमेव तथा दक्षदुहितृभूतया[5] सह गच्छति न मामुत्तारयतीत्यभिप्रायं[6] वित्तं चेमं[7] वृत्तान्तं युवामपि ।

अनेकार्थतां दर्शयन्नाह आदित्योऽपीत्यादि[8] । यद्यस्मादावृङ्क्ते आवृणोति जगत् प्रकाशनेन । अथवा वृणक्तीति वधकर्मसु[9] पाठाद् यस्माद् विनाशयति तमांसीत्यर्थः । आवृणोति वेदकानि[10] रश्मिभिः संभजत इत्यर्थः ।

अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ।
वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण[11] ॥

कक्षीवत आर्षम् । अत्रेतिहासो भाष्यकारेणाख्यातः । अजोहवीद् आहूतवती[12] त्यर्थः । अश्विना हे अश्विनौ । वर्तिका वर्तते पुनः पुनरावर्तयेत्[13] इत्युषा अत्र वर्तिकाऽभिप्रेता न चटका[14] । आवर्तनस्वभाविकोषाः । वां युवाम् आस्न[15] आस्यशब्दस्यायमासन्नादेशः पद्दन्नित्[16]-सूत्रस्मरणात् । आस्याद् यदेताम्[17] अमुञ्चतम् अन्तर्नीतण्यर्थोऽयं मुञ्चिः,[18] मोचितवन्तौ स्थः । कस्यास्यादिति[19] ? वृकस्यादित्यस्य । किञ्च नैतावदेव कर्म युवयोः । किं तर्हि ? विशब्दो ययथुरित्येतेन[20] सम्बध्यते । जयुषा जितवता शत्रून् जयनशीलेन[21] यातेन सामर्थ्याद् रथेन । निर्ययथुर्विविधं[22] गतवन्तौ स्थः । किम् ? सानु समुच्छ्रितं प्रदेशम् । अद्रेर्मेघस्य । गत्वा च जातं जननधर्मा* च सर्वभूतजातं कृतमित्यर्थः । कथम् ? विष्वाचो[23] मेघविशेषणमेतद्

---

१–अस्याभिप्राय उच्यते B.
२–यथायथमिति B. यथा यन्तमिति वचनात् पुनः पुनर्दर्शमान्तु C. ३–'रः' इति त्रुटितम् B.
४–निवार्येत क उज्जि॰ B. निवार्यत क उजिहीति C.
५–दक्षदुग्नातया B. दक्षदुग्नातया C.
६–॰रयन्तीत्य॰ C.
७–प्रायमवित्तं B. C. ८–॰त्योवीत्या॰ C.
९–[निघ॰ २।१९] प्राणन्तीति B C.
१०–अत्र 'वोदकानि' इति पाठो युक्तः ।
११–[ऋ॰ १।११७।१६] 'अजो हवीत्' इत्येव प्रतीकम् B. C. १२–आहुतवती॰ B.
१३–वर्तयतु B. १४–चटीका B. C.
१५–आस्ने B. १६–[पा॰ ६।१।६३]
१७–आस्यात्पथैता B. अस्यात्पदेतां C.
१८–मुचि मोचिकवन्ते C.
१९–कस्यास्य B कस्यास्यत् C.
२०–अत्र 'ययथुः' इति पाठो युक्तो भवेत् ।
२१–'ज' इति त्रुटितम् B. C.
२२–'वि' इत्यत्र नास्ति B. C.
* 'जननधर्मं' इति युक्तं स्यात् ।
२३–वष्वाच: B. वर्षाच: C. मुद्रितनिरुक्तपुस्तकेषु तालव्यमध्यो 'विश्वाच' शब्दो दृश्यते । परमत्र टीकायां मूर्धन्यमध्यस्यैव व्याख्यानं वर्तते । अन्यव्याख्यानेषु विश्वगित्युपपदम् । अत्र तु 'विषु' इति

चिशुशब्दो नानार्थे, अश्नतिर्गत्यर्थः। नानाञ्चितुमितश्चामुत्र च गन्तुं गमनशो विशीर्यमाणवयुषो मेघस्य मेघसम्बन्धिनः। अहतम् आहतवन्तौ स्थ इत्यर्थः। केन ? विषेण उदकनामैतत्, उदकेन। मेघं विपात्य महतीं वृष्टिं पातितवन्तावित्यर्थः।

अपि वृक इति श्वजातीयोऽपि योऽयं लोके प्रसिद्धो वत्सोरणकानां विवर्तनादाता अस्माधप्युरणानां विकर्तनयोगाद् वृक उच्यते। विविधमसौ कृन्ततीति वृक्को तस्माद् वृकः। उदाहरणम्—

> वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति।
> सेमं नः स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया॥

प्रगाथपुत्रस्य कलेरार्षम्। वृकश्चित् चिदप्यर्थे वृकोऽपि श्वा सारमेयः। अस्य वारणो वारयिता यस्मादेषतेनैव शत्रूणामुरामथिहरणवैदेवमथ्नाति अतो वृक इत्युच्यते। आकारोऽभूषतीत्यनेन सम्बध्यते, वयुनेषु कान्तिषु इच्छासु आभूषति आभिमुख्येन करोति। यद्यद् भर्तानिच्छति तत्तत् करोतीत्यर्थः। स इमं नोऽस्माकं स्वभूतं स्तोमं जुजुषाणः सेवमानः प्रीयमाणो वा आगहि आगच्छ हे इन्द्र प्रचित्रया प्रकर्षेण चित्रया पूजनीयया धिया प्रज्ञया इत्थंभूतया।

निगमप्रसक्तमुच्यते। उरणं ऊर्णया तद्वान्। उरशब्द ऊर्णायां द्रष्टव्यः, ततो नकारो मत्वर्थीयः। वामन इति यथा। निर्वचनप्रसक्तमाह ऊर्णा पुनर्वृणोतेः प्रीयन्ते हि ता शीतार्थैः छादितो वा ताभिर्मेषः।

---

१–'ना' इति त्रुटितम् C.
२–सन्दिग्धमिदं पदम्।
३–'मेघ' इति नास्ति C.
४–विशेषणेन B. C.
५–अत्र 'विपात्य' इति पाठो युक्तो भवेत्।
६–वृका B. श्वा वि वृका इति श्वजा॰ C.
७–॰वत्सुरणा॰ C.
८–[ऋ॰ ८।६६।८] 'वृकश्चित्' इत्येव प्रतीकम् B. C.
९–वृगाथपुत्रस्य कलेरार्ष C.
१०–वृको वि श्वा C.
११–यस्मात् यते B. यस्मादते C.
१२–'उरामथिः' नास्त्यादर्शपुस्तकेषु।
१३–'व' इति त्रुटितम् B.
१४–'का' इति त्रुटितम् B.
१५–भूषती॰ B. C.
१६–भवनि॰ C.
१७–स इमाम अस्मा॰ B
१८–प्रियमा॰ B. मीयमा॰ C.
१९–अगहि C.
२०–प्रचित्रया C.
२१–उरणा B. C.
२२–उररा B. उरशब्दः C.
२३–द्रष्टव्यम् B.
२४–ऊर्णा पुनर्वृणीते B. ऊर्णा पुन वृणोतेः C.
२५–प्रीयन्ते B.

मासकृदिति यस्यैतदेकं पदं तदभिप्रायेणैतदेवं भाष्यकारेण व्याख्यातम् । शाकल्यस्य तु द्वे एव पदे । अस्य कोऽभिप्रायः?[1] उच्यते । यथा[2] यन्तमिति वचनात् पुनः पुनर्दर्शनाच्च सकृदिति सकृद्दर्शनादनादरः[3] ख्याप्यते । सकृदपि निवार्य[4] तत उज्जिहीते ऊर्ध्वमेव तया दक्षदुहितृभूतया[5] सह गच्छति न मामुत्तारयतीत्यभिप्रायं[6] वित्तं चेमं दृष्टान्तं युवामपि ।

अनेकार्थतां दर्शयन्नाह आदित्योऽपीत्यादि[8] । यदस्मादात्मके आवृणोति जगत् प्रकाशनेन । अथवा वृणक्तीति वधकर्मसु पाठाद्[9] यस्मात् विनाशयति तमांसीत्यर्थः । आवृणोति वेदकानि[10] रश्मिभिः संभजत इत्यर्थः ।

अजोहवीदश्विना वर्तिका वामास्नो यत्सीममुञ्चतं वृकस्य ।
वि जयुषा ययथुः सान्वद्रेर्जातं विष्वाचो अहतं विषेण[11] ॥

कक्षीवत आर्षम् । अत्रेतिहासो भाष्यकारेणाख्यातः । अजोहवीद् आहूतवतीत्यर्थः[12] । अश्विना हे अश्विनौ । वर्तिका वर्तते पुनः पुनरावर्तयतेत[13] इत्युषा अत्र वर्तिकाऽभिप्रेता न चटका[14] । आवर्तनस्वभावविकोषाः । वां युवाम् आस्न[15] आस्यशब्दस्यायमास्नादेशः पद्दन्[16]-सूत्रस्मरणात् । आस्याद् यदेताम्[17] अमुञ्चतम् अन्तर्नीतण्यर्थोऽयं मुचिः,मोचितवन्तौ[18] स्थः । कस्यास्येति[19] ? वृकस्यादित्यस्य । किञ्च नैतावदेव कर्म युवयोः । किं तर्हि ? विशब्दो ययुरित्येतेन[20] सम्बध्यते । जयुषा[21] जितवता शत्रून् जघनशीलेन वातेन सामर्थ्याद् रथेन । निर्ययथुर्विविधं[22] गतवन्तौ स्थः । किम् ? सानु समुच्छ्रितं प्रदेशम् । अद्रेर्मेघस्य । गत्वा च जातं जननधर्मा* च सर्वभूतजातं कृतमित्यर्थः । कथम् ? विष्वाचो[23] मेघविशेषणमेतद्

१–अस्याभिप्राय उच्यते B.
२–ययाययमिति B. यथा यन्तमिति वचनात् पुनः पुनर्देशमान्तु C. ३–'रः' इति त्रुटितम् B.
४–निवार्यत क उज्जि० B. निर्वायत क उज्जिहीति C.
५–दक्षद्भ्रातया B. दक्षदुभ्रातया C.
६–०रयन्तीत्य० C.
७–प्रायमवित्त B. C.　८–०त्योवीत्या० C.
९–[निघ० २।१९] प्राणन्तीति B C.
१०–अत्र 'वोदकानि' इति पाठो युक्तः ।
११–[ऋ० १।११७।१६] 'अजो हवीत्' इत्येव प्रतीकम् B. C.　१२–आहुतवती० B.
१३–वर्तयतु B.　१४–चटीका B. C.
१५–आस्नं B.　१६–[पा० ६।१।६३]
१७–आस्याल्पयेता B. अस्याल्पदेतां C.
१८–मुचिं मोचिकवन्ते C.
१९–कस्यास्य B कस्यास्यत् C.
२०–अत्र 'ययथुः' इति पाठो युक्तो भवेत् ।
२१–'ज' इति त्रुटितम् B. C.
२२–'वि' इत्यत्र नास्ति B. C.
* 'जननधर्म' इति युक्तं स्यात् ।
२३–वष्याचः B. षर्याचः C. मुद्रितनिरुक्तपुस्तकेषु तालव्यमध्यो 'विश्वाच' शब्दो दृश्यते । परमत्र टीकायां मूर्धन्यमध्यस्यैव व्याख्यानं वर्तते । अन्यव्याख्यानेषु विश्वगित्युपपदम् । अत्र तु 'विषु' इति ।

विपुशब्दो नानार्थे[1], अश्नुतिर्गत्यर्थः । नानाश्नितुमितश्चामुत्र च गन्तुं गमनशो[2] विशीर्यमाणवयुषो मेघस्य मेघ[3]सम्बन्धिन. । अहतम् आहतवन्तौ स्थ इत्यर्थः । केन ? विषेण[4] उदकनामैतत्, उदकेन । मेघं विपास्य[5] महतीं वृष्टिं पातितवन्तावित्यर्थः ।

श्वापि वृके[6] इति श्वजातीयोऽपि योऽयं लोके प्रसिद्धो वत्सोरणकानां विवर्तनादाता असाव[7]श्वुरणानां विकर्तनयोगाद् वृक उच्यते । विविधमसौ कृन्ततीति वृङ्क्ते तस्माद् वृकः । उदाहरणम्—

> वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।
> सेमं नः स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया[8] ॥

प्रगाथपुत्रस्य[9] कलेरार्षम् । वृकश्चित् चिदप्यर्थे वृकोऽपि[10] श्वा सारमेयः । अस्य वारणो वारयिता यस्माद[11]यं तेनैव शत्रूणामुरामथि[12]रुरणवे[13]दैवमथ्नाति अतो वृक इत्युच्यते । आकारो[14]भूषती[15]त्यनेन सम्बध्यते, वयुनेषु कान्तिषु इच्छासु आभूषति आभिमुख्येन करोति । यद्यद् भवा[16]निच्छति तत्तत् करोतीत्यर्थः । स इमं[17] नोऽस्माकं स्वभूतं स्तोमं जुजुषाणः सेवमानः प्रीयमाणो[18] वा आगहि[19] आगच्छ हे इन्द्र प्रचित्रया[20] प्रकर्षेण चित्रया पूजनीयया धिया प्रज्ञया इत्थंभूतया ।

निगमप्रसक्तमुच्यते । उरेण[21] ऊर्णया तद्वान् । उरशब्द[22] ऊर्णायां द्रष्टव्यः[23], ततो नकारो मत्वर्थीयः । वामन इति यथा । निर्वचनप्रसक्तमाह ऊर्णा पुनर्वृणोतेः[24] प्रीयन्ते[25] हि ता शीतार्थैः छादितो वा ताभिर्मेषः ।

१–'ना' इति त्रुटितम् C.
२–सन्दिग्धमिदं पदम् ।
३–'मेघ' इति नास्ति C.
४–विशेषणेन B. C.
५–अत्र 'विपाट्य' इति पाठो युक्तो भवेत् ।
६–वृका B. श्वा वि वृका इति श्वजा० C.
७–०वच्युरणा० C.
८–[ऋ० ८।६६।८] 'वृकश्चित्' इत्येव प्रतीकम् B. C.
९–वृगाथपुत्रस्य कालेरार्षं C.
१०–वृको वि श्वा C.
११–यस्मात् यत्ते B. यस्मादत्ते C.
१२–'उरामथिः' नास्त्यादर्शपुस्तकेषु ।
१३–'व' इति त्रुटितम् B.
१४–'का' इति त्रुटितम् B.
१५–भूषयती० B. C.
१६–भवनि० C.
१७–स इमाम अस्मा० B
१८–प्रियमा० B. प्रीयमा० C.
१९–अगहि C.
२०–मचित्रया C.
२१–उरणा B. C.
२२–उरहरा B. उरशब्दः C.
२३–दृष्टव्यम् B.
२४–ऊर्णं पुनर्वृणोति B. ऊर्णं पुन वृणोतेः C.
२५–प्रीयन्ते B.

वृद्धवाशिन्यपि[1] वृद्धं वाशयते एवंशीला वृद्धवाशिनी वृद्धशृगाली चेति प्रसिद्धा। सोऽपि[2] प्रयुज्यते । उदाहरणम्—

शतं मेषान् वृक्ये चक्षदानमृज्राश्वं तं पितान्धं चकार ।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन्[3] ॥

कक्षीवत आर्षम् । ऋज्राश्वम्[4] । किम् ? तमिति तच्छब्दश्रुतेर्योग्यार्थसम्बन्धाद्[5] यच्छब्दोऽध्याहार्यः । यो[6] युवयोः स्वभूतो रासभो वृकीभूत्वा* उपतस्थे । शतः शतमेषान्[7] एकं चेति वाक्यशेषः । कुत एतत् ? 'ऋज्राश्वः शतमेकं च मेषान्[8]' इति मन्त्रान्तरे दर्शनात्। वृक्ये[9] आहारार्थम् । चक्षदानं क्षदि[10]रत्र विशसने[11]ऽर्थः । विशसन्तम् ऋज्राश्वं[12] नाम राजपुत्रमयोग्यमिति कृत्वा पिता शापेनान्धं चकार तस्मै ऋज्राश्वाय[13] । अक्षी[14] हे नासत्या[15] भावे[16] च नासत्यौ विचक्षे[17] विविधादर्शनाय आधत्तं दत्तवन्तौ[18] दस्रा[19] दस्रनामानौ[20] दर्शनीयौ वा[21] यौ[22] भिषजौ देवानां वैद्यभूतौ । अनर्वन् अर्तेर्गत्यर्थस्येदं[23] रूपम् । अन्यव्यापृत्याश्रिततया यो न गतः[24] सोऽनर्वा । अक्षिविशेषणं चेदम् । छान्दसत्वाच्च द्विवचनस्य स्थाने एकवचनम् । अनर्वणी अपराश्रिते स्वायत्ते[25]। पित्रान्येन[26] वा शापेन वा उद्धर्तुमशक्ये इत्यर्थः। तदेतत् कुत्सेनाप्युक्तम् 'याभिः शचीभिर्वृषणा परा वृजम्[27]' इति ।

---

१–वृद्धवाशीन्यपि वृद्धं वाशी ( B. ) श्यते एवं शीला वृद्ध वाश्यते एवं शीला वृद्ध वा० B. C.
२–सोपि C.
३–[ ऋ० १ । ११६ । १६ ] 'शतं मेखान्' इत्येव प्रतीकम् B. C.
४–ऋजुश्व B. C.
५–सम्बन्धो C.
६–अत्र 'यं' इति द्वितीयान्तपाठो युक्तः स्यात् ।
* अत्र 'वृको भूत्वा' इति युक्तं स्यात् ।
७–शतं मेषान् B. शतमपान् C
८–[ऋ० १ । ८ । १६] ऋज्राश्शत० B. ऋज्राश्व शतमेतश्च C.
९–वाक्ये B.
१०–कुं भिरत्र B. C.
११–'स' इति त्रुटितम् C.
१२–ऋश्रश्व नाम B. ऋज्राश्व नाम C.
१३–ऋज्राश्वाय C.
१४–आक्षी B. C.
१५–हने सत्या B.
१६–भावेव C.
१७–विपेक्ष B. विवक्षे C.
१८–'दत्तवन्तौ' इति युक्तं स्यात् ।
१९–दस्मा B. C.
२०–०मानेन B ०मानन C.
२१–'वा' इति त्रुटितम् B.
२२–'यौ' इति त्रुटितम् C.
२३–[धा० १ । ९६१] अर्थेग० C.
२४–गतं B. C.
२५–स्वायत्ते C.
२६–अत्रापि अन्ये० B. पित्रोन्येन C.
२७–[ऋ० १ । ११२ । ८] व (प C.) राजव्रजम् B. C.

जोपवाकमित्यनवगतम् । अविभज्य निराह जोपमित्यविज्ञातस्य[1] अ[2]स्पष्टस्य नामधेयम् । तद्धि जोषयितव्यं संस्कर्[3]तव्यं सेवितव्यं वा[4] ज्ञानाय स्पष्टतायै । लोके तूष्णीम्भावेऽप्यस्य प्रयोगो दृश्यते 'जोपमासं कुरेशजो[5]' इति । अस्मिन्नप्यर्थे धात्वर्थाप्रसिद्धिरनवगमः । उदाहरणम् ।

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
एकविंशः खण्डः[6] । ]

---

१–दोपमि॰ B. C.

२–'अ' इति त्रुटितम् B.

३–सद्गर्तव्यं B.

४–चो B.

५–कुत्रत्यमिदं वाक्यमिति न ज्ञायते ।

६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ द्वाविंशः खण्डः । ][1]

य इन्द्राग्नी सुतेषु वां स्तवत्तेष्वृतावृधा ।
जोषवाकं वदतः पज्रहोषिणा न देवा भसथश्चन[2] ॥

भरद्वाजस्य । यः स्तोता हे इन्द्राग्नी सुतेषु सोमेषु वां स्तवद्[3] आदरेण स्तौति । तेषु व्यत्ययेन पञ्चमेकवचनस्थाने सप्तमीबहुवचनमेतत्[4] । भसथ इत्येतद्व्याख्यातमुत्तरस्मादर्धर्चादनुवक्तव्यम् । तस्य सोमान् न भसथो[5] भक्षयथः । हे ऋतावृधा ऋतावृधौ सत्यस्य यज्ञस्योदकस्य वा वर्धयितारौ । जोषवाकमविज्ञानमस्पष्टं किमपि वचनं वदतोऽसम्यक् स्तुवत इत्यर्थः । हे पज्रहोषिणा[6] पज्रमन्नं हविराख्यं वा स्तुतिक्रियाविषयं तद् येषामस्ति ते पज्रा[7] व्रातविष्का वा । किं पुनस्ते ? ऋत्विग्यजमानाः[11] । तेषां स्वभूतं होतव्यं हविः पज्रहोषमित्यर्थः, तेन तद्वन्तौ पज्रहोषिणौ[12] देवा देवौ भसथो[13] भक्षयथः । चनेति पादपूरणः[14] । कदाचिदर्वाक्स्य वार्थे । न कदाचिदपि भजतः,[15] स हि तेन भावेन शब्दमात्रमस्पष्टमुच्चारयति ।

कृत्तिरित्यन्तरगतमनेकार्थं च । कृन्ततेरिति धातुनिर्देशः । यशो वाशं वा प्रसिद्धमभिधेयम्[16] । यशो हि छिन्नत्ति कृन्तति । दुर्भुक्तं वासं मापादि । कर्तनमित्यर्थः । उदाहरणम्[17]—

तमु त्वा नूनमसुर प्रचेतसं राधो भागमिवेमहे ।
महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन्[18] ॥

नूनमेवप्रियमेवयोरार्थम् । य उक्तगुणोऽस्ति[19] त च । नूनमिति पदपूरणः । त्वा त्वां हे असुर प्राणवन् । किं विशिष्टं त्वाम ? प्रचेतसं प्रकृष्टप्रज्ञानं राधो[20] धनमीमहे याचामहे ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ६ । ५९ । ४] 'य इन्द्राग्नी' इत्येव प्रतीकम् B. C.
३–स्तवत् B.
४–'न स्था' इति त्रुटितम् B.
५–भासत B. भसत C.
६–भसथा B.
७–पज्रहो० C.
८–वाजमन्नं B. C.
९–तदन्येषां० B. सान्येषा० ; १०–वज्रा C.
११–जमानानां B.
१२–०षिणौ B. वज्रहोषिणौ C.
१३–भसः B. C.
१४–पदपूरणः C.
१५–भजतः B. भजसः C.
१६–'यम्' इति त्रुटितम् B. C.
१७–दोहरणम् C.
१८–[ऋ० ८।९०।६] 'त ( क C. ) मु त्वा नूनम्' इत्येव प्रतीकम् B. C.
१९–गुणोऽसि तं B. C.
२०–राध B.

भागमिव यथा कश्चित् पुत्रस्य वान्यस्य वा साधारणस्य कस्यचिद् भाग[1] याचेत तद्वत्। किश्चिन्[2]महीव महती कृत्तिर्यशोऽन्नं वा। पस्त्यं शरणा शरणं गृहमन्तरिक्षे ते तव हे इन्द्र। किश्च प्रशब्दोऽक्षवदित्येतेन सम्बध्यते तत्र स्वभूतानि सुम्नानि सुखानि त्वया दत्तानी-त्यर्थः। अस्मिन्[3] अश्नवन्[4] प्राप्नुवन्तु अस्माकं भवन्त्वित्यर्थः।

इयमपि तत्र लोकप्रसिद्धा चर्ममयी कृत्तिरेतस्मादेव। बहुधा[5] कृत्ता हि[6] सा शरीरात्। यदा सूत्रमयी[7] तदोपमार्थं कृत्तजरद्वस्त्रखण्डग्रथितत्वात् कर्तनसामान्यात् कृत्ति-रिव[8] कृत्तिः कन्थोच्यते[9]। उदाहरणं परमे वृक्षे। संसारस्य मूलत्वाद् ब्रह्मा वृक्षस्तस्मिन् आयुधं निधाय कृत्तिं वसानः पिनाकं बिभ्रदागहीति निगमः।

श्वघ्नीत्यनवगतम्। कितवोऽभिधेयः। स्वं[10] हन्तीति व्युत्पत्तिप्रदर्शनम्। ततः स्वकर्मो-[11]पपदे स्वघाते भूते 'कर्मणि हनः'[12] इति स्वघातीति[13] स्यात्। स्वस्य चाभुक्तस्य नाशो वध इहाभिप्रेतः। निर्वचनप्रसक्तं स्वमाह। श्रितमिति[14] रिक्थक्रयसंविभागप्रतिग्रहाधिगमैरुपा-यैः स्वामिनं प्रत्यागतमित्यर्थः। उदाहरणम्—

कृतं न श्वघ्नी वि चिनोति देवने संवर्गं यन्मघवा सूर्यं जयत्।
न तत्ते अन्यो अनु वीर्यं शकन् न पुराणो मघवन्नोत नूतनः[15]॥

कृष्णस्याङ्गिरसस्यार्षम्[16]। कृतं न कृतमिव कृतत्रेतादिन्यायनामधेयानि। तत्र यथाकृतमायविशेषं श्वघ्नी[17] कितवो जिगीषया आयानां विचिनुयात् परीक्ष्य गृह्णीया-दित्यर्थः। देवने दीव्यत्यस्मिन्निति देवनमास्तरप्रदेश[18]स्तस्मिन्। एवं मेघानां[19] मध्ये संवर्गं संवर्गयितारं[20] संभक्तारं संग्रहीतारमित्यर्थः। कस्य? सामर्थ्यादपाम्। सम्यगावर्जयितारमधः[21] प्रक्षेप्तारं मेघं विचिनोति वृष्ट्ये परीक्ष्य गृह्णातीत्यर्थः। विचित्य च प्रत्यक्षकृतत्वाद्[22] मन्त्रस्य मघवेति दानासंचूनत्वाद् एकवाक्यतायै भवच्छब्दो-

१–भागः C.
२–अत्र 'किश्च' इति पाठो युक्तः स्यात्।
३–अत्र 'अस्मान्' इति पाठो युक्तो भवेत्।
४–अश्नवं B. अश्नवनि C.
५–'बहु' इति नास्त्यादर्शपुस्तकेषु।
६–हिंमा B. हीं गा C. ७ सूर्पमयी B.
८–हतिरेव कृत्तिः B.
९–कन्थो (न्था C.) च्यते B. C.
१०–सु हन्तीति B. C.
११–स्वकार्योपपदे B. स्वकर्मापपदे C.
१२–[पा० ३।२।८६] १३–सघातीति B.
१४–अत्र 'आश्रितं' इति स्यात्। मूले 'स्वं पुनरा-श्रितं भवति' इत्येव वर्तते।
१५–[ऋ० १०।४३।५] 'कृतं न श्व (व C.) घ्नी' इत्येव प्रतीकम् B. C.
१६–कृष्णो नामा हि रसस्यार्षम् C. १७–स्वघ्नी C.
१८–अन्तरप्रदेशः B. १९–भगानां B.
२०–'संवर्गयितारं' इति 'संवर्जयितारं' इति वा पाठोऽत्र युक्तः स्यात्। २१–०म्यग्यावर्ज० B.C.
२२–'प्रत्यक्षकृत०' इति युक्तम्।

ऽध्याहार्यः। मघवा भवानिन्द्रः सूर्यं मेघविशेषणमेनत्, सुष्ठु सर्तारं नद्याम्जयत्। पौरस्त्यो यच्छब्द इहासक्तव्यः, यज्जयसि ततो रसादानं न त्वत्तो त्वदन्यो देवोऽनुवीर्यं शक्नोति। अनुपसर्गश्रुतेर्योग्यक्रियापदाध्याहारः, अनुकर्तुं सामर्थ्यातिशयलक्षणं वीर्यं शक्नोतीत्यर्थः। अनुकर्तुमपि किमङ्ग पुनरतिशयितुमित्यभिप्रायः। न पुराणः कश्चित् हे मघवन् नोत नूतनो नापि नव इत्यर्थः।

पर्यायप्रसक्तं कितवमाह, किं तवास्तीति पृच्छ्यते किमतश्च तदनुकरणनिमित्तकमेवास्यैतन्नामधेयमित्यर्थः। कृतवान् वा कृताख्येनायेन तद्दानहं स्यामिति जयार्थमाशास्ते। आशीर्नाम आशीर्निमित्तनामकमित्यर्थः।

सैमैमित्यनवगतमनवगतसंस्कारं च परिहार्यीयम्। किमैः सर्वनामसु पाठात् सर्वनामेत्युक्तम्। नापि च सदनुदात्तत्वेन..........संसमेत्य[11] उद्यानीति स्मरणात्। अर्धनामेत्येकमिति स्वर्पपाठः, उदाहरणस्याप्रदर्शनात्। उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या-) ध्यायस्य
द्वाविंशः खण्डः ][15]

---

१–'भवा' इति त्रुटितम् B.
२–रसादानः C.
३–'वीर्यं शक्नुत्' इत्यारभ्य 'सामर्थ्यातिशयलक्षणं' इत्यन्तः पाठस्त्रुटितः B.
४–अपिकर्तुमपीति B.
५–पुराणं B. ६–नूतने B. नूतने C.
७–नावि C. ८–ह्येन येन B.
९–आशिर्नाम C.
१०–समस्येयनव॰ B.
११–'किमः' इति पदमत्र निरर्थकमेव भाति।
१२–नामस्य पा॰ C.
१३–अत्र वाक्ये कश्चन पाठस्त्रुटितोऽन्यथाभूतश्च। अस्य वाक्यस्यान्तिमभागपाठस्तु 'त्वत्त्वनेमसमसिमेत्यनुदात्तानीति स्मरणात् [निरु॰ ११७]' इति स्यात्।
१४–स्वुरखपाठः B. C.
१५–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

# [ अथ त्रयोविंशः खण्डः ][1]

मा नः समस्य दूढ्यः[2] परिद्वेषसो अंहतिः।
ऊर्मिर्न नावमा वधीत्[3]॥

विरूपो नामाङ्गिरसस्तस्यार्षम्। मेति प्रतिषेधार्थो वधीदित्यनेन सम्बध्यते। नोऽस्माकं समस्य सर्वस्य दुर्धियः पापबुद्धेः परिद्वेषसः सर्वतो द्वेष्टुर्द्वेषस्य[4] च सम्बन्धिनी[5] अंहतिः हिंसा वधमित्यर्थः*। ऊर्मिर्न ऊर्मिरिव यथा उदकोर्मिर्नावमावधीद् आभिमुख्येन हन्यात् तद्वन्मा वधीर्मा हिंसीरित्यर्थः।

ऊर्मिरूर्णोतेराच्छादनार्थस्य[7]। सा हि च्छादयति नावम्। नौर्नुदेः सा हि[8] पारं[9] प्रति प्रेर्यते। नमतेर्वा प्रभवति। विरोधमुत्पादयन्नाह तत्कथमित्यादि[10]। एतद्भाष्यं पैष्टी[11]केन तुल्यव्याख्यानं द्रष्टव्यम्। यत्तत् पाष्टीकं तावत् प्रदर्शितमेव।

उरुष्या ण इति पञ्चम्याम्।

स नो बोधि श्रुधी हवमुरुष्या णो अघायतः समस्मात्।
तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः[12]॥

इयं द्विपदा[13] श्रुतबन्धोः[14]। सापि च प्रसङ्गाद् व्याख्यायते। यति[15] प्रसिद्धयेति य उक्तगुणोऽसि। हे[16] अग्ने नोऽस्माकं स्वभूतां स्तुतिमिति शेषः, बोधि बुध्यस्व श्रुधि शृणु हवमाह्वानम्[17], हव्य च नो रक्ष चास्मात्। कुतः? अघायतः[18] पापमिच्छतः[19] समस्मात् सर्वस्माद् रक्ष आदेः[20]। तं त्वा य उक्तगुणोऽसि तं त्वां शोचिष्ठ अतिशयेन शोचित। दीदिवः[21] दीप्तिमत् सुम्नाय सुम्नमिति सुखनाम द्वितीयार्थे चात्र चतुर्थी सुखम्। नूनं निश्चयेन ईमहे याचामहे। सखिभ्यः सखीनामर्थाय[22]।

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२—[ऋ० ८।७५।९] 'मा नः समस्य' इत्येव प्रतीकम् B. C.
३—'दि' इति त्रुटितम् B.
४—सर्वं तान्द्वेष्टुः सर्वतोन्वेष्टु C.
५—सम्बन्धीनि B. ६—वमवधीत B.
*—'वध इत्यर्थः' इति युक्तम्।
७—तैश्छादना० C. ८—स हि B.
९—नुदेत पारि B.
१०—पारं C. ११—पष्टी तेन B.
१२—[ऋ० ५।२४।३] 'स नो बो (धा B.) धि' इत्येव प्रतीकम् B. C.
१३—श्रितबन्धः B. १४—सोपि च B. C.
१५—सन्दिग्धमिदं वाक्यम्।
१६—'हे' नास्ति B. 'अग्ने' इति पाठः B. C.
१७—हवमानं B. हवमाह्वानं C.
१८—अघायतं B.
१९—च्छतायमस्मात् B. २०—शादेः B.
२१—'दी' इति त्रुटितम् B. C.
२२—'सीनामर्थाय' इत्येव पाठः B. C.

सप्तम्यामपि—

विद्मा सखित्वमुत शूर भोज्य[1] मा ते ता वज्रिन्नीमहे ।
उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति[1] ॥

सौरभेरार्षम् । विद्मो जानीमो[2] वयं तव सखित्वं सखिभावं[3] स्तुत्यस्तोतृत्वलक्षणम् । उत अपि च हे शूर विक्रान्त भोज्यं[4] भोग्यत्वमुपजीव्यतामित्यर्थः । आकार[5] ईमहे इत्यनेन सम्बध्यते । अतो विद्वानहं ते तव स्वभूतानि यानि धनानि[6] हे वज्रिन्[7] ईमहे याचामहे आभिमुख्येन । तव अपि च समस्मिन् सर्वस्मिन् काण्डे । आशिशीहि[8] शिद्यतेस्तनूकरणार्थस्यैतद् रूपम् । तनूकरणेन चेह संस्कारो लक्ष्यते । आकारः समित्यस्य स्थाने । तेनायमर्थः । संशिशीहि संस्कुरु योग्यं कुर्वित्यर्थः । नोऽस्मान् । वसो हे प्रशस्य धनवन् वाजे अन्ये सुशिप्र सुहनो[9] सुनस वा । कीदृशेऽन्ने ? गोमति गोभिः सहिते । समस्मिन् वाजे गोमतीत्यत्र सप्तमी 'निमित्तात् कर्मसंयोगे'[10] इत्येवं द्रष्टव्या । 'चर्मणि द्वीपिनं हन्ति' इति यथा । सर्वस्यान्नस्य गोसहितस्य प्राप्त्यर्थमित्यर्थः ।

प्रथमाबहुवचने नभन्तामित्युदाहरणम् । 'यदिन्द्राग्नी जना[11] इमे' इति पुरस्ताद्[12] व्याख्यातम् ।

कुटस्य चर्षणिरिति चानवगते[13] । कृतस्य चायितेति चावगमः[14] । द्वयोरप्येकमुदाहरणम् ।

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
त्रयोविंशः खण्डः[15] ]

---

१–[ऋ० ८।२१।८] वान्या सुसिन्वा B. विन्मा सुखित्वम् C.

२–विमजानी (ती C.) म वयं B. C.

३–भावः स्तुत्यं स्तो० B.

४–भोजं B.

५–आकार रमेहेत्य० B.

६–'हि' इति त्रुटितम् B.

७–'शि' इति त्रुटितम् C.

८–सविशीहि B. C.

९–सुमने B. सुमनो C.

१०–[पा० २।३।३६] सूत्रे वार्तिकमिदम् ।

११–[ऋ० ८।४०।८]

१२–[निरु० ५।२]

१३–चानपा B.

१४–'कृतस्य चायिते' इति त्रुटितम् C.

१५–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ चतुर्विंशः खण्डः[1] ]

हविषां जारो अपां पिपर्ति पपुरिर्नरा ।
पिता कुटस्य चर्षणिः[2] ॥

प्रस्कण्वस्य । हविरित्युदकनाम । हविषा उदकेन जारो जारयिता आदित्यः । कस्य ? अपाम् । पिपर्ति[3] आश्विनत्वात् सूक्तस्य युवामेवं द्यावापृथिव्यादिरूपावश्विनौ[4] पूरयत्विंत्युच्यते । रश्मिभिर्भौमरसलक्षणमाददानो दिवं प्रत्यर्पयन्[5] पृथिवीं च यदासावादित्यादिना[7] चर्म[8] धर्पकर्म[9] समानमेतदुदकमग्नेरिति वक्ष्यति । पिता पितृभूतः पालयिता वा कृत्स्नस्य जगतः । कुटस्य कृतस्य च सामर्थ्यात् शुभाशुभस्य च कर्मणः । चर्षणिः[10] चायिता द्रष्टा । सर्वं चैनल्लोकत्वात् 'सूर्य आत्मा जगतस्तस्थुषश्च[11]' इति चात्मरूपत्वादादित्य उपपन्नम् । एवं च मन्त्रब्राह्मणवर्णाः । 'अग्नौ प्रास्ताहुतिः[12]' इति च स्मरणात् । आदित्यस्य वृष्टिद्वारेण चाश्विहंविषा[13] तर्पणात् प्राधान्ये सत्यश्विनीत्यमुव[14] इति सर्वमुपपन्नम् । 'दिवं जिन्वन्त्यग्नयः[15]' इति च । एवमुपपत्तौ सत्यां यदन्यथा केश्चिद् व्याख्यायते यास्कमतं चापोद्यते तदाहोपुरुषिकामात्रमिति मन्यामहे ।

शम्ब इत्यनवगतार्थम् । वज्रोऽभिधेयः । शमनः शात इति चेत्यवगमः । उदाहरणम्-

आराच्छत्रुमप बाधस्व दूरमुग्रो यः शम्बः पुरुहूत तेन ।
अस्मे धेहि यवमद्गोमदिन्द्र कृधी धियं जरित्रे वाजरत्नाम्[16] ॥

कृष्णस्याङ्गिरसस्यार्षम् । आराच्छब्दोऽयं सन्निकर्षविप्रकर्षवचनः । तस्य सर्वस्य सामर्थ्यादर्थविशेषोऽध्यवसेयः । आरादपीयं[17] इति तुल्यजातीयापेक्षत्वात् प्रकर्षप्रत्ययस्य दूरतरमित्यर्थः । इह तु दूरप्रतियोगित्वात् सन्निकृष्टे चापायभूयस्त्वाशङ्कया शत्रोर्दूरापगमः प्रार्थ्यत इति सन्निकर्षवचनो गम्यते । तेनायमर्थः । सन्निकृष्टादस्य शत्रुमप-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १ । ४६ । ४ ] 'हविषा जारः' इत्येव प्रतीकम् B. C.
३–विपर्ति B. विपत्तिः C.
४–'नौ' इति नास्ति B. C.
५–'त्वि' इति न दृश्यते C.
६–प्रत्यपगन् B. C.
७–'आदित्यात्मना' इति युक्तं स्यात् ।
८–अत्र 'चर्म' इति पदस्य प्रयोजनं न ज्ञायते ।
९–चर्म कर्म B. १०–चर्मणि B.
११–[ऋ० १ । ११५ । १]
१२–[मनु० ३ । ७६] प्रस्ता प्रस्ता हुतिः C.
१३–'चाश्विनोर्हविषा' इति युक्तं स्यात् ।
१४–'मुपपद्यत' इति युक्तं स्यात् ।
१५–[ऋ० १ । १६४ । ५१]
१६–[ ऋ० १० । ४२ । ७ ] 'आराच्छत्रुं' इत्येव प्रतीकम् B. C.
१७–सान्दिग्धमिदं पदम् ।

बाधस्व अँवगमय दूरम्। अन्ये वर्णयन्ति शंत्रोरवस्थानं बहुदोषत्वादनिष्टमिति दूरवचन एवमारुंछन्दो दूरशब्दश्चात्रान्तर्नीतप्रकर्षार्थः। दूरादप्यस्य शत्रुमपनय दूरं दूरतमंमित्यर्थः। तेनोच्यते उग्रोऽप्रसह्यः क्रूरो वा यः शम्बो वज्रः। पुरुहूत हे बहुभिराहूत। तेन किञ्च अस्मे अस्मभ्यं धेहि यवमद् गोमत्। प्रदर्शनं चेदं यवादिभिर्धान्यैर्गवादिभिश्च पशुभिस्तद्वत संयुतंमित्यर्थः। अथवा वाजवत् वाजवतीं रत्नवतीं चेत्यर्थः।

केपंयमित्यपरोक्षवृत्तित्वादत्यन्तानवगतम्। तस्य परोक्षवृत्तिना कपूया भवन्तीति इदमर्थप्रदर्शनम्। एवमपि न विज्ञायते पूया इति। अत उभयोरनयोरक्षरवर्णसामान्येन शब्दार्थौ निराह। कंपूय कमिति च पूयमिति च कर्मोच्यते। तेन च पुनातिकर्मणोः कर्मविशेषेण कर्मसामान्यं लक्ष्यते। कुत्सितमिति कशब्दार्थप्रदर्शनम्। स्पष्टार्थमाह। दुंष्पूयमिति दुःशोभनधनं दुष्पानमिति चेत्यर्थः। तेन कपूयशब्दवाच्ये कर्मणा तद्वंते तस्यानुष्ठातारः कपूयाः। आकारो मत्वर्थीयः, कर्मायांस्सन्तः केपंयः कुत्सितकर्मानुष्ठायिनः पापकर्माण इत्युच्यन्ते। उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
चतुर्विंशः खण्डः। ][15]

---

*—'अपगमय' इत्युचितम्।
१—शत्रोरव C.
२—त्तर्णीत C.
३—'म' इति त्रुटितम् C.
४—उग्रमप्रसह्य क्रूरोपायं शम्बद्वज्र B.
५—'पशुभिश्च' इत्येवमत्र चकारोऽधिक एव वर्तते आदर्शपुस्तकेषु।
६—संयुक्तमि C. 'संयुक्तमित्यर्थः' इति वा पाठोऽत्र भवेत्।
७—वाजयतीं B. C.
८—'म' इति त्रुटितम् C.
*—'केपयः' इति सम्यक्
९—रावयो B C.
+—'कपूयं' इति युक्तम्।
१०—दुपूय B.
११—दुशोभन B. दुःभोभन C.
१२—अत्र 'तद्वन्तः' इति पाठो युक्तो भवेत्।
१३—अत्र 'कपूयास्सन्तः' इत्यर्थानुसारी पाठो युक्तो भाति। अयं पाठो नास्त्येव B.
१४—केवयः C.
१५—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ पञ्चविंशः खण्डः ]

पृथक् प्रायन् प्रथमा देवहूतयोऽकृण्वत श्रवस्यानि दुष्टरा ।
न ये शेकुर्यज्ञियां नावमारुहमीर्मैव ते न्यविशन्त केपयः ॥

कृण्णस्यैव । पृथक् कर्मकृतत्वान्नाना असहायभूताः प्रायन् प्रगताः, कम् ? सामर्थ्यात् स्वर्गम् । प्रथमाः मुख्याः । के ? उच्यन्ते । देवहूतयो देवान् प्रत्याह्वानं येषां ये देवानां* ह्वयन्ति देवानाह्वातारः । आह्वानेन चं यागो लक्ष्यते यष्टार इत्यर्थः । अकृण्वत कृतवन्तश्च श्रवस्यानि श्रवणीयानि आस्तिक्यश्रद्धोपग्रहविशेषाद् विशिष्टानि साधनानि यशांसि दुष्टरा दुस्तराणि दुष्प्रापाणि दुरनुकरणानि चान्यैर्ये यज्ञमयीं नावमारोढुं शक्नुवन्तस्त एवमुच्यन्ते । अथ न ये शेकुः शक्नुवन्तस्त एवमुच्यन्ते यज्ञमयीं नावमारुहमारोढुं यागदानादि कर्तुमित्यर्थः । तदशक्त्या चात्र विहितविपरीतप्रतिषेधं सेवनं च लक्ष्यते । ये विपरीतं प्रतिषिद्धमासेवन्त इत्यर्थः । ईर्मैव इहैव सर्वमर्यादातिक्रमहेतौ दारिद्र्येण गुणेन वा सह । 'यज्ञेन देवानामेँ' इति श्रुतेः । अस्मिन्नेव वामकृत्य लौकिके न्यविशन्त नीचैर्नीचैस्तरामविशन्त अधोगतिं गता इत्यर्थः । के ? उच्यन्ते । केपयः कपूयाः पापकर्माण इत्यर्थः ।

पृथग्विस्तरार्थस्य पृथग्भूतार्थाभिविस्तरस्यावश्यम्भावात् शब्दसारूप्यप्रसङ्गादाह । ईर्म इति बाहुरुच्यते । स ह्यङ्गान्तरेभ्यो विक्षिप्ततमो भवति । अन्येऽपीर्मशब्दं प्राणप्रवचनं वर्णयन्ति । दक्षिणमीर्मस्य दक्षिणमङ्गस्य यणितं व्याघ्रेणेति दक्षिणेर्मा मृग इति ।

ततुमाकृपे इत्येते नैवगते । शीघ्रगत्यर्थस्य तूर्णमित्यवगमः, कृपे इत्यस्योपांकुरुव इति । उदाहरणमुभयोरेकम् ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १०।४४।६] 'पृथक् प्रायन' इत्येव प्रतीकम् B. C.
*'देवानाह्वयन्ति' इत्युचितम् ।
३–ह्वानं येषां देवदेवानां B.
४–'च' इति नास्ति B.
५–अस्ति B. आस्ति C.
६–दुष्टराणि B. दुष्टरा स्तराणि C.
७–रोढुमशक्नुवन्त अत एव B.
८–न यो शेकुः C.
९–यक्ष्यते C. १०–सर्वमाय.दा C.
११–[ अनुपलब्धमूलमिदम् ] देवाम् B.
१२–संदिग्धमिदं पदम् ।
१३–'पृथग्विस्तरार्थस्य' इति नास्ति C.
१४–अस्यार्थो नावबुध्यते ।
१५–शब्दस्यारूप्य प्र C.
१६–सत्यं वा ( B. C. ) गान्तरेत्यो B.
१७–अन्यपीर्मशब्द प्राणव चन C.
१८–दक्षिणेर्मा लुब्धयोगे [पा० ५।४।१२६]
१९–नैवगते B.
२०–'आकृपे' इति स्यात् ।
२१–स्य वा कुरु B. स्यो वा कुरु C.

एना विश्वा सवेना तूतुमाकृषे स्वयं सूनो सहसो यानि दधिषे ।
वराय ते पात्रं धर्मणे तना यज्ञो मन्त्रो ब्रह्मोद्यतं वचः ॥

वैकुण्ठ* इन्द्रस्यार्षम् । एना एतान्यर्थितानि विश्वा सर्वाणि सवनानि प्रातस्सवनादीनि वायस्थानानि यज्ञानीत्यर्थः । तुतुमां तूर्णं कृषे करोषि स्वयं क्षिप्रमागच्छ हे सूनो सहस इन्द्रस्यात्यन्तबलवत्त्वात् 'ओजसो जातम्' इत्यादौ च मन्त्रान्तरे दर्शनाद् बलादेव जात इति गम्यते । तेनैवमामन्त्र्यते सूनो सहस इति । यानि वृष्टिप्रदानद्वारेण द्युलोकादीनि यागाङ्गनारूपत्वेन वा दधिषे धारयसि । किञ्च वराय श्रेष्ठाय ते तुभ्यं पात्रमिदं सोमस्य पूर्णमिति शेषः । धर्मणे धारयित्रे सर्वस्य जगतः । तना धननामैतद् धनं वास्मदीयम् । अयं च प्रकृतो यज्ञो मन्त्रश्च ऋग्यजुरादिः । ब्रह्म अन्ननामैतद्, अन्नं च सवनीयपुरोडाशादि हविरेतत् । यच्चेदमसूत्कृतं वचः स्तुतिलक्षणं यावत् किञ्चित् सर्वं त्वदर्थं उपाकुरुष इत्युपसर्गद्वयापेक्षं भाष्यकारो दर्शयति तूर्णमुपगत्याभिमुख्येन करोषीति ।

असत्रमित्यनवगतमनेकार्थम् । पार्ष्णित्रमित्यवगतमिति केचित् । अत आह असत्रमंहसस्त्राणमंहःशब्देन पापमुच्यते । अन्ते निरूढोपयादित्युक्तत्वात् । त्राणमिति च यदि कर्तरि ल्युट् अंहसस्त्रायन इति 'आतोऽनुपसर्गे कः' इति अंहस्त्रमिति प्राप्तम् । अथ करणे ततः षष्ठीसमासः । धनुर्वा कवचं वाभिप्रेतम् । तयोर्धनुर्निर्विवक्ष्यति । कवचं प्रविभज्य ब्रवीति कुं अश्चितमिति । कुशब्दस्य कुत्सार्थस्याश्चतौ लुप्तककारे उकारस्यादेशः । तद्धि स्वभावकुटिलमिति । कवचं कायत्सेति चेत् कौटिल्यमेवं । ईषदर्थे वा कुः । ततश्च काश्चितं सत् कवचम् । काये वाश्चितं कायशब्दात् पूर्वपदादित्यर्थः । उदाहरणम् ।

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
पञ्चविंशः खण्डः । ]

१-[ऋ० १०।५०।६] एना ( एव C. ) विश्वा' इत्येव प्रतीकम् B. C.
* 'वैकुण्ठस्येन्द्रस्य' इति युक्तं स्यात् ।
२-'एतान्यर्थितानि' इत्येव B. C.
३-स्वनानि B. ४-'दी' इति त्रुटितम् B.
५-वायस्था B. वागस्था C.
+ 'यज्ञा इत्यर्थः' इति युक्तम् ।
६-तुतुमातूर्णां कृषेः B. प्रतुमातूर्णां C. ७-करोति B.
८-सहगा B. ९-[ऋ० १०।७३।१०]
१०-मादयस्येतत् B. ११-यातमिमं B.
१२-धारयित्रे B. C. १३-अधन वास्म B. C.
१४-हेतं P. C. १५-यच्छेदमसूत् कृत B.
१६-द्वयात् पक्षं B 'द्वयापेक्षं' इत्युचितम् ।
१७-गत्यामिमु C.
१८-पार्ष्णिमात्रमि B. वार्ष्णीत्रमि C.
१९-[पा० ३।२।३] २०-'ततः' इति नास्ति B.
२१-समासे B. C. २२-ब्रवीतीति कवश्चित B. C.
२३-कवचः C. २४-मेवं B.
२५-'कुः' इति नास्ति B.
२६-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते

## [ अथ षड्विंशः खण्डः ।[1] ]

प्रीणीताश्वान् हितं जयाय स्वस्तिवाहं रथमित् कृणुध्वम् ।
द्रोणाहावमवतमश्मचक्रमंसत्रकोशं सिञ्चता नृपाणम्[2] ॥

सोमपुत्रस्य बुधस्यार्षम् । प्रीणीत प्रीणयताश्वान् स्नानपानयोग्याशनैः संग्रामयोग्यान् कुरुतेत्यर्थः । हितं जयाय हितमिति क्रियाविशेषणम् । कथं जयेत ? हितबन्धुसुहृज्जनैर्वर्जितं जयं प्राप्नुतेत्यर्थः । स्वस्तिवाहं स्वस्तीत्यविनाशिनाम अविनाशवाहनं कृत्वाश्वं सारथिं च "तेत्यनेन सम्बध्यते । कृणुध्वं कुरुत । तेन च गत्वा संग्रामभूमिं द्रोणाहावमित्यादीनि द्वितीयान्तानि रूपसंख्यासंग्रामविशेषणानि सिञ्चतेत्यनेन सम्बध्यते* । द्रोणं द्रुममयं स एव रथ आहावमाहवस्थानीयो यस्य संग्रामस्य तमवतं रूपनामैतत्, रूपसंग्रामाख्यमश्मचक्रमश्ममयम् । अशनो वा व्यापकोऽक्षरस्य । असनो वा व्युदसनं भ्रमणचक्रं लोकं नेम । असनानि वा क्षेपणानि चक्राण्यायुधविशेषा यस्मिन् तम् । असत्रकोशम्, असत्राणि धनूंषि कवचानि कोशस्थानीयानि यस्मिन् तम् । सिञ्चत उत्सिञ्चत । नृपाणं पीयत इति पानं यस्मिन् योधाम उद्यति पीयन्ते मार्यन्त इत्यर्थः, तम् । वैश्वदेवत्वात् सूक्तस्य विश्वेषां देवानां प्रसादेन हे सैनिकाः सर्वमेतत् कुरुतेत्यभिप्रायः ।

हितं जयाथ इत्यस्यार्थकथनं सुहितं नयत इति । ततोऽपि विस्पष्टतरमाह । जयेन वो हितमस्तु देवानां प्रसादेनेत्यभिप्रायः । आहाव आह्वानात् हूयन्ते हि तत्र पानार्थं गवादयः । उदकप्रसङ्गाद् आहवमिति । तत् पर्यायं निराह आहवनात् । आभिमुख्येनोह्यते तस्मिन्नुदके

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ ऋ० १०।१०१।७ ] 'प्रीणीताश्वान् ( णिताश्वात् C. )' इत्येव प्रतीकम् B. C.

३–प्रीणित प्रीणियताश्वान् C. ४–जायथ C.

५–'हित' इति द्विर्लिखितम् C.

६–जुयत C. ७–सुहृद्वनर्वर्जितम् C.

८–स्वस्तिवार्त्रा B. C. ९–'अ' इति नास्ति B.

१०–अत्र कश्चन पाठस्त्रुटितः । ११–द्रोणागावमि B.C.

१२–सिच्यते अनेन B. C.

* 'संबध्यन्ते' इति युक्तं स्यात् ।

१३–रथं आहवं B. 'आहव आहव स्या०' इति पाठो युक्तः स्यात् ।

१४–'अ' इति नास्ति B. C. १५–व्युसदनं C.

१६–लोनाकम् B. १७–अंतत्र कोश B. C.

१८–सन्त्राणि B. सत्राणि C.

१९–सश्चित C.

२०–'त' इति नास्ति B.

२१–'पा' इति त्रुटितम् B. C.

२२–याद्माम C. अत्र 'योधाः' इति स्यात् ।

२३–मूलनिरुक्ते 'जयथ' इति पाठः ।

२४–'ज' इति त्रुटितम् B. C.

२५–भूयन्ते C. 'आहूयन्ते' इत्युचितम् ।

२६–'आवः इति' इति पाठः स्यात् ।

२७–'आवहनात्' इति मूलानुसारी पाठो युक्तः ।

रथोऽपि तत्स्थानीयः । आहूयन्ते तत्रस्थैर्योद्धारः, ऊँह्यन्ते वा जित्वानेन परधनानीति । अवंतो रूपं स हि वन्यमान उपचितकल इत्यर्थः । महान् भवतीत्यर्थप्राप्तार्थवचनम् । नाश-फलत्वं च धनुरादेः । यो व्रजिनोरसेचनसामान्यात् । कुष्णातेर्विकुषित इव ह्यसौ भवति । अन्तस्सुषिरत्वात् । अयमपीतरः कोश एतस्मादेव धातोर्वृद्ध्यर्थस्येति शेषः । कुत एतत् ? यत आह सञ्चयः सञ्चयरूपो धनं निकाशः संवृतं हि धनं कोश इत्युच्यते । सञ्चयमर्थकथन-प्रसङ्गादाह । आचितमात्र उपचितलक्षणमित्यर्थः । महानित्यर्थप्राप्तार्थवचनम् ।

काकुदमित्यनवगतम् । तालुमित्याचक्षते । प्रसिद्धमिदमस्याभिधेयमिति दर्शयति जिह्वा जुहुवा । किमाम्नात् पृष्टः कोविदारानाचष्टे ? काकुदशब्दप्रसङ्गे जुह्वानि ब्रवीति । इष्यते काकुदशब्दनिर्विवक्षयैवायमुपन्यासः । काकुदशब्दस्य जिह्वाशब्दो नापि जोहुवा-शब्दो निर्वचनाङ्गम् । कस्तर्हि ? कोकुवाशब्दस्तस्य पर्यायो जिह्वा । अतो निर्विपत्ति का-कुदशब्दनिर्वचनाङ्गभूतस्य कोकुवाशब्दस्यार्थकथनप्रसङ्गेन जिह्वाशब्दं तावन्निराहे । जिह्वा कस्मात् ? जोहुवा आह्वयतेर्जुहोतेर्वा यङ्लुगन्तस्य 'ह्वः सम्प्रसारणम्' । अभ्यस्तस्य च' इति सम्प्रसारणे च पचादिकेऽचि तद्रूपम् । पुनः पुनराह्वयति शब्दं करोति, रसान् * वादत्ते, जुहोति वात्मनीति सास्मिन् धीयते सा शब्दान्तरवाच्या सती अस्मिन् शब्दोऽभिव्यक्तये धीयते इत्यधिकरणसाधनम् । कोकुवा नाम जिह्वा इत्येव सम्बन्धक्रमो द्रष्टव्यः ।

अथ कोकुवा कस्मात् ? कोकूयमाना हेतौ शानेचि मुक् । छान्दसत्वात् प्रथमासमा-नाधिकरणेपि क्वचिद्दर्शनात् । अधीयमानोऽधीयत इति यथा । कोकूयते यस्माद् अतः कोकुवा कंवतेः शब्दकर्मणः कोकुवेति पूर्ववद्यर्केरीतवृत्तम् । पुनः पुनः कवते शब्दं करोति अतः कोकुवालं सत् काकुदं वर्णव्यापत्त्यादिना । कोकूयमीन एतं तुदतीति वेति निर्वच-नान्तरम् । एतदिति तालुनोऽन्वादेशः । तालुपर्यायप्रसक्तमाह । वतेः कुणिप्रत्यये रेफल-कारापत्त्या । विस्तीर्णतमं हि तदास्यान्तर्गतेभ्योऽङ्गान्तरेभ्यः । ललतेर्वा नैरुक्तधातोरुप्येव

* 'उह्यन्ते' इति युक्तम्
१–अपतः रूपे B. अवतः C.
२–पन्यमान B. ३–नादद्त् B.
४–वजीनो B. अत्र कथन पाठस्त्रुटितः ।
५–तालमित्या B. C.
६–जुह्वा C.
७–निरस B. निरुह C.
८–'जिह्वा' नास्ति B. 'जि' नास्ति C.
९–[पा० ६।१।३२] 'ह्वः' नास्ति B.
१०–[ पा० ६।१।३३ ]
११–'त' इति नास्त्यादर्शपुस्तकेषु ।
१२–कोह वा B.
१३–कौ ( B. C. ) कूयमान B.
१४–शानं B. शच C.
१५–त्वतेः C.
१६–'कोकूयमाना तुदतीति' इति मूलपाठः ।

प्रत्यये वर्णविपर्ययेणैतद्रूपम् । अर्थप्रतीतये दार्ढ्यार्थमाह । यथा तलं पादतलं भूमितलमिति । विश्लिष्टं हि तद् भवति । लतेत्यपि पर्यायः । सा हि वृक्षे श्लिष्टा भवति । सर्वथा साधर्म्येण प्रोक्तस्यार्थस्य दार्ढ्यं दर्शितम् । उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या-) ध्यायस्य
षड्विंशः खण्डः ]

---

१–विदिष्टं B.
२–'लतेत्यविपर्ययः' इति मूले पाठः ।
३–शिष्टा B.
४–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ सप्तविंशः खण्डः । ]

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।
अनु क्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥

प्रियमेधस्य । शोभनस्त्वं देवोऽसि हे वरुण समुद्राधिपते यस्य ते तव सप्त सिन्धवो नद्यो गङ्गाद्या अन्तरिक्षनद्यो वा । अम्बा अलोलेत्येवमाद्या अन्तरिक्षनद्यः । अथवा वरुण उत्तमस्थान आदित्यः, सिन्धवोऽपि रश्मयः, तेऽनुक्षरन्ति अनुगच्छन्ति आपूरयन्ति वा । किम् ? काकुदं तालु । आदित्यपक्षे तालुस्थानीयं तालुमण्डलमभिप्रेतम् । कथमिवानुक्षरन्तीष्यते । सूर्म्यं सुषिरामिव शोभनांमूर्मि छान्दसत्वात् यणादेशः, सूर्मि काष्ठानां संघातं सुषिरामिव मत्वर्थीयकल्पनया सुषिरवतीं यथा अग्निरिति शेषः । अनुगच्छेदापूरयेद्वा तद्वदित्यर्थः ।

समस्तमन्त्रपाठे प्रयोजनं मृग्यम् । अनवगतस्य पदान्तरस्याभावात् । यत्र तु तदस्ति तत्र तदवगमप्रयोजनं समस्तपाठो द्रष्टव्यः । इह प्रदर्शनमन्यत्रापि समस्तो मन्त्रो व्याख्यायत इति ।

वीरिटं इत्यनवगतमनेकार्थं च । अन्तरिक्षं गणोऽसौ मनुष्याणामभिधेयः । भियो वा नक्षत्रादीनां वा भासः । ततिस्तननं यस्मिन् तत् भीर्स्तननं भास्तननं वा वीरिटम् । अनालम्बनान्तरिक्षे भीतिः कस्य न जायते । वन्दनं नरेन्द्राय ते हि तस्मात्तत्रापि तद्भयम् । उदाहरणम्—

[ इति दशमस्या-( पञ्चमस्या- ) ध्यायस्य
सप्तविंशः खण्डः । ]

---

१–आदर्शपुस्तकेऽत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ॰ ८ । ६९ । १२] 'सुदेवो असि' इत्येव प्रतीकम् B. C. ३–नो वरुण B.
४–अवर्धं B. अत्र 'अथवा' इति पाठः स्यात् ।
*–अत्र 'कथमिवानुक्षरन्ति ? उच्यते' इति पाठः स्यात् ।
५–सूर्यं ( र्म्यां C. ) सुषिरमिव B. C.
६–शोभादूर्मि B. C.
७–च्छेदापूरं यद्वा B. च्छोदापूर C.
८–भिस्तननं B. ९–विरिटं B. विरिटे C.
१०–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ अष्टाविंशः खण्डः । ]

प्र वांवृजे सुप्रया बर्हिरेषामा विश्पतीव वीरिट इयाते ।

विशामक्तोरुषसः पूर्वहूतौ वायुः पूषा स्वस्तये नियुत्वान् ॥

वृजिस्तरणार्थः । ततः कर्मणि लट् प्रवृज्यते प्रस्तीर्यते । सुप्रया सुखं गम्यते यस्मिन् देवताभिः । किं पुनस्तत् ? बर्हिर्वेदिरास्तरणाद्दर्भात्मकस्य । इदं बर्हिरेषामृत्विग्यजमानानां स्वभूतम् । विस्तीर्णे च तस्मिन् आकार इयाते इत्यनेन सम्बध्यते, विश्पतीव संप्रत्यर्थत्वात् पदपूरणः, विश्वशब्दस्य वलोपेन च विश्पती सर्वस्य स्वामिनौ पोतारौ वीरिटे अन्तरिक्षे सप्तमीश्रुतेः स्थितौ सन्तौ । पञ्चम्यर्थे वा सप्तमी । ततो वीरिटाद् यज्ञं प्रति आ इयाते आगच्छतम् । अथवा विशां पतीविश्पती राजानौ कौचित् । वीरिटोऽपि मनुष्यगण इव स्वार्थ एव । यथा कौचिद् विशां पती राजानौ वीरिटे स्वस्मिन् सैनिके मनुष्यगणे स्थितौ ततो वा आगच्छेतां तद्वदागच्छतम् । विशामित्येतत् पूर्वहूतावित्येतेन व्यवहितेनापि सामर्थ्यात् सम्बध्यते । कस्मिन् काले आगच्छतम् ? उच्यते । अक्तो रात्रिनामेदम् । रात्रेरुषस उपसश्चापि वा स काल इति विशां मनुष्याणामृत्विग्यजमानानाम् । पूर्वहूतौ पूर्वस्मिन्नाह्वाने । कौ इयाते ? वायुः पूषा नियुतो वायुरित्यादिष्टोपयोजनत्वान्नियुत्वानित्येव्*हितमपि वायुना सम्बध्यते । वायुश्च नियुत्वान् पूषा च । किमर्थमागच्छतम् ! स्वस्तये अविनाशाय यज्ञस्यास्माकं चेत्यभिप्रायः । सर्वस्यात्मा पालयितारौ वा कृत्स्नस्य नियुक्तत्वात् । कस्मान्नियुज्यन्ते ? अस्याश्वादिष्टोपयोजनं दर्शयति । नियुक्तः कस्मात् ? नियमनाद्वा युजेर्वा ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ७।३९।२] 'प्र वाष्ट (मा प्र C.) जे' इत्येव प्रतीकम् B. C.
३–प्रजिस्तर० C. ४–प्रप्रज्यते C.
५–सुपूयाः B.
६–वताभीः C.
७–'रा' नास्त्यादर्शपुस्तकेषु ।
८–विवतीव B. C. ९–पूरणं C.
१०–ब्दस्य च वलो C.
११–विश्पति B. विश्पतिः C.
१२–पातादौ B. C. १३–बिरीटे B. C.
१४–बिरीटात् ( भ् B. ) B. C.
१५–च्छतः C.
१६–विरीटोऽपि B. C.
१७–विरीटे B. C. १८–च्छतः C.
१९–पूर्वभूतामित्ये B. पूर्वभूतां विपत्ये C.
२०–च्छतः C.
२१–पूर्वभूतौ B. C. २२–ष्वाह्वने C.
* '०त्येतद्व्यवहित०' इति पाठः स्यात् ।
२३–च्छतः C. २४–अपिनाशाय C.
२५–सर्वस्यात्म B.
२६–श्वा इत्यादिष्टो C.

अच्छेति निपातत्वाच्च संस्कारादनारम्भादनवगतोऽनेकार्थश्च* । अत इहोपन्यस्तः । स पुनरयमहेरर्थे आभिमुख्यार्थे । आप्तुमित्यस्यार्थ इति शाकपूणिः । तथा चैवोदाहृतं यद्दुश इत्युदाहरणोपन्यास इति ।

परि ईम सीमिति व्याख्याते पाश्चिके निपातप्रकरणे । अनेकार्थत्वादिहोपन्यासः ।

एनमिति एनामिति च पदद्वयमेतत् । अस्या अस्येत्येतेन पदद्वयेन उदात्तं प्रथमादेशे अनुदात्तमन्वादेश इत्येवं नवमे व्याख्यातः । पुराऽनवगतस्तत्रोक्तः । इहानेकार्थत्वादुपन्यासः । त्रित एनमायुनगित्येवमादीन्युदाहरणानि व्याख्यातानि ।

सृणिरित्यनवगतम । । अङ्कुशोऽभिधेयः । सरणादिति व्युत्पत्तिवचनम । सरणाद् गमनात् सरणः सन् सृणिः । पर्यायप्रसक्तमङ्कुशं निराह । अश्नतेर्वेति ह्यसौ हस्तिपक्रहस्तात् हस्तिमस्तकं नित्यम । आकुञ्चितो वासौ भवति 'कुञ्च कौटिल्ये' घट्टनाविशेषेणाभिमुख्येन कुटिल इत्यर्थः । निगमेने हस्त्यङ्कुशस्यासंगतेः क्रियामात्रादत्राङ्कुशोऽभिप्रेतो लोपितव्यः । प्रतिसारणात् सृणिः अञ्चनादङ्कुश आकुटिलाकाराद्वा । तथाच कचिदेवासौ दात्रमङ्कुश इति भाष्ये । उदाहरणमे—

युनक्त सीरा वि युगा तनुध्वं कृते योनौ वपतेह बीजम् ।
गिरा च श्रुष्टिः सभरा असन्नो नेदीय इत् सृण्यः पक्वमेयात् ॥

बुधस्य सोमपुत्रस्यार्षम । युनक्त हे हालिकाः सीराः सीराणि हलानि । तदर्थं च विद्युगस्तनुध्वं वितनुत च युगानि । तदनन्तरं हलबलीवर्दसंयोगोपपत्तेः । तैश्च सीरैः कृते च संस्कृते कृष्ट इत्यर्थः । तेनायमर्थः । सदा धान्यशलाकाः सपरा घार इति ध्रियमाणत्वात् फलमुच्यते संभृतफला आपूरितबृहच्छीर्षकेत्यर्थः । असत लोडर्थे लिङ्, भवतु । नोऽस्माकम । किञ्च नेदीयोऽन्तिकतरं सन्निकृष्टतरं च । इत् पदपूरणः । सृण्योऽङ्कुशात्

* '०नेकार्थश्च' इति स्यात् ।

१–'मभेरर्थे' इति पाठो युक्तः ।

२–अत्र 'व्याख्याताः' इति बहुवचनान्तः पाठो युक्तः स्यात् । परि [निरु० १।३] ईम् [निरु० १।७] सीम् [निरु० १।९] इत्येते व्याख्याताः ।

३–[ निरु० ४ । २५ ]

४–इहाग्रकार्यं C. ५–'अ' इति त्रुटितम् C.

६–'गमन' इत्येव B. C. ७–सृणिम् B.

८–पर्याप्त प्रस C.

९–'अश्नति' इति नास्ति B.

१०–[धा० १।१८५]

११–नियमेन C.

१२–क्रियामादाम्रमात्रांकुशो C.

१३–लोपितव्यः C.

१४–'उदाहरणम्' इति नास्ति B.

१५–[ऋ० १० । १०१ । ३ ॥ यजु० १२ । ६८]
'युनक्त सीरा' इत्येव प्रतीकम् B. C.

१६–युध सौमपु C. १७–भ्रियमाणत्वात् C.

१८–संभृतफल C.

१९–सृण्याः B.

प्रागेव दात्रलवनादित्यर्थः । मुष्टिन गृहीतमात्रमेवेत्यभिप्रायः । पक्वं सत्तु । किम् ? सामर्थ्याद् यवादि धान्यम् एयाद् आगच्छतीत्याशास्महे ।

सृणिशब्दस्य स्वव्यापारे लक्षणतां दर्शयति । अङ्कुशाभोवादिति । अङ्कुशाकर्षणादित्यर्थः । द्विरभ्यासोऽध्यायपरिसमाप्तिज्ञापनार्थ इति सिद्धम् ।

इति [ आचार्यमहेश्वरकृते ] निरुक्तविवरणे

दशमो-[ पञ्चमो- ] ध्यायः

समाप्तः ।

---

१–गृहतमात्रमेवेत्यभिप्रायः C.

२–'त' इति त्रुटितम् C.

३–घृणिशब्दस्य B. C.

४ अत्र 'अङ्कुशादायादिति' इति मूलानुसारी पाठो युक्तो भवेत् ।

५–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।

६–'समाप्तः' इति नास्ति B.

## [ अथ षष्ठोऽध्यायः । प्रथमः पादः । ]

आशुशुक्षणिरित्यनवगतमनेकार्थं च । अग्निर्वा मनुष्यो वाभिधेयः । यदा अग्निराशुशुक्षणिस्तदा सनिता वेत्यवगमः । यदा मनुष्यस्तदा शुशोचयिषोरिति । उदाहरणम् ।

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥

गृत्समदस्यार्षम् । त्वं हे अग्ने द्युभिरहोभिर्जायस इत्यर्थः । सप्तम्यर्थं एषा तृतीया । द्युषु दिवसेषु अमावास्यादिषु आधानकाल इत्यर्थः । अरणिजो निर्मथ्यमानो वा जायसे । त्वं त्वमेव चाशुशुक्षणिः आशुशुचा दीप्त्या । कस्य ? सामर्थ्यात् तमसः । सनिता वा संभक्ता वा सर्वस्य पाकदाहप्रकाशनादेर्व्यापारस्य । अलौकिकस्यात्मना वा जायसे । पञ्चम्यर्थे वा आशुशुक्षणिरित्येषा प्रथमा । अस्मिंश्च पक्षे आङ्पूर्वस्य शुचेर्दीप्तिकर्मणः मनि एतद्रूपम् । आदिदीपयिषोः पुरुषात् तेन मथ्यमानो जायस इत्यर्थः । एवं च कृत्वा पक्षद्वयेऽप्यर्थभेदाद् भेदप्रदर्शनार्थत्वाद्वावग्रहस्य अन्यतरपक्षपरित्यागकारणाभावात् पक्षद्वयापेक्षया एतत्पदं पदकारा नावगृह्णन्ति । त्वमद्भ्यस्त्वमेवाद्भ्यो वैद्युतात्मना । त्वमश्मनस्त्वमेव पाषाणादस्यान्तरेण लोहेन वाभिहन्यमानात् । परि त्वं वनेभ्यस्त्वमेव वृक्षेभ्यो वायुना परस्परं संघृष्यमाणेभ्यः । त्वमेव शरवशादिभ्य ओषधीभ्यः । एवं त्वं ततस्ततो नृणां मनुष्याणामर्थायेति शेषः, हे नृपते मनुष्यपते सर्वतो जायसे शुचिर्दीप्तः । अथवा नृपतिशब्दो निरस्तपूर्वापरविभागः स्वामिवचनत्वेन रूढः । तेन नृणां पते नृपते मनुष्याणां स्वामिन्नित्यर्थः ।

---

१–अयं कोष्ठकान्तर्गतः पाठो नास्ति B अयं सर्वोपि पाठोऽध्यायाद्यारम्भात्मको नास्ति C.
२–ता B. C.
३–'आशुशुक् सनिता वा' इति युक्तं स्यात् । ततश्च वाकारोऽपि संगच्छते ।
४–त्यनवगमः B. C. ५–तद C.
६–[ऋ. २।१।१] 'त्वमग्ने' इत्येव प्रतीकम् B. C.
७–'भ' इत्येवादर्शपुस्तकपाठः ।
८–एश स द्युती C.
९–अथवा काल B. आधान काल C.
१०–अरणिनो C.
११–जयमे C.
१२–'त्वं' इति नास्ति B.
१३–तस्य B. १४–तमसा C.
१५–पाकदाह B.
१६–वा वाशुशु C. १७–उपरि त्वं B.
१८–'स' इति नास्ति C. 'संघृष्यमाणेभ्यः' इत्युचितम् ।
१९–मनुष्यायेणा C.
२०–'अस्वायेति' इत्यादर्शपुस्तकपाठः ।
२१–'नृणान्नृपते' इत्येव C.
२२–स्वामिनीत्यर्थः C.

प्रविभज्य निराह आशु इति । प्रासङ्गिकमेतत् । शुनो वायुरित्यर्थेयुज्यते। क्षिप्र-नाम इत्यवाच्यं क्षिप्रनामसु पाठात् । निर्विवक्षयोपन्यास इति चेन्न निपातत्वात् । तस्मात् क्षिप्रनामनी इति नित्यानुवादः । क्षणिरुत्तरः अत्राप्युत्तम इति न्याय्यम् । मध्यमस्यापि शु इत्येतस्यापि भावात् । क्षणोतेः 'क्षण हिंसायाम्' इत्यस्य ।

अथवा एवमन्यथा स्यात् । पञ्चम्यर्थे प्रथमेयं .विभक्तिराशुशुक्षणिरित्याह । किं पुनः कारणं प्रथमैषा सती पञ्चमीत्वेन विपरिणम्यत इति ? उच्यते । तथाहि वाक्य-संयोगः । तेन हि प्रकारेण पञ्चमीत्वेन विपरिणतस्यास्य शब्दस्य अनेन वाक्येनार्थसंगतिर्भवति नेतरथा यथावस्थितस्य । आह कथं कृत्वेति ? उच्यते । त्वमद्भ्यः, त्वमश्मनः, वनेभ्य इत्येतान्युत्तराणि बहूनि पदानि पञ्चम्यन्तानि । तस्मादनेनापि पञ्चम्यन्तेनैव भ-वितव्यमित्युपपद्यते पञ्चमीत्वेन विपरिणाम इति । आशुशुक्षणिरित्येतस्याक्षरपञ्चकस्य य एष पुरस्ताद् आ इत्युपसर्गः शुशुक्षणिरित्युत्तरश्चतुरक्षर एष चिकीर्षितः सन्नन्त इत्यभिप्रायः । अथ समस्तस्य कोऽर्थ इति ? उच्यते । यः कश्चिदाशुशोचयिषुरादिदीप-यिषुर्भवति स आशुशुक्षणिस्तस्माद् आशुशुक्षणे त्वं भगवन् हे अग्ने जायसे लोकप्र-सिद्धः । शुचिरार्षाढोऽयं ग्रैष्मो मास इत्यस्मादेव धातोर्दीप्तत्वान्निर्मलत्वादिति वैयाकरणा मन्यन्ते । निर्णिचेर्नैरुक्ता इत्याह । निःक्षारितं कात्स्न्येनापनीतमस्मात् पापकम् । सिचेः शुचिरित्याह ।

आशा इत्यनवगतम् । यथादृष्टं वेदे तथा पठितम् । दिशोऽभिधेयाः । आसदनादिति व्युत्पत्तिवचनम् । शदिर्गत्यर्थः । तं तमर्थं प्रत्यागमनात् । आशदना इत्यवगमः । उपदिश इत्यतोऽनेकार्थता । अभ्यशनात् परस्परं दिग्भिरहोभिः[11] संव्याप्तेः । उदाहरणम्—

इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् ।
जेता शत्रून् वि चर्षणिः[14] ॥

गृत्समदस्यार्षम्[15] । इन्द्र[16] आशाभ्यो दिग्भ्यः[17] । परि करदित्येतेन[18] सम्बध्यते सर्वाभ्यो दि-

१–'प्र' इति नास्ति B. २–'व' इति त्रुटितम् B.
३–[धा॰ ८।३] 'क्षणु' इति धातुपाठे पाठः ।
४–संहतिर्भवति B. C. ५–इतीति C.
६–'व आ इत्युपसर्गः शु' इति त्रुटितम् C. 'इत्युपसर्गः' एतावदेव त्रुटितम् B.
७–'इति' इति नास्ति B.
८ शुचिः पुरुषमग्रैष्मो B. C.
९–निष्टीचैर्निरुक्ता B. निष्किचेर्नैरुक्ता C.
१०–निष्कारित कात्स्न्येनापरीतमस्स्यात् B. निक्षा-रित कात्स्न्येनापनीयतं अस्मात् पापकम् C.
११–'स' इति त्रुटितम् B. C.
१२–अभ्ययनात् B. १३–रहेतोभिः B.
१४–[ऋ॰ २।४१।१२] 'इन्द्र आशाभ्यः' इत्येव प्रतीकम् B. C. १५–'आर्षम्' इति नास्ति C.
१६– तनूः B. तन्दः C. १७–दिश्यः C,
१८–कर इत्येतेन B,

भ्यः। दिग्भिरत्र तन्निवासिनो लक्ष्यन्ते। सर्वदिङ्निवासिभ्यो भयंकरेभ्यो रक्ष आदिभ्योऽस्माकमभयं परितः सर्वतः करोत्वित्यर्थः। कीदृश इन्द्रः? जेता ताच्छीलिकस्तृनयम्। तृन्प्रयोगे च षष्ठीप्रतिषेधाद् द्वितीयैव शत्रूनिति। शत्रून् जेता पर्वशीलः। विचर्षणिः पश्यतिकर्माऽयम्। द्रष्टा यो लोकपालत्वात् कृत्स्नस्य जगतः।

काशिरित्यनवगतम्। मुष्टिरभिधेयः। प्रकाशनादिति निर्वचनम्। प्रकाश्य इत्यवगमः। प्रसक्तं मुष्टिं निराह कोचनादेव मोकव्यो ह्यसौ भवति। मोषणाद्वा मुष्टिर्मुषितमिवं तदन्तर्गतादर्शनसामान्यात्। मोहनाद्वा किमनेनेत्यज्ञान् मोहयतीति मुष्टिः। उदाहरणम्—

उताभयं पुरुहूत श्रवोभिरेको दृळ्हमवदो वृत्रहा सन्।
इमे चिदिन्द्र रोदसी अपारे यत् संगृभ्णा मघवन् काशिरित्ते॥

विश्वामित्रस्य। परोक्ष्य तिस्रः। उताप्यर्थे। अभय इत्यपि सामर्थ्याल्लुप्तोपमं द्रष्टव्यम्। अभयमिव भवतीत्यर्थः। कस्मिन्? संग्रामे। पुरुहूत बहुभिराहूत श्रवोभिः श्रवणीयैः शब्दैरेकस्त्वं दृढ सुष्ठु उच्चैरित्यर्थः। अवदो वदसि युद्धायां वयासि सिंहनादं नदसीत्यर्थः। वृत्रहा वृत्राणां शत्रूणां हन्ता सन् शत्रुवधवेलायामित्यर्थः। चिदिति चार्थे इमे च इन्द्र रोदसी द्यावापृथिव्यौ। किंविशिष्टे? अपारे सत्यपि द्यावापृथिवीनामगुणत्वे गुणनिमित्तत्वमस्य द्रष्टव्यम्। अविद्यमानं पारमन्तं ययोस्ते अपारे इत्यर्थः। यत् यस्मान्मुष्टिना संगृभ्णा संगृह्णासि हे मघवन्। यस्मादिति श्रुतेस्तस्मादित्यध्याहारः। तस्मात् काशिरिति इच्छब्दोऽत्र महत्त्वे अहो मुष्टिस्ते तव महान्।

रोदसी कस्मात्? रोधसी सत्यौ रोदसी। द्यावापृथिव्यावभिधेये। विरोधनादिति निर्वचनम्। ताभ्यां हि विविधं रुद्धानि सर्वभूतानि ततो बहिर्नोऽभावात्। सारूप्यप्रसक्तं रोधः। कूलमित्यभिधेयम्। तदपि निरोधनादेवेत्याह निरुणद्धि यद्धेत स्रोतः। अनुप्रसक्तं कूलं

१—वक्ष्येत C.
२—[ पा० २ । ३ । ६९ ]
३—द्रष्टायलोपाल B. द्रष्टाय लोक C.
४—मुषितमिव C.
५—दर्शनसामर्थ्यात B.
६—[ऋ० ३।३०।५ ]'उताभये' इत्येव प्रतीकम् B. C.
७—वराश्च C.
८—'दृढं' इति त्रुटितम् B. न्द्र C.
९—अत्रदसि C.
१०—नन्दसी C.
११—श्रवाणां B. श्रवणां C.
१२—हता C.
१३—इमे चन इन्द्र B. इमे चितीति चार्थे इमे चर्वो इन्द्र C.
१४—व्यापारे B.
१५—संगृह्णः B. C.
१६—काशिद् B. काशित C.
१७—रोदसी C. 'रोधसी सत्यौ' इति त्रुटितम् B.
१८—'ति' इति त्रुटितम् B.
१९—रुत्वानि B. रुन्धानि C.
२०—बहिरभावात् B. C.
२१—महन् B

निराह ऋजतेरार्द्यन्तं विपरीतात् । जकारस्य कुत्वं रेफस्य लत्व मुकारस्यदीर्घत्वम् । आरुज्यते कदाचित् स्रोतसा । हस्तीवेनिरोर्ग्यम् । कूलविपर्ययप्रसङ्गादस्यैव धातोर्रवि-पर्ययेण यत्तन्निराह लोढ इति लत्वोंपरया । दुरत्येन पराभावं दर्शयति परा दृष्ट्या वा लोकेपर्यन्तता ।

कुणारुमित्यनवगतम् । क्वणतेः शब्दकर्मणः । ताच्छीलिक आरुः । सम्प्रसारणं छान्द-सत्वात् । क्वणन इत्यवगमः । मेघोऽभिधेयः । उदाहरणम् ।

सहदांनुं पुरुहूत क्षियन्तमहस्तमिन्द्र सं पिणक्कुणारुम् ।
अभि वृत्रं वर्धमानं पियारुमपादमिन्द्र तवसा जघन्थ ॥

सहस इत्युदकनामच्छान्दसत्वादन्तलोपः । सहस उदकस्य दातारं सहदानुम् । हे पुरुहूत बहुभिराहूत क्षियन्तमन्तरिक्षे निवसन्तम् । अहस्तमप्रत्यवस्थानसमर्थं कृत्वेति शेषः । हे इन्द्र संपिणक् 'पिष्लृ संचूर्णने' संपिण्ढि संचूर्णय कुणारुं क्वणनं शब्दशीलम् । सामर्थ्याद् मेघम् । इमं चापरम् । अभीत्ययं वर्धमानमित्येतेन सम्बध्यते । वृत्रं वर्तिकारं नष्टारमित्यर्थः । अभिवर्धमानं सर्वतः पृथुभवन्तं पियारुं पियतिर्हिंसाकर्मा तत आरुस्ताच्छील्ये अर्हार्थे वा । हिंसाशीलं बहूदकत्वाद्वा हिंसार्हम् । अपादमपयानासमर्थं कृत्वेति शेषः । इन्द्र तवसा बल-नामैतत्, बलेन जघन्थ जहि मारयेत्यर्थः ।

अलातृण इत्यनवगतम् । अलमत्रोपपदं आङ्पूर्वस्य तृदेर्ल्युटि अलमो मकारस्या-कारेण व्यापत्तिर्वर्णलोपश्च तृदेर्दकारस्य अन इत्यस्य च प्रत्ययस्याकारस्य । अलमातर्दन इत्यवगमः । उदाहरणम्—

[ इत्येकादशस्या-( षष्ठस्या-) ध्यायस्य
प्रथमः खण्डः । ][16]

---

१–आध्यन्तं B.
२–हस्ती ने *निग्गय्* B. *सन्दिग्धमिदं वाक्यम्* ।
३–धान्वार B. धान्तार C.
४–त्वावस्था C. ५–वा लेक प C.
६–[ऋ० ३।३०।८] 'सहदानुम्' इत्येव प्रतीकम् B. C.
७–'न्त' इति त्रुटितम् B.
८–'अ' इति नास्ति B. C. प्रत्यवसानसमर्थं B.
९–[धा० ७ । १५] पिण संचू० B. विषण संचू० C.
१०–वर्धनं मानं B.
११–वियारुं B. C.
१२–वियर्तिर्हि B. C. १३–सिंहा शील B. C.
१४–तपसा . C.
१५–'अलमत्र···देर्लुं (र्लु C.) टि अलमो मका-रस्याकारेण व्यापत्तिर्वर्णलोपश्चात्र दोकारस्यात इत्यस्य च प्रत्ययस्य कारस्य लमातन इत्य-वगमः' *अयमादर्शपुस्तकपाठः । मूले त्वस्मा-भिरेव संशोध्य तथा पाठो लिखितः ।*
१६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ द्वितीयः खण्डः ]

अलातृणो बल इन्द्र व्रजो गोः पुरा हन्तोर्भयमानो व्यार ।
सुगान् पथो अकृणोन्निरजे गाः प्रावन् वाणीः पुरुहूतं धमन्तीः ॥

अलं पर्याप्तमातर्दनं हिंसा यस्य बहूदकत्वात् । बलो मेघः हे इन्द्र व्रजो व्रजितान्तरिक्षे गोः पञ्चम्यन्तमित्येतद् भयमान इत्येतेन सम्बध्यते । एतस्यास्तदीयाया माध्यमिकाया गोर्वाचः पुरा हन्तोः प्रागेव हननाद् यावत् त्वया नैव हन्यते तावदेवेत्यर्थः । भयमानो गोरेव बिभ्यद् व्यार 'ऋ गतौ' इत्यस्य लिटि रूपम्, व्यगच्छत् विविधं गतः, विशिष्टसन्धिबलिनीभूत इत्यर्थः । विशिष्टस्य च सुगान् सुगमान् पथो मार्गान् निर्गमनलक्षणानकृणोद् अकरोत् । किमर्थम ? निरजे निरजनाय निष्क्रमणाय । गाः द्वितीयैषा षष्ठ्यर्थे, गवामन्तर्गतानामपाकृतेषु च पथिषु प्रावन् अवैतिर्गतिकर्मा आगच्छन् वाणीरेपो वृष्टिलक्षणाः । पुरुहूतमुदकं पार्थिवं प्रति शेषः । अथवा वाणीरिति वाचो नाम अहो शोभनं वर्षमहो शोभनमित्यादिका वाचः प्रागच्छन् बहुभिराहूतं वृष्टिलक्षणमुदकं धमन्तीर्धमतिर्गतिकर्मा छान्दसत्वात् पूर्वसवर्णः, धमन्त्यो गच्छन्त्यः क्रमेण ।

वाणीशब्दस्यार्थनिर्वचनम् । आपो वा वहनादित्यादि । आपो वाणीशब्देनोक्तास्ता हि वहनाद् वाणिरित्युच्यन्ते । वाचो वा वदनाद् वाणीशब्देनोच्येरन् । धमिर्गतिकर्मा अत्र स्तुतिकर्मा स्तुतिकर्मसु पाठात् ।

सल्लूकमित्यनेनैवगतम् । 'लुभो विमोहने' निष्ठायामिट्स्मरणात् स्तालुभितमित्यवगमः । ततश्च संलुब्धमित्यपपाठः । अंशोऽभिधेयमिति केचित् पापकं मन्यते कुत्सित-

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ३।३०।१०] 'अलातृणः' इत्य प्रतीकम् B.C
३–कलास C.    ४–पलं B. पल: C.
५–व्रजन B.
६–[धा० १।९६१]
७–व्यागच्छत् B.    ८–गतम् C.
९–सन्ति बलिनी C.
१०–प्रापत् B. प्रापन् C.
११–[धा० १।६०१] अञ्चतिर्ग B. C.
१२–आगच्छत B.    १३–पाणिः अव C.
१४–पाणीति C.
१५–पादनाम B. वादेनाम C.
१६–'अहो शोभनं वर्षम्' इति नास्ति C.
१७–प्रागच्छन् B.    १८–वमन्त्यो B. C.
१९–'ण' इति त्रुटितम् B. C.
२०–ताभिरवहननाद् B. ताभिवहनाद् C.
२१–त्यवगतम् C.
२२–[पा० ७।२।५४]
२३–त्यवपाठ: C.
२४–रक्षोऽभिधे C.
२५–पावकं B, C

मनिष्टफलमिति नैरुक्ताः । ततश्चानेकार्थमपि । अथवा सररूकमेतत् । सररूकाल्लसल्लत्वापत्त्या सलेलूकम् । सररूकं कस्मात् ? उच्यते । सर्तेर्धातोर्जेरुत्वद्रुते प्रत्यये गुणे रपरत्वे चास्य नैगमं द्विर्वचनम्, अत आह अभ्यस्तादिति । उदाहरणम्—

[ इत्येकादशस्या-( षष्ठस्या-) ध्यायस्य
द्वितीयः खण्डः ]

---

१–कालस . C. २–लललूकम् . C.
३–चैते . चेते C.
४–अयं सन्दिग्धः पाठः । जांहत्व C.
५–निर्वचनम् B. C.
६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ तृतीयः खण्डः ]

उद्वृह रक्षः सहमूलमिन्द्र वृश्चा मध्यं प्रत्यग्रं शृणीहि ।
आ कीवतः सललूकं चकर्थ ब्रह्मद्विषे तपुर्षिं हेतिमस्य ॥

उद्वृह उद्यच्छ उत्खन । किम् ? रक्षः सहमूलं सानुबन्धमित्यर्थः । हे इन्द्र उद्वृह्य च वृश्च छिन्धि मध्यमुदरप्रदेशं पाटयेत्यर्थः । प्रत्यग्रं शृणीहि प्रतिशातय चास्याग्रं कर्णनासिकादेः । एवं चोद्धृतपाटितशातितमूलमध्याग्रमपि सद् आ कीवत आदेर्मध्यादग्राच्च कियत इति । किमोऽत्र घामावश्छान्दसः । आ कियतोऽपि अनिर्णीयमानपरिमाणाद् दूरादित्यर्थः । सललूकं संलुभितमत्यन्तमूढमूर्च्छायुक्तमित्यर्थः । सरणशीलं वा अत्यन्तं दूरं नष्टमित्यर्थः । चकर्थ कुर्विति । कृत्वा च ब्रह्मद्विषे तादर्थ्ये चैषा चतुर्थी । निवृत्तिश्चात्र तादर्थ्यं विवक्षितम् । मशकेभ्यो धूम इति यथा । अस्य ब्रह्मद्विषो निवृत्यर्थं तपुर्षिं ताडयितारम् । कम् ? हेतिं वज्रनामेदम्, वज्रमस्य क्षिप उक्तेन प्रकारेण दूरमुत्क्षिप्य मारयेत्यर्थः ।

उद्वृह इत्यादेर्मूलतो मध्यतः शिरस्तश्चैवं तावत् प्रत्यक्षमीक्ष शृणीहि जहि मारणं कुर्वित्यर्थः । एवमयं प्रथमोऽर्धर्चः प्रत्यक्षरक्षोविषयः । आकीवत आकियतोऽपि देशाद् यदपि दूरदेशस्थं तदपि सललूकं संलुभितमूढमस्थिरं प्रत्यागमनासमर्थम् । सरूकं वा तदपि नष्टं कुरु । ब्रह्मद्विषे ब्रह्मद्विट् नास्तिको भिन्नदृष्टिरसौ धुरित्यर्थः । तस्मै तपुर्षिं हेतिमस्येति समानम् । एवमनेकार्थविषया प्रार्थनैषा नैकवाक्यतो विरुणद्धि 'सूनं सो ते' इति यथा ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ३।३०।१७] 'उद्वह रक्षः' एवं प्रतीकम् B. C.
३–उत्खननं (न C.) B. C.
४–शृणीहि B. C. ५–मनि सत् B.
६–आखितमादिमध्यादाचद्वित इति B. आरिवत आदे मध्यादार्य रिवत इति C.
७–किमोऽगा (घा C.) भाव B. C.
८–आरीयततापि B. C.
९–'मान परि' इति त्रुटितम् C.
१०–मान् दूरा B. C.
* '०मूढं मूर्च्छा०' इति स्यात् ।
११–'दूरं' इति नास्ति B. १२–कुर्वीत B.
१३–धैः तपुर्षि B. तडुर्षि C.
१४–'म' इति त्रुटितम् B.
१५–दूरमुद्धृत्य C. १६–शृणीभि C.
१७–धैर्चे……विषयं B.
१८–कियतः B. १९–कीवतोऽपि C.
२०–देशाः B. देशा C. '०तं मूढ०' इति स्यात् ।
२१–अत्र 'दूरतारोऽपि' इति 'दूरतरमपि' इति वा युक्तो पाठो भवेत् ।
२२–द्विनायास्ति B. नास्ति C. २३–हि श्रद्धधु C.
२४–[ऋ० ३।१६।६ ॥ निरु० १।७]

यत्रापि नैरुक्तपक्षः, तत्रापि उद्वह रक्ष इति रक्षो रक्षितव्यं यस्मादिति पापकमुच्यते। तत् सहमूलं सानुबन्धमुद्धेर अस्मत्तोऽपनयेत्यर्थः। कथं च तत्सानुबन्धमपनीतं भवति? यदि खण्डशः शीर्यते। अत उच्यते वृश्च मध्यं प्रतिशृणीहि अग्रमिति। एवमनेनार्धर्चेन कृतस्य पापस्यानैयः प्रार्थ्यते, परेण करिष्यमाणस्य। आ जीवतः कालादिति द्रष्टव्यम्। अनिर्ज्ञायमानपरिमाणात् कियतोऽपि कालस्य यावज्जीवभावादित्यर्थः। तदपि सल्लूकं समूढमस्मत्प्राप्ति प्रत्यसमर्थं कुरु नष्टं वा यथा तच्चिकीर्षा न जातुचिन्मनागपि मनसि समुल्लसति असमर्थं कुर्वित्यर्थः। किञ्च ब्रह्मद्विषे ब्रह्म तृतीयलक्षणं तत्पुरुषानिःश्रेयसं सुखसाधनं तत्प्रतिद्वन्द्वभावात् पापकद्विट् तस्मै हेतिमस्य तद्विषयाश्चित्तो मोचेऽपि कदाचिन्माभूदित्यर्थः।

मोचेनादङ्कुशादीनां तदेव वा वृक्षाद् बन्धान्मोचयितव्यम्। मुषितमिव वा तद्वृत्तितयान्तर्हितत्वात्। मोहनाद्वा परस्परमेव समूढत्वात् छेत्तुर्वा मोदनात् पांसुभिराच्छन्नत्वान्न ज्ञायते कियदधोगतो कियत्तिर्यग्गतेति। आगतमाभिमुख्येनार्धावगतं भवति। पुत्रवते इति पाठः।

कपयमित्यनवगतम्। कमिति सुखनाम तस्यैव मकारस्य तकारेण व्यापत्तिः। छान्दसत्वात् पयसश्च सलोपः। कपयसमित्येवगमः। सुखमस्य पय इति निर्वचनम्। मेघोऽभिधेयः। उदाहरणम्—

त्यं चिदित्था कत्पयं शयानमसूर्ये तमसि वावृधानम्।
तं चिन्मन्दानो वृषभः सुतस्योच्चैरिन्द्रो अपगूर्या जघान॥[23]

---

१–नैरुक्तपक्षः B. C. २–पापकमु C.
३–सहमूलं C. ४–ऊर्ध्वा C.
५–शार्य्यते B. ६–नश्च B.
७–स्य नयत् B. '०स्यापनयः' इत्युचितम्
८–कियन्तापि C. अत्र 'कियतोऽपि' इति पाठो युक्तो भवेत्।
९–स्यात् C. स्यात् प्राप्ते B.
१०–'ट' इति मुद्रितम् B. C.
११–मत्य कुर्वीत्यर्थः B. मुष्यं कुर्वित्यः C.
१२–पापकद्विण्मासै (स्मै C.) हेतमस्य B. C.
१३–अयं पाठः सन्दिग्धः।
१४–'मोचनात्' इत्यारभ्य 'पुत्राद इति पाठः' इत्यन्तः पाठो न सल्लूकपदव्याख्यानाय संभवति। कदाचित् कश्चिपदव्याख्यानावसरे [निरु० ६।१] प्रसङ्गागतस्य मुषितपदस्य व्याख्याभूतोऽयं पाठः स्यात्। परं तत्रापि तादृक् स्थलं नोपलभ्यते यत्रास्य पाठस्य योजना संगता भवेत्।
१५–वगि सिद्धया C.
१६–परस्परमेव C. १७–राजभवा न ज्ञा C.
१८–गतो किय C. १९–पुत्रवतेति C.
२०–किमिति B. C. २१–मलोपः B.
२२–मित्यनवगमः B. C.
२३–[ऋ० ५।१३।१६] 'त्यं चिदित्था' इत्येव प्रतीकम् B. C.

गातुर्नाम आत्रेयस्तस्यार्षम् । त्वमिति मेघस्य प्रतिनिर्देशस्तच्छब्दसमानार्थः । त्यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । चिदेवार्थे । यं पर्दयन्ति त्वं नमेव । इथा अमुत्रान्तरिक्षे कर्त्यं सुवं पयो यस्य तं मेघं शयानं शयतिरत्र स्थानार्थः, आमाशयो जलाशय इति यथा तिष्ठन्तमित्यर्थः । असूर्ये तमसि यस्मै मेघेन सूर्यस्य गमनं कृतं तेनाच्छादितत्वात् सूर्यो यत्र न दृश्यते तदसूर्यं तमस्तस्मिन् वावृधानं वर्धमानम् । तं तृतीयार्थ एषा द्वितीया । तच्छ्रुतेश्च योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । येन यज्ञा उपकल्प्यन्ते तेन सोमेन । चिन् पदपूरणः । मन्दानो वृषभो वर्धिता सुतस्य तृतीयार्थे षष्ठ्येषा, सुतेनाभिषुतेन सोमेन तृप्तः सन् । उच्चैरिन्द्रोऽपर्गृयं उद्यम्य । किम् ? सामर्थ्याद् वज्रं तेन जघान हतवान् हन्ति वा ।

विस्रुह इत्यनवगतस् । आप इत्यभिधेयवचनम् । विस्रवणादिति निर्वचनम् । विस्रेव इत्यवगमः । उदाहरणम्—

वैश्वानरस्य विमितानि चक्षसा सानूनि दिवो अमृतस्य केतुना ।
तस्येदु विश्वा भुवनाधि मूर्धनि वया इव रुरुहुः सप्त विस्रुहः ॥

भरद्वाजस्यार्षम् । वैश्वानरस्य भगवतोऽग्नेश्चक्षसा दर्शनेन देवतामाहात्म्यादतिशयवत्या कयापि प्रज्ञयेत्यर्थः । विमितानि निर्मितानि उत्पादितानि सानूनि समुच्छ्रितैः प्रदेशा दिवो द्युलोकस्य । अमृतस्य वैश्वानरविशेषणमेतत्, मरणवर्जितस्य । नच केवलया प्रज्ञया किं तर्हि केतुना कर्मणा व्यापारेण च हविर्वहनादिना । एतदुक्तं भवति तदधीनत्वाद् यागादेर्धर्मस्य धर्माधीनत्वाच्च कृत्स्नस्य जगतो निर्माणस्य । अथवा अपिच सत्त्वानां प्रकृतिभूता ऋषयः स्तुवन्तीत्याहुरिति प्रकृतिमाहात्म्येनेयं विकारस्य स्तुतिः । यो हि जगतः स्रष्टा कारणात्मा तस्य प्रज्ञाव्यापाराभ्यां दिवैः सानूनि निर्मितानीत्युच्यन्ते ।

तस्येदु इच्छब्दे एवार्थे उ इति पदपूरणः । तस्यैव वैश्वानरस्य पृथिव्यामनुप्रविष्टस्य विश्वा भुवना सर्वाणि भूतजातानि अधिमूर्धनि मूर्ध्नि उपरि तस्य प्रकृतत्वाद्वैश्वानरस्यैव ।

१–पश्यती B C.
२–अर्थे वा B. अर्था मा C
३–कल्पयन् B. कल्पयं C.
४–सूर्यस्यगमनं C.
५–'तं' इति त्रुटितम् B.
६–मर्षिता B. C.
७–स्तुतेनाभिष्टुतेन B.
८–अवगृयं C.
९–विस B. विस्राः C.
१० [ऋ० ६।७।६] 'वैश्वानरस्य विमि (दिवि C.) तानि' इत्येव प्रतीकम् B. C.
११–'भगवतो' इति त्रुटितम् B.
१२–तान् प्रदेशान् C.
१३–अवृतस्य B. C.
१४–प्रकृतिभूस B.
१५–दवः B. C.
१६–उच्छद B. उच्छब्द C.
१७–'उ' इति त्रुटितम् B. C.

वया इवै शाखा इव वृक्षस्य रुरुहुः रुहिर्जन्मार्थः, विरोहन्ति जायन्त इत्यर्थः। नच भूतान्येव केवलानि, किं तर्हि ? सप्त विरुहः सप्तसंख्याकाश्चापः। कथं पुनरपां सप्तसंख्याकत्वम् ? उच्यते। आधारभेदात् प्रधानभूता गङ्गाद्याः सप्त नद्यः, तासां समुद्राणां सप्तसंख्याकत्वं प्राधान्याच्च। तत्स्थानामपां भूयस्त्वाद् गणनानर्हत्वादिति। कथं पुनरिदमुभयं वैश्वानरस्य मूर्धनि विरोहेति ? उच्यते। उभयमिदं पृथिव्या मूर्धनि तथा 'मूर्धासि अग्निमग्नौ' इति मन्त्रवर्णः।

वीरुध इत्यनवगतम्। ओषधय इत्यभिधेयवचनम्। विरोहणादिति निर्वचनम्। केरुहा इत्यवगमः। मूलविभुजादित्वाद्वा के विरुहा विरोहिण्य इति वा। उदाहरणम्—

ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः।
अश्वा इव सजित्वरीर्वीरुधः पारयिष्ण्वः॥

भिषगाथर्वणो नाम तस्यार्षम्। ओषधीः अत्र सर्वत्र प्रथमा द्वितीयार्थे, हे ओषधयः प्रतिमोदध्वं परया पुष्ट्या हृष्यन्त। पुष्पवतीः पुष्पवत्यः प्रसूवरीः प्रसवचत्यः। अश्वा इव वडवा इव सजित्वरीः यथा वडवाः सहजैत्र्यः संग्रामस्य तद्वद् यूयं व्याधीनां क्षुधां वा सहभूतया जैत्र्यो वीरुधो विरोहिण्यः पारयिष्णवः पारयित्र्यश्च विश्वस्य।

नक्षद्दाभमित्यनवगतम्। यदि तावद् वैयाकरणा धातुनैक्षतिः 'तृक्ष स्तृक्ष णक्ष गतौ' इति। तस्य गतिकर्मत्वाद् व्याप्तिकर्मत्वे धात्वर्थानवगमः। अथाप्यनेकार्थत्वाद् व्याप्तिकर्मसु च 'इन्वति नक्षति' इति पाठाद् नक्षतिर्व्याप्त्यर्थश्चापि। तथापि संस्कारानवगमः। कथम् ? नक्षदानमभ्यर्दनुवानं दभ्नोतीति कर्मण्यणि दंभेरनुनासिकाचोपलक्षणाभावाद् नक्षद्दम्भमिति स्यात्। अस्तुवानदाभमिति नक्षतेर्व्याप्तिकर्मणः प्रदर्शनम्। अभ्यशनेन दभ्नोति

---

१–भुव B. C.
२–'का' इति नास्ति B.
३–नार्हत्वा (ज्ञा C.) दिति B. C.
४–विरोहन्ति B. C.
५–[ ऋ० १।११६।८ ] ६–विरुह्र C.
७–अयं पाठः सन्दिग्धः।
८–[ ऋ० १०।९७।३ ] 'ओषधीः प्रति' इत्येव प्रतीकम् B. C.
*–'हृष्यन्तु' इत्युचितम् ९–वरिः प्रसवत्यः C.
१०–सैजाण्यः B. रोक्ष्यः C.
११–अयमत्र पाठः सन्दिग्धः।
१२–जैत्र्य C. १३–चार C.
१४–नक्षन्दाम C.
१५–नह्नतिः B.
१६–[धा० १। ६६१–६६३] 'तक्ष स्तक्ष' इत्यत आरभ्य 'इन्वति' इत्यन्तः पाठस्त्रुटितः B.
१७–[निघ० २। १८] इन्वक्षति C.
१८–र्थस्यापि B, र्थस्या C.
१९–अभ्य अवाने B.
२०–[दभ्नोतिः, धा० ५। २४] दहे तरल नागि B. कर्मण्यन्नी दहे तरलनाभिक्रोपल C.
२१–अभुवानं दाहमिति B, यानन्दाहमिति C.

इति समुदायार्थवचनम् । उदाहरणम्—

तमु नः पूर्वे पितरो नवग्वाः सप्त विप्रासो अभि वाजयन्तः ।
नक्षद्दाभं ततुरिं पर्वतेष्ठामद्रोघवाचं मतिभिः शविष्ठम् ॥

भरद्वाजस्य । परा च । तं प्रकृतमिन्द्रम् । उ इति पदपूरणः । नोऽस्माकं पूर्वे पूर्वजाः पितरोऽङ्गिरःप्रभृतयः । नवग्वाः पार्वणोऽङ्गभावेन प्रतिमासमागमनाद् नवगतयः । तथा च 'अङ्गिरसो नः पितरो नवग्वाः' इत्यादौ सर्वत्र नवभिर्मासैः सिद्धिं गतत्वाद् नवग्वा अङ्गिरस उच्यन्ते । सप्त सप्तसंख्याकाः विप्रासो मेधाविनो वाजयन्तोऽभीप्सयन्ते धनं याचितवन्त इति शेषः । कुत एतद् वाजयन्त इति ? 'लक्षणहेत्वोः क्रियायाः' इति शतृश्रुतेः साकाङ्क्षत्वात् परस्यां चर्चि स्वयं धनस्य याच्यमानत्वात् । कीदृशम् ? उच्यते । नक्षद्दाभं दभ्नातिर्वधकर्मा युद्धार्थं नक्षैनामभिगन्तां प्राप्नुवन्तां वा । केषाम् ? सामर्थ्यात् शत्रूणां हन्तारं ततुरिं त्वरितारं पर्वतेष्ठां पर्वतो मेघस्तस्मिन् हन्तव्ये स्थातारम् । अद्रोघवाचमद्रोग्धव्य-वचनमनतिक्रमणीयवाचमित्यर्थः ।

अनिर्डागमेन उकारस्यौकारापत्त्या आयुःशब्दस्यादिलोपेन अस्क्रधोयुर्दीर्घा-युरित्यर्थः । व्युत्पत्त्यन्तरं तु मन्त्रव्याख्याने दर्शयिष्यामः । उदाहरणम्—

तमीमह इन्द्रमस्य रायः पुरुवीरस्य नृवतः पुरुक्षोः ।
यो अस्क्रधोयुरजरः स्वर्वान्तमा भर हरिवो मादयध्यै ॥

यमङ्गिरसोऽपि याचितवन्तस्तं त्वां वयमीमहे याचामहे । इन्द्रमस्य रायस्तत्र निर्द्धा-रणे षष्ठी अस्य सर्वस्य स्तोत्रैरभिलषितस्य रायो धनस्य । पुरुवीरस्य बहुभिर्वीरैः पुत्रैः पौत्रैश्चोपेतस्य । नृवतः परिचारकमनुष्यैस्तद्वतः । पुरुक्षोः 'क्षि निवासगत्योः' प्रभृत्य बहुषु स्थानेषु निवसितुः स्थापयितव्यस्येत्यर्थः । धर्मादिषु वा विनियोगैः । गन्तुरेवं हि गुणस्य धनस्य मध्ये यो अस्क्रधोयुश्चिरस्थायी पुत्रपौत्रानुगत इत्यर्थः ।

---

१–'इति' नास्ति B. C.
२–[ ऋ० ६ । २२ । २ ] 'तमु नः ( तनः C. ) पूर्वे' इत्येव प्रतीकम् B. C.
३–पार्वणोऽगमा B.
४–[ ऋ० १० । १४ । ६ ]
५–'का' इति नास्ति B.
६–वाजायन्त B. C.
७–[पा० ३ । २।१२६]
८–शत्रुश्रुते. C.
९–नक्षदाभं B. C.
१०–आयुधार्थे नक्षत्रां B.
११–पर्वतेषां B. C
१२ अद्रोढवाचं B.
१३–अद्रग्धव्य C.
१४–अतिवागमेन B.
१५–अस्तुधायुः C.
१६–[ऋ० ६ । २२ । ३]'तमीमह' इत्येव प्रतीकम् B.C.
१७–'मस' इति त्रुटितम् B. C.
१८–सात्र C.
१९–स्तोत्राभिल B.
२०–नृपते: B.
२१–[धा० ६ । १२६]
२२–प्रभृत्य C.
२३–विनियोगम् C.
२४–अस्तु धोयु B.

अथवा अन्यथा व्युत्पाद्यते । अस्कृ इत्येतत्तावत् करोते रूपं न कृन्ततेः । धोशब्द-स्तु दधातेर्वा दानार्थस्य । अकृतदानो यादृशो न कस्मैचिदपि त्वया दत्तपूर्व इत्यर्थः । अकृतपानो वा अभुक्तपूर्वो वा केनचिदित्यर्थः । अजरो जरा हानिस्तद्वर्जितोऽक्षय इत्यर्थः । सर्वान् सर्वैः सर्वविशेषैर्युक्तं याचयमानश्च एमेवमर्थम् । आभर देहि । हरिवैः हरी अश्वौ ताभ्यां तद्वत् । किमर्थम् ? मादयध्यै मोदनाय तर्पणाय वास्माकम् ।

अथवा यस्य राय इति द्वितीयार्थे षष्ठी न निर्धारणे । यो अस्कृधोयुरित्यादिर-प्यायुस्सम्बन्धात् तद्दीर्घत्वं शममस्य च मनुष्याणां प्रसिद्धतरत्वात् पुत्रस्य प्रतिनिर्देशो न धनस्य । तेनायमर्थः । अस्य राय इदमभिलषितं धनं पुत्त्रीरादियुक्तं याचामहे । किञ्च यो अस्कृधोयुर्दीर्घायुर्जरावर्जितः सर्वान् सर्वैश्च गुणैस्तद्वान् तद्वतः पुत्रमाहरेति समानम् ।

निशृम्भा इत्यनवगतम् । निशृम्य हारिण इत्यर्थगमः । अशिथिलया गत्या हरणशीलानि श्यथाश्च ते हारिणोऽविश्रामहरणाः श्रथतेर्हन्तेश्चाक्षरसामान्यान्निर्वचनम् । उदाहरणम्—

[ इत्येकादशस्या- ( षष्ठस्या- ) ध्यायस्य
तृतीयः खण्डः ]

---

१—अस्तु B
२—सर्वान् B. C.
३—अहर B. 'आहर' इत्येतद्द्विर्लिखितम C.
४—हेरिवः B. C.
५—अयं पाठः सन्दिग्धः ।
६—इत्यनवगतम् B.
७—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ चतुर्थः खण्डः । ]

आजासः पूषणं रथे निशृम्भास्ते जनश्रियम् ।

देवं वहन्तु बिभ्रतः ॥

भरद्वाजस्यार्षम् । आकारो वहन्त्वित्यनेन सम्बध्यते । अजाश्वोऽजाः पूष्णोऽश्वाः पूषणं रथे तृतीयार्थे एषा सप्तमी रथेन निशृम्भास्तच्छन्दश्श्रुतेर्यच्छन्दोऽध्याहार्यः। ये निशृम्भाः शीघ्रगामिन इत्यर्थः । कीदृशं पूषणम् ? उच्यते । जनश्रिय दीप्तमित्यर्थः । देवं दानादिगुणमावहन्तु अस्मान्प्रति । बिभ्रतः सम्यग्धारयन्तः ।

वृबदुक्थमित्यनवगतम् । बृहदुक्थ इत्यवगमः। महदुक्थ इत्यर्थवचनं यदि बृहे रूपम् । अथ वृबेस्ततो वक्तव्योऽस्य इति । उक्थ इति स्तुतिपर्यायः, महास्तुतिं वक्तव्यस्तुतिं वा स्तुत्यर्हमित्यर्थः । तदाह वक्तव्यमस्मा उक्थमिति वा बृहदुक्थमिति । उदाहरणम्—

वृबदुक्थं हवामहे सृप्रकरस्नमूतये ।

साधु कृण्वन्तमवसे ॥

मेधातिथेः । वृबेन महद् वक्तव्यं वा उक्थं स्तोत्रं स्तुतिर्यस्य तमिन्द्रं महास्तुतिं वा हवामहे आह्वयामः । सृप्रकरस्नं सृप्रौ करस्नू बाहुनामैतत्, सृप्रौ बाहू यस्य तम् । किमर्थम ? ऊतये तर्पणाय सोमेन पालनाय वात्मनः सर्वदेवैश्च साधु रसानुप्रदानादि कर्म कृण्वन्तं कुर्वन्तमवसे पालनाय जगतः ।

ऋदूदर इत्यनवगतम् । ऋदूदरस्यान्तःसुषिरत्वाद् मृदुर्वा उदरे अस्त्वित्येवं य आशास्यमानत्वाद् मृदूदरः सकारादिलोपेन ऋदूदरः । स्पक्षन्त इति यथा । सोमोऽभिधेयः । उदाहरणम्—

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ ऋ० ६ । ५५ । ६ ] 'आजासः' इत्येव प्रतीकम् । B. C.

३–वहत्यर्थीत्य B. पहत्वित्य C.

४–अश्रुजाः B.

५–पूष्णोश्च B. पूष्णोश्वाः C.

६–रथे तेन रथे निशृग B. C.

७–ध्याहारः C.  ८–निशृगाः C.

९–रयन्तम् B.

१०–बृहदुक्थ C.  ११–वुवः B.

१२–अत्र 'वृबदुक्थमिति' इति युक्तं स्यात् ।

१३–[ ऋ० ८।३२।१० ] 'वृब (द C.) दुक्थ' इत्येव प्रतीकम् B. C.

१४–बृहत B.

१५–प्रवरस्नं B.

१६–सर्वैव देवे च B. सर्वैः देव च C.

१७–असेः B. असे C.

१८–स्यान्तमः सु C.

१९–शास्येन्मान C.  २०–दूदरम B.

ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः।
अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥[1]

गाथस्यार्षम्। सोमवादिनः प्रायश्चित्तेष्टौ चरौ याज्यैषा। ऋदूदरेण सौमित्र्यादूं मृदु उदरं यस्य मृदुर्वामैनविरोचनयोरकर्ता उदरेऽस्तु इत्येवं य आशास्यते यजमानैः स मृदूदरस्तेन मृदूदरेण सोमेनेत्यर्थः। सख्या सखिभूतेन सचेय सेवेयेत्याशास्महे। यो मा न रिष्येत् न हिंस्याद् वमनविरेचनाभ्यामायुषः परिमोषणनिमित्तं स्यादित्यर्थः। हर्यश्व हरी इन्द्रस्याश्वौ ताभ्यां तद्वान् हर्यश्वस्तस्य संबोधनं हे हर्यश्व इन्द्र पीतः सन्। किञ्च अयं यः सोम इति पीतवांश्च व्यपदिशति न्यधायि पूर्वं निहितोऽस्मे त्वस्माभिः पीतः सामर्थ्याद् वान्तैश्च तस्मै निवृत्तिः तादर्थ्ये एषा चतुर्थी तच्छब्देन च तद्धेतुक आयुषः क्षयो लक्ष्यते तदर्थं तद्धेतुकायुःक्षयनिवृत्त्यर्थमित्यर्थः। इन्द्रं प्रतिरं तिरतिर्वृद्ध्यर्थः, प्रतीर्णं प्रवृद्धम् एमि याचामह इत्यर्थः। किम् ? आयुः।

ऋदूपे इत्येतत्पदमनेनैव साहचर्यादिह समाम्नातम्। तत् पुनः प्रसङ्गेनोपरिष्टाद् व्याख्यास्यामः।

पुलुकाम इत्यनवगतम्। पुत्रकाम इत्यवगमः। उदाहरणम्—

इमं नु सोममन्तितो हृत्सु पीतमुप ब्रुवे।
यत् सीमागश्चकृमा तत् सु मृळतु पुलुकामो हि मर्त्यः ॥[18]

अगस्त्यलोपामुद्राब्रह्मचारिसंवादे ब्रह्मचारिणः। इमं नु पदपूरणे पर्यार्थे वा, इममेव सोमम्। अन्तितोऽन्तिके सन्निकृष्टे स्थितमिति शेषः। कथमस्यान्तिकस्थ इत्याह हृत्सु पीतं हृदये पीतं सन्तम्। उपब्रुवे उपगम्य मनसा ब्रवीमि। किम् ? उच्यते। यत् सीम् सर्वतः सर्वप्रकारम्। आगः पापं चकृम कृतवन्तो वयं बुद्धिपूर्वमबुद्धिपूर्वं वा तत् सुमृळतु

---

१—[ऋ० ८।४८।१०] 'ऋदूद ('द' त्रुटितम् C.) रेण' इत्येव प्रतीकम् B. C.
२—'त' इति त्रुटितम् B. C.
३—अत्र 'मृदुर्वमनविरेचनयोरकर्ता उदरेऽस्तु' इति पाठो युक्तो भवेत्।
४—सपीभूतेन C.
५—वामन B.
६—विरोचना B. C.
७—मायुषं B.
८—विर्येथः C.
९—तस्य सम्बो तस्य धने C. 'सम्बोधनं' इत्यस्मात्परं 'तस्य धनं' इति पाठः B.
१०—अय्यंश्च C.
११—असमे B.
१२ वान्तं च B. C.
१३—ऽपेक्ष्यते B. वक्ष्यते C.
१४—'रं तिरति' इति त्रुटितम् B. 'रति' इति त्रुटितम् C.
१५-क्रियायुः B.
१६-[निरु० ६।३३]
१७—न्युकाम C
१८—[ऋ० १।१७९।५] 'इमं नु सोमम्' इत्येव प्रतीकम् B. C.
१९—इवार्थो वा C.
२०—'इम' इति त्रुटितम् C.

'मृळ सुखने' सुष्ठु सुखं करोतु नाशयतु बन्धम् । विपाकं करोतीत्यर्थः । तस्मादेवमुच्यते पुत्रकामो हि मर्त्यः हिशब्दो यस्मादर्थे, यस्माद् बहुकामो मनुष्यः, तं च कामं पापेनावष्टब्धो न शक्नोति प्राप्तुमिति ।

असिन्वतीत्यनवगतम् । तस्य असंखादन्त्यौ इत्यनेन कथनेन सिनोतेर्बन्धनार्थत्वात् धात्वर्थेऽवगमं दर्शयति । उदाहरणम्—

अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु ।
नाना हनू विभृते सं भरेते असिन्वती बप्सती भूर्यत्तः ॥

वैश्वानरस्याग्नेः सौचीकस्य वा ऋषेरार्षम्भरस्यार्षम् । अपश्यं पश्यामि अहमस्य भगवतोऽग्नेर्महतो महित्वं माहात्म्यम् । किं विशिष्टस्य ? अमर्त्यस्य अमरणधर्मिणो मर्त्यासु मरणधर्मसु विक्षु मनुष्यजातिषु सप्तमीनिर्देशाद् वर्तमानस्येति शेषः । किं पुनर्माहात्म्यमिति ? उच्यते । नाना हनू पृथग्भूते हनू ज्वालाख्ये विभृते बिभ्रते संभ्रियौ यत् संभरेते एकीभवत इत्यर्थः । किञ्च असिन्वती असंखादन्त्याविव चूर्णयन्त्याविव बप्सती भक्षयन्त्यौ भूरि बहु अत्तोऽन्यदेयत्यमपि हविर्भक्षयतः । एतदस्य माहात्म्यमित्यर्थः ।

कपना इत्यनवगतम् । कम्पना इत्यवगमः । कृमयोऽभिधेयाः । ते हि वृक्षं निस्सारीकुर्वन्तः कम्पयन्ति । स्वयं वाऽकम्पनस्वभावत्वादेवमुच्यन्ते । उदाहरणम्—

अभ्राजि शर्धो मरुतो यदर्णसं मोषथा वृक्षं कपनेव वेधसः ।
अध स्मा नो अरमतिं सजोषसश्चक्षुरिव यन्तमनु नेषथा सुगम् ॥

अभ्राजि भ्राजते दीप्यते । शर्धो बलं शुष्मशीर्षं सेनालक्षणम् । हे मरुतः, यत् तृतीयाया

१–[धा० ६।४६] सुखेन C.

२–'वन्ध' इत्येव B. C.

३–विवाकं C. अत्र 'विपाप' इति युक्तं स्यात् ।

४–पुत्रकामो B. C.

५–प्राप्तमिति B. C.

६ असिन्वन्ती B.

७–असंखादन्त्यापीत्यनेन B.

८–त्वर्थे नाव B. त्वर्थो नव C.

९–[ऋ० । १० । ७९ । १ ] 'अपश्यमस्य' इत्येव प्रतीकम् B. C.

१०–नरस्य वार्षिः C.

११–विश्मस्य B. C.

१२–'अ' इति त्रुटितम् B. C.

१३–धर्माण B. १४–सत्याय B.

१५–संभरते B. C.

१६–असिन्वन्ती B. C.

१७–असंवदन्त्या B.

१८–वसती B. पौत्र वप्सिती C.

१९–भक्षयन्त्यो B. C. २०–दत्तः B. C.

२१–हि तस्य B. एतस्य C.

२२–तपना C. २३–इत्यनवगमः C.

२४–[ऋ० ५ । ५४ । ६]'अभ्राजि' इत्येव प्रतीकम् B. C.

२५–'अभ्राजि' इति नास्ति B. C

अत्र लुक्, येन बलेन। अर्णसम् अर्णं उदकं सकारो मत्वर्थीयः, उदकवन्तम्। कम् ? साम-र्थ्यान्मेघम्। मोपथौ मुष्णीथ निरुदकं कुरुतेत्यर्थः। कथमिव ? वृक्षं कर्णेनेव कम्पना घुण-क्रिमयः, ते वृक्षं यथा मुष्णन्ति निस्सारीकुर्वन्ति तद्वत्। वेधसो मेधाविनो य ईदृग्बलाः। अधे अस्मात्। स्मशब्दः पदपूरणः। नोऽस्मान् अरमतिं व्यत्ययेनैकवचनं बहुवचनस्य स्थाने अरमतीन् अनल्पमतीन् पर्याप्तज्ञानान् स्वर्गापवर्गप्राप्तावधिकृतानित्यर्थः। हे राजोषसः संप्रीताः परस्परतः। चक्षुरिव यन्तं यथा चक्षुर्गच्छन्तं मनुष्यं नयेत् तद्वत्। अनुनेपथा अनुरत्र धात्वर्थानुवादी नयथा। सुगं सुखगमनं यत्र वा गतानां सुखं भवति स सुगः स्वर्गो मोक्षो वा तं यथा स्वेनैव यत्नेन गच्छन्तं मनुष्यं पथि प्रदर्शनमात्रेण चक्षुर्नयति एवं स्वीकृतेन कर्मणा स्वर्गं मोक्षं वा गच्छतोऽस्माननुग्रहमात्रक्रियया यूयं नयतेत्यर्थः।

भाऋजीक इत्यनवगतम्। ऋजूकौ अकुटिला अतिहता प्रसिद्धा दीप्तिर्यस्य स ऋजूकभास्सन् भाऋजीकः। प्रसिद्धभा इति पर्यायेणार्थप्रदर्शनम्। उदाहरणम्—

देवो देवान् परिभूर्ऋतेन वहा नो हव्यं प्रथमश्चिकित्वान्।
धूमकेतुः समिधा भाऋजीको मन्द्रो होता नित्यो वाचा यजीयान्॥

हविर्धानस्यार्षम्। प्रत्यक्षकृतत्वान्मन्त्रस्य देव इत्यादीनां चानामन्त्रित्वादेक-वाक्यतायै यत्तच्छब्दाध्याहारः। अग्निरुच्यते। यस्त्वं देवो दानादिगुणो देवान् परिभूः परि-भूतः। भवतिर्*परिग्रहे देवानां यस्त्वं परिग्रहीतेत्यर्थः। स ऋतेन यज्ञेन सहार्थे च तृतीया यज्ञेन सह। वह प्रापय नोऽस्माकं स्वभूतं हव्यं हविर्यज्ञं च हविश्च देवान् प्रति प्रापये-त्यर्थः। यश्च प्रथमो मुख्यश्चिकित्वान् ज्ञानवान् धूमकेतुर्धूमकर्ता। अथवा केतुः पताकोच्यते धूम एव केतुर्यस्य धूमेन वा यैः केत्यते सः। समिधा समिन्धनेन इध्मघृतादिना भाऋजीकः ऋजुकदीप्तिः प्रकृष्टो ज्वलन इत्यर्थः। मन्द्रः स्तुत्यः स्तोता वा होत्रोऽधिष्ठातृत्वात्। होता च

१—अर्णसः B.
२—'मेघ' इत्येव B. C.
३—पथ मुष्णीनिरुदकं B. C.
४—वृक्षकम्पनेप B. वृक्षकं वनेप C.
५—घृतकिमय B. घुणक्रिमयः C.
६—वृक्षः यथा दुष्णन्ति B. C.
७—निर्वासरीकु B.
८—'वेधसो' इति त्रुटितम् B.
९—स्य अस्मान् B. स्य अस्मात् C.
१०—यन्तः B.
११—सुनुरत्र B. १२—सुगः B.
१३—ऋजुका भाकु C.
१४—भाज ऋजीकः B. C.
१५—[ऋ॰ १० । १२ । २] 'देवो देवान्' इत्येव प्रतीकम् B. C.
१६ परीभूतः B. C.
* 'भव तत्र परिग्रहे' इति युक्तं स्यात्
१७—यज्ञेद C. १८—या केत्येते C.
१९—भा ऋजुक ऋजुकदीप्तिः B.
२०—होत्रः (त C.) अधिष्ठा B C.

नित्यो होत्रपेक्षया। वाचा च यजीयान् मनुष्यहोत्रपेक्षयैवातिशयेन यष्टा।

रुजाना इत्यनवगतम्। एतच्च पदं नदीनामसु पठ्यते। अत आह नद्योऽभिधेयाः। एवं चैकपदिके पठितस्यापि अनवगतत्वादिहोपक्षेपः। रुजेश्च परस्मैपदित्वात् शानजत्राऽनवगतम्। क्वचिच्च प्रथमासमानाधिकरणे शानच् द्रष्टव्यः। तच्च दर्शयति रुजन्ति कूलानीति रुजाना नद्यः। रुजन्त एवेत्यवगमः। उदाहरणम्—

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम्।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः॥

हिरण्यस्तूपस्यार्षम्। योद्धुमसमर्थोऽयोद्धा स यथा दुर्मदः सुरया मत्तः सन् दुर्मेधो वाल्र्य इत्यर्थः। असमर्थोऽपि कश्चिद् युद्धायाह्वयेत् एवं मेघः आहि जुह्वे इति हिशब्दः पदपूरणः, युद्धायाहूतवान् इन्द्रम्। कीदृशम्? महावीरं महाविक्रान्तं तुविबाधं बहूनां शत्रूणां बाधितारम्। ऋजीषम् अर्जयितारं शत्रुधनानाम्। अथवा यत् सोमस्य पूयमानस्यातिरिच्यते। सामर्थ्याच्चात्र ऋजीषशब्दोऽन्तर्नीतमत्वर्थो द्रष्टव्यः, ऋजीषिणमित्यर्थः। कः पुनरिन्द्रस्य ऋजीषेण सम्बन्धः? उच्यते। हर्योरस्य समभागो धानाश्चेति। आहूय च मेघो नातारीत् तरतिरत्र शक्तोत्यर्थः, शक्नोतिश्च धात्वन्तरापेक्षत्वात् सोढुमिति वाक्यशेषः। नाशक्नोत् सोढुमिति। अस्य स्वभूतानां समृतिं संगतिं वधानां प्रहाराणां चेत्यर्थः। अथासहमानः किं कृतवान्? उच्यते। सं रुजानाः नदीं प्रति संपिपिषे संपिष्टवानात्मानमुदकम्। चूर्णरूपीभूय नदीषु स्थित इत्यर्थः। इन्द्रशत्रुरिन्द्रस्य शातयितव्यः।

जूर्णिरित्यनवगतम्। जवतेर्गतिकर्मणः। निर्बन्दो नामकरणः। रेफागमः। द्रवतेर्वा उकाररेफयोः स्थानव्यत्ययो दकारस्य जकारापत्तिः। शेषं पूर्ववत्। जीर्यतेर्वा हिंसार्थस्य। जूर्कुशल्यादिभ्यः कनिष्ठापदि एवं जूणायनाद्विजूर्णिशक्तिका सेनाऽभिधेया। दुनोतेर्वेत्यपपाठः। उदाहरणम्—

१—'नित्य.' इत्यनन्तरं 'होतृत्वाद्धोता च नित्यः' इत्यधिकः पाठः C. २—यजियान् B. यज्जीयान् C.
३—'ष्य' इति त्रुटितम् B. C. ४—एवं चैव पदिके B. C.
* '०नवगतः' इति युक्तम्।
५—रुजान्ति C.
६—[ ऋ० १। ३२। ६ ] 'अयोद्धेव' इत्येव प्रतीकम् B. C. ७—दुर्मेधः C.
८—अयं पाठः सन्दिग्धः। कदाचिदत्र 'वाचालः' इति स्यात्। वाङ्मात्रपर इत्यर्थः।
९—'त' इति द्विलिखितम् B. C.
१०—अभिमुखेति निरास्दः C. ११—इन्धन् B. C.
१२—आर्जभि B. अजयि C. १३—द्रमानम् C.
१४—रुजश्च B. रुजना C.
१५—'पि' इति त्रुटितम् C. १६—पूर्णरूपी B.
१७—हि शब्दो B. C. १८—करणे B. C.
१९—जूरुवत्वादिभ्यः कनिष्ठापदि एवं छशा द्रवणा द्विजूर्णी शक्तिका सेनाभिधेया C. अस्य वाक्यस्य पाठः सन्दिग्धः।

प्र प्रा वो अस्मे स्वयशोभिरूती परिवर्ग इन्द्रो दुर्मतीनां दरीमन्दुर्मतीनाम् ।
स्वयं सा रिषयध्यै या न उपेषे अत्रैः हतेमसन्न वक्षति क्षिप्ता जूर्णिर्न वक्षति ॥

परुच्छेपस्यार्षम् । प्रेति 'प्रसमुपोदः' इति पदपूरणे द्विर्वचनम् । उपसर्गत्वाच्चास्य ऊतीत्यनेन क्रियाशब्देन सम्बन्धः । अवतेः कर्तरि ऊतिः प्रकर्षेणाविता रक्षितेत्यर्थः । कस्य ? ऋत्विजामयं प्रतिनिर्देशः । अत्र पौत्रादीनां वो युष्माकमृत्विजां पुत्रपौत्रादीनां वा मदीयानाम् । अस्मे अस्माकम् । स्वयशोभिः निमित्ते चैषा तृतीया प्रयोजनस्य च निमित्तत्वेन विवक्षा स्वयशोभिर्निमित्तभूतैरात्मनः । क पुना रक्षिता ? उच्यते । परिवर्गे परिवर्ज्यन्ते प्राणैर्यत्र योद्धारः स परिवर्गः संग्रामस्तस्मिन् इन्द्रो दुर्मतीनां पापबुद्धीनां चास्मच्छत्रूणां नेत्यर्थः । दुर्मतीनां दुस्स्तुतीनां च । केन पुनः प्रकारेण रक्षिता ? उच्यते । स्वयम् आत्मनैव । सा रिषयध्यै तृतीयार्थे चतुर्थ्येनासदित्यनेन सम्बन्धो रिषयध्यै असद्रेषणाय हिंसनाय भवति इन्द्रप्रसादात् स्वयमेव धर्षिता विनश्यतीत्यर्थः । या नोऽस्मान् प्रति उप ईपे उपेत्येष प्र इत्येतस्य स्थाने प्रेष्यते । अत्रैरदनशीलैरस्मच्छत्रुभिः । हता हता च विनष्टा सती । इमिति पदपूरणः न वक्षति लडर्थेऽत्र लेट्, न वहति न प्राप्नोत्यस्मान् प्रति क्षिप्तापि जूर्णिः शक्तिका सेना वा प्रेरितापि सती न वक्षति लडर्थे लेट्, न वक्ष्यति न प्राप्स्यति आगामिन्यपि काल इत्यर्थः ।

ओमना इत्यनवगतम् । अवनाय अवनेन वेत्यवगमः । उदाहरणम्—

युवोः श्रियं परि योषा वृणीत सूरो दुहिता परितक्म्यायाम् ।
यद्देवयन्तमवथः शचीभिः परि घ्रंसमोमना वां वयो गात् ॥

---

१–[ ऋ० १।१२९।८ ] 'प्रप्रावः' इत्येवं प्रतीकम् B. C.
२–'पम्' इति त्रुटितम् C.
३–[पा० ८।१।६]
४–अत्र 'पादपूरणे' इति पाठो युक्तः ।
५–उन्दतिः B.
६–कश्यप B. कस्मव C.
७–वा B. C.   ८–च यशोभिः B. C.
९–परिवज्यैते B. C.
१०–नेत्यर्थः C. । नेत्यर्थे इति पाठे दुर्मतीनां न रक्षितेत्यर्थः । C. पुस्तकपाठे तु कदाचित् दरीमन् 'हन्तेत्यर्थः' इति पाठोऽत्र भवेत् । तथा चेन्द्रः संग्रामेऽस्माकं रक्षिता दुर्मतीनां च हन्तेत्यर्थः स्यात् ।
११–'पुनः' इति द्विर्लिखितम् B. C.
१२–रक्षता B. C.   १३–रिषयध्यै B.
१४–र्धचेस्मेना B र्धचेस्मेना C.
१५–हिंसनाय B.   १६–यामषि विन B.
१७–'उप' इति त्रुटितम् B.
१८–यद्वतिर्थेऽत्र B. C.   १९–क्षिता वि B. C.
२०–जूर्णः B.   २१–सेन वा B.
२२–'ति' इति त्रुटितम् C.
२३–[ ऋ० ७।६९।४ ] 'युवोः ( वो C. ) श्रियं' इत्येवं प्रतीकम् B. C.

वसिष्ठस्य । अश्विनावुच्येते । युवोर्युवयोः श्रियं परि सर्वेतः योषा स्त्री उप आख्या अवृणीत वृणते युवयोर्दीस्या दीप्तिमती सर्वतीत्यर्थः । सूंगे दुहिता सूर्येण दिवि जन्यमानत्वात् सूर्यस्य दुहिता । कदा वृणीत ? परितक्म्यायां रात्रौ ऊर्ध्वमर्धरात्रादश्विनोः काल इति वक्ष्यति तस्मिन् काले रात्रेः पश्चिमे भाग इत्यर्थः । किञ्च यद् यस्मादु देवयन्तं देवान् यष्टुमिच्छन्तम्, इच्छयात्र तत्पूर्वकत्वादनुष्ठानं लक्ष्यते देवानां यष्टारमित्यर्थः । अवथो रक्षथो युवाम् । शचीभिः कर्मभिः स्वैः प्रज्ञाभिर्वा । यस्मादिति श्रुतेस्तस्मादित्यध्याहारः, तस्मात् परिप्रस परीत्यय प्रतीत्यस्य स्थाने प्रंसमप्यैहः, अहनीत्यर्थः । ओमैना अवनायावनेन वा निमित्तभूतेन तर्पणार्थमित्यर्थः । वां युवां वैयोऽन्ननामेदम्, अन्नं हविर्लक्षणं गाद् अगादुँ गच्छति युवाभ्यां दीयत इत्यर्थः । उदिते अश्विनोर्याग उच्यते । अहः प्रत्यहमगादिति । तस्माद् यजमानं रक्षथः । तस्माद् प्रातरेवेज्येथे इत्यर्थः ।

इति ( महेश्वरकृते ) निरुक्तविवरणे
एकादशस्या- ( षष्ठस्या- ) ध्यायस्य
प्रथमः पादः ।

---

१-सरता B. सरिता C.
२-स्रीपे आख्या B. यौषा स्त्रीपे आख्या C.
३-प्रणेते B. वृणेते C.
४-भिरित्यर्थः B. C.
५-सुने B.
६-देवयन्तः B.
७-'देवान् यष्टुमिच्छन्तं' इति त्रुटितम् B.
८-युवम् B.
९-परिपसं प्रत्ययन् प्रतीतस्य B. परिययन् C.
१०-पद्यमप्यद्दः B. प्रंसमय्यद्दः C.
११-आमना B.
१२-नावने B. C.
१३-पयो B.
१४-'अगात्' इति नास्ति B.
१५-युभ्या डीयत C.
१६-अश्विनो याग B. उदितेयश्विनोर्याग C.
१७-अनः प्रत्यग्रमगा B. अहः प्रत्यग्र C.
१८-रक्षथः C.
१९-'त' इति त्रुटितम् C.
२०-वेज्येते C.
२१-अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।

## [ अथ (षष्ठस्या)ध्यायस्य द्वितीयः पादः । ]

उपलप्रक्षिणीत्यनैवगतम् । उपलेषु श्लक्ष्णेषु वालुकासु यवान् प्रक्षिणाति । क्षि हिंसायां हिनस्ति रुंजतीत्यर्थः । अथवा दृषन्धूरदकादिषूपलेषु तद्राधानभ्रष्टान् यवान् हिनस्ति चूर्णयतीत्यर्थः । ततश्च उपलप्रैंषेपिणीत्यवगमः । सक्तुकारिकाऽभिधेया रूढित्वात् । छर्त्रतया काचिदुत्पत्तये क्रियोपादीयते । उदाहरणम्—

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
पञ्चमः खण्डः । ]

———

१–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. C. अयं सर्वोऽप्यध्यायपादारम्भात्मकः पाठो नास्ति C.

२–'न' इति त्रुटितम् C.

३–हिंगतायं B. हिंगवायां C.

४–रुप्रयती B. रुजती C.

५–अयं पाठः सन्दिग्धः । दृषन्धुरदकादिषु लद्राधानभ्रष्टान् B.

६–उपलक्षणेऽपि णीत्य B.

७–त्यवनुकारि B.

८–अयं पाठः सन्दिग्धः ।

९–युत्पत्तये क्रीयोपादयते C.

१०–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ षष्ठः खण्डः । ]

कारुरहं ततो भिषगुपलप्रक्षिणी नना ।
नानाधियो वसूयवोऽनु गा इव तस्थिमेन्द्रायेन्दो परि स्रव ॥

शिशुराङ्गिरसस्तस्यार्षम् । स हि दुर्भिक्षानन्तरं प्रवृत्तसोमयागः सन् ददापवित्रात् क्षरति सोमे निरुक्तं होनः कनीयो भवति श्रुतं प्रतिवन्ध कनीयो भवति पापापनुत्तये दुश्च-रितानुकीर्तनपुरस्सरमनेन किलाध्येषणां चक्रे । कारुः स्तोतृनामेदं स्तोता अहं तावत् कर्ता स्तोमानां सद्धोता उद्गाता वा अयाज्ययाजनोपलक्षणं द्रष्टव्यम् । ततः सन्ताननाम पितुर्वा पुत्रस्य वा तन्यतेऽस्मादिति पिता तन्यते वापीति पुत्रः । तेन सन्ताननिमित्तमिदं नाम । तातशब्दस्य वा ह्रस्वत्वं ततः पिता पुत्रो वा मम भिषग् भेषजकृद्यशस्य ग्रहोत्यर्थः । स च 'त्रयी विद्या भिषज्यति' इति श्रुतेः । वैद्यो वा । उपलप्रक्षिणी सवनीयाद्यर्थं धानासक्तुकर-म्भादीनां कर्त्री प्रसिद्धा वा सक्तुकारिका असौ नना माता दुहिता वा । कथं पुनर्नना-शब्देनासावुच्यते ? नमतीति योगाद् माता पुत्रं प्रति स्तन्यपानाद्विना नमति दुहितापि शुश्रूषार्थम् । ते वयमेवं नानाधियो धीरिति कर्मनाम विविधकुत्सितकर्माणो वसूयवो धन-कामा यथाकथंचिद् धनमिच्छन्तो यो यदिच्छति तस्य तत् कुर्वन्तोऽनुगा इव तस्थिम प्रथमार्थे द्वितीयैषा गाव इव यथा गावः परार्थाः अन्वास्थिता वा न किञ्चिद् वर्जयन्ति एवं वयमत्र तस्थिमोऽन्वास्थिताः स्मोऽधिष्ठितवन्तः । कम् ? सामर्थ्याल्लोकम् । सम्प्रति तु निष्कान्तारिभूतैरतीते दुर्भिक्षे स्वत्प्राप्त्यर्थं कथंचिद् धारितप्राणैरस्माभिर्मनोरथ-

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ऋ० ९।११२।३] 'कारुरहम्' इत्येव प्रतीकम् B. C.

३–निरुक्त चैनः B.

४–अयं पाठः सन्दिग्धः । ५–वावा तु C.

६–दुश्चरिता B. युश्चरिता C.

७–ध्येपयाश्च B.C.

८–'द' इति त्रुटितम् B. C.

९– स होता B.

१०–'ह्रस्वत्व' इति त्रुटितम् B.

११–भिषजे B.

१२–[ अनुपलब्धमूलमिदम् ]

१३–सवनीयद्यर्थं B. C.

१४–धान (C.) सक्तकरम्भादिना कर्ति (C.) B. C.

१५–न नाम B. सौन नाम C.

१६–नामशब्दे B. C.

१७–नमन्ति (स्ति C) या योगान्मात्रा पुत्रं प्रति (परि C.) स्तनपानादि नाना ( B. ) भवति B. C.

१८–विविधं कुत्सितकर्मणा B.

१९. वासूय B. C.

२०–'तं स्थि' इत्येव । अन्यत् त्रुटितम् B. C.

२१–अनवस्थित पार (रा C.) द (B) B. C.

२२–स्य: B. C. २३–प्राप्त्यर्थः C.

शैतैरिदानीं प्राप्त इत्येतज्ज्ञात्वा इन्द्राय इन्द्रस्यार्थाय त्वं हे इन्दो सोमं कारुण्यात् परिस्रव अस्माद् दशापवित्राद् इत्येवमेवाध्येणा सत्कारपूर्विका व्यापारणा।

उपसीत्यनवगतम्। उपस्थशब्दस्य सप्तम्येकवचने धात्वादिसकारोऽवशिष्यते तत-स्थशब्दलोपेन उपसीति। उपस्थ इति प्राप्ते तद् भाष्यकारो दर्शयति उपस्थे। उदाहरणम्—

पत्तो जगार प्रत्यञ्चमत्ति शीर्ष्णा शिरः प्रति दधौ वरूथम्।
आसीन ऊर्ध्वामुपसि क्षिणाति न्यङ्ङुत्तानामन्वेति भूमिम्॥

शुक्रस्यार्षम्। इन्द्र उच्यते। जगारेति जिगर्तिर्गिरतिकर्मा वा गृह्णातिकर्मा वा। आद्यादित्वात् तसिः पादतो रश्म्याख्यैः पादैरित्यर्थः। अत्र चैकवाक्यतायै यत्तच्छब्दा-वध्याहार्यौ। यज्जगार निगरति मुञ्चति मध्यं प्रतिगृह्णाति वा पृथ्वीतः। कोऽसौ? सामर्थ्या-दादित्यः। तदिन्द्रः प्रत्यञ्चमात्मानं प्रत्यञ्चितं गतम्। अत्ति भक्षयति स्वीकारोतीत्यर्थः। शीर्ष्णा आदित्येन दत्तं सदिति शेषः। स्वीकृत्य च सर्वस्य लोकस्य शिरः प्रतिदधे विदधाति। किम्? वरूथं वरणीयं वृष्ट्याख्यं क्षिपति। किम्? उदकम्। किञ्च निहितेन च तेन आसीनः एव। क्व? उपसि उपस्थे अन्तरिक्षाख्ये स्थाने। ऊर्ध्वम् ऊर्ध्वताम्। काम्? सामर्थ्यात् पृथिवीं क्षिणाति हिनस्ति छादयति हतविहितविधस्तत्र प्रकरोतीत्यर्थः। हिंसितायां च सत्यां पृथिव्यां न्यङ् व्यत्ययेनेदं पुंलिङ्गं नपुंसकस्य स्थाने न्यग् नीचैरञ्चितं तमुदकमुत्तानमन्वेति यथानिम्नमनुगच्छति भूमिम्।

प्रकलवित इत्यनवगतम्। वणिगभिधेयः। प्रकलाविदित्यवगमः। स हि कला मानो-न्मानप्रतिमानादिविषयाः प्रकलाश्च गणितरत्नपरीक्षादिका वेद विजानाति। उदाहरणम्—

---

१–रश शी ( शि C. ) तै B. C.
२–सीं कुरु स्यात् B. ३–अस्मत् B.
४–उपसिमित्यन B.
५–ततः स्वशब्द B.
६–स्थ उपस्थे B. C.
७–[ऋ० १।१२७।१३] ' पत्तो जगार ' इत्येव प्रतीकम् B. C.
८–प्रतियोगे पञ्चम्यास्तसिः [ पा० ५।४।४४ ] इति सूत्रे वार्त्तिकं ' आद्यादिभ्य उपसंख्यानम् ' इति वर्तते।
९–पादतं C. पादतं रश्म्या B.
१०–चैव वाक्यतामे (C.) यय (B.) च्छब्दा B. C.
११–पृथुवीतः B. C.
१२–दत्तः B. C.
१३–'प्रतिदधौ' इति मूले पाठः।
१४–पिदधाति B.
१५–वरूथः B. C.
१६–आसिनैव B आसिनः एव C.
१७–प्रकारो C.। हतेत्यादिः पाठः सन्दिग्धः।
१८–मुत्ताना B. C.
१९–प्रकलावित् C.
२०–प्रकलवि B. प्रगलावि C.
२१–काला मानो मान (नं B.) प्रति B. C.
२२–प्रकृष्टा (ष्ट C.) ध B. C.

इन्द्रेणैते तृत्सवो वेविषाणा आपो न सृष्टा अधवन्त नीचीः ।
दुर्मित्रासः प्रकलविन्मिमाना जहुर्विश्वानि भोजना सुदासे ॥

वसिष्ठस्य । इन्द्रेणैते तृत्सवः तृदेर्हिंसार्थस्याहार्थेऽसुन् प्रत्ययो द्रष्टव्यः, नर्दनाही मेघाः । वेविषाणा 'विष्लृ व्याप्तौ' व्याप्यमाना आपो न आप इव यथा आपः केनचित् सृष्टा अधवन्त गच्छन्ति नीचीर्नीचैः । एवमन्तरिक्षस्याधो भवन्तीत्यर्थः । अधोभूय च ये दुर्मित्रासः कुत्सितान्यनिशं धनपराणि मित्राणि । कतमानि ? उच्यते । प्रकलवित् प्रथमाबहुवचनस्यात्र लुक् द्रष्टव्यः प्रकलाविदः प्रकृष्टानां कलानां वेदितारो वणिजः किञ्चित् स्वर्णमुक्ताप्रवालादि महता यत्नेन मिमते एवं मिमाना यावन्ति यदा यत्र योग्यानि तावन्ति तदा तत्र त्यजन्तो जहुर्जहति त्यजन्ति । विश्वानि सर्वाणि भोजना भोजनानि भोग्यार्हाण्युदकानि । सुदासे सुदा यजमानस्तस्मै कल्याणदानस्य यजमानस्यार्थायेत्यर्थः ।

अभ्यर्धयज्वा इत्यनवगतम् । ऋधु वृद्धौ यजिर्दानार्थः । अभ्यर्धयन् यजतीत्यस्य वाक्यस्यार्थः । उदाहरणम्—

मिम्यक्ष येषु रोदसी नु देवी सिषक्ति पूषा अभ्यर्धयज्वा ।
श्रुत्वा हवं मरुतो यद्ध याथ भूमा रेजन्ते अध्वनि प्रविक्ते ॥

ऋजिश्वन आर्षम् । मिम्यक्षेति म्यक्षेतेर्गतिकर्मणो रूपम् । गच्छति येषु द्वितीयार्थे एषा सप्तमी, यान् युष्मान् रोदसी रुद्रस्य पत्नी नु इति पदपूरणः देवीर्मरुतः । 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः' इति मन्त्रान्तरे दर्शनात् । तेनैषां रोदसी माता सा च स्नेहेन पुत्रान् प्रत्यलैर्वं गच्छति अतस्त एवमुच्यन्ते । गच्छति यान् युष्मान् रोदसी देवी यांश्च सिषक्ति रुद्रव्याहतरसेन प्राणेन सेवते । पूषा किंविशिष्टः ? अभ्यर्धयज्वा अल्पानपि अनैभ्यर्धयन् मरुद्भ्यो ददाति न तं वा स्तोतृभ्योऽसौ ददाति स येष्विति यच्छन्दश्रुतेस्तच्छब्दो-

१–[ऋ० ७।१८।१५] 'इन्द्रेणैते' इत्येव प्रतीकम् B. C.
२–'तृत्सवः' इति त्रुटितम् B. तत्सवः C.
३–मुन् B.
४–[धा० ३।१३] विषण व्या C.
५–व्यव्यमाना C.
६–'अधो' इत्येव B. C.
७–'नीचीः' इति नास्ति B. C.
८–भवतीत्य B.
९–'लुक्' इति त्रुटितम् B. 'लु' इत्येव C.
१०–र्धयज्वा इति C.
११–वृद्धन C
१२–[ऋ० ६।५०।५] 'मिम्यक्ष' इत्येव प्रतीकम् B. C.
१३–म्यक्ष्यतेर्ग B.
१४–मनुष्यान् B.
१५–कः B. कः C.
१६–[ऋ० ६।६६।३]
१७–सन्दिग्धमिदं पदम् ।
१८–गच्छन्ति B. C
१९–अत्र 'न' इत्यधिकं प्रतीयते ।
२०–भ्यो यो ददा C.
२१–एष्विति B.

ऽध्याहार्यः। ते श्रुत्वा हवमाह्वानं हे मरुतः, यद्धा हेति पदपूरणः, यार्थं गच्छथ यदेति वचनात् तदेत्यध्याहार्यम्। तदा भूमा यश्च बहुशब्दाद् विपुलवचनाद् बहुत्ववचनाद्वा इमनिचि छान्दसत्वादाद्युदात्तत्वम्। सामर्थ्याच्चात्र अन्तर्णीतमत्वर्थता बहुवचनस्य लुक् 'शेश्छन्दसि' इति। तेनायमर्थः। वैपुल्यवन्ति बहुत्ववन्ति वा महान्ति बहूनि वेत्यर्थः। कानि? सामर्थ्यात् शत्रुवृन्दानि रेजन्ते ह्रास्यते रेजत इति भयवेपनयोः। अस्मान् मरुतो हन्तुमागच्छन्तीति मन्यमानानि विभ्यति ध्वजाग्राणि वा कम्पन्ते। पदकारास्तु भूम रेजन्त इति ह्रस्वत्वं पठन्ति इति। क्रियाविशेषणमिदमेकवचनान्तमिति मन्यन्ते। तदा च स्वार्थिक इमनिच् द्रष्टव्यः। बहु सुष्ठु रेजन्त इत्यर्थः। अध्वनि अन्तरिक्षनाम अस्य च रेजन्त इत्यनेनैव सम्बन्धो यार्थं इत्यनेन वा अन्तरिक्षे रेजन्ते अन्तरिक्षे वा यदां वा यायेति। कीदृशे? प्रविक्ते प्रकर्षेण विविक्ते ईमौ दीप्ते विस्तीर्णे इत्यर्थः।

ईक्षे इत्येतदनवगतम्। ईशिषे इत्येवं प्राप्ते। उदाहरणम्—

नृवत्त इन्द्र नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः।
ईक्षे हि वस्व उभयस्य राजन् धा रत्नं महि स्थूरं बृहन्तम्॥

भरद्वाजस्य। नृवंत मनुष्यमतिथिमन्यं वा कंचित् प्रियं मित्रं भ्रातरं वा तद्वत्। ते द्वितीयार्थे षष्ठी त्वामें। नृतमेभिश्चात्र स्वसम्बन्धियोग्यत्वं लक्षयन् नृतमयोग्या यास्ताभिः प्रकृष्टमनुष्ययोग्याभिरित्यर्थः। काभिः? ऊती अवतेस्तृप्तिकर्मण ऊँतिः, ततस्तृतीयायाः पूर्वसवर्णः, ऊँतीभिस्तर्पणैः सोमैर्वंसीमहि 'वन षैण संभक्तौ' संभजेमहीत्याशास्महे। वामं प्रशस्यम्। न केवलाभिरूतिभिः। किं तर्हि? श्रोमतेभिः शृणोतेरयम् 'अन्येभ्योऽपि

१—'ते श्रुत्वा ह' इति त्रुटितम् B.
२—'याथ' इति नास्ति B. C.
३—[पा० ६।१।७०]
४—गच्छतीति B.
५—ध्वजाग्राणि B. C.
६—उपस्येत्यनेन B. यश्येत्यनेन C.
७—'यदा वा' इति अधिकमेवात्र।
८—सन्दिग्धमिदमत्र पदम्।
९—अदिप C.
१०—[ऋ० ६।१९।१०] 'नृव (प्र B.) त्त इन्द्र' इत्येव प्रतीकम् B. C.
११—नृपं B.
१२—कश्चित् B. C.
१३—'ते' इति त्रुटितम् B.
१४—'त्वाम्' इति त्रुटितम् B. 'त्वा' इत्येव C.
१५—नृपतेश्चात्र B. नृतमाः वैश्वात्र C.
१६—मातिः B. C. * 'ऊतिभि०' इत्युचितम्।
१७—सीमह B. पैसीमह C.
१८—[धा० १।४६४,४६५] वन षण C.
१९—'न' इति नास्ति B. C.
२०—श्रोमते (तेः B.) हिः B. C. 'श्रोमतेभिः इत्यस्मात्पूर्वमादर्शपुस्तकेषु 'शब्दो यस्मादय यस्मादीशिषे त्वं वस्वः वसुनो धनस्योभयस्य कवमस्य' इति पाठोऽधिकः।

दृश्यते' इत्येवं कर्मणि विंद्। आतिशायिकस्य तमपः प्रथमद्वितीयाक्षरविपर्ययात् छान्दसत्वात् श्रोतव्यतमैरतिशयेन श्रोतव्यैः शास्त्रैरित्यर्थः। किञ्च ईशे हि हिशब्दो यस्मादर्थे यस्मादीशिषे त्वं वस्वो वसुनो धनस्य उभयस्य। कतमस्य? दिव्यस्य च पार्थिवस्य च। कुत एतत्? 'अध्वर्यवो यो दिव्यस्य वस्वो यः पार्थिवस्य' इत्यादौ दर्शनात्। राजन् दीप्त ईश्वरो वा। यस्मादिति वचनात् तस्मादित्यध्याहार्यम्। तस्माद् धा देहि रत्नं धनं महि महत् सारतरं स्थूरं स्थूलं परिमाणतः। बृहन्तं नेदं रत्नविशेषणं महीत्यनेन पौनरुक्त्यप्रसङ्गात् पुंलिङ्गत्वाच्च। किन्तर्हि? कालप्रतिनिर्देशार्थमेतत् 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। महान्तं कालं यावज्जीवितव्यमित्यर्थः।

क्षोणस्येत्यनवगतम्। क्षयणस्येत्यवगमः। क्षीयतेर्निवासार्थस्य कर्तरि ल्युट्। उदाहरणम्—

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय।
प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तम्॥

कुष्ठत्वात् श्यावाय श्याववर्णाय अत्रिपुत्रस्य घोरस्य ज्येष्ठपुत्राय रुशतीं दीप्तां त्वचम्। तत् हे वृषणा वर्षितारौ। तत् किम्? सामर्थ्यात् कर्म। वां युवयोः सम्बन्धि। कतमत्? यन्नार्षदाय ऋषये बधिराय श्रवः श्रोत्रमध्यधत्तम् अधिशब्दो 'अधिपरी अनर्थकौ' इति कर्मप्रवचनीयः पदपूरणः, दत्तवन्तौ स्थः।

अस्मे इत्येतत् प्रकृत्यर्थाभेदेऽपि प्रत्ययार्थभेदादनेकार्थम्। सर्वविभक्त्यर्थेषु वृत्तेः। यथादेशानां चाकरणस्य नैर्देशस्य च छान्दसत्वादनवगतसंस्कारमपि। अनेकार्थतां सर्वविभक्त्यर्थप्रवृत्तिं तेन प्रदर्शयन् प्रथमायां तावद् वृत्तिमाह—।

[ इत्येकादशस्या-( पञ्चस्या- ) ध्यायस्य
पष्ठः खण्डः। ]

---

१–[पा० ३।२।७५] 'दृश्यन्ते' इति पाठो युक्तः।
२–वित C. 'विच्' इति पाठो युक्तः।
३–'त' इति त्रुटितम् C.
४–दीयस्य B.
५–[ऋ० २।१४।११]
६–दीप्तम् B.
७–महन्.B C.
८–कुलं B. स्कुलं C.
९–थैतमवत् B.
१०–[पा० २।३।५]
* 'क्षियते०' इत्युचितम्।
× 'श्यावाय' इति पाठो युक्तः।
११–[ऋ० १।११७।८] 'युवं श्यावाय' इत्येव प्रतीकम् B. C.
१२–कुशदीप्ता त्वचः B. कुशदीप्तान्त्वचं C.
१३–ततमत् B.
१४–[पा० १।४।९३]
१५–'अनादेशस्य' इति स्पष्टार्थः पाठः।
१६–'प्र' इति नास्ति B.
१७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ सप्तमः खण्डः । ]

अस्मे ते बन्धुरिति । प्रथमान्तेन बन्धुशब्देन सामानाधिकरण्यात् प्रथमां निश्चित्य आह्वयामीत्यर्थः । उदाहरणम्—

> तपसस्तनूरसि प्रजापतेर्वर्णः परमेण पशुना क्रीयसे सहस्रपोषं पुष्यन्ती ।
> अस्मे ते बन्धुः पुपेयम् ॥

सोमक्रयणी याज्या उच्यते । तपोऽग्निस्तापकत्वात् तस्य तपसोऽग्नेस्तनूः शरीरं शरीरभूतोऽसि प्रजापतेर्वर्णोऽसि वरणीया वा स्यात् । अथवा 'सा वा एषा सर्वदेवत्या यदजा' 'प्रजापतिर्वै सर्वा देवताः' इति सर्वदेवतात्मसामान्यादेवमुच्यते प्रजापतेर्वर्ण इति । प्रजापतेश्च वर्णभूता प्रजापतिरूपेत्यर्थः । यां चैवंगुणा सा त्वा सहस्रपोषं पुष्यन्ती एकस्या अजायाः पारम्पर्येण अजासहस्रोत्पत्तिस्तां प्रतिपद्यमानाऽसौ । सोमं क्रीणीहीति शेषः । त्वं सोमं परमेणानेनाजाख्येन पशुना क्रयस्व । अस्मे वयं ते तव बन्धुभूता याज्ञे कर्मणि विनियोक्तृत्वात् । अस्मे ते बन्धुरित्येकत्वनिर्देशादहमित्यर्थः ।

तस्यैवैं पठन्ति द्वितीयायामुदाहरणम्—

> आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः ।
> हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ[12] ॥

कक्षीवत आर्षम् । आ इत्युपसर्गो यातमित्याख्यातेन सम्बन्धयितव्यः । श्येनस्य जवसा जवेन वेगेन नूतनेन नवेन यादृशः प्रथमोऽश्रान्तस्य श्येनस्य वेगस्तादृशेन वेगेनेत्यर्थः । अस्मे अस्मान् प्रति आयातमागच्छतम् । नासत्या नासत्यनामानौ । सजोषा व्यत्ययेनेदमेकवचनम्, सजोषसौ संप्रियमाणावित्यर्थः । कस्मादेवमुच्यते शीघ्रमायातमिति ? उच्यते । हवे हिशब्दो यस्मादर्थे यस्मात् हवे आह्वयामि वां युवां हे अश्विना अश्विनौ । रातहव्यो दत्त-

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—प्रथमं B.
३—[ यजुः ]
४—[ अनुपलब्धमूलमिदम् ]
५—[ तै० ब्रा० ३ । ३ । ७ । ३ ]
६—देवतात्मसा B. सर्वेवा त्वसा C.
७—यथैवंगुणा B.
८—पुष्यति B. C.
९—परमेणोतेन B. इतः परमाग्रपरिमिमनोत्र सर्वोऽपि पाठस्त्रुटितः B. परमन्यत्र B. आदर्शपुस्तक एवायं पाठः समुपलब्धः ।
१०—के त्वस्मे ते C.
११—'तस्यैव' इति नान्यादर्शपुस्तके ।
१२—[ ऋ० १ । ११८ । ११ ] 'आ श्येनस्य' इत्येव प्रतीकम् C.
१३—जवसा श्येन वेगेन C.
१४—अस्मादर्थे C.
१५—हवे C.

हविष्कः सम्मनसा। अथवा रातहव्यः संकल्पितहविष्क उच्यते उपकल्पितहविष्कः सन्नित्यर्थः। शश्वत्तमायाः शश्वत्तितमाया अतिशयेन नित्याया उपसो व्युष्टौ विवासनवेलायाम्।

तृतीयायाम्—

भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः।
भूरीणि हि कृणवामा शविष्ठेन्द्र क्रत्वा मरुतो यद्वशाम ॥

इन्द्रमरुत्संवादे इन्द्रं मरुत आहुः। भूरि बहु वृत्रवधादि कर्म त्वं चकर्थ कृतवान्। तत्तु युज्येभिर्युज्यमानत्वाद् युज्याः सहाया उच्यन्ते, युज्यैः सहायैरस्मेऽस्माभिः समानेभिः समानैस्त्वया वृषभ हे वर्षितः। केन गुणेन समानैः? उच्यते। पौंस्येभिर्बलनामैतत्, बलैः समानबलैरस्माभिरित्यर्थः। भूरीणि हि विनापि त्वया केवला एव बहूनि कर्माणि कृणवाम कृतवन्तः शविष्ठ हे अतिशयेन बलवद् इन्द्र। क्रत्वा कर्मणा न वाङ्मात्रेण वयं मरुतः। आमन्त्रितत्वाभावात् छान्दसमनुदात्तत्वम्। यद् व्यत्ययेनैकवचनं बहुवचनस्य स्थाने यानि वशाम कामितवन्तो यानि नोऽरोचन्तेत्यर्थः।

चतुर्थ्याम्—

अस्मे प्र यन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः।
अस्मे शतं शरदो जीवसे धा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन् ॥

.........भूरेर्बहुनः। षष्ठीश्रुतेरेकदेशमिति शेषः, द्वितीयार्थे वा षष्ठी, धनं विश्ववारं भूरि अस्मेऽस्मभ्यमेव शतं शरदः शतं वर्षाणि जीवसे जीवनाय धा देहि अस्मेऽस्मभ्यमेव च वीरान् पुत्रान् शश्वतो बहुनामेदम्, बहून् हे इन्द्र शिप्रिन् हनु नासिके वा ताभ्यां तद्वन्।

तस्य वयं सुमतौ यज्ञियस्यापि भद्रे सौमनसे स्याम।
स सुत्रामा स्ववाँ इन्द्रो अस्मे आराच्चिद् द्वेषः सनुतर्युयोतु ॥

तस्य वयं सुमतौ शोभनायां मतौ पालनबुद्धौ यज्ञियस्य यज्ञार्हस्य, किम्? स्याम इति यत् परस्तात् क्रियापदम्। न च केवलायां सुमतौ, किन्तर्हि? अपि भद्रे कल्याणे सौमनसे

१–'सम्मनसा' इति वा पाठो भवेत्।
२–[ऋ० १।१६५।७] 'भूरि चतुर्थ' इत्येवं प्रतीकपाठः C.
३–चकरथ C.
४–भूरिणि C.
५–'क्रत्वा' नास्ति। 'कर्मणेन' इत्येव पाठः C.
६–'वशाम' इति नास्ति C.
७–[ऋ० ३।३६।१०]
८–अत्र 'चतुर्थ्याम्' इत्यारभ्य समन्त्रप्रतीकः कश्चन व्याख्याभागस्त्रुटित आदर्शपुस्तके।
* 'तद्वन्' इति युक्तं स्यात्।
९–'य' इति त्रुटितम् C.
१०–[ऋ० ६।४७।१३] 'तस्य वयं सुमतौ' इत्येव प्रतीकम् C.

शोभनं मनः सुमनस्तदेव सौमनसम्। किं पुनस्तत्? दानबुद्धिः, तत्रापि वयमेव स्याम। पालनबुद्धिषु वयं पाल्या दानबुद्धिषु च सम्प्रदानभूता वयमेव स्यामेत्यर्थः। किञ्च सुत्रामा शोभनत्राता स्ववान् धनवान् आत्मवान् वा इन्द्रोऽस्मे अस्मद् अस्मत्त इत्यर्थः। आराच्चिद् आराच्छब्दो दूरवचनः, चिदप्यर्थे दूरे अपिशब्दात् सन्निकृष्टेपि यद् द्वेषो द्वेष्यं वाऽस्माकं रक्ष आदि सनुतरन्तर्हितनामेदम्, अन्तर्हितमेतद् युयोतु पृथक् करोतु अपनयत्वित्यर्थः।

षष्ठ्याम्—

आ नो भर भगमिन्द्र द्युमन्तं नि ते देष्णस्य धीमहि प्ररेके।
ऊर्व इव पप्रथे कामो अस्मे तमा पृण वसुपते वसूनाम्॥

विश्वामित्रस्य। नोऽस्माकम्। आभर आहर अस्मभ्यं देहीत्यर्थः। किम्? भगम् भगशब्दः पुंलिङ्गो धनवचनः, धनं हे इन्द्र। कीदृशं भगम्? द्युमन्तं दीप्तिमन्तम्। नि ते देष्णस्य धीमहि निशब्दो धीमहीत्यनेन सम्बध्यते, तव स्वभूतदेष्णस्य देयस्य भागस्य, षष्ठीश्रुतेरेकदेशमिति शेषः। निधीमहि निखनेमेत्यर्थः। प्ररेके यागदानभोगातिरेके सतीत्यर्थः। कस्मात् पुनरेवं बहु याच्यते? ऊर्व इव ऊर्वो वडवाग्निः स इव पप्रथे विस्तीर्यते धनविषयः कामः। अस्मे अस्माकम्। तमापृण आपूरय हे वसुपते धनस्याधिपते वसूनां धनानाम्।

सप्तम्याम्—'सुगावो देवाः' इति सप्तदशे व्याख्यास्यते।

पाथ इत्यनवगतमनेकार्थं च। तत् पुनरेतद् यथा व्याख्यातम्, 'पन्थाः पथतेर्वा' इत्यादौ। अन्तरिक्षं तावदुच्यते—।

यत्रा चक्रुरमृता गातुमस्मै श्येनो न दीयन्नन्वेति पाथः।
प्रति वां सूर उदिते विधेम नमोभिर्मित्रावरुणोत हव्यैः॥

१–'तत्' इति नास्ति C.
२–'व' इति त्रुटितम् C.
३–पाल्य C.
४–दानमबुद्धिषु C.
५–दानभूतः C.
६–'किम सुत्रमा किम शोभनस्सुनामा' इति पाठ आदर्शपुस्तके।
७–'च' त्रुटितम् C.
८–अहपान C.
९–[ऋ० ३।३०।१९] 'आ नो भर' इत्येव प्रतीकम् C.
१०–भोगादिरे C.
११–'वाडवाग्निः' इति युक्तं स्यात्।
१२–'अस्मे' इति नास्ति C.
१३–[तै० सं० १।४।४४।२॥ अथर्व० ७।५७।४]
१४–[निरु० १२।४१]
१५–[निरु० २।२८] 'पततेर्वा' इति युक्तं स्यात्।
१६–[ऋ० ७।६३।५] 'यत्रा चक्रुः' इत्येवं प्रतीकम् C.

वसिष्ठस्यार्षम्। अस्याश्च प्रथमोऽर्धर्चः सौरः, द्वितीयो मैत्रावरुणः। तेन मिश्रे* एवैते वाक्ये। यत्र यस्मिन् नभसः प्रदेशे चक्रुः कृतवन्तः। अमृता देवा गातुं गम्यते येन मार्गेण गातुं गमनमार्गम्। अस्मै सूर्यायेति निर्देशः। अस्य सूर्यस्येत्यर्थः। तेनैवायं मार्गेणानतिक्रामन् मर्यादां स्येनो न श्येन इव दीयन्नन्वेति दीयतिरिति गतिकर्मा गच्छन् उदयात् प्रभृत्यास्तमयात् अन्वेति अनुगच्छति। पाथोऽन्तरिक्षम्। एवमियं धर्मणा सूर्यस्य स्तुतिः। किञ्च प्रतीत्येयं धात्वर्थानुवादी वां युवां सूर्ये उदिते अहन्यहनीत्यर्थः। विधेर्म विधातिः परिचर्यायां परिचरेमेत्याशास्महे। केन? नमोभिः स्तुतिभिः। मित्रावरुणा हे मित्रावरुणौ न शुष्केन हस्तेन। किं तर्हि? उत हव्यैरपि च हविर्भिश्च पुरोडाशादिभिः।

अनेकार्थतां दर्शयन्नाह उदकमपीत्यादि। पानात् पीयते हि तत्। सोमपीथ इति वा वचनस्य दर्शनात्। उदाहरणम्—

अभि वो देवीं धियं दधिध्वं प्र वो देवत्रा वाचं कृणुध्वम्।
आ चष्ट आसां पाथो नदीनां वरुण उग्रः सहस्रचक्षाः॥

वसिष्ठस्य। अभीत्युपसर्गश्रुतेर्योग्यक्रियापदमध्याहार्यम्। अभिवदामि वो युष्मान् ऋत्विजः। देवीं देवसम्बन्धिनीमित्यर्थः। धियम्। कम्? यागाख्यं दधिध्व धारयत कुरुतेत्यर्थः। प्रोपसर्गश्रुतेः पूर्ववदध्याहारः, प्रब्रवीमि वो युष्मानेव। किम्? देवत्रा देवान् प्रति वाचं स्तुत्याख्यं कृणुध्व कुरुत। कस्मात् पुनरेवमुच्यते यागं स्तुतिं च देवानां कुरुत इति? उच्यते। यस्मात् आचष्टे साध्यरूपमेतत् तदिदं कर्तव्यमित्याचष्ट इव जनेभ्यो दत्त पश्यतीनाम् उदकमासां नदीनां सम्बन्धि। कोऽसौ? वरुणो मध्यमस्थान उत्तमस्थानो वा उग्रोऽप्रसहः सहस्रचक्षा विद्युद्भ्रमी रश्मिभिर्वा बहुदर्शनः।

अन्नमपीत्यादि। पानादेवं पीतेरेवाभ्यवहारार्थस्य।

वनस्पते रशनया नियूया देवानां पाथ उप वक्षि विद्वान्।
स्वदाति देवः कृणवत् हवींषि अवतां द्यावापृथिवी हवं मे॥

सुमित्रस्यार्षम्। वनस्पते रशनया रज्ज्वा नियूय देवानां पाथः पश्वाख्यम्। उपवक्षि समीपं

---

१–वसिष्ठस्यास्यार्षं च प्रथ C. * 'मिश्रे' इति युक्तम्।
२–सूर्यसायेत्यर्थः C. 'सूर्यस्यार्थायेत्यर्थः' इत्युचितम्
३–दीयानीयति ईयतीति गति C.
+ '०स्यास्तमयात्' इत्युचितम् ४–'कर्मणा' इति स्यात्
५ 'स्य' इति त्रुटितम् C. ६·विमेध C.
७–मनोभिः C. ८–बानात C.
९–सोमवीम इति वा वचनस्य C.
१०[ऋ० ७। ३४। ९, १०] 'अभि वो देवीं' इत्येव प्रतीकम् C. ११–वेवी जो वे वी C.
१२–'प्र' इति नास्ति C. १३–अन्नमपत्यादि C.
‡ '०स्याख्यम्' इत्युचितम्।
१४–वानारेव पीतेरवाभ्य C.
१५–[ऋ० १०।७०।१०] 'वनस्पते' इत्येव प्रतीकम् C.
१६–रहुना रज्ञा C. 'रज्ज्वा' इत्युचितम्।

वह प्रापय विद्वान् जानन् स्वमधिकारं भक्तारं वास्माकम् । कस्मादेवमुच्यते वक्षीति ? यस्मात् स्वदीति आस्वादयति सर्वो देवः । कृण्वन् कुतवांश्च हवींषि यजमानः । किं च अवताम् अवतिर्गतिकर्मा गच्छतां द्यावापृथिवी द्यावापृथिव्यौ हवमाह्वानं मे मम स्वमूतम् ।

सर्वीमनीत्यनवगतम् । प्रसव इत्यवगमो वर्णव्यापत्तिना । उदाहरणम्—

देवस्य वयं सवितुः सर्वीमनि श्रेष्ठे स्याम वसुनश्च दावने ।
यो विश्वस्य द्विपदो यश्चतुष्पदो निवेशने प्रसवे चासि भूमनः ॥

भरद्वाजस्य । देवस्य दानादिगुणस्य वयं सवितुः सर्वीमनि प्रसवेऽभ्यनुज्ञाने श्रेष्ठेऽत्यन्तप्रशस्ये स्याम भवेम वसुनश्च धनस्य च दावने दाने ? त्वं देव सवितः सर्वकर्मसु नित्यमभ्यनुजानीया धनं च दद्या इत्याशास्महे । कीदृशः ? उच्यते । यस्त्वं विश्वस्य सर्वस्य द्विपदो मनुष्यादेश्चतुष्पदो गवादेर्निवेशने स्वावौय व्यवस्थापने प्रसवे चाभ्यनुज्ञाय च सर्वकर्म असि अस्तिर्भवतिना समानार्थः शुद्धोऽपि चात्र पूर्वार्थे द्रष्टव्यः । भूमनो भूम्नोऽत्यन्तबहुनः ।

सप्रथा इत्यनवगतम् । सर्वतः पृथुरित्यस्यार्थे द्रष्टव्यः । उदाहरणम्—

त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।
त्वया यज्ञं वि तन्वते ॥

सुतम्भरस्यार्षम् । हे अग्ने सप्रथाः सर्वतः पृथुरसि प्रियश्च होता वरेण्यो वरणीयः । त्वया च हेतुना तव प्रसादेनेत्यर्थः । यज्ञं सर्वयष्टारो वितन्वते मनुष्या वितन्वते कुर्वन्तीत्यर्थः ।

विदथानीत्यनवगतम् । वेदनानि विज्ञानानीत्यवगमः । उदाहरणम्—

होता देवो अमर्त्यः पुरस्तादेति मायया ।
विदथानि प्रचोदयन् ॥

विश्वामित्रस्य । अग्नीषोमीयप्रणयनेऽग्निरुच्यते । होता देवो अमर्त्योऽमरणधर्माऽग्निः पुरस्तात् सोमस्य प्रणीयमानस्य एति गच्छति मायया प्रज्ञया विदथानि विज्ञानानि स्वकर्म-

---

१—स्वदति C. २—'मे' इति नास्ति C.
३—वार्णव्याप C. 'वर्णव्यापत्त्या' इति 'वर्णव्यापत्यादिना' इति वा युक्तं स्यात् ।
४—[ ऋ० ६ । ७१ । २ ] 'देवस्य वयं' इत्येव प्रतीकम् C.
५—'देवस्य' इति नास्ति C.
६—'दा' इति त्रुटितम् C.
७—अत्र 'स्वाया' इति पाठः स्यात् ।
८—नाभ्यनु C. ९—स्वसि C.
१०—पूर्वार्थो द्रष्टव्यम C.
११—स्यार्थे द्रष्टव्यः C. 'द्रष्टव्यम्' इति युक्तं स्यात् ।
१२—[ ऋ० ५ । १३ । ४ ] 'त्वमग्ने (ने C.) सप्रथाः' इत्येव प्रतीकम् C.
१३—स प्रथाम C.
१४—'थे:' इति त्रुटितम् C.
१५—वेद जानाति C. १६—त्यनवगमः C.
१७—[ ऋ० ३ । २७ । ७ ] 'होता देवः' इत्येव प्रतीकम् C.

विशेषणानि ऋत्विजा प्रचोदयन् इदमिदानीं कर्तव्यमिति प्रेरयन्निव ।

. श्रायन्त इत्यनवगतम् । श्रयतेः शतृप्रत्यये गुणायादेशयोः कृतयोरुपधाया अकारस्य दीर्घत्वं द्रष्टव्यम् । समाश्रयन्त इत्यवगमः । समाश्रिता येति प्रातिविकल्पः । उदाहरणम्—।

[ इत्येकादशस्या- ( षष्ठस्या- ) ध्यायस्य
सप्तमः खण्डः । ]

---

१–श्रयते शतृप्रत्ययो C.

२–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथाष्टमः खण्डः । ]

आयन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जाते जनमान ओजसा प्रति भागं न दीधिम ॥

नृमेधो नामाङ्गिरसस्तस्यार्षम् । आयन्त समाश्रयन्त समाश्रिता वा सन्तः । के ? सामर्थ्याद् रश्मयः । इव सम्प्रत्यर्थे तं सूर्यम् । अथवा सूर्यमिव रश्मय इन्द्रं मरुतं समाश्रयन्त समाश्रिता वोपतिष्ठन्त इति शेषः । विश्वा विश्वानि सर्वाणि इत पदपूरणः, इन्द्रस्य स्वभूतानि विभक्ष्यमाणा इति शेषः । कुत एतत् ? परस्ताद् विभागस्य करणवचनात् । ये विभक्तुमिच्छन्तो वोपतिष्ठन्त इत्यर्थः । उपस्थाय च भक्षत विभजन्ते । किम् ? वसूनि धनानि उदकलक्षणानि । कस्मै ? जाते जनिष्यमाणे च जायमानाय च प्राणिजाताय । ओजसा बलेन सामर्थ्याख्येन च । यानि च ते विभजन्ते तानि तदायत्तत्वात् तेषामिन्द्र एव विभजतीत्याह । स यथा तानि धनानि विभजति तथा यस्तत्रास्माकमाभजति तं वयं भागं नशब्द उपमार्थत्वात् सम्प्रत्यर्थे प्रतीत्येष नु इत्येतस्य स्थाने सुदीधिम तं वयमनुध्यायाम इति ।

ओजश्शब्दं निगमप्रसक्तं निराह । ओजतेर्वा नैरुक्तस्य धातोः सामर्थ्यकर्मणो वा उब्जतेर्वा न्यग्भावार्थस्य ओजो हि सामर्थ्यं वृद्धिर्वा तेजसा न्यग्भावयति विश्वम् ।

आशीरित्यनवगतमनेकार्थं च । यजमानस्य व्रतधुङ् 'नाशिरं दुहे न तपन्ति' इति दर्शनात् । आश्रयणात् सोमेनाश्रयणाद्वा होमार्थस्य । आङ् च द्योतकलक्षणः, ईषच्छ्रवणात् । ईदृशा प्रार्थनारूपा आशिषमाशास्त इति सकारान्ताद् आशासेर्धातोरिच्छार्थस्य क्विप्येव । उदाहरणम्—

इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु ।
यत्सीमुपह्वरे विदत् ॥

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ऋ० ८।९।१] 'आयन्त इव' इत्येव प्रतीकम् B. C.
३—'समाश्रयन्त' इति नास्ति B.
४—महतः समाश्रयन्तः C. 'आयन्तः समाश्रयन्तः' इत्युचितम् ।
५—'परस्तात्' इति द्विर्लिखितम् C.
६—विभजन्ते C.
७—भागेव C. 'भागाय' इति युक्तं स्यात् ।
८—विभजन्तीत्याह B. C.
९—'दी' इति त्रुटितम् B. C.
१०—उब्जलेर्वा B, उब्जतेर्वा C.
११—उब्जतेर्वा B.
१२—वृद्धिर्वा B.
१३—आशिरमित्यन B. C.
१४—[ऋ० ३।५३।१४]
१५—श्रयणाद्वा B. C.
१६—लक्षणम् B.
१७—इदं B.
१८—स्याशिष्येव B.
१९—[ऋ० ८।६९।६] 'इन्द्राय गावः' इत्येव प्रतीकम् B. C.

प्रियमेधस आर्षम् । इन्द्राय वज्रिणे तादर्थ्ये एषा चतुर्थी, इन्द्रस्य वज्रिणोऽर्थाय गाव. आशिरम् आशीः सोमस्य श्रयणं दधि कार्येण सम्बन्धात् कारणं व्यपदिश्यते । आशिरो दध्नः कारणभूतं दुदुहे दुह्यते मधु स्वादु पय इत्यर्थः । यत्सीम् सर्वत उपह्वरे गह्वरे ऊधसः प्रदेशे दोग्धा विदद् विन्दति लभते ।

इतरोदाहरणम्—

सा मे सत्याशीर्देवान् गम्यात् ।
शृण्वन्तु ते समर्धयन्तु ।
जुष्टाज्जुष्टतरा पण्यात्पण्यतरा ।
अहेडता मनसानुगच्छ यज्ञो देवान् गच्छतु ॥

सा देवैर्ज्ञायतामित्यर्थः । जुष्टाद् यत् किञ्चित् जुष्टं प्रियं तस्माज्जुष्टतरा प्रियतरा । पण्यात् पण्यतरा यत् किञ्चित् पण्यं सुवर्णमणिमुक्तादि ततोऽपि पण्यतरा प्रियत्वाद् अत्यन्तग्राह्येत्यर्थः । त्वमपि प्रस्तर अहेडता हेडतिः क्रुध्यतिकर्मा अक्रुध्यता मनसा देवान् प्रति याहि । यज्ञोऽपि चायं देवान् सर्वदेव चायमस्मदीयो यज्ञो देवान् प्रति गम्यादित्याशास्ते ऽङ्गः । तच्च सूक्तवाकफलं मा मां गच्छतु सम्भवत्वित्यर्थः ।

अजीगरित्यनवगतं धात्वर्थसंस्कारश्च । कथम् ? जिगर्तिर्नरुक्तो धातुर्निगरणार्थो गृह्णात्यर्थो वा । उदाहरणम्—

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः ।
यदा ते मर्तो अनु भोगमानळादिद् ग्रसिष्ठ ओषधीरजीगः ॥

दीर्घतमस आर्षम् । अश्व उच्यते । अत्र स्थितोऽत्र वा काले ते तव रूपमुत्तममत्यन्तोत्कृष्टम् अपश्यं दृष्टवानहम् । जिगीषमाणं जेतुमिच्छन्तं सर्वम् । इषोऽन्नस्य हविराख्यस्य सम्बधिनि पदे स्थाने वेद्याख्ये गोः पृथिव्या अवयव इति शेषः । किञ्च यदा ते तव मर्तो मनुष्यः । अनु इत्येतद् आनडित्येतेन सम्बध्यते भोगं वा हतलक्षणमानट् अनुसंव्याप्नोति त्वं वाहयतीत्यर्थः । यदेति श्रुतेस्तदेत्यध्याहार्यम् । आदित् अथ तदा इत् पदपूरणः, श्रान्तः सन्

१–श्रयण B. C. २–दुदुहे B. C.
३–'मधु' इति द्विलिखितम् B. C. ४–विधत् C.
५–तत उदाह B. तर उदाह C.
६–[मैत्रा० सं० १।४।५॥ मान० श्रौ० १।४।१।१७]
७–तस्मादजुष्टतरां B. C.
८–अरेता रेडतिः B. अरेडता रेडतिः C.
९–गम्यातीला B.
१०–अत्र 'अहम्' इति युक्तं स्यात् ।
११–[ऋ० १।१६३।७] 'अत्रा ते' इत्येव प्रतीकम् B. C.
१२–वेद्याख्या C. १३–'न' इति त्रुटितम् B. C.
१४–त्वं वा इयती B. त्वं वाहयती C.
१५–आन (B.) आथ तदा B. C.

ग्रसिष्ठस्त्वमतिशयेन ग्रसिता भक्षयिता ओषधीरजीगः अवगिरसि अभ्यवहरसि गृह्णासि भक्षयसीत्यर्थः ।

अमूर इत्यनवगतम् । मुहेर्वर्णव्यापत्त्या अमूढ इत्यवगमः । उदाहरणम्—

मूरा अमूर न वयं चिकित्वो महित्वमग्ने त्वमङ्ग वित्से ।
शये वव्रिश्चरति जिह्वयादन् रेरिह्यते युवतिं विश्पतिः सन् ॥

त्रितस्यार्षम् । मूरा मूढाः । हे अमूर अमूढ न वयम् । किम् ? न वयमिति साकाङ्क्षत्वाद् अत्र वित्से इति अर्धर्चान्तस्थो विदिरनुषक्तव्यः, न वयं विद्मः । चिकित्वः हे चेतनवन् । किं न विद्मः ? महित्वं माहात्म्यं तव हे अग्ने । त्वमङ्गेति निपात एवार्थे, त्वमेव वित्से । किञ्च शय इति स्थानार्थः, आमाशयो जलाशय इति यथा स्थाने सामर्थ्यात् । वव्रिः रूपनामेदं सामर्थ्याच्चात्र अन्तर्नीतमत्वर्थो द्रष्टव्यः, आहवनीयाख्येन रूपेण रूपवान् भवान् । चरति जिह्वया ज्वालाख्यया अदन् हवींषि भक्षयन् । किञ्च रेरिह्यते 'लिहँ आस्वादने' अत्यर्थं लेढि आस्वादयति दीर्घप्रसृतया ज्वालया युवतिमात्मना मिश्रयन्तीमाहुतीमित्यर्थः । विश्पतिर्विशां मनुष्याणामधिपतिः सन् ।

शशमानं इत्यनवगतम् । 'शंस स्तुतौ' इत्यस्य शंसन् इत्यवगमः । ततश्च शंसमान इत्यपपाठः । उदाहरणम्—

यो वां यज्ञैः शशमानो ह दाशति कविर्होता यजति मन्मसाधनः ।
उपाह तं गच्छथो वीथो अध्वरमच्छा गिरः सुमतिं गन्तमस्मयू ॥

दीर्घतमसः । यो[12] वां युष्मदः सम्प्रदाने[13] चतुर्थी भवति द्विवचनमेतत्, युवाभ्यां मित्रावरुणाभ्याम् यज्ञैः सप्तम्यर्थे एषा तृतीया, यज्ञेषु शशमानः शंसन् स्तुवन् दाशति ददाति । किम् ? सामर्थ्यात् हवींषि । कविर्मेधावी होता आह्वाता देवानां यजति यागं च करोति । मन्मसाधनः मननमनुष्ठेयपदार्थविषयज्ञानं तत्साधनभूतं यस्यास्ति स मन्मसाधनोऽधिकृत इत्यर्थः । तस्य किम् ? उच्यते । उपेत्येतद् गच्छथ इत्येतेन सम्बध्यते, अहशब्द एवार्थे

१–[ऋ० १०।४।४] 'मूरा अमूर' इत्येव प्रतीकम् B. C.
२–पित्वि B. वित्वि C.
३–अन्तर्णीतमत्वर्थं द्रष्टव्यम् C.
४–'न्' इति त्रुटितम् B.
५–[धा० २।६] रिह आस्वा B.
६–'त्य' इति त्रुटितम् C. ७–प्रास्ततया C.
८–मिश्रयित्री B. 'मिश्रयन्ती०' इत्युचितम् ।
९–आहति B. आहुती C.
१०–[धा० १।७२९] शं स्तुतौ C.
११–[ऋ० १।१५१।७] 'यो वां यज्ञैः ( ज्ञो C. )' इत्येव प्रतीकम् B. C.
१२–युवां B.
१३–दानचतु B. C.
१४–'तु ह' इति त्रुटितम् B. अग्रे 'विवि' इत्येवं पाठः B.

पदपूरणो वा तमेवोपगच्छथ नान्यम् । उपगम्य च वीर्यं भक्षयथस्तस्यैव नान्यस्य । अध्वरम् अध्वरशब्देनात्र सम्बन्धात् हविरुच्यते, अध्वरेसम्बन्धि हविरित्यर्थः । यत एवमतोऽहमपि तथाभूत एवेति ब्रवीमि । अच्छ प्रसमाप्तुं गिरो मदीयां स्तुतिं शोभनां प्रशां वा प्रति गन्तं गच्छन्तं हे मित्रावरुणौ अस्मेयू अस्मत्कामौ मामनुग्रहीतुमित्यर्थः ।

देवो देवाच्या कृपा इत्येते अनवगते । देवशब्दस्योपादानमनयोरेव सम्प्रतिपत्त्यर्थम् । ततो भूते क्तो द्रष्टव्यः । देवायुनयेत्यवगमः । स्पष्टतरमाह देवानक्तया चेति 'अञ्चोऽनपादाने' इति निष्ठानत्वम् । कृप् कृपतेरिति अकृतलत्वस्य ग्रहणम् । कल्पनेर्वा तैस्यच्छान्दसत्वात् कर्मणि क्तो विकल्प्यते । सापीति कवेरभिधानतयापेक्षितव्यमित्यवगमः । उदाहरणम्—

अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा घृतस्य विभ्राष्टिमनु वष्टि शोचिषा जुह्वानस्य सर्पिषः ॥[18]

परुच्छेपस्यार्षम् । अग्निं होतारं मन्ये मन्यतिरर्चतिकर्मा, अर्चामि स्तौमीत्यर्थः । कीदृशम् ? दास्वन्तं वसुं वसुमिव प्रशस्यं धनवन्तं वा । सूनुं पुत्रं सहसो जातवेदसं जातधनं विप्रं न मेधाविनमिव । कम् ? सामर्थ्यात् कंचिद् ब्राह्मणं जातवेदसं जातविद्यम् । य ऊर्ध्वया अनावृत्तया वैश्वानर्या धिया अभिनिरूपयेत्यर्थः । स्वध्वरो दैव्यहोतृत्वे वर्तमानत्वादनुष्ठेयतया शोभनोऽध्वरो यस्य सुयज्ञो देवो दानादिगुणः । देवाच्या उत्कृष्टत्वाद्देवान् प्रति अञ्चितया सुगत्या । कृपा वा स्तुत्या तृतीयाश्रुतेः स्तूयमान इति शेषः । किं करोति ?

---

१–'वा' इति नास्ति B. C.
२–वोपागच्छ P.
३–उपगान्यम् B. C. ४-पीथः B.
५–'अध्वर' इति नास्ति B. C.
६–तथाहूत C. ७–अयं पाठः सन्दिग्धः ।
८–शोभनप्रशा वो C.
९–अस्म आ B. C १०–स्यापादान B. C.
११–देवामुनयेत्यवगमः C. अयं पाठः सन्दिग्धः । अत्र कदाचित् 'देवान् प्रत्यक्तया' इति स्यात् ।
१२–नक्ता चेति B. नक्तयेति C.
१३–[ पा० ८ । २ । ४८ ]
१४- रूप रूपतेरिति B. C.
१५–कल्पते मत्वस्य B.
१६–'वि' इति द्विर्लिखितम् C.
१७–सापिति कवेरभिधानतया क्वितव्य C.
१८–[ ऋ० १।१२७।१ ] 'अग्निं होतारम्' इत्येव प्रतीकम् B. C.
१९–परिच्छेप C.
२०–सहसं B
२१–'प्र' इति त्रुटितम् B. C.
२२–किञ्चित् C.
२३–जातविद्या C.
२४–दिना C.
२५–होतृत्वेन वर्त B.
२६–देव्या B. देच्या C.
२७–'तया' इति त्रुटिम् B. C.
२८–स्युगत्या C.
२९–कस्य वा B. कया वा C.

उच्यते । घृतस्य आहुत्यर्थस्य विभ्राटि विभ्रंशमनुचष्टि 'वश कान्तौ' विधिक्रमेण कामयते । शोचिषा ज्वालालक्षणेन जिह्वासमूहेन लेलिह्यमानमित्यर्थः । आहुतानस्य यथाविधिमन्वाहूयमानस्य सर्पिष आज्यविशेषणमेतत्, सर्पणस्वभावस्य विलीनस्याधिश्रयणेन संस्कृतस्येत्यर्थः ।

विजामातेत्यनवगतम् । कोऽस्यानवगमः ? उपसर्गस्यासमासार्थता । जाशब्दोऽपि जायते जन्यते वा तत्रातदित्यवपत्यर्थे ·········त्यनवगमः । समासगुणपरोऽभिधेयः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
अष्टमः खण्डः । ]

---

१—[ भा० २।७० ]
२—अह्वयानस्य B. C.
३—अनुपसर्गा B. C.
४—'ता' इति त्रुटितम् D.
५—'जन्यते' इति नास्ति C.
६—अयं पाठः सन्दिग्धः । तत्रातदित्यवपत्यार्थे C.
७—त्यनवगतः B.
८—गुणपरो C.
९—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ नवमः खण्डः । ][1]

अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् ।
अथा सोमस्य प्रयती युवभ्यामिन्द्राग्नी स्तोमं जनयामि नव्यम् ॥[2]

कुत्सस्यार्षम् । हिशब्दो यस्मादर्थे यस्मादश्रौषमश्रवं श्रुतवानहम् । किम् ? उच्यते । भूरिदावत्तरा बहुनो[3] धनस्य दातृतरौ वां युवाम् । कुतो बहु दातृ[4]तरौ ? विजामातुर्धनादन्ये कुलीनत्वादयो विगता जामातृगुणा यस्मात् सोऽसमाप्तगुणोऽपि जामाता क्रीतापति-रुच्यते । स हि निर्गुणत्वाद् धनेनोपप्रलम्भयति शतेन बहु ददाति ततोऽपि युवां बहु दातृतरौ । न विजामातुरेव केवलात् । किं तर्हि ? उत वा घा स्यालात् वाशब्दश्चार्थे घः पदपूरणः, अपि च स्यालात् । स्यालो हि भगिनीप्रियचिकीर्षया भगिनीभर्तुरतिबहु ददाति । ततोऽपि युवां बहुदातृतरौ । अथ एतस्मात् कारणात् सोमस्य प्रयतिर्दानार्थः, ततो भावे क्तिनि तृतीयैकवचनस्य पूर्वसवर्ण एतद्रूपम् । सहार्थे च तृतीयाप्रत्ययः । प्रदानेन सहेत्यर्थः । युवाभ्यां तादर्थ्ये एषा चतुर्थी, युष्मदर्थं हे इन्द्राग्नी स्तोमं जनयामि । कीदृशम् ? नव्यं स्वार्थे तद्धितः, नवमन्यैरेवं कृतमित्यर्थः ।

शस्वमिलम् । दाक्षिणाजा दक्षिणस्यां दिशि देशे अजायन्त इत्याङ्पूर्वस्यं जनेर्डः प्रत्ययः, दक्षि[*]णजा एव दक्षिणाजाः प्रज्ञादेराकृतिगणत्वात् स्वार्थिकोऽण्प्रत्ययो द्रष्टव्यः । क्रीतांपतिमाचक्षते । एवं प्रसिद्धोह्यभिधानधर्मो दक्षिणापथे क्वचिद्देशे । इव सम्प्रश्नेऽर्थे, सुष्ठु समाप्तगुणत्वात् सुसमाप्तो निर्माता तनयं यत् पितुरपि त्वं तदसौ अन्नपानभोगादिना निर्मिमीते एवंशीलः संभोगेन हि सम्पूर्णो भवति । अतोऽसौ पितुः कन्यापितुर्जामाता भवति । स्याल आसन्नः सहयोगेन सम्बन्धो नान्येभ्यः पि·········सदेः स्याल इति । निदानं नाम ग्रन्थस्तद्विदो नैदाना मन्यन्त इति शेषः । तथाहि तस्मिन् सर्वा विश्वंसः स्यालाद्वा

१–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।
२–[ ऋ० १।१०९।२ ] 'अश्रवं हि' इत्येव प्रतीकम् B. C.
३–बहुना B. C.
४–'त' इति त्रुटितम् B.
५–न विजा B. ग विजा C.
६–सोममात B. C.
७–यावे क्तिनि B, भवे क्तिनि C.
८-प्रयमनेन B. C. ९–स्तोमान् B.
१०–'स्य' इति त्रुटितम् B. C.
११–[ पा० ३।२।९७ ]
*'दक्षिणाजा एव दाक्षिणाजाः' इत्युचितम् ।
१२–[ पा० ५।४।३८ ]
१३–कितापति B. C. १४–सं प्रतक्षे B. C.
१५–'पि' इत्यपि त्रुटितम् B.
१६–तद्विदा B. तद्विदो C.
१७–अयं पाठः सन्दिग्धः । स्यालद्वा C.

शूर्पाद्वा विवाहकाले लाजानावपतीति गृह्यमौणस्मरणाद्* वाक्यार्थे पर्दं[1] पदवचनाद् द्रष्टव्यम् । एवमेतौ निगमप्रसक्तौ जामातृस्यालशब्दावुक्तौ[2] । तत्प्रसङ्गादाह लाजतेर्लाजाः । शोभन्ते हि ये नीलशमीपलाशमिश्रा[3] विशेषेण तस्यां वेलायाम् । शूर्पः स्यतेर्धातोः, तेन ह्यन्नस्य कर्णतुपविप्रमोकादिना[4] तण्डुलसमिदादिरन्नं[5] क्रियते तन्निर्वर्त्यते इत्यर्थः । पूयतेर्वा[6] पूयते तेन कणतुषादिशूर्पमशनस्य प्रत्यासन्नतण्डुलसमिदादेः पवनं शोधनम्[7] । शृणातेर्वा हिंस्यन्ते मक्षिकादयः क्षुद्रप्राणिनः ।

ओमास इत्यनवगतम् । तत्पुनः प्रसङ्गेन सप्तर्दशे व्याख्यायते 'ओमासश्चर्षणीधृतः'[8] इति ।

[ इति निरुक्तविवरणसमुच्चये
एकादशस्याध्यायस्य[9]
द्वितीयः पादः । ]

---

* 'गृह्यस्मरणाद्' इति पाठो युक्तः स्यात् ।

१–वाक्यार्थपदं C.

२–जायात्र स्याल B. जामात्र स्याल C.

३–'मिश्रा' इति त्रुटितम् B.

४–करण तुप B. C.  ५–समिधादे C.

६–' अयतेर्वा येन कणतुषादि शूर्पशमनस्य ' इत्यादर्शपुस्तकपाठः ।

७–शोधं B. C.

८–[ निरु० १२।४० ]

९–'अध्यायस्य' इति नास्ति C.

# [ अथ (पष्ठस्याध्यायस्य) तृतीयः पादः । ]

सोमानमित्यनवगतम्। 'षुञ् अभिषवे' इत्यस्य मनिन्प्रत्यय एतद्रूपं सोमानम्। सोतारमित्यवगमः। उदाहरणम्—

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते ।
कक्षीवन्तं य औशिजः ॥

मेधातिथेः। सोमानं सोतारम्। कस्य ? सामर्थ्यात् सोमानाम्। स्वरणं 'स्वृ शब्दोपतापयोः' शब्दयितारमुच्चारयितारं च। कस्य ? सामर्थ्यात् स्तुतीनां यष्टारं स्तोतारं चेत्यर्थः। कृणुहि कुरु मां बहुधनप्रदानेन। बहु धनं देहि येनाहं यष्टा स्तोता च स्यामित्यभिप्रायः। अथवा सर्वत्र यः शब्दयते स स्वर्यत इति स्वरणः ल्युट् कर्मसाधनः प्रकाश्यत इत्यर्थः। कतमोऽसौ कक्षीवान् ? उच्यते। य औशिजः पौत्रः। अथवा काक्षीवन्तमिति न ऋषिनाम नं चोपमानम्। किं तर्हि ? आत्मनो विशेषणम्। उशिक्शब्दोऽपि मेधाविनाम। योऽहं कर्मलक्षणेन मनुष्यावयवभूतेन तेन तद्वान् औशिजः। उशिजश्च मेधाविनः कण्वस्य पुत्रो मेधातिथिर्नाम। यच्छ्रुतेस्तदध्याहारः। तं मां सोमानं स्वरणं च कुर्विति सम्बन्धः। अथवा हस्त्यश्वेश्च कक्ष्यादिस्तद्वान् ईश्वर इत्यर्थः। उशिज उशिग्वष्टेः कान्तो ह्यसौ।

अनवायं किमीदिने इत्यनवगते। पूर्वस्यानवयवत्वमव्ययमिति वावगमः। परस्य किमिदानीं कस्ये किं छिद्रमिति चरति किमिदं वर्तत इति वा चरति यः स उच्यते। साधुजनवैरी सदा विद्धबुद्धिः पिशुनोऽभिधेयः। उदाहरणम्—।

[ इत्येकादशस्या-( पष्ठस्या- ) ध्यायस्य
दशमः खण्डः। ]

---

१-अयं कोष्ठकान्तर्गतः पाठो नास्ति B. अयं सर्वोप्यध्यायपादारम्भात्मकः पाठो नास्ति C.
२-[ धा० ५।१ ] पुङ् भिषवे C.
३-[ ऋ० १।१८।१ ] 'सोमानं स्वरणम्' इत्येव प्रतीकम् B. C.
४-सोमतिथेः C.
५-सोमानम् B, सोमाना C.
६-[ धा० १।९५७ ] स्व ड्ढ शब्दोप C.
७-तस्य C. ८-शब्दकृते C.
९-कक्षयन्तमिति .
१०-नाकोपमानम् C.
११-'तेन' इति नास्ति B. १२-औशिजश्च B.
१३-'मां' इति त्रुटितम् B.
१४-कुरुति B. कुर्मिति C.
१५-'श्व' इति त्रुटितम् C.
१६-किमु दीने B, किमिति ने C.
१७-मव्यये वयमिति C.
१८-'कस्य' इति त्रुटितम्
१९-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ एकादशः खण्डः । ][1]

इन्द्रासोमा समघशंसमभ्य१घं तपुर्ययस्तु चरुरग्निवाँ इव ।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे द्वेषो धत्तमनवायं किमीदिने ॥[2]

वसिष्ठस्य । हे इन्द्रासोमौ अघशंसं पापं परेभ्यः शंसतीत्यघशंसस्तं[3] पापस्यास्माकं[4] शंसितारम् । अभ्युपसर्गस्तच्छ्रुतेश्च योग्यक्रियापदाध्याहारः कार्यः । तेन अभिसन्तापयतमिति शेषः । अघम् अन्तर्नीतमत्वर्थमेतत्, अघवन्तम् अघात्मकं वाघं केवलं पापकमित्यर्थः । स च तपुः तपेः कर्मण्युप्रत्यये अभिसन्तप्यमान इत्यर्थः । ययस्तु 'यसु प्रयत्ने' आयस्यतु क्षीयतामित्यर्थः । तप उच्यते । चरुरग्निवान् अग्निसंयुक्त इत्यर्थः । क्षीणाय ब्रह्मद्विषे तस्मै ब्राह्मणद्विषे क्रव्यादे क्रव्यं मांसं तदत्तीति क्रव्यात् तस्मै पृष्ठमांसादिने परोक्षाक्रोशक इत्यर्थः । लोकेऽपि यः परोक्ष आक्रोशति स उच्यते पृष्ठमांसानि खादतीति । घोरचक्षसे चक्षिर्दर्शने[12] घोरदर्शनाय । द्वेषः सर्वलोकस्य द्वेष्यवन्धैस्तं धत्तम । कीदृशम् ? अनवायम् अनवयवं सकलमित्यर्थः । अव्यवेयं[15] वा अनवगमनीयं वा । अनवगमनीयं यद् द्वेषः सन्तः सुहृदो नेतुं न शक्नुयुरित्यर्थः । किमीदिने पिशुनाय ।

अघं हन्तेः पूर्वस्याङो ह्रस्वत्वेन । आभिमुख्येन हन्ति श्रेयसो विनाशयतीत्यर्थः । चरुशब्दो मृन्मयेऽश्मं स्थाल्यामधिकरणे आधेये चरावपीति द्रोणादिशब्दवद् उभयत्र प्रसिद्धोऽविशेषात् । मुख्यं चरतेरर्थसमवायं दर्शयति समुच्चरन्त्यस्मात तस्मादौ इति । विकृत्तात् प्रदेशादायत इति विकृन्ततः क्रव्यमिति नैरुक्ताः । लोकस्तु समुदायप्रसिद्ध्या संस्मरन्

---

१–आदर्शपुस्तके खण्डस्य रारम्भस्य च निर्देशो न दृश्यते ।

२–[ ऋ० १७।१०४।२ ] 'इन्द्रासोमा सम्' इत्येव प्रतीकम् B. C.

३–शंसं तत् B. शंसः सतत् C.

४ पापस्यान्मा कं B.

५–'घं' इति त्रुटितम् C.

६–अघवन्तः B.

७–'क' इति नास्ति B.

८–'यस्तु' इति त्रुटितम् C.

९–[ पा० २।१०४ ] यसु प्रयत्ने B.

१०–ब्रह्मविदुषे B.C. * '०क्रोशकाय' इति पुनन्द ।

११–मांसनिपातीति .B

१२–'चक्षिङ् व्यक्तायां वाचि । अयं दर्शनेऽपि' [ धा० २।७ ]

१३–द्वेष्यवन्तान्तं C.

१४–दत्तम् B. C.

१५–अव्यवे यं C.

१६–पावनगमनीयं B.

१७–न तत्सुहृदो C.

१८–अघं हतं तरं ( रां C. ) प्रसंस्यां (स्यन् C.) दोह ( ह C. ) स्तरे ( त्व C. ) न B. C.

१९–मृण्मयो C.

२०–चारोरण्य ( न्य C. ) तीति B. C.

२१–तनामान्त इतीति B. तनादान्त इति C.

क्राव्यादमाचष्टे । अनवायमव्यवेयमिति व्याख्यातम । विशातेर्हिसार्थस्येति केचित् । स हि हिनस्ति अनर्थेन योजयति ।

अमवानित्यनवगतमनेकार्थं च । अमात्यं इति वा अभ्यमनमिति वा आत्मवानिति वावगमः । उदाहरणम्—।

[ इत्येकादशस्या-( पष्ठस्या- ) ध्यायस्य
एकादशः खण्डः । ]

---

१–अमवानव्यवे B.
२–त्यवगत B. त्यवशत C.
३–अमात्यमिति वा B.
४–'भ्यम' इति नास्ति B. C
५–आत्मवानित्येव B. वानित्येवगमः C.
६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ द्वादशः खण्डः । ][1]

कृणुष्व पाजः प्रसितिं न पृथ्वीं याहि राजेवामवाँ इभेन ।
तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विध्य रक्षसस्तपिष्ठैः ॥[2]

वामदेवस्य । अग्निरुच्यते । कृणुष्व कुरु पाजो बलं ज्वालासमात्मकम् । प्रसितिं न प्रसितिमिव[3] प्रसितिश्च वागुरा[4] जालं वा तद्वत् । पृथिवीं विस्तीर्णां कृत्वा याहि रक्षांसि प्रतीति[6] शेषः । क इव ? उच्यते । राजेव[7] यथा राजा अमवान् सर्वसहायः[8] । अथवा ह्यमनं रोग उच्यते, कर्तव्यैः शत्रूणां रोगैस्तद्वत्[*] । दस्यूनां रोगभूत इत्यर्थः । आत्मवान्वायंस्तवा[9]-नित्यर्थः । इभेन इरा अन्नं तद्भूतेन सुपुष्टेन गणेन[10] बलसमूहेन गतभयेन[12] वा शूरेण[13] हस्तिना शत्रून् प्रति विश्वस्तो यायात् । एवं तृष्वीमनुप्रसितिमित्युभयत्र व्यत्ययेन द्वितीयैकवचनेन[14] तृतीयैकवचनस्य स्थाने । तृष्वीति[15] क्षिप्रनाम तृष्व्या[16] क्षिप्रया । कया ? सामर्थ्याद् गत्या । कीदृश्या ? अनुप्रसित्या[17] अनुबन्धया सन्ततयेत्यर्थः । गत्या च द्रूणानो द्रूणातीति वधकर्मा घ्नन् । तत्रैकवाक्यतायै सुखप्रतिपत्त्यर्थं यस्मात्तस्मादित्यध्याहार्यम्[18] । यस्मादस्तासि त्वमयं साधुकारिणि साधु क्षेप्तासि इषूनिति शेषः । तस्मात् तैर्विध्य ताडय रक्षसस्तपिष्ठैस्तापयितृतमैरतिशयेन तापकैर्दीप्ततमैर्वा अतिशयेन श्लक्ष्णैः । तृप्तं मृदमुच्यते प्रविष्टं श्लक्ष्णं पाजः[+] पानात् ।

अमीवेत्यनवगतम् । हिंसितारो गौर्वाभिधेयेयाः[19] । ततश्च पूर्वमन्त्रोक्तेन अभ्यमनेन[20]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।

२–[ ऋ० ४।४।१ ] 'कृणुष्व पाजः' इत्येव प्रतीकम् B. C.

३–प्रसितिरिव B. प्रसितिव C.

४–वागुर B. C.

५–वाभि B. भि C.

६–प्रतीत शेषः C. ७–रजेव C.

८–सहायः B. * '॰स्तद्वन्' इति युक्तम् ।

९–'वायत्त' इति द्विलिखितम् B. C.

१०–अनदं तम् ( भू C. ) तेन B. C.

११–गुणेन B. C.

१२–'गतभयेन' इति द्विलिखितम् B. C.

१३–'शूरे' इति द्विलिखितम C.

१४–'वचनं द्वतीयैक' इति त्रुटितम् B.

१५–तिष्ठदिति (क्षिप्यिदि C.) क्षिप्रनाम B. C.

१६–तिष्या B.C. १७–अनुप्रसत्या (त्य C.) B.C.

१८–'यस्मात् तस्मात्' इत्यनयोर्मध्ये 'ते नवगभ (भं C.) ममीवा हिंसितारो गोवगर्भः (भं C.) पा (था C.) तः दुर्नामा यावं तिमिरमिति नाम' इत्यधिकः पाठः B. C. 'तस्मात्' इत्यादेय स्थाने 'तत्स्यादित्य' इति B. 'तस्यादित्याहार्यं' इति च C. पुस्तके पाठः ।

+ 'पाजः' इति युक्तं स्यात् ।

१९–गो वाभिधेय C.

२०–भ्रमदे नेकं पद B. अभ्रमनेन C.

एतत् पदं व्याख्यातम्। अतोऽम्यमनवांत् इत्यवगमः। उदाहरणम्—

यस्ते गर्भममीवा दुर्णामा योनिमाशये।
अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत्॥

रक्षोहा नाम ब्रह्मणः पुत्रस्तस्यार्षम्। गर्भरक्षणार्थे कर्मणि विनियोगः। स्त्री उच्यते। यस्ते तव गर्भम् अमीवा हिंसिता रोगभूतो दुर्णामा पापः कृमिरिति नाम यस्य स कृमिः योनिमाशये आस्थित यो आशेते वा तिष्ठति हि। तस्य किम्? उच्यते अग्निस्तं ब्रह्मणाऽनेन मन्त्रलक्षणेन सह अग्निश्च ब्रह्मा चेत्यर्थः। निरित्ययमनीनशदित्येतेन सम्बध्यते। क्रव्यादं मांसभक्षं निर्मूलं नाशयतु।

निर्वचनप्रसक्तमाह क्रव्ये मांसे मेद्यति स्निह्यति गृध्यतीत्यर्थः। अमतेर्वा स्यात् सरणकर्मणो हिंसार्थस्य सरणकर्मण इति पाठान्तरम्। अमतेर्वेति तस्यैव धातोः स्वार्थवृत्तित्वेन पुनरुपन्यासः, हिनस्ति धावति वा क्रामति वा।

दुरितमित्यनवगतम्। किमत्रानवगतं यावता एतेर्भावे क्तः, गतिर्गमनमित्यर्थः। तस्य दुःपापत्वमेव द्योतयति पापगतिर्दुरितं भवेत्। यदि पङ्ग्वामनखञ्जादीनां गतिर्दुरितमित्युच्यते। यद्वा क्रिमिकीटपतङ्गत्वादिप्राप्तिरूपा दुर्गतिर्दुरितमुच्यते। तत्र धात्वर्थमात्रकुस्तायां नेह किञ्चिदनवगतं स्यात्। अस्ति खलु दुर्गतिप्रापककारणभूतं कर्म। दुर्गतिर्गम्यते येन येन तद् दुरितमिहाभिप्रेतम्। तच्च दुर्गतिशब्देनैवाभिधातुं शक्यते न दुरितमित्यनेनानवगतम्। तदेतल्ल्युटा दर्शयति यावदुक्तं स्याद्दुर्गतिर्गमनानि तावद्दुरितानीति। उदाहरणम्—

वैश्वदेवीं सूनृतामारभध्वं शुद्धा भवन्तो यज्ञियासः पावकाः।
अतिक्रामन्तो दुरितानि विश्वा शतं हिमाः सर्ववीरा मदेम॥

१—अम्यमवान B. C.
२—[ ऋ० १०।१६२।२ ] 'यस्ते गर्भम्' इत्येव प्रतीकम् B. C.
३—गर्भः B. ४—क्रिमि C.
५—योनिराशये B.
६—आशते वा तिष्ठत ( नास्ति C. ) हि B. C.
७—निर्मूलं C. ८—शाध्यतीत्यर्थः B.
९—कर्मणि C. १०—क्रमतेर्वेति B. C.
११—क्रमति B. C.
१२—इतिर्गमन B. १३—वंकुवामन B. C.
१४—'तु' इति त्रुटितम् B. मुच्यते C.
१५—यदि वा C. १६—पपु B.
१७—'वैश्वदेवीं' इत्येव प्रतीकम् B. C. अयमेतदानुपूर्वीको मन्त्रः कुत्रस्य इति न ज्ञायते। अथर्ववेदे स्वल्पपाठभेदेनेत्थमयं मन्त्रो वर्तते—
वैश्वदेवीं वर्चस आरभध्वं
शुद्धा भवन्तः शुचयः पावकाः।
अतिक्रामन्तो दुरिता पदानि
शतं हिमाः सर्ववीरा मदेम॥
[ अथर्व० १२।२।२८ ]

विश्वेषां देवानां सम्बन्धिनीं सूनृतां सत्यां प्रियां च । एवंभूता हि वाक् सूनृतोच्यते । प्रियां सत्यां वाचं स्तुतिमित्यर्थः । आरभध्वमुपक्रमध्वं वक्तुम् । तया च शुद्धाः पूताः प्रकर्षोऽत्र द्रष्टव्यः । स्तोकेनापि पापेनासंबद्धा इत्यर्थः, भवन्तो यज्ञियासो यज्ञसम्पातिन[*] ऋत्विजो यूयम् । वयमप्यतिक्रामन्तो दुरितानि दुर्गतिः कुत्सिता अधं गतिर्गम्यते यैस्तानि पापानि विश्वा सर्वाणि शतं हिमाः हेमन्तः[×] शतं वर्षाणीत्यर्थः । सर्ववीराः सर्ववीरैः पुत्रैः पौत्रैश्चोपेता मदेम मोदेमेत्याशास्महे ।

अप्वेत्यनवगतम् । अपपूर्वस्य वेसे[6]रन्तर्णीतण्यर्थस्य एतद्रूपम् । अपवाय इत्यवगमयति । सुखं प्राणांश्चेत्यवगमः । यद् यस्माद् एनया वाचा शब्दवाच्यया विद्धस्ताडितः, ताडितसम्बन्ध इत्यर्थः । दर्शव्याधिसम्बन्धोऽपविद्धो गुरुणा विद्धाङ्गे उपमीयते प्रमीयत इत्यर्थः । अतो व्याधिजातिर्वा स्त्रीलिङ्गनिर्देशात् । उदाहरणम् 'अमीषां चित्तम्' इति प्रसङ्गेन चतुर्दशे व्याख्यास्यते ।

अमतिरित्यनवगतम् । अमामयीत्यस्यार्थवचनम् । आत्ममयी अततेर्वाऽमते[14]र्वा अमतिशब्द इति निर्दिष्टः । मतिरपि प्रकाशरूपत्वाद्दीप्ति[15]रात्मप्रकाशमयी ततिर्मतिर्वा । अमतिर्दीप्तिरभिधेया । उदाहरणम्—

अभि त्यं देवं सवितारमोण्योः कविक्रतुमर्चामि सत्यसवं रत्नधामभि प्रियं मतिम् ।
ऊर्ध्वा यस्यामतिर्भा अदिद्युतत् सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥[16]

नकुलस्यार्षम् । अभीत्ययमर्चामीत्यनेन सम्बध्यते । त्यं तं[17] देवं[18] दानादिगुणम् । ओण्योर्द्यावापृथिव्योर्द्वयोरपि मध्ये कविक्रतुं क्रान्तकर्माणं क्रान्तप्रज्ञानं वा । यथा मेधाविनोऽधोविकर्मणो वा विचार्य हितं कुर्वन्ति तथा सर्वजगद्धितं कुर्वाणमभ्यर्चामि अभिष्टौमि । सत्यसवं सैचसश्चानुज्ञानादभ्यनुज्ञातम् । उदयास्तमयाभ्यां हि यथास्वं सर्वकर्मसु सत्य-

---

१–तोच्यतां B. C.
२–नासम्बद्ध B. नासम्बन्ध C.
३–द्रतेB. द्रयतेC. * 'सम्पादिन' इति युक्तं स्यात् ।
४–'म' इति त्रुटितम् B.　५–अयोगति C.
× 'दिगन्तान्' इति युक्तम् ।　६–पेतेरन्त B. C.
७–अपापाय B. C.
८–द्रष्टव्यादि सम्बद्धोऽपि B.　९–विद्धो B.
१०–[ ऋ० १०।१०३।१२ ]
११–[ निरु० ९।३३ ]
१२–'म' इति त्रुटितम् B. C.
१३–आमायि B. अभूमयी C.
१४–'ततेर्वा' इत्येव B. ततेर्वा मतेर्वा C.
१५–दीप्तिमात्मप्रकाशमयी B.
१६–[ अथर्व० ७।१४।१,२ ] 'अभि त्यं देवम्' इत्येव प्रतीकम् B. C.
१७–'तं देवं' इति त्रुटितम् B. C.
१८–दानादिगुणः B.
१९–अत्र 'ओण्योः' इति पाठो युक्तः ।
२०–सत्यसव B.
२१–सैचसोश्च B. सैचसोश्चानुज्ञानत्वाभ्यनु C.

मेवासावभ्यनुजानाति विश्वम । रत्नधां रमणीयानां धनानां दातारम् । अमीत्ययं मतिमिर्तितेन सम्बध्यते । प्रियमिष्टं सर्वस्य मैतिम् अभिमन्तारं मण्डलस्याधिष्ठातारं लोकपालस्याद्वा ज्ञातारं सर्वस्य कविं मेधाविनम् । ऊर्ध्वा उच्छ्रिता व्यापारवती वा । यथा लोके ऊर्ध्वो भव व्याप्रियस्वेति गम्यते । यस्यामतिरात्ममयी आत्ममननसाधनभूता भा दीप्तिर्दिद्युतद् द्योतते । सवीमनि प्रसवे । सप्तमीश्रुतेर्वर्तमान इति शेषः । सविता ह्यनुज्ञाता सतीत्यर्थः । यश्च हिरण्यपाणिर्हिरण्यमिवोज्ज्वलौ हतक्षणा वा रत्नभरणा वा रश्मयः पाणि-स्थानीया यस्य सः । अमिमीत निर्मिमीते सुक्रतुः सुकर्मा । कृपा स्वस्तया उपकारकल्पनया स्वरादित्यः संवित्भावविशेषणत्वादात्मप्रकाशमयी ततिर्मतिर्वा अमतिरित्युपपद्यते ।

श्रुष्टी पुरन्धिः इत्येतेऽनवगतेऽनेकार्थे । श्रुष्टीचरीरित्यर्थः । सुखमभिधेयम । 'सुखवन्तो भवत' इति वचनात् । रोचेश्रुषिरिति च । इह तु क्षिप्रनाम निगमपदा-न्तरसम्बन्धसामर्थ्याद् गम्यते । तेनानेकार्थत्वमपि । आद्यैवैधीत्यवगमः । पुरन्धिरित्यस्य पुरन्धीरिति वा पुरं दारयतीति वा । अनेकार्थत्वं तु विचारपुरस्सरं भाष्ये दर्शयिष्यते उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
द्वादशः खण्डः । ]

---

१–नुज्ञानाति C.
२–रमणीयां B. ३–मती: B.
४–'ल' इति त्रुटितम् C.
५–ऊर्ध्वमुच्छ्रिता B.
६–मिवोज्वाला B. '॰वोज्ज्वला' इत्युचितम् ।
७–धवित् C. ८–श्रुष्टि C. *'॰ते अनवगते अने॰' इत्युचितम् । ९–श्रुष्टिवरी B. C.
१०–सुखवनी भवनिर्वचनात् B. C.
११–अयं सन्दिग्ध इव पाठः।
१२–नेकार्थे B. नेकार्या C.
१३–अश्वष्टी B. अश्वष्टी C.
१४–पुरधीरिति B. C.
१५–पुरं दायतीति B., पुरं दरायतीति C.
१६–अनेकार्थे तु B. C.
१७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ त्रयोदशः खण्डः ।[1] ]

ते हि यज्ञेषु यज्ञियास ऊमाः सधस्थं विश्वे अभि सन्ति देवाः ।
ताँ अध्वर उशतो यक्ष्यग्ने श्रुष्टी भगं नासत्या पुरंधिम्[2] ॥

वसिष्ठस्य । हिशब्दो यस्मादर्थे यस्मात्ते यज्ञेषु यज्ञियासो यज्ञार्हाः । ऊमाः अवितारोऽवनीयास्तर्पणीयाः । सधस्थं सधं स्थीयते यत्र तत्स्थानं वेदाख्यम् । सधस्थम् 'सध मादस्थयोः' इति सहस्य सधादेशः । अभि सन्ति अभिभवन्ति । के ते ? विश्वे सर्वे देवाः । यस्मादिति श्रुतेस्तस्मादित्यध्याहारः । तस्मात् तान् अध्वरे यज्ञे उशतः कामयमानान् यक्षि यजामहे । अग्ने श्रुष्टी क्षिप्रं भगं नासत्या नासत्यौ चाश्विनौ पुरंधिं च ।

निगमप्रसक्तं निराह सत्यावेवेत्यादि । द्वौ प्रतिषेधौ प्रकृतमर्थं गमयतः, अविसंवादकावित्यर्थः । और्णवाभो मन्यते । नित्यपक्षे नित्यं प्रागुषसो दर्शनात् सत्यस्याविसंवादिनोऽर्थस्य प्रणेतारौ । तस्मिन् हि काले मनसः प्रसादः । स्वविपरीतं वस्तु प्रतिपातीति । तथा चोक्तम् 'ब्राह्मे मुहूर्ते उत्तिष्ठेत्' इत्यादि । सत्यशब्दाच्चयतेश्च नासत्यौ इत्याग्रायणो मन्यते । नासिकाप्रभवौ बभूवतुरित्यैतिहासिकाः । नासिकाशब्दात् प्रभवार्थेऽपि नसादेशो द्रष्टव्यः । नासिकातः प्रतिलब्धः सन् तत्कोपीत्याख्यातं पुराणार्थत्वादेभ्य आगन्तव्यम् । पुरन्धीति धीशब्दस्य धीकर्मसु पठितत्वाद् बहुकर्मा बहुप्रज्ञो वोच्यते । अतोऽसंविज्ञानपदत्वाभावाद् गुणपदत्वे सति प्रकृतस्यैव कस्यचिद् गुणपदमाहोस्विद् अपूर्वस्येति सन्देहाद् विचारार्थः

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।
२—[ ऋ० ७।३९।४ ] 'ते हि यज्ञेषु' इत्येव प्रतीकम् B. C.
३—यज्ञियार्हाः C. ४—सधस्थः B.
५—यत्रन्तत्स्थानं वेदाख्यं C.
६—'सधस्थं' इति नास्ति B.
७—[ पा० ६।३।९६ ]
८—सनस्य B. C.
९—सदभिसन्धि तु B. तभि सन्धिन्ति C.
१०—अग्नेः श्रुष्टि B. अग्ने श्रुष्टि C.
११—पुरन्धिश्च B. C.
१२—वौ प्रतिषिद्धौ B. C.
१३—दका इत्यर्थः B. C. १४—वाह्नो मन्य B. C.
१५—स्यापि संविदिनो B. C.
१६—अयं पाठः सन्दिग्धः ।
१७—'ब्राह्मे मुहूर्ते बुध्येत' [ मनु० ४।९२ ]
१८—नासभ्या ( त्या C. ) प्रयणो B. C.
१ —प्रभवः विद्येति नासिका हासिका B. प्रभवः विधेति हासिका C.
२०—अयं पाठः सन्दिग्धः ।
२१—नासादेयेशा C.
२२—सत् तत्काविताख्यानं C. तत्कापीत्यादिरपि पाठः सन्दिग्ध एव ।
२३—धीरशब्दस्य C.
२४—'कस्यचित्' इति नास्ति B.

प्रश्नः । तदिति वाक्योपन्यासार्थः । कोऽयं पुरन्धिर्नाम । भगः पुरस्तादित्यादि । आश्विनेन सत्यप्यानन्तर्ये द्विवचनान्तत्वात् सम्बन्धानुपपत्तेर्भगस्याग्न्यादेशादिह मन इत्यकर्मता । सधेरयं सम्बन्ध इत्युक्तम् । सामर्थ्यादप्रकृतेनापि सम्बन्धो भवतीत्याह इन्द्र इत्यपरम् । तत्सामर्थ्यं दर्शयति देवराजत्वादतिशयेनासौ प्रकृष्टश्च यज्ञकर्मा । व्युत्पत्त्यन्तरसामर्थ्याद्वा । पुरामसुरसम्बन्धिनीनामतिशयेन दारयिता इन्द्रः । 'पूर्भि भातिरत्' इति मन्त्रान्तरे दर्शनसामर्थ्यात् ।

वरुण इत्यपरं दर्शनम् । धीशब्दोऽत्र प्रज्ञावचनं दर्शयति । यस्मात् प्रज्ञया गुणेन स्तौमि मन्त्रो वा मन्त्रदृग्वा अत्रिः ।

इमामू नु कवितमस्य मायां महीं देवस्य नकिरा दधर्ष ।
एकं यदुद्रा न पृणन्त्येनीरासिञ्चन्तीरवनयः समुद्रम् ॥

इमाम् । ऊनु पादपूरणे । कवितमस्य अतिशयेन मेधाविनो मायां प्रज्ञां महीं महतीं देवस्य वरुणस्य समुद्राधिपतेः । नकिः कश्चिदपि आदधर्ष आधर्षति अभिभवति । एक सन्तं यदुद्रा उदकेन न पृणन्ति न पूरयन्ति । एनीः 'इण् गतौ' इत्यस्यैतद्रूपम् । एनशब्दस्य च शुक्लपर्यायस्य 'वर्णादनुदात्तात्' इत्येवमीकारः । व्यत्ययेन द्वितीया प्रथमार्थे । एन्यो गमनस्वभावाः शुक्लवर्णा वा । अधोभिगमनस्वभावाः शुक्लोदकवर्णस्वभावत्वात् शुक्लवर्णाः । आसिञ्चतीराभिमुख्येन सिञ्चन्त्यः पूरयन्त्य इत्यर्थः । अवनयः नदीनामेदम् । गङ्गाद्या नद्यः समुद्रमुदधिम् । गङ्गाद्या हि नद्यः प्रभूतेन स्वेन स्वेनोदकेन सततमापूरयन्त्यस्तत्समुद्रं जलार्द्रं धारयन्ति । सैषा वरुणस्य माया यतश्चास्य न कश्चिदभिभवति ।

रुशदित्यनवगतम् । वर्णविशेषो ज्वलनाविर्भूतप्रकाशरूपोऽभिधेयः । रोचतेरिति धातुनिर्देशात् । रुगिति वा विरोचन इति वावगमः । उदाहरणम्—

---

१–देशोभिहमनमित्येकर्मत C.
२–कत्युक्तम् C.
३–पूर्भि दाति मन्त्रान्तरे B. [
४–प्रज्ञारूपमर्थमित्यर्थः ।
५–प्रज्ञाया गुणेन स्तौति C
६–अतिः B. अति C.
७–[ ऋ० ५।८५।६ ] 'इमामू नु' इत्येव प्रतीकम् B. C.
८–पदपूरणौ C.
९–न किं B.
१०–आदिधर्प अधर्प C.
११–यदुत्ता B. C
१२–एती: B. C.
१३–[ धा० २।३५ ]
१४–[ पा० ४।१।३९ ]
१५–वमिकारः B. न्येन विकारः C.
१६–दध्योभिगमन C.
१७–'त' इति त्रुटितम् B. C.
१८–मायां B.
१९–'ज्वल' इति त्रुटितम् C.

अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
समिद्धस्य रुशददर्शि पाजो महान् देवस्तमसो निरमोचि ॥[1]

बुधगविष्ठिरयोरार्षम् । अबोधि बुध्यति होता 'अग्निर्वै देवानां होता'[2] इति श्रुतेर्होताग्निः । मानुषस्तु तदधिष्ठितो होत्रं करोति, अतः स होतेत्युच्यते । अथवा होतृशब्दोऽत्र तृन्प्रत्ययान्तः क्रियाशब्दः । साधुकारिणि च तृन्प्रत्ययः, साधु होमस्य कर्ता । यजथाय यजनाय देवान् अग्निहोत्रादिना होमेन यागेन च देवान् यष्टुमित्यर्थः । बुध्वा च ऊर्ध्वं ऊर्ध्वज्वालोऽग्निः सुमनाः सुचित्तो होमकारिणामनुग्रहपरचित्त इत्यर्थः । प्रातः प्रत्यूषस्येव उषस उदयवेलायामस्थात् तिष्ठति ज्वालामालैः सन्नित्यर्थः । समिद्धस्य रुशद् दीप्तवर्णम् अदर्शि दृश्यते । पाजो बलं ज्वालासमूहलक्षणं तेन च महान् देवस्तमसः सकाशाद् निरमोचि निर्मोचयति प्रकाशयतीत्यर्थः ।

रिशादस इत्यनवगतम् । रिशतेर्हिंसार्थस्य शुद्धस्य ण्यन्तस्य वा स्यतेश्चैतद् द्विधातुजं रूपम् । रिशतां हिंसतां रेशयतां वा घ्नतां घातयतां वा शत्रूणामसितारः क्षेप्तारो नाशयितार इत्यर्थः । तेन रिशदसितारो रेशयदसितार इति वाक्यगर्भः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
त्रयोदशः खण्डः[11] ]

---

१-[ ऋ० ५।१।२ ] 'अबोधि होता' इत्येव प्रतीकम् B. C.

२-नोता C.

३-'अग्निर्वै देवानां होता [ ऐ० ब्रा० १।२८ ]' इति पाठो युक्तः।

४-ज्वाला माला: C

५-वाजं B. C.

६-येन च B. C.

७-'स' इति त्रुटितम् B. C.

८-रिशेतां हिंसन्तां B.

९-रदसितारो B.

१०-'वाक्यगमः' इत्यनन्तरं B. पुस्तके 'पार्श्वे' इति, C. पुस्तके च 'पांश्व' इति पाठोऽधिकः ।

११-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [अथ चतुर्दशः खण्डः ।][1]

अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम्।
प्र णः पूर्वस्मै सुविताय वोचत मक्षु सुम्नाय नव्यसे ॥[2]

मनोर्वैवस्वतस्यार्षम् । हि शब्दो यस्मादर्थे यस्माद् अस्ति वो युष्माकं सजात्यं सजातिना अस्माभिः सह परस्परोपकारलक्षणा 'इत उपजीवन्त्यमुतो मनुष्याः' इति श्रुतेः[3] । रिशादसो[4] हे रिशानां रेशयतां वा प्रर्तां घातयतां वा शत्रूणामसितारः क्षेप्तारो निरसितारो देवासो[5] देवाः । अस्ति च आप्यम् आप्तित्वमाप्तिर्जातिरुच्यते । यप्तृयष्टृव्यत्वलक्षणमित्यर्थः । प्रवोचत[6] प्रब्रूत मक्षु क्षिप्रं सुन्नाय सुखाय । अथवा आप्यमाप्तव्यं यस्माद् युष्माभिर्युष्मत्तः । यस्मादिति श्रुतेस्तस्मादित्यध्याहारः । तस्माच्छब्दोऽवोचतेत्यनेन सम्बध्यते । नोऽस्मान् पूर्वस्मै सुविताय सुगताय । किं पुनस्तत् ? सामर्थ्यात् स्थानं स्वर्गाख्यं तस्मै प्रयाणोत्तरकालं[7] तत् प्राप्तुमित्यर्थः । प्रब्रूत मक्षु क्षिप्रं सुम्नाय सुखाय च नव्यसे[8] अतिशयेन नवाय ।

सुदत्र[9] इत्यनवगतम् ।सुपूर्वस्य ददातेः त्रन् द्रष्टव्यः । सुदान इत्यवगमः । कल्याणदान[10] इति पर्यायवचनम् । उदाहरणम्—

ता नो[11] रासन् रातिषाचो वसून्या रोदसी वरुणानी शृणोतु ।
वरूत्रीभिः सुशरणो नो अस्तु त्वष्टा सुदत्रो वि दधातु रायः ॥

वसिष्ठस्य । तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः।यानि वयमर्थितवन्तस्तानि[12] । नोऽस्मभ्यं पूर्वेषु कालेषु रासन् रासतेर्दानकर्मणो लङि अडभावश्छान्दसत्वात्,अरासन् दत्तवत्यः। रातिषाचो हविषो दानं रातिस्तां याः सचन्ते । अथवा रातिषाचो हविर्दानस्य सेवित्र्य इत्यर्थः । वसूनि धनानि । यत एवमतो ब्रवीमि इदानीमपि आकारः शृणोतु[13] इत्यनेन[14] सम्बध्यते, रोदसी द्यावापृथिव्यौ वरुणानी च आशृणोतु । आश्रवः प्रतिज्ञा अतिदास्याम इति प्रतिजानन्तु अभ्युपगच्छन्त्वित्यर्थः[15] । किञ्च वरूत्रीभिर्वरयित्रीभिर्व्याभिरेताभिर्देवीभिः[16][17][18]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ ऋ० ८।२७।१० ] 'अस्ति हि वः' इत्येव प्रतीकम् B. C.
३–[ अनुपलब्धमूलमिदम् ] वन्त्यमुतो B.
४–रिनशादसः C. ५–'देवास.' इति नास्ति B.C.
६–'प्रवोचत' इति नास्ति B. C.
७–' प्रयाणकालं ' इत्येव B.
८–' नव्यसे ' इति नास्ति B. C.
९–' द ' इति त्रुटितम् C.
१०–दायेति B. दाय इति C.
११–[ ऋ० ७।३४।२२ ] ' ता नो रासन् ' इत्येव प्रतीकम् B. C.
१२–तत् B. तः C. १३–शृणोति B.
१४–इत्येन C. १५–गच्छन्तित्यर्थः B. C.
१६–व ( प B. ) रातिभिः B. C.
१७–वा ( पा B. ) रयित B.C. १८भि–दिए:B.C.

सह । सुशरणः साश्रयः । नोऽस्माकमस्तु । कः ? त्वष्टा नाम देवः । कीदृशः ? सुदत्रः सुदानः स्वाश्रयणश्च भूत्वा विदधातु विविधं दधातु रायो धनानि ।

सुविदत्र इत्यनवगतम् । वेत्तेः सुविधत इत्यवगमः । प्रशस्तज्ञान इत्यर्थः । महा-कल्याणविद इति । उदाहरणम्—

ये तातृपुर्देवत्रा जेहमाना होत्राविदः स्तोमतष्टासो अर्कैः ।

आग्ने याहि सुविदत्रेभिरर्वाङ् सत्यैः कव्यैः पितृभिर्घर्मसद्भिः ॥

शङ्खो यामायनस्तस्यार्षम् । ये तातृपुस्तीर्णाः प्राप्ता इत्यर्थः । देवत्रा 'देवमनुष्यपुरुष' इति द्वितीयार्थे त्रा, देवान् जेहमाना 'ओहाङ् गतौ' कर्मज्ञानसमुच्चयेन क्रमेण गच्छन्तो देवत्वं क्रमेण प्राप्ता इत्यर्थः । होत्राविदो होत्रे यज्ञानां वेदितारः स्तोमतष्टासस्तक्षतिः करोति-कर्मा स्तोमानां कर्तारः समुच्चयप्रदर्शनं चेदम् । अर्कैर्मन्त्रैः स्तुतिलक्षणैर्नित्यैर्वा हविर्लक्षणै-र्हेतुभूतैः स्तोमानां हविषां च कर्तार इत्यर्थः । पुरस्ताद् यच्छब्दश्रुतेर्योग्यार्थसम्बन्ध-स्तच्छब्दोऽध्याहार्यः । तैरग्ने याहि सुविदत्रेभिः सुविधैः सर्वत्र सहयोगलक्षणा तृतीया, सह । अर्वाङ् अस्मदभिमुखः सत्यैरवितथप्रसादैः कव्यैः पितृदेवत्यं हविः कव्यं तत्सम्बन्धात् कव्यभुजः कव्याः स्वार्थिको वा यः कवयः कव्यास्तैः कव्यभुग्भिर्मेधाविभिर्वा पितृभिर्घर्म-सद्भिर्घर्म इति यज्ञनाम यज्ञसीदद्भिरित्यर्थः ।

आनुषगित्यनवगतम् । नाम चैतन्निपातः । आनुपूर्वस्यानुषक्तव्यमित्यवगमः । उपर्युपरि लग्नमित्यर्थः । उदाहरणम्—

आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।

येषामिन्द्रो युवा सखा ॥

त्रिशोकस्यार्षम् । आङ् मर्यादायाम् । घ इति पदपूरणः । मर्यादया यथाशास्त्रं ये

१–' नः ' इति नास्ति B. C. २–भूता B.
३–' ध ' इति त्रुटितम् C.
४–[ ऋ० १०।१५।९ ] ' ये तातृपुः ( पः C. )' इत्येव प्रतीकम् B. C.
५–स्तिर्णाः B. स्तीर्णाः C.
६–[ पा० ५।४।५६ ] मनुष्येष्विति D. C.
७–क्रा C.
८–[ धा० ३।७ ] दहां गतौ C.
९–स्तोमस्त्वष्टासः B. * 'हविर्लक्ष०' इति युक्तम्
१०–अर्वङ् B. C.
११ ' त् ' इति त्रुटितम् C.
१२–कवय नव कव्याः C.
१३–यज्ञानाम C.
१४–यज्ञजातिभि B.
१५–आनुष इत्यन C.
१६–आड्पूर्वस्या B.
१७–[ ऋ० ८।४५।१ ] 'आ घा ये' इत्येव प्रतीकम् B. C.
१८–मर्यादाये B.
१९–'यथाशास्त्रं ये' इति त्रुटितम् B.

अभिमिन्धते दीपयन्ति स्तृणन्ति च बर्हिर्वेदिस्तरणात् दर्भान् । आनुषक् आनुपूर्व्येण यागं ये यजन्त इत्यर्थः । येषां च इन्द्रो युवा सर्वदा तरुणः स्तुत्यस्तोतृलक्षणेन सख्येन सखा । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहारः, ते पुण्यवन्त इति शेषः ।

तुर्वणिरित्यनवगमम् । तूर्णशब्द उपपदे वनोतेः सम्भजनार्थस्य इकारो नामकरणः । तूर्णं वनोतीति तूर्णवनिरिति प्राप्ते तुर्वणिः । उदाहरणम्—

स तुर्वणिर्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः ।
येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि ॥

इन्द्रस्य सख्यतामोपगतस्येदमार्षम् । इन्द्रस्तुर्वणिस्तूर्णं संभक्ता शत्रूणाम् । महान् प्रभावतः । अरेणु सप्तम्या अत्र लुग् द्रष्टव्यः, अरेणुनि पांसुवर्जिते पौंस्ये सेनालक्षणे स्वबले सप्तमीश्रुतेः स्थित इति शेषः । स्वसेनामध्यगतः सन्नित्यर्थः । गिरेर्भृष्टिर्न भ्राजते समुच्छ्रितः पर्वतप्रदेशो भृष्टिरुच्यते तद्वद् भ्राजते गिरिशृङ्गमिव सर्वतः समुच्छ्रितो लक्ष्यत इत्यर्थः । तुजा तुजतेर्हिंसार्थस्य । तुर्वञ्च इहोच्यते 'इत्थंभूतलक्षणे' तृतीया । अपि भवान् करन्धुना छात्रमद्राक्षीदिति यथा । हिंसित्रा वज्रेण सम्बन्धः, गृहीतवज्रः सन्नित्यर्थः । शवो बलनामेदम् । अन्तर्नीतमत्वर्थः । इन्द्रस्य वज्रस्य वा विशेषणम् । बलवानिन्द्रो बलवता वज्रेण वा । किं कृतवान् ? उच्यते । येन तृतीयानिर्देशात् हतेति शेषः । शुष्णं शुष्णनामानमसुरं शोषयितारं वा सस्यानां मेघं मायिनं मायावन्तम् । आयसः इन्द्रस्येदं विशेषणम् । अयोमयो लोहमयो दृढशरीर इत्यर्थः । मदे 'यस्य च भावेन भावलक्षणम्' इत्येतेषां सप्तमी, तदुक्तेश्च योग्यक्रियापदाध्याहारः कार्यः, सोमपदे प्राप्ते दुध्रो दुर्धरः शत्रूणाम् ।

---

१–अभि मन्यते B. अभिमन्थते C.
२–दीपयति B. C.
३–स्तृणति B. ४–भागा B.
५–'तच्छब्दाध्याहारः' इति नास्ति B. C.
६–तेपुरुषास्तन्त्र B.
७–' शेषः । तुर्वणिरित्यनवगतम् ' इत्येतावान् पाठस्त्रुटितः B.
८–उपादे B. उपवदे C.
९–'तेः संभजनार्थस्य इकारो' इति पाठस्त्रुटितः B. 'स्य' इति त्रुटितम् C.
१०–'रो' इति त्रुटितम् C.
११–करणम् B. १२–प्राति B. C.
१३–[ऋ० १।५६।३] 'स तुर्वणिः' इत्येव प्रतीकम् B. C. १४–सख्यकामावभस्ये C.
१५–तूर्णं संभर्ता B. १६–महा प्राभावतः B.
१७–आरेणु B. १८–लुक् अत्र B.
१९–'अरेणुनि पांसुवर्जिते पौंस्ये' इत्येतावान् पाठस्त्रुटितः B.
२०–तुमज B. तुम्रज C. २१–[पा० २।३।२१]
२२–अत्र 'कमण्डलुना' इति पाठो युक्तो भवेत् । काशिकादौ सर्वत्रायमेव पाठ उपलभ्यते ।
२३–अपोमयो C. २४–[पा० २।३।३७]
* 'इत्येतेन' इति पाठः स्यात् ।
२५–'तत्' इति नास्ति B.

आभूषु आकार अभीत्यस्य स्थाने, भूष्विति सप्तम्यन्तम् । द्वयोरपि चानयोर्योऽत्रार्थस्तस्मिन्न-प्रसिद्धरूपत्वाद् अवग्रहस्य सिद्धार्थावयवप्रदर्शनार्थत्वात् पदकारेणात्राऽवग्रहो न कृतः । व्यत्ययेन च नपुंसकता । शुष्णस्येदं विशेषणम् । अभिभूषुं शुष्णमिन्द्रं प्रत्यभिभवितु-मिच्छन्तमित्यर्थः । रमयन्निरमयेन् नियमेन रमितवान् । एकस्मिन्नेव प्रदेशे बद्धवानित्यर्थः । क ? दामनि । मेघपक्षे दामनीति लुप्तोपमं द्रष्टव्यम् । दामनीयं वत्सकं करभं वा ।

गिर्वणा इत्यनवगतम् । देवोऽभिधेयवचनः । चतुर्थ्यन्तत्वेन सारूप्यात् । गिर्वणो देवं इत्येतेनार्थमुक्त्वाद् गीर्भिरेनं वनयन्तीत्यर्थनिर्वचनम् । भाजयति सेवयति स्थापयतीत्यर्थः । गीर्वाण इत्यवगमः । तथा अभिधानकोशकारैः पठति 'गीर्वाणाः स्युर्दिवौकसः' इति ।

आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ।
घर्मं न सामन् तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥[16]

नृमेधः प्रियमेधसोरार्षम् । आमासु पक्वमित्यामत्वेन पक्वत्वेन चात्र भोजनस्यायोग्यासु गोषु पक्वं भोजनयोग्यं पय ऐरयस्त्वमीरितवान् ईरयसि वा गमयसि वृष्टिद्वारेण ओषधि-निर्वाप्या जनैसि जनितवांश्चेत्यर्थः । यागनिर्वृत्त्या च सूर्यमारोहयसि आरोहितवान् वा । दिवि द्युलोके योऽयमीदृशगुण इन्द्रस्तस्मै । घर्मं न घर्मशब्देनात्र महावीर उच्यते, महावीर-मिव तपता तपतिरन्तर्नीतण्यर्थः, ऋत्विजस्तापयति । किम् ? सामन् सोमो[24] धूपयतेत्यर्थः । तद्धि सामतापनं सुवृक्तिभिः सुष्ठु वर्जिताभिर्दोषैः[25] प्रवृत्तिभिः स्थानकरणादिना सम्यगुच्चा-रणात् । तं[26] देवोपन्यस्यति विचारणार्थम् ।

---

१–आदित्यस्य B. 'आकारः अभी॰' इति, 'आकारोऽभी॰' इति वा युक्तम् ।
२–हूष्विति C. ३–रमय हिमेन रमतिवान् B.
४–एतस्मिन्ने C. ५–वन्धवानि C.
६–दामनीति B.
७–करभक्ष वा B. C.
८–गीर्वाण C. ९–गीर्वाण C.
१०–'देव' इति नास्ति B. C.
११–नेनाक उक्त्वा B. C.
१२ त्यर्थः निर्वे B. C.
१३–गिर्वाण B. १४–कोशतारः C.
१५–[ अनुपलब्धमूलमिदम् ] गीर्वाणा स्याद्दिवौकसः B. गीर्वाण स्याद्दिवौक C.
१६–[ऋ॰ ८ ८९।७] 'आमासु पक्वम्' इत्येव प्रतीकम् B. C.
१७–नृमेधपुरुष (नास्ति B.) मेधयोरार्षम् B. C.
१८–स्त्वमीरयात B.
१९–अयं पाठः सन्दिग्धः ।
२०–'च' इति नास्ति B.
२१–'घर्मं न' इति त्रुटितम् C.
२२–'नयता' इति नास्ति B. तपन् C.
२३–न ऋत्वि C. तापयतीत्यत्र सन्दिह्यते ।
२४–समो C. अत्र 'साम' इति युक्तं स्यात् ।
२५–ताद्दिर्दोषैः C.
२६–मेवोपन्य B. C. अत्र कश्चन पाठस्त्रुटित इति प्रतीयते ।

असूर्ते सूर्ते रजसि निषत्ते एतानि चत्वारि पदानि सप्तम्यन्ततया सन्दिह्यन्ते। तत्र रजसीति पदान्तरसम्बन्धसामर्थ्याद् रजःशब्दो लोकवचनः। तत एतत्तावदसन्दिग्धमन्तरिक्षलोकस्याधारत्वेन सम्बन्धोपपत्तेः सप्तम्यन्तम्। सूर्ते इत्यपि तत्सामानाधिकरण्येन सम्बन्धभावात् सप्तम्यन्तमेव। यतः 'ईर गतौ' इत्यस्य सुपूर्वस्य निष्ठायां छान्दसत्वादिडभावे ईकारस्य पूर्वसवर्णे सप्तम्यामेतद् रूपम्। रजसो विशेषणम्। अधिकरणस्य चाधेयसव्यपेक्षत्वादसूर्ते इत्याधेयप्रतिनिर्देशः। आधेयस्य प्रतिनिर्देशसामर्थ्याच्च अव्यतिरिक्तप्रातिपदिकार्थे प्रथमान्ततैव। ततश्चासुशब्दपूर्वस्य तस्यैव धातोस्तद्वदेव छान्दसत्वात् प्रथमा। एकारं आदेशो द्रष्टव्यः। निषत्ते इत्यप्याधेयविशेषणम्। 'नसत्त निषत्तानुत्त' इति निपातनाद् नत्वाभाव एकारादेशश्च पूर्ववत्। ततश्च असूरीरिता सूरीरितेत्यवगमौ। असुः प्राणः प्राणश्च वायुः। तत्स्पष्टतरं भाष्यकार आह सुसमीरितेस्वसमीरिते। असुसमीरिते इत्यस्य व्याख्यानं वातसमीरिता इति। मरुदादयोऽभिधेयाः। सुसमीरिते सुष्ठु प्रेरिते विस्तीर्णे अन्तरिक्षलोक इत्यर्थः। उदाहरणम्—

[ इत्येकादशस्या- ( -षष्ठस्या- ) -ध्यायस्य
चतुर्दशः खण्डः। ]

---

१–सम्बन्धाभावात् B. C.
२–[धा० २।८]
३–निष्ठायाश्छान्द B.
४–रजन्यो B.
५–अत्र 'प्रातिरिक्त' इत्याधिक्यः पाठः C.
६–कार्थेप्रथ B. C.
७–मान्ततेव B. C.
८–ततश्चासु B.
९–धानेतस्तद्व C.
१०–विकार C.
११–निषत्ते इत्यप्याधेय C.
१२ [पा० ८।२।६१] नसत्तनिषत्तानुत्त C.
१३–निपातनात् C.
१४–पूर्वसत् B.
१५–असिरिता सिरितेत्यव B.
१६–'सु' इति त्रुटितम् B. C.
१७–समितित स्व C. भाष्ये तु 'असुसमीरिताः सुसमीरिते' इत्येवं पाठः।
१८–समिरिता C.
१९–पातसमी B.
२०–आदर्शपुस्तकेऽत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ पञ्चदशः खण्डः ]

त आयजन्त द्रविणं समस्मा ऋषयः पूर्वे जरितारो न भूना ।
असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥[2]

भौवनस्य विश्वकर्मणः । ते आङ् मर्यादायाम् । यजिर्दानार्थः । आयजन्त मर्यादया यत्र यावच्च दातव्यं तदा तत्र तावद्देवेत्यर्थः, ददति । किम् ? द्रविणं वृष्ट्युदकाख्यं धनम् । समस्मै सम्यगस्मै लोकायेति शेषः । ऋषय औपरिष्टो नकार इहापकृष्टव्यः, ऋषयो न ऋषय इव यथा ऋषयः पूर्वे भृग्वादयः । जरितारः स्तोतारो भूना भूम्ना स्वमाहात्म्येन देवेभ्यो हवींषीति शेषः । यथा ते हवींषि दत्तवन्तस्तद्वदित्यर्थः । अथवा ऋषयः पूर्वे जरितार इति विश्वसृज उच्यन्ते । भूतानि समकृण्वन् इत्येतस्य चेदमुपमानम् । यथा विश्वसृजः सृष्टिकाले स्वमाहात्म्येन भूतानि समकृण्वन् सम्यक् कृतवन्तस्तद्वत् । असूर्ते असुः प्राणः स च वायुः । कुत एतत् ? 'अयं वै वायुः पवते' प्राणः' इति श्रुतेः । तेन प्रेरिता मरुदादयः सूर्ते सुष्ठु प्रेरिते विस्तीर्णे इत्यर्थः । रजसि लोके अन्तरिक्षाख्ये निषत्ते निषण्णा ये वृष्टिप्रदानद्वारेण भूतानि सम्यक् कृतवन्तः इमानि सर्वाणि स्थावरजङ्गमानि । भाष्ये च 'ये रसेन पृथिवीं तर्पयन्तो भूतानि च कुर्वन्ति' इति पाठः । ये भूतानि कुर्वन्ति त आयजन्तेत्याद्येन पादेन प्रतिवचनमित्यर्थः । प्रदर्शनं चेदम् । अन्यत्राप्येवंभूतस्यासम्बन्धस्य पाठक्रमो न तन्त्रमिति ।

अम्यक् इत्यनवगतम् । अमातेत्यवगमः । अकारो शब्दस्यामवचनस्यादौ द्रष्टव्यः । अमात्का सती अम्यक् अभ्यैतेति वा अभिपूर्वस्याञ्चतेरम्यक्ता भकारस्य मकारापत्त्या अम्यक् । नित्यं शत्रून् प्रत्यभिगन्ता शत्रुशरीरलग्नैव दृश्यत इत्यर्थः । आयुधाख्या शक्तिरभिधेया । उदाहरणम्—

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १०।८२।४] 'त आयजन्त' इत्येव प्रतीकम् B. C.
३–भूयदेयः B. भूयादयं C.
४–'भूतानि' इति द्विर्लिखितम् B. C.
५–'इव' इति त्रुटितम् C.
६–अयमेतदानुपूर्वीकः पाठः कुत्रत्य इति न ज्ञायते । 'अथ यः स प्राणोऽयमेव स वायुर्योऽयं पवते'-[श० ब्रा० १०।३।३।७] पवन्ते C. अतं वै वायुः पवन्ते प्राणम् D.
७–असूर्ते B. C.
८–निषत्ते C.
९–न्धस्यापाठ C.
१०–आम्यक् C.
११–अस्य वाक्यस्य पाठः सन्दिग्धः
१२–सति अय्यक् B. अम्यक् C.
१३–अम्यतेति वा B. C.
१४–कारमकारापत्त्या B. रामकारापत्त्या C.
१५–नीत्यं B. C.
१६–'•भिगन्ता' इति युक्तं स्यात् ।

अम्यक्सा त इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति ।
अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि ॥[1]

अगस्त्यस्यार्षम् । तच्छन्दश्चुतेर्यच्छन्दोऽम्यगित्येतत्सम्बन्धी अध्याहार्यः । यां क्षिप्तां सतीम् अम्यक् यां प्रतीयं गता यां प्रतीत्येवं सर्वत्र शत्रवो मन्यन्ते । या वा शत्रून् प्रत्यभिगता सहभूता वा ते तव स्वभूता हे इन्द्र ऋष्टिः शक्तिर्वा आयुधविशेषः । अस्मे अस्मान् प्रति सनेमि पुराणनामैतत् पुराणं वर्षो पीतम् । अभ्वमित्युदकनाम, तदुदकं मरुतो मरुतश्च जुनन्ति 'जुन गतौ' सामर्थ्याच्चान्तर्नीतण्यर्थो द्रष्टव्यः, गमयन्ति । किञ्च अग्निश्चित् चिदुपमायां हिस्मौ पादपूरणौ, अग्निरिव यथा अग्निस्तसे शुष्के काष्ठे दीप्यते तद्वत् त्वं शुशुक्वान् वैद्युतात्मना दीप्यत इत्यर्थः । किञ्च आपो न आप इव यथा च नापेया आपो द्वीपं मध्यस्थस्थलम्, एवं सर्वतस्त्वं परिवार्य दधति धारयति । प्रयांसि उदकनामैतत् उदकानि मेघहननकाले ।

यादृश्मिन् इत्यनवगतम् । यादृश इत्यवगमः । उदाहरणम्—

ज्यायांसमस्य यतुनस्य केतुन ऋषिस्वरं चरति यासु नाम ते ।
यादृश्मिन् धायि तमपस्यया विदद् य उ स्वयं वहते सो अरं करत् ॥[12]

अवत्सारस्यार्षम् । आदित्यस्वरूपेण अग्निरूपेण चोच्यते । अत्र चैकवाक्यप्रसिद्ध्यर्थं यत्तच्छन्दावध्याहार्यौ । यं सर्वतो ज्यायांसमतिशयेन प्रशस्यं वृद्धं वा महान्तमादित्यमग्निं वा अस्य यतुनस्य यततिर्गत्यर्थः, गमनशीलस्य तवं स्वभूतमण्डलस्य यदा त्वमग्निस्तदास्य यतुनस्यादित्यस्यैव केतुना कर्मणोदयलक्षणेन आदित्यमण्डलस्यैवोदयवेलायामुदितमात्रे मण्डले ऋषिर्वै स्वरतीत्यर्चतिकर्मा ऋषिस्तुत्यम् । चरतिरत्र शुद्धोऽपि

१—[ऋ० १।१६९।३] 'अम्यक् सा ते' इत्येव प्रतीकम् B. C.
२—शक्ति वा C.
३—अस्मै B. C.
४—अत्रायं पाठः सन्दिग्धः ।
५—अम्बुव मि B. अह्नमि C.
६—अटन्ति B. C.
७—[धा० ६।४५] ज्युन B.
८—किमयन्ति ( ति C. ) B. C.
९—'त्वं' इति नास्ति B.
१०—अन्यकर्तृकेऽपि क्रियापदे सति मध्यमपुरुषमेवात्र प्रयुङ्क्ते व्याख्याकारः । अयं च क्रमोऽस्यां व्याख्यायां बहुत्र दृश्यते ।
११—यादृश्य C.
१२—[ऋ० ५।४४।८] 'ज्यायांसम्' इत्येव प्रतीकम् B. C.
१३—अवर्णसार C. 'आर्षम्' इति नास्ति B.
*'०वाक्यताप्र०' इत्युचितम् ।
१४—अच्छावध्या C.
१५—महान्तं मात्येम B. न्तमात्येमग्निवो C.
१६—यतुसनस्य यततिर्गे B.
१७—तल C.
१८—स्वभूतं मण्ड B.
१४—यदास्वग्निस्तदा C.
१५—वतुनस्या B. C.
१६—'केतुना कर्मणा' इति नास्ति B.
१७—मात्र मण्डले C.
१८—ऋपिमपरं B, ऋषेमपरं C.

सोपसर्गार्थो द्रष्टव्यः। आहुतिप्रदानकर्मणोपस्थानं परिचरति यास्वग्निहोत्रहोमोपस्थानयागादिक्रियासु देवताभूतस्य स्तूयमानस्य नाम अभिधानं ते तव। नमनं वा प्रह्वीभावमार्गत्यं तव तासु त्वमिज्यसे चेत्यर्थः। यादृश्मिन् यादृश एव कामे यायि व्यत्ययेनायं कर्तरि चिण् द्रष्टव्यः, धत्ते। किम्? सामर्थ्यान् मर्तः। यादृश्मिन् इत्युद्देशाद् उद्दिष्टस्य च प्रतिनिर्देष्टव्यत्वात् तादृक्शब्दस्यार्थे तादृशमेव। अपस्यया अपः कर्म अप एव अपस्या स्वार्थिकस्तद्धितः, तया अपस्यया तेन परिचारेण कर्मणेत्यर्थः। विदद् विदेर्लाभार्थस्येदम्। विन्दति लभते यः। उकारोऽत्र चार्थे, यश्च स्वयमेव श्रद्धया न परेण प्रेरितः सन् वहते त्वां प्रति प्रापयति। किम्? सामर्थ्यादाहुतीः स्तुतीश्च सोऽलं पर्याप्तं यज्ञात्मनः कल्प करोति नेतरः।

जारयायीत्यनवगतम्। उर्वेर्विशेषणम्। तेन व्यत्ययेन नपुंसकतात्रानवगमः। ततश्चेदं नाख्याख्यातम्। जनेरन्यस्य वा धातोरेवंभूतस्य सम्भवाद् निर्धेतिप्रसङ्गतश्च। अन्ये तु जनेरत्यन्तानवगतमाख्यातमेतदिति मन्यन्ते। ततश्च जारयायि अजायतेत्यवगमः।

उदाहरणम्—

> सास्माकेभिरेतरी न शूषैरग्निः ष्टवे दम आ जातवेदाः।
> द्रुन्नो वन्वन् क्रत्वा नार्वोस्रः पितेव जारयायि यज्ञैः॥

भरद्वाजस्य। स आस्माकेभिरस्मदीयैः पुत्रपौत्रादिभिर्ऋग्भिर्वा। एतरी न एताऽत्र सततगामित्वादतिथिरुच्यते। प्रथमार्थे चेयं सप्तमी, गन्तेव सततगामीव अतिथिर्गृहस्थैः शूषैः शूषमिति सुखनाम सुखैः सुखहेतुभिः। कैः? सामर्थ्यात् स्तोत्रैः। अग्निः स्तवे व्यत्ययेनेदं कर्मणि प्रथमैकवचनस्य स्थाने उत्तमैकवचनं द्रष्टव्यम्, स्तूयते। दमे यज्ञे तद्गृहे आकारः स्तवे इत्येतेन सम्बध्यते, आभिमुख्येन मर्यादया वा यथाशास्त्रं स्तूयते। जातवेदाः

१–प्रददत कर्म B. C.
२–णोऽवस्थानाद B.
३–योगादि B. C.
४–'भूत' इति द्विर्लिखितम C. 'भूता' इति B.
५–स्तूयमानमभिधानम् B.
६–इदं पदं सन्दिग्धम्।
७–यया य ( य C. ) स्मिन B. C.
८–स्मन B.    ९–यादृस्मिन B.
१०–'द् दा' इति त्रुटितम C.
११–विदन् विन्मतोर्लाभा B.
१२–लभन्ते B. C.
१३–नैतरी जरया B.
१४–प्रविरो C.
१५–अत्र 'निधान' इति स्यात्।
१६–[ ऋ० ६।१२।४ ] 'सास्माकेभिः' इत्येव प्रतीकम् B. C.
१७–भारद्वाजस्य B. C.
१८–'भि' इति त्रुटितम् C.
१९–हे B. तद्दे C. 'तद्गृ' इति B. पुस्तके 'दगृ' इति च C. पुस्तके त्रुटितम्।
२०–स्तन्य B. स्तय C.
२१–'स्तू' इति त्रुटितम् B. C.

जातविद्यो जातधनो वा । द्रवणः काष्ठाशः काष्ठमक्ष इत्यर्थः । धन्वन् प्रस्वा नार्वा धन्वन्निति 'धन धण संभक्तौ' इत्यस्य रूपम् । ऋत्वेति कर्मनाम, अर्वेत्यश्वनाम । कर्मणैव शीघ्रगमन-लक्षणेन संभज्यमानोऽर्वः शीघ्रं गच्छन् स्तूयते तद्वदित्यर्थः । उत्रः पितेव उपमानान्तरं चेदम् । उस्र इति गोनाम यथा च गौर्बलीवर्दः पिता गोपयिता स्वापत्यानां पालयिता वा स्वकर्मणा स्तूयते तद्वत् । समानप्रकरणेन च निर्गातादेव इष्यन्ते तद्भूमिप्रचाख्यत्वं कथमिति चेत् ? उच्यते । आस्माकेभिरिति स्तूयते अभ्ववदतिथिवद् बलीवर्दवदिति एता-वत्येव परिसमाप्तं वाक्यम् । इदन्तु वाक्यान्तरं जायायि" यज्ञैरिति । अजायत जायते अग्नि-राहवनीयात्मना यज्ञेषु यज्ञैर्वा सहेति ।

अग्निरित्यनवगतम् । अग्रगमनेनेत्यवगमः । अर्हार्यो वा अमाहीं अग्निया इत्यवगमः । अथवा अग्रमित्येतच्छन्दरूपमनर्थकमुविबन्धं प्रत्ययान्तमाददीत अग्नेमैवाग्निया आहुता इत्यर्थः । उदाहरणम्—।

[ इत्येकादशस्या- ( पष्ठस्या- ) ध्यायस्य
पञ्चदशः खण्डः ]

---

१–द्रवणः B. द्रवत्रः C.
२–[धा० १।४६४,४६५]
३–कर्मणैव C.
४–मानोऽश्वः B. ५–श्रूयते B.
६–चक्रे B. वते C.
७–सन्दिग्धमिदं पदम् ।
८–केऽपि हि नि स्तू B. के हि नि C.
९–अती ( ति C. ) थवत् B.
१०–चेत् तावत्येव B.
११–'यि' इति त्रुटितम् B.
१२–'जायत' इति द्विर्लिखितम् C.
१३–अमाह्यः B. C.
१४–अनर्थान्तरमिवबन्धं ( बं C. ) B. C.
१५–अग्नियदावाग्नियाः B. अग्निया एवाग्नियाः C.
१६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ षोडशः खण्डः ][1]

अयं वो यज्ञः ऋभवोऽकारि यमा मनुष्वत् प्रदिवो दधिध्वे ।
प्र वोऽच्छा जुजुषाणासो अस्थुरभूत विश्वे अग्रियोत वाजाः ॥[2]

वामदेवस्य । अयं वो युष्माकं यज्ञः हे ऋभवः, ऋभुप्रभृतयः, अकारि कृतोऽस्माभिः । यम् आकारो दधिध्व इत्येतेन सम्बध्यते, मर्यादया मनुष्वत् मनुष्यवत् प्रदिवः पुराणामेतत्, पुराणम् अस्मत्पूर्वैरपि कृतपूर्वम् आदधिध्वे मर्यादया आत्मनि धारयथ अनुभवथेत्यर्थः। किञ्च वो युष्मदर्थमित्यर्थः । अच्छा भर्त्यर्थे । अस्थुरित्येतेन च अभिप्रशब्दयोः सम्बन्धः । अभिप्रास्थुः अभिप्रस्थितानि । कानि ? सामर्थ्यात् हवींषि तानि जुजुषाणासः सेवमानाः । अभूत लोडर्थे लुङ्, भवतेत्यर्थः । विश्वे सर्वे अग्रिया अग्रयानेनाग्रोर्हा अग्रभूता वो यूयम् उत हे वाजा ऋभु-विभ्वा भर्जे इत्येते त्रयोऽन्त्येन चान्त्येन चोपलक्षितौ उच्यन्ते । जोषयमाणा भवत । अर्हा-श्रितौ सम्पादितां ति ये ह्यग्रमर्हन्ति ते सम्पद्यन्तेऽग्रियाः ।

चन इत्यनवगतम् । अनमभिधेयम् । पचता इत्युभयं चेदं पचेर्धातोः । अत आह पचेतिर्नामीभूत इति । तत्र चन इति पचेरेव दूरं विकृतं पच्यमानत्वात् पचनमिति प्राप्ते चनः । पचेतेत्याख्यातसरूपनामविभक्तेश्चकारः । पक्व पक्वौ पक्वा इति येत्यवगमः । पदान्तरसम्बधसामर्थ्याद् विशेषनिश्चयः । उभयोरेकमुदाहरणम्—

अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम् ।
प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः[25]॥

---

१-आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२-[ऋ० ४।३४।३] 'अयं वो यज्ञः' इत्येव प्रतीकम् B. C.
३-यहं B. C. ४-यः B.
५-'मनुष्वत्' इति त्रुटितम् B. मनुष्यक् C.
६-भर्थे C.
७-अस्थुरित्ये B. C.
८-जुजुषाणाः B. ९-अभुत B. C.
१०-भतेत्यर्थः B. C.
११-नामहाः B. C.
१२-'वा' इति नास्ति B. १३-भे C.
१४-अत्र 'वाज' इति युक्तं स्यात् ।
१५-अत्रायं नकारोऽधिक एव प्रतीयते ।
१६-क्षितोच्यते B.
१७-अयं पाठः सन्दिग्धः ।
१८-वतेर्धातोः B. C.
१९-वचतिर्ना C.
२०-पचिरेव B. C. २१-वचनमिति C.
२२-वचनं B. वचनः C.
२३-पचनेत्या B. वचनेत्या C.
२४-पक्वे B. पक्वो C.
२५-[ऋ० १०।११६।८] 'अद्धीदिन्द्र' इत्येव प्रतीकम् B. C.

अग्नियुतस्याग्नियूपस्य वा स्थूरपुत्रस्यार्षम् । अद्धि भक्षय इत्यपदपूरणः, हे इन्द्र प्रस्थित त्वां प्रति प्रस्थितानि प्रस्थितसंज्ञकानि या इमा इमानि हवींषि । चनोऽन्नं तच्च दधिध्वे त्वमवधारय उदरे प्रक्षिपेत्यर्थः । पचैता पक्वानि सवनीयपुरोडाशादीनि । उत सोमम् अपि च सोमं ग्रहादिसंस्थम् । किञ्च प्रयस्वन्तः प्रय इत्यन्ननाम अन्नेन हविराख्येन तद्वन्तः सन्तो वयं प्रतिहर्यामसि हर्यतिः प्रेप्साकर्मा, प्रतिकामयामहे त्वा त्वाम् । सत्याः सन्तु यजमानस्याभिलषिताः कामा इति ।

अन्यत्रापि पचने पचताशब्दप्रवृत्तौ प्रसिद्धिं दर्शयन्नाह तं मेदस्तं इत्यादि ।

अग्निं मन्यवशोः सूक्तवाके ते वृषोऽयमग्निमद्य होतारमवृणीत वृतवानयं यजमानः पचन् पक्तीः कर्मणि किन्, पक्तव्यानि हृदयादीनि पचंश्च पुरोडाशं गृह्णंश्चाग्नये आज्यभागार्थमाज्यं गृह्णन् सोमायाज्यभागार्थमेवाज्यं बध्नन् बध्नंश्चाग्नीषोमाभ्यामग्नीषोमयोरर्थाय छागः सूपस्था सूपस्थानश्चास्य यजमानस्य देवो वनस्पतिरभवद् अभूदग्नये अग्न्यर्थेनाज्येन सोमाय सोमार्थेन चाज्येनैवाग्नीषोमाभ्यां तु छागौ । हेतौ सर्वत्र तृतीया, अनेन कारणेन सूपस्थानः सुपस्थानो वनस्पतिरित्यर्थः । मेदस्तन: प्रतिशब्दोऽग्रहीष्टामित्यनेन सम्बध्यते, पचनं पक्वमन्नमग्रहीष्टां प्रतिगृहीतवन्तौ अवीवृधेतां वर्धितवन्तौ वृद्धिं च शरीरेण वीर्येण वा प्राप्तवन्त इत्यर्थः । पुरोडाशेन पशुपुरोडाशेन । किञ्च परस्तात्मा इति तस्मादर्थस्य श्रुतत्वादित्यध्याहार्यम् । यस्माद्वा हे अग्ने ऋषे दृष्टः सर्वार्थानामार्षेय ऋषेः पुत्र ऋषीणां नपात् । अत्र वृणीतवान् अयं यजमानः । किमर्थम् ? उच्यते । बहुभ्यो बहूनाम् आङ् मर्यादायाम्, संगतानाम् । केषाम् ? सामर्थ्यात् कर्माङ्गदेवतानामर्थाय एव मम देवेषु द्वितीयार्थ एषा सप्तमी, देवान् सुवार्थं, उभयत्र तृतीया द्रष्टव्या । वसुभिर्धनैर्हविराख्यैर्वीर्यवरणीयैः.............या यानि देवता देवदानानि अदुर्दत्तवन्तः ?

१–रैपुत्र B स्थुरपुत्र C.

२–'चत्र' इति त्रुटितम् B. दधिश्च वाधारय C.

३–पक्षधा B, पश्चता C.

४–प्राहादि C.

५–महे B. 'हर्यतिः' इति त्रुटितम् B.

६–सन्तः B. सन्त C.

७–हस्तलिखितपुस्तकयोर्मन्त्रपाठो न लिखितः । मैत्रायणीसंहिताया मूलपाठमवलोक्यैवायं सन्दर्भः शक्यते सम्पादयितुम् । B. पुस्तकपाठो यथादृष्ट एवास्माभिरत्रोल्लिखितः । C. पुस्तके पत्रद्वयं च पश्चाभद्रम् । अत्रैव मैत्रायणीसंहितामवलोक्य मन्त्रपाठो लिख्यते ।

"तं मेदस्तः प्रतिपचताभीच्छामवीवृधेतां पुरोडाशेन त्वामद्य ऋष आर्षेय ऋषीणां नपादवृणीतायं यजमानो बहुभ्या आ संगतेभ्य एष मे देवेषु वसु वार्या यक्ष्यत इति ता या देवा देवदानान्यदुस्तान्यस्मा आ च शास्वा च गुरस्वेषितश्च होतरसि भद्रवाच्याय प्रेषितो मानुषः सूक्तवाकाय सूक्ता ब्रूहि ।" [मैत्रा० सं० ४।१३।९]

यजमानाय तेनान्यस्मै आशास्व आभिमुख्येन शास्व शाधि कथयेत्यर्थः । आ च गुरस्व 'गुरी उद्यमने' आभिमुख्येन उद्यम्य चार्पयितुमर्पयेत्यर्थः । इषितश्चासि होतः, अर्थिम्यः किमर्थम् ? भुवाच्याय भद्रस्याशीश्रुतेः कल्याणस्य सूक्तवाकवचनस्यार्थाय त्वमपि मानुषो होता मया प्रेषितः सूक्तवाकाय एतज्ज्ञात्वा सूक्ता सूक्तं सुवचनं ब्रूहि । सात्त्वं सत्त्वं लिङ्गसंख्यायोगि द्रष्टव्यम् । तत्सम्बन्धिना त्वं त्वत्सबन्धं च दर्शयति । मेदसश्च पशोश्चेति वचनात् । इत्येतत्प्रसङ्गाद्यत्र ह्येकवचनार्थ इति आकारस्य संमोहहेतोरभावात् प्रसिद्धं तदसन्दिग्धमेकवचनमिति[1] ।

पुरोळा अग्ने पचतस्तुभ्यं वा घा परिष्कृतः ।
तं जुषस्व यविष्ठ्य[2] ॥

विश्वामित्रस्य । पुरोळा अग्ने पचतः पक्वः । तुभ्यं तवार्थाय[3] वा । घेति पदपूरणः । परिष्कृतः संस्कृतश्च । अतस्त[4]ज्जुषस्व सेवस्व । हे यविष्ठ्य स्वार्थिकस्तद्धितः, अतिशयेन युवन्[5] ।

शुरुध इत्येनवगतम् । आपोऽभिप्रेताः[6] । शुचं संरुन्धन्तीति[7] निर्वचनम् । शुक्शब्दस्यान्त्यलोपेन इति दर्शयति । शुरुध[8] इत्यवगमः । दीप्तिं तापं वा रुन्धंत्यग्नेर्मेन्त्तस्य[9] वा घर्मान्तेस्य[10] । उदाहरणम् 'ऋतस्य हि'[11] इति । प्रसङ्गेन चैतद् व्याख्यास्यते[12] ।

अमिन इत्यनवगतम् । अमितमात्र इत्यवगमः । अपरिमाण इत्यर्थः । अपरिगणितकालो वा[13] महानित्यर्थः । मात्रवचनमभ्यमितो वा[14] मिनोतिर्वधकर्मा, अहिंसितः केनचिद् अभ्यमितः[15] सन् अमितः । उदाहरणम्—

महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग्वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत्[16] ॥

भरद्वाजस्य[17] । महानिन्द्रो नृवत्[18] मनुष्यवद् यथा राजा अन्योऽपि कश्चिदीश्वरो मनुष्यस्तद्वत्[19] । आचर्षणिप्राश्चर्षणयो मनुष्याः 'प्रा पूरणे' आकार उपसर्गश्छान्दसत्वाद् अस-

१—यथा पुस्तके दृष्टं तथैवास्माभिरत्र लिखितम् ।
२-[ऋ० ३।२८।२] 'पुरोळा' इत्येव प्रतीकम् B.C
३—तेवार्थये B.
४—'तत्' इति नास्ति B. 'तं' इति पाठो युक्तः ।
५—इति मत्र C.
६—अपोऽभि C.
७—शुचश्छदधीति B. ऽशुचश्छधीनि C.
८—शुरुप B. C.
९—रुन्धशुत्याने: B. रुन्धशुन्य C.
१०—'घर्मा इति द्विर्लिखितम् B.C. घर्मान्त तस्य B.
११—[ ऋ० ४।२३।८ ]
१२—[ निरु० १०।४१ ]
१३—'न' इति त्रुटितम् C.
१४—'वा' इति नास्ति B.
१५—अत्र 'अभ्यमितः' इति स्यात् ।
१६—[ऋ० ६।१९।१] 'महाँ इन्द्रः' इत्येव प्रतीकम् B.C.
१७—भारद्वाजस्य C.
१८—निर्न्न B. निरमनवत् C.
१९—स्यमद्रत C.
२०—[ पा० ३।५१ ]

मस्तोऽपि प्रातिपदिकेनैव संबध्यते। तत 'आतो मनिन्' इत्येवं विच् द्रष्टव्यः। स्तोतॄणां यज्वनां मनुष्याणां च पूरयिता कामैः। उत द्विवर्हा वृहेर्वृद्ध्यर्थस्येदं रूपम्। द्वयोः स्थानयोर्वीर्येण परिवृद्धोऽपि वर्हा ऋतुमयोर्धेयोरुच्यते। मध्यमे च स्थानेऽन्तरिक्षे उत्तमे च दिवि। तस्याः सर्वदेवानां साधारणत्वात्। देवराजत्वेन च प्रसिद्धेः। इतिहासपक्षे तु नान्योऽन्तरिक्षे वीर्येण परिवृद्धः शक्नोति वर्धितुं नापि दिवि आदित्याद् रसान् परिग्रहीतुम्। उत द्विवर्हा अमिनोऽपरिमिताः सहोभिः शारीरैः सांयोगिकैर्वा वलैर्महावल इत्यर्थः। अथवा अभ्यामितोऽहिंसितपूर्वः सहोभिर्वलैः परकीयैः। अस्मद्र्यक् 'विष्वग्देवयोश्च टेरद्र्यञ्चतौ' इत्येवमयमस्मदोऽञ्चतावद्र्यादेशः। तत्र कर्माधिकारानस्मान् प्रत्याञ्चित आगतोऽस्मदभिमुख इत्यर्थः। वावृधे वर्धते वीर्याय वीर्यकर्मणे वृष्ट्यादिकाय। उरुर्वीर्येण विस्तीर्णः पृथुः शरीरेण महाकायः। सुकृतः कर्तृभिः अनेकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहार्यौ। करोतिश्च क्रियासामान्यवचनः। क्रियाविशेषः स्तुतो द्रष्टव्यः। य ईश्वरः स सुष्ठु स्तुतः कर्तृभिर्भूत् लोडर्थे लुङ्, भवतु इत्याशास्महे।

जज्झतीरित्यनवगतम्। आपोऽभिधेयाः शब्दकारिण्य इति मेघात् पतन्त्यो जज्झतीरित्येवंरूपं शब्दं कुर्वन्तीरित्येवंरूपशीलधर्माः। ततश्चानवगतं शब्दानुकरणनिमित्तकम्। अतस्तदेषां नामधेयमित्यर्थः। उदाहरणम्—

आ रुक्मैरा युधा नर ऋष्वा ऋष्टीरसृक्षत।
अन्वेनाँ अह विद्युतो मरुतो जज्झतीरिव भानुरर्त त्मना दिवः॥[14]

श्यावाश्वस्य। आ रुक्मैः आ युधा एकोऽप्याकारोऽसृक्षतेत्येतेन सम्बध्यते, अपर अर्त इत्येतेन। आरुक्मैरिति अंसेषु वा ऋषय उत्सुखादयो वक्षस्सु रुक्मा इति दर्शनाद् मरुतामुरस्स्थः। आसृक्षत 'सृज विसर्गे' आभिमुख्येन मेघस्योपरि विसृजन्ति विक्षिपन्ति। अन्वेनाँ अह अग्निरेति पश्चाद्भावे अहेति विनिग्रहार्थीयत्वादेवशब्देन समानार्थः। अन्वेव

१-[ पा० ३।२।७४ ]
२-'प्र द' इति त्रुटितम् B.
३-'यं' इति त्रुटितम् B.
४-अयं पाठः सन्दिग्धः।
५-उत्तमे च दीपि ( वि C. ) B C.
६-इतिहासे तु प्रभ्यन्यो ( न्यो C. ) B. C.
७-'वा' इति नास्ति B.
८-[पा० ६।३।९२] देवयाद्र्यञ्चतौ B C.
९-च (वा C.) द्र्यादेशः B. C.
१०-अमेत्रकवाक्य B. अमत्रैकवाक्य C.
११-यलशब्दो वाच्या C.
१२-भिर्भूक् C. १३-'स्त' इति त्रुटितम् B. C.
१४-[ ऋ० ५।५२।६ ] 'आ रुक्मैः' इत्येव प्रतीकम् B. C.
१५-आरुक्मैरिति अंसेषु व C. सन्दिग्धमिदं वाक्यम्।
१६-आसुसृक्षत B. C.
१७-[ धा० ६।१३३ ]
१८-अन्वीति B.

पनान् महत पतेत् शक्तिविक्षेपलक्षणव्यापारादनन्तरमेवेत्यर्थः । जञ्झतीरिवापो यथैव मेघस्था आप आयन्ति ततस्तथैव विद्युतः स्वभूता भाकुर्दीवरिति छान्दसत्वाद् वर्तमाने लडात्मनेपदम् । आगच्छति खना 'मन्त्रेष्वाङ्यादेरात्मनः' इत्याकारलोप आत्मनेव । कुत आगच्छति । दिवो दीताद्न्तरिक्षात् ।

अप्रतिष्कुत इत्यनवगतम् । स्कवतेरेपोपदेशत्वात् सत्वाभावः । अप्रतिस्खलित इति । उदाहरणम्—

स नो वृषनमुं चरुं सत्रादावन्नपा वृधि ।
अस्मभ्यमप्रतिष्कुतः ॥

मधुच्छन्दसः । स नो वृषन् नं इति तादर्थ्ये चतुर्थीयं वृषन्नित्येतेन सम्बध्यते, अस्मदर्थं वर्षितः, यो हि सर्वार्थं वर्षति वर्षत्यसौ मधुच्छन्दोर्थम् । अत एव इन्द्र आमन्त्र्यते स नो वृषन्निति । अमुं चरुमिति मेघनाम मेघं सत्रादावन् सत्रेति सत्यनाम संततपर्यायो वा तदुपपदस्य ददातेर्विनि रूपम् । हे सत्य सततं वा दातरित्यर्थः । अपावृधि अपावृणु उद्घाटयै अस्मभ्यमस्मदर्थम् । अप्रतिष्कुतः । 'स्कुञ् आप्रवणे' आप्रवणमागमनं प्रवर्तेत्यर्थत्वाद् अन्येनाप्रतिगतोऽप्रतिष्कुतो युद्धे अन्येनाप्रतिनियुक्तपूर्व इत्यर्थः, अप्रतिस्खलितपूर्वो वा । अत्र च स नो वृषन्निति तच्छब्दश्रुतेः प्रत्यक्षकृतत्वाच्चास्य मन्त्रस्य अप्रतिष्कुत इति चानामन्त्रितत्वादेकवाक्यतायै यच्छब्दोऽध्याहार्यः । यस्त्वमप्रतिष्कुतः सोपावृधीति ।

शाशदान इत्यनवगतम् । 'शदूल शातने' इत्यस्य यङि छान्दसत्वाच्च तस्य लुकि रूपम् । शाशायमौन इत्यवगमः । उदाहरणम्—

१—एषा शक्तिविक्षेपलक्षणा व्यापा B. C.
२—रिवा यम B. जज्ञः मानिरिवाप C.
३—'गच्छति' इत्येव द्विर्लिखितम् B. C.
४—[ पा० ६।४।१४१ ]
५—च्छतीव न दीतान् B. दिवः न दीता C.
६—त्वार्थसत्वा C. अयं पाठः सन्दिग्धः । अत्र कदाचित् 'स्कवतेरपोपदेशत्वात्' इति पाठः स्यात् ।
७—[ ऋ० १।७।६ ] 'स नो वृषमुं' इत्येव प्रतीकम् B. C.
८—वृषणे ( नै C. ) इति B. C.
९—वर्षिता B. १०—योभिवर्षा B. C.
११—च्छन्दो अर्थम् B.
१२—वर्षमिति B. C.
१३—'घ' इति द्विर्लिखितम् C.
१४—स्वयम् B. C.
१५—पादातरित्यर्थः C.
१६—उद्घट जर्जय B. C.
१७—इति कुतः B. अतिष्कुतः C.
१८—[धा० ९।६] आ (मृ C.) ङ् अत्र प्रवणे B.C.
१९—'आ' इति नास्ति B. C.
२०—[ धा० ६।१३७ ] शदनु शादने C.
२१—यन्दि छान्द C.
२२—लुकि (टि) रूपम् C. २३—शाशदानः B. C.

अभि सिध्मो अजिगादस्य शत्रून् वि तिग्मेन वृषभेणा पुरोऽभेत् ।
स वज्रेणासृजद् वृत्रमिन्द्रः प्र स्वां मतिमतिरच्छाशदानः ॥

हिरण्यस्तूपस्य । सिध्मः साधयिता इन्द्रः अभ्यजिगाद् अभिगतवान् । किम् ? अस्येवेन्द्रस्य शत्रून् । अथवा सिध्म इति वज्र उच्यते । साधयिता च वज्रोऽभ्यजिगाद् अस्येन्द्रस्य शत्रून् अभिगम्य अभिगतेन च तेन वज्रेण तिग्मेन तीक्ष्णेन वृषभेण वर्षित्रा तेषां शत्रूणां स्वभूताः पुरो नगराणि अभेत् पौरस्त्यो विरिहोपादीयते व्यभेद् व्यभिनद् विविधं भिन्नवान् । किञ्च संवज्रेणासृजत् संसर्जितवान्, सम्बन्धितवानित्यर्थः । कम् ? वृत्रमसुरम् । किञ्च प्रस्वां मतिमतिरत् मतिरिति मन्यतेः स्तुतिकर्मणो रूपम् । अतिरदित्यपि तिरतिर्वृद्ध्यर्थः, आत्मीयां मतिं प्रातिरत् प्रकर्षेणावर्धयत् । शाशदानः पुनः पुनरसुरांस्तत्पुरश्च शातयन् यो हीदृशं कर्म पुनः पुनः करोति स तत्कर्मसम्बन्धादात्मनः स्तुतिं वर्धयति । अथवा मतिः शातनविषया प्रज्ञा वोच्यते स्वां प्रज्ञामवर्धयदिति । यो हि यन्नित्यं करोति तस्य तदभ्यासनिमित्ता प्रज्ञा वर्धते ।

इति निरुक्तविवरणसमुच्चये एकादशस्य [ षष्ठस्याध्यायस्य ]
तृतीयः पादः ।
[ षोडशश्च खण्डः
समाप्तः । ]

---

१–[ ऋ० १।३३।१३ ] 'अभि सिध्मः (ध्मC.) इत्येव प्रतीकम् B. C.
२–'च तेन' इति नास्ति C.
३–वृषभो वर्षिता B. 'वृषभेण' इति युक्तम् ।
४–पर. B. पुरा C.
५–अद्देत B. C.
६–पिरि ( ऽपि इ ) होश (वा C.) दीयते B. C.
७–व्यद्देत् B. C.
८–संसाजितवान् B. C.
९–'स्वामृति' इत्येव । 'मतिरत्' इति त्रुटितम् B.
१०–तेरम्र ( म्म C. ) तिक B. C.
११–अरादित्यवि B.
१२–आत्मीयाम्रर्ति B.
१३–प्रातिरन् B.
१४–र्येण वर्ध C.
१५–र्धयन् B.
१६–प्रज्ञा का ( कौ C. ) ल वर्धते B. C.
१७–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।

## अथ चतुर्थः पादः ।

सृप्र इत्यनवगतम् । सर्पणादिति निर्वचनम् । सर्पतीति सर्पण इत्येवं प्राप्ते सृप्रः । इदमपीतरदिति सृप्रशब्दस्य क्रियानिमित्तत्वात् सर्पिरादावपि वृत्तिं दर्शयति । एवं चानेकार्थत्वमपि । विशेषावगतिस्तु पदान्तरसम्बन्धसामर्थ्याद् द्रष्टव्या । तुल्येऽपि च क्रियायोगे रूढिर्व्यवच्छेदिकेत्याह सर्पिर्वेति । उदाहरणम्—

बृबदुक्थं हवामहे सृप्रकरस्नमूतये ।
साधु कृण्वन्तमवसे ॥

व्याख्यातः शेषो बृबदुक्थप्रसङ्गेन । करस्नाविति बाहुनामसु पठ्यमानस्यैव निर्वचनार्थमुपदेशः । कर्मणां प्रस्नातारौ 'वेष्टृ वेष्टने' वेष्टयितारौ कर्तारावित्यर्थः ।

सुशिप्र इत्यनवगतम् । तत्पुनरेतेन सृप्रेण व्याख्यातम् । सृप्रेणेवाद्यियापत्यादिना सुशिप्रशब्दो द्रष्टव्य इत्यर्थः । हनू नासिके वेत्यभिधेयमाचष्टे ते ह्यन्न गन्धं च प्रति सृप्तौ भवतः । ते शोभने यस्य सः सुशिप्रः । उदाहरणम्—

त्विद्मा सखित्वमुत शूर भोज्य १ मा । ते ता वज्रिन्नीमहे ।
उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति ॥

अयमप्युक्तशेषः समस्मिन्निर्यत्र प्रसङ्गेन । यदुक्तं शिप्रे इत्युपरिष्टाद् व्याख्यास्याम इति तदिदं व्याख्यातं हनू नासिके वेति । अभिधेयप्रसङ्गेन हनुनासिकाशब्दौ निराह । हन्यते जिह्वया संगृह्यमिति हनुः । नासिका नसतेर्गतिकर्मणः । यद्वा नसतिर्नमतिकर्मा वा ।

---

१–अयं सर्वोप्यध्यायपादारम्भात्मकः पाठो नास्ति C.
२–सृपशब्द B. C.
३–'पि' इति त्रुटितम् C.
४–[ ऋ० ८।३२।१० ] 'बृहदुक्थं ( त्थं C. )' इत्येव प्रतीकम् B. C.
५–'त्या' इति त्रुटितम् B. C.
६–[ निरु० ६।४ ] बृहदुक्थ B. C.
७–[निघ० २।४] ८–पंमुपदेः B. C.
९–प्रस्तो (स्ता C.) तारौ B. C.
१०–[धा० १।२५६] वेष्ट वेष्टने C.
११–'न' इति त्रुटितम् B.
१२–'ते' इति नास्ति B. C.
१३–सृप्तो B. स्तस्तो C. १४–अ शोभने B.
१५–स्ता: B. स्त C. सृप्ते' इति युक्तं स्यात् ।
१६–सुशिप्राः B.
१७–[ ऋ०८।२१।८ ] 'त्विमा ( द्मा ) सखित्वम्' इत्येव प्रतीकम् B. C.
१८–[ निरु० ५।२३ ] १९–[ निरु० ४।१० ]
२०–अनू ( नु B. ) नासिके चेति B. C.
२१–अभिधप्रसंगमस्त्वनु C.
२२–अनुनासिकशब्दो B.
२३–सन्दिग्धमिदं वाक्यम् ।
२४–निर्गतिकर्मा B. C.

गच्छति प्राप्नोति वा गन्धं प्रति नमतीति वा नासिका। शिप्रशब्देन क्वचित् हनुः क्वचिन्नासिका सामर्थ्यात् क्वचिदुभयमभिधीयत इति। एतद्विषयप्रदर्शनायोदाहरणमप्याह–

मादयस्व हरिभिर्ये त इन्द्र वि ष्यस्व शिप्रे वि सृजस्व धेने।
आ त्वा सुशिप्र हरयो वहन्तूशन्हव्यानि प्रति नो जुषस्व॥

कुत्सस्यार्षम्। मादयस्व मादय तर्पयेत्यात्मानम्। स्वार्थे वा णिच् तृप्य वा। हरिभिरश्वैः सह ये ते तव स्वभूताः हे इन्द्र। केन प्रकारेण? उच्यते। विष्यस्व शिप्रे स्यतिरुपसृष्टो विमोचने शिप्रे अपि हनू इहोच्येते हविर्भक्षणाय हनू विमुञ्च प्रेरयेत्यर्थः। विसृजस्व धेने धाने इत्यस्यार्थो यथा भाष्यकारेणोक्तो दधातेर्धेनेति जिह्वोपजिह्विके इहापि ते ताभ्यां हि पीयते निवीयते चरलस्नयोरिति जिह्वोपजिह्विके अपि रसास्वादनाय विसृज प्रेरयेत्यर्थः। आकारो वहन्तु इत्येतेन सम्बध्यते। तदर्थं च त्वा त्वां हे सुशिप्र अत्र विकल्पेन समुच्चयेन चोभिधानम्। सुहनुः सुनसो वा शोभनोभये वा हरय आवहन्तु आनयन्तु। आनीतश्च सन् उशन् कामयमानोऽस्मदीयानि हव्यानि हवींषि भक्षय प्रति नो जुषस्व प्रतिसेवस्व नोऽस्मानभिलषितफलप्रदानेन। क्वचित्तु पदान्तरसम्बन्धसामर्थ्यात् शिप्रशब्देन शिरस्त्राणमुच्यते। 'शिप्रः शीर्षस्सुवितता हिरण्मयी' इति। सुशिप्रः सुशिरस्त्राण इत्यर्थः संभवति।

रंसु इत्यनवगतम्। रमर्णादिति निर्वचनम्। वर्णलोपादिना। रमणीयेष्वित्यर्थः। उदाहरणम्–

आ यन्मे अभ्वं वनदः पनन्तोशिग्भ्यो नामिमीत वर्णम्।
स चित्रेण चिकिते रंसु भासा जुजुर्वाँ यो मुहुरा युवा भूत्॥

सोमाहुतेरार्षम्। आ इत्ययं पनन्तेत्येतेन सम्बध्यते। पनदिति व्यत्ययेन पुंस्थाने

१–मभिधेयमिति B.
२–[ ऋ० १।१०१।१० ] 'मादयस्व' इत्येव प्रतीकम् B. C.
३–तर्पयितमानम् C. ४–हरिभिश्च C.
५–ह्रइन्द्र B. C. *–'०होच्येते' इति युक्तम्
६–धने B. C. ७–'तेर्धेने' इत्येव B. C.
८–जिह्वोप ( व C. ) जिह्वने ( के C. ) B. C.
९–ताभ्याः ( भ्यः ) C.
१०–वीयते B. C.
११–अभहन्तु B. C. १२–पुत्र B. C
१३–चयो ( नो C. ) भिधानं B. C.
१४–'सुहनुः' इति द्विर्लिखितम् C.
१५–'शो' इति द्विर्लिखितम् C. 'शोभनोभयो' इति युक्तम्।
१६–मुच्यके C. १७–[अनुपलब्धमूलमिदम्]
१८–अमरणादिति B. C.
१९–[ ऋ० २।४।५ ] 'आ यन्मे अभ्वं (अह्ना C) इत्येव प्रतीकम् B. C.
२०–वनन्ते B. C.
२१–'न' इति त्रुटितम् C. २२–य इति B.

नपुंसकता । मे मम स्वभूताः सामर्थ्याद् ऋत्विजः । अभ्वे महान्तो वनदः ऋत्विग्विशेषणमेतत्, वननीयस्य हविषो दातारः । आपनन्त इति मध्यमः प्रथमार्थे । वनतिः स्तुतिकर्मा । आभिमुख्येन स्तुवन्ति । यश्च उशिग्भ्यः मेधाविनाम्, एषा विभक्तिः षष्ठ्याः स्थाने । वशेर्वा उशिजः कामिन उच्यन्ते । तेषां मेधाविनां कामिनां वा । नौमिर्मीत मिनातिर्वधकर्मा न हिनस्ति वर्णं वरणं प्रार्थनां यथाप्रार्थितमर्थं ददातीत्यर्थः । स चित्रेण व्यत्ययेनेदं नपुंसकं स्त्रीलिङ्गस्य स्थाने । विचित्रया विचित्रया चिकिते ज्ञायते रंसु रमणीयेषु सर्वत्र चन्द्रादिरू दार्यात्मना । सप्तमीश्रुतेः स्थित इति शेषः । भासा दीप्त्या यश्च इन्धनक्षयात् जुर्णि जीर्णः । मधुमहौदक्षणेनैव आकारः पद्पूरणः, इन्धनमासाद्य युवा वरुणो भूद् भवति

द्विबर्हा इत्यनवगतम् । द्वयोरित्याद्यर्थवचनम् । विपरिवृढ इत्यवगमः, एकज्योतिरिति कृत्वा मध्यमे वैद्युतात्मना उत्तमे आदित्यात्मना । अयमपि पुरस्तात् उदाहरणम्—

महाँ इन्द्रो नृवदा चर्षणिप्रा उत द्विबर्हा अमिनः सहोभिः ।
अस्मद्र्यग् वावृधे वीर्यायोरुः पृथुः सुकृतः कर्तृभिर्भूत् ॥

अमिन इत्येतत्प्रसङ्गेन व्याख्यातम् ।

अक्र इत्यनवगतम् । आक्रामत्याक्रम्यते वेति आक्रमण इत्यवगमः । आत्र निर्वचनम् । प्राकारोऽभिधेयः । उदाहरणम्—

अक्रो न वव्रिः समिथे महीनां दिदृक्षेयः सूनवे भाऋजीकः ।
उदुस्रिया जनिता यो जजानापां गर्भो नृतमो यह्वो अग्निः ॥

विश्वामित्रस्यार्षम् । अक्रो न प्राकारः परचक्रं धारयति तद्वत् । वव्रि

१–नपुंसकता b. एतत्पदानन्तरं B. पुस्तके 'मेणि' इति C. पुस्तके च 'मे त्रि' इत्यधिकः पाठो वर्तते । कदाचिदत्र 'ये हि' इति स्यात् ।
२–अभ्वं B. C.
३–'तिः स्तुः' इति मुद्रितम् C.
४–उशीभ्यः B. C.   ५–धाविनाम्नः B. C.
६–उशीजः B.
७–'ममी ( मिम B. ) त' इत्येव B. C
८–विशेण B.   ९–भावात्मना B.
१०–दीप्या C.
११–'दि जुजुर्वान्' इति मुद्रितम् B. C.
१२–अयं पाठः सन्दिग्धः । अत्र कदाचित् रक्षणेनैव' इति पाठः स्यात् ।
१३–तरुणमभूत् B. C.
१४–'वि' इति नास्ति निरुक्तमुद्रितमूलपुस्तके
१५–[ऋ० ६।१९।१] 'इमां इन्द्रो नृवत्' प्रतीकम् B. C.   १६–[निरु० ६।१]
१७–अर्क C.   १८–गत्यक्रम्य B. C.
१९–[ऋ० ३।१।१२] 'अ ( आ B. ) क्रो न वव्रि (हिः C.) इत्येव प्रतीकम् B. C
२०–वहिः B. वह्निः C.
२१–मिषु ( इ C. ) स्तात्स्त्री B. C

वाध्र्यूश्वस्यार्षम् । यं त्वा पूर्वस्मिन्नपि काले ईडितो व्यत्ययेनायं कर्तरि, ईडितवान्ते तव वध्र्यूश्वो नामाहमृषिः समीधे समिन्धितवान् सन्दीपितवान् । हे अग्ने स इदमुपकल्पितं हविः स्तोत्रं वा जुषस्व सेवस्व । स नः स एव चास्माकं स्तिपाः 'अग्नौ प्रास्ताहुतिः' इत्यनेन प्रकारेणापां यज्ञानां पालयिता । उत अपि च भव । भव तनूपाः शरीराणां पालयिता । दात्रं दानं च रक्षस्व रक्ष । कतमद्दात्रम् ? यदिदं ते तव स्वभूतम् । अस्मे चतुर्थ्याः शे आदेशः, अस्मदर्थं सर्वदा देहि सम्यं मा कदाचिदपि न दाः इत्यर्थः ।

जवारे इत्यनवगतम् । जवमानरोहीत्यादयोऽवगमाः । उदाहरणम्—

तमिन्न्वे३व समना समानमभि क्रत्वा पुनती धीतिरश्याः ।
ससस्य चर्मन्नधि चारु पृश्नेरग्रे रुप आरुपितं जबारु ॥

वामदेवस्य । तम् ईं नु पादपूरणौ । तमेव प्रकृतं वैश्वानरमुत्तमस्थानम् । समनौ मानेयोश्चातदनुरूपेत्यर्थः, समानयोग्यमेव । अभ्युपसर्गोऽश्या इत्येतेन सम्बध्यते । क्रत्वा कर्मणा तत्परिचर्यारूपेण पुनती । कम् ? सामर्थ्यादस्मानेव । कासौ ? धीतिर्मतिरस्मदीया प्रज्ञा । अश्याः व्यत्ययेनायं प्रथमस्य स्थाने मध्यमः, अभ्यश्याद् व्याप्नुयात् तत्त्वतो जानीयादित्यर्थः । पुरस्तात् तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यस्य स्वभूतं जबारु इति सम्बन्धः । ससस्य सुप्तोपममेतत् । योऽयं निश्चलत्वात् ससः इव 'षस स्वप्ने' सुप्त इव । कः ? आदित्यः, ज्योतिरादित्यलोकः । तस्य पृश्नेरधि उपरि चर्मन् चरेरौणादिको मनिन् । तदन्तात् 'सुपां सुलुक्' इत्येवं तादर्थ्यचतुर्थ्या लुग्द्रष्टव्यः । चर्मणे चरणाय उदयास्तमय-

लक्षणाय चारु दीप्तम् अग्ने प्रथमं सृष्टिकालं तव रूपं रिपं इत्यस्य पृथिवीनाम्नश्छान्दस इकारस्य उकारः पर्यायान्तरं वा पृथिवीत आरोपितं देवैर्जैत्र जवरूपया गत्या जरयद्वा प्राणिनो वयो गिरन् वा रसान् रश्मिभिर्यदारोहति नभस्तदादित्यमण्डलम् ।

जरूथमित्यनवगतम् । जरूथमिति गृणातेर्धातोर्गतिकर्मणः । जरतेर्वा एवमर्थस्यैवार्चतिकर्मसु पाठात् । 'जॄवृभ्यामूथन्' इत्यौणादिक ऊथन् भावसाधनः करणसाधनो वा बाहुलकाद् द्रष्टव्यः । जरूथमिति नेदमवगतप्रदर्शनार्थम् । अस्यैवौणादिकत्वेन छान्दसत्वाविशेषात् । स्तुत्यप्रदर्शनार्थं तु गृणातेरुपक्षेपः । अवगमस्तु जरणं गरणमिति वा द्रष्टव्यम् । स्तोत्राभिधेयम् । उदाहरणम्—

त्वाम॑ग्ने समि॒धा॒नो वसि॑ष्ठो॒ जरू॑थं ह॒न्यक्षि॑ रा॒ये पुर॑न्धिम् ।
पु॒रु॒णी॒था जा॑तवेदो जरस्व यू॒यं पा॑त स्व॒स्तिभि॒ः सदा॑ नः ॥

वसिष्ठस्यार्षम् । त्वं हे अग्ने समिधानः सन्दीपयन् वसिष्ठो नाम ऋषिरात्मन एवायं परोक्षरूपेण जरूथं स्तोत्रं हन् हन्तेरन्तर्नीतण्यर्थस्य लङ्यडभावश्छान्दसत्वात्, अहन् गमितवान् गमयति वा स्तुतवान् स्तौति वेत्यर्थः । एतज्ज्ञात्वा राये धनाय यक्षि यज पुरन्धि बहुकर्माणं बहुप्रज्ञं वा । कम् ? समर्थ्यादात्मानं देवगणं वा पुरुणीथा स्तुतिस्ततस्तृतीयाया लुक्, बह्व्या च स्तुत्या हे जातवेदो जातधन जातप्रज्ञ वा जरस्व स्तूयस्व स्तुहि देवान् । किञ्च यूयं पात एकस्यैव पूजनार्थे बहुवचनम् पाहि । स्वस्तिभिरविनाशैः सदा सर्वकालं नोऽस्मान् ।

कुलिश इत्यनवगतम् । वज्रनामेत्यभिधेयवचनम् । कूलशातन इति शब्दसमाधिः कूलशातनः कुलिशः । मेघस्य पर्वतस्य वा समुच्छ्रिनाः प्रदेशाः कूलानीव शातन तेषाम् । उदाहरणम्—

---

१–रिव B. C. २–जपाद B. C.
३–'रूप' इति त्रुटितम् C.
४–गिनोः पयः B. ५–जृणाते B.
६–[ निघ० ३।१४ ]
७–[ उणा० २।६ ] जमॄ ( जृं C. ) ह्यामूढन् B. C.
८–ऊढन् B. C. ९–गढडमिति C.
१०–'त' इति त्रुटितम् C. अत्र 'अवगम' इति स्यात् ।
११–[ ऋ० ७।९।६ ] 'त्वामग्ने' इत्येव प्रतीकम् B. C.
१२–नामाभूपिः C.
१३–उपायं B. १४–जरुठं C.
१५–पूरणी वा B. C.
१६–अत्रायमकारोऽधिक एव ।
१७–स्तुनि C. १८–यूरं C.
१९–एतस्यैव B.
२०–अविनाशे B.
२१–भिधेयम (यः C.) शभिधे B. C.
२२–कुशशा B. C.
२३–म (C.) कुलानीव B C.
२४–तेषाम् C.

याष्प्यूथ्वस्यार्षम् । यं त्वा पूर्वस्मिन्नपि काले ईडितो व्यत्ययेनायं कर्तरि, ईडितास्ते तव यथूथ्वो नामाहमृषिः तेभीषे समिन्धितवान् सन्दीपितवान् । हे अग्ने स त्वमुपकल्पितं हविः स्तोत्रं वा जुषस्व सेवस्व । स नः स एव चास्माकं स्तिपाः 'असौ प्राक्ताहुतिः' इत्यनेन प्रकारेणापां यज्ञानां पालयिता । उत अपि च भव भव तनूपा शरीराणां पालयिता । दात्रे दानं च यस्य रक्षं । कतमद्दानेम ? यदिदं ते तव स्वभूतम् । अग्ने चतुर्थ्याः शे आदेशः अस्मदर्थे सर्वदा देह्यस्मभ्यं मा कदाचिदपि न दां इत्यर्थः ।

जवोर्ह इत्यनवगतम् । जेमानरोहीत्याद्योऽवगमाः । उदाहरणम्—

तमिन्वे ३ व संमना समानमभि क्रत्वा पुनती धीतिरश्याः ।
ससस्य चर्मन्नधि चारु पृश्नेरग्रे रुप आरुपितं जबारु ॥

वामदेवस्य । तमुं इदूं पादपूरणौ । तमेव प्रकृतं वैश्वानरमुत्तमस्थानम् । समनौ मानयोश्चातदनुरूपेत्यर्थः, समानयोग्यमेव । अभ्युपसर्गोऽश्या इत्येतेन सम्बध्यते । क्रत्वा प्रज्ञया तत्परिचर्यादिना पुनती । कम् ? सामर्थ्यादस्मानेव । कासौ ? धीतिर्मेनिरस्म-न्या प्रज्ञा । अभ्यश्याः व्यत्ययेनायं प्रथमस्य स्थाने मध्यमः, अभ्यश्यात् व्याप्नुयात् तस्वतो नीयादित्यर्थः । पुरस्तात् तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः । यस्य स्वभूतं जबारु इति सम्बन्धः । ससस्य लुप्तोपममेतत् । योऽयं निश्चलत्वात् ससं इव 'ससं स्वप्ने' सुप्त इव । कोऽसौ आसैष्टो ज्योतिरादित्यलोकः । तस्य पृश्नेरधि उपरि चर्मन् चरेरौणादिको मनिन् । तद्-गात् 'सुपां सुलुक्' इत्येवं तादर्थ्यचतुर्थ्या लुग्द्रष्टव्यः । चर्मणे चरणाय उदयास्तमय-

१–अथ स्यायम् C.
२–श्रियश्चो ( श्चो C. ) नामा: B. C.
३–समिधे B. C. ४–समिद्धितवान् B.
५–'स' इति नास्ति B. C.
६–[मनु॰ ३।७६]
७–यज्ञ B. यज्ञां C.
८–'भव' इति नास्ति B. C.
९–रक्षः ननूत (B.) पाद B. C. 'ननूत्वा:' इति सविसर्गः पाठो युक्तः प्रति
१०–रक्षः ... B.
११–कृतमद्दा ( वा B. ) नं B. C.
१२–यक्षेम B. C.
१३–देह्यस्मभ्यं C.
१४–नैदा B.
१५–जपाह C.
१६–जपमान B. C.
१७–[ऋ॰ ४।५।७] 'तमिन्वे' इत्येव प्रतीकम् B. C.
१८–त B. तः C.
१९–इपाद B. इदू एव C.
२०–'उत्तमस्थाने' इति द्विर्लिखितम् C.
२१–'समना' इति द्विर्लिखितम् C. 'समना' इति नास्ति B.
२२–'समानयोः' इति द्विर्लिखितम् C. अस्य वाक्यस्य पाठः सन्दिग्ध एव ।
२३ क्रासौ B, क्रासौ C.
२४–स इव स स्वप्ने B.
*–[धा॰ २।६८] धातुपाठेऽयं धातुः दोषरहितं दर्शयितुम् 'षस' इति मूर्धन्यादिः पठ्यते ।
२५–प्रकाशास्यष्टो C. अयं पाठः सन्दिग्धः ।
२६–सर्वधातुभ्यः मनिन् [ उणा॰ ४।१४५]
२७–[ पा॰ ७।१।३९ ]

## [ अथ अष्टादशः खण्डः । ]

तुञ्जे तुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः ।
न विन्धे अस्य सुष्टुतिम् ॥

मधुच्छन्दसः । तुञ्जे तुञ्जे दाने दाने । कस्य ? सामर्थ्याद् धृष्टैर्धनानां वा ये उत्तरे पूर्वेभ्यः प्रकृष्टतराः स्तोमा मदीया इन्द्रस्य वज्रिणः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तैरपि न विन्धे विदेर्लाभार्थस्येदं रूपम्, न लभे । अस्येन्द्रस्य सुष्टुतिं तैरपि नाशेषानिन्द्रगुणान् प्रकाशयितुं शक्नोमीत्यर्थः । एतदुक्तं भवति येऽपि दानपरितुष्टस्य ममात्यन्तमहान्तः स्तोमास्तेऽपीन्द्रस्य गुणैकदेशवर्तिनः समस्तगुणप्रकाशनमप्राप्ताः किं पुनरन्य इति ।

बर्हणा इत्यनवगतम् । परिबर्हणेति धात्वर्थकथनम् । धात्वर्थश्च वृद्धिर्हिंसा वा । निबर्हतेर्वधकर्मसु पाठात् । वृद्ध्यर्थस्य बृहेर्भूते कर्तरि ल्युट्, परिवृद्धः प्राप्तो महत्वो-पेतः । ततस्तृतीयैकवचने बर्हणेति प्राप्ते तृतीयायाः 'सुपां सुलुक्पूर्वसवर्णा' इत्याकारः । हिंसार्थे वा भावे ल्युट्, बर्हणं ततः पूर्ववद् विभक्तेराकारः । अतो बर्हणमित्यवगमः । सर्वथा बर्हणा इत्यनवगतम् । उदाहरणम्—

अर्चा दिवे बृहते शूष्यं वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः ।
बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥

सव्यनामापन्नस्येन्द्रस्यार्षम् । अर्चेतिः सामर्थ्यादुच्चारणार्थः । आत्मन एवायमन्तरा-त्मना प्रैषः । अर्च उच्चारय हे अन्तरात्मन् । दिवे बृहते तादर्थ्ये एते, दीप्तस्य महतश्चेन्द्रस्या-शूष्यं शूरं बलं ततो निमित्तार्थे यद् बलस्य निमित्तं बलवृद्धिकरमित्यर्थः । किं तत् ? वचः स्तुतिलक्षणम् । स्तूयमाना हि देवता वीर्येण वर्धन्त इति । उच्चारय प्रापय शूष्यं वच इति यस्येन्द्रस्य । किम् ? उच्यते । स्वक्षत्रम् इत्यपठितमपीह बलनाम द्रष्टव्यम् । स्वक्षत्रं बलं न पराश्रितं यस्य तदन्यपदार्थः । यस्येन्द्रस्य धृषतः परानभिभवतो धृषद् धृष्टं प्रगल्भं मनो यः

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ ऋ० १।७।७ ] 'तुञ्जे तुञ्जे' इत्येव प्रतीकम् B. C.
३—'दाने' इति त्रुटितम् C.
४—वटेः B.
५—विन्दे B.
६—सुष्टु किं B.
७—परितुष्टस्य C.
८—बर्हिणा C.
९—वर्धि B.
१०—[ निघ० २।१९ ]
११—भृति B.
१२—बर्हणे C. अयं पाठः सन्दिग्धः ।
१३—[ पा० ७।१।३९ ]
१४—इत्यकारः B. C.
१—[ ऋ० १।५४।३ ] 'अर्चा दिवे' इत्येव प्रतीकम् B. C.
२—इन्द्रस्य यस्य B C.

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन ।
स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक् पृथिव्याः ॥

हिरण्यस्तूपस्यार्षम् । अहन् हतवान् वृत्रं मेघं वृत्रनामानं चासुरम् । वृत्रतरं वर्ततेर्गत्यर्थस्य रूपम्, अतिशयेन वर्तारम् । व्यंसं विगतांसं विच्छिन्नसर्वाङ्गसन्धिबन्धनमित्यर्थः । व्यंसनामानं वापरमसुरम् । कः ? इन्द्रो वज्रेण । कीदृशेन ? महता वधेन वधकेन नित्यं हन्त्रा । अथवा हननमेव वधः प्रहारो वज्रस्तस्य करणं वज्रेण महता प्रहारेण हतवान् हतश्च सन् स्कन्धांसीव वृक्षाणां स्थूला अधोभागायताः शाखा जायन्ते ते स्कन्धा उच्यन्ते, तानि यथा स्कन्धांसि विवृक्णा विविधं छिन्नानि सन्ति तद्वत् । अहिर्मेघोऽयंतेः । अभिगन्ता वृत्राख्यो व्यंसाख्यश्चासुरः शयने शेतिरिह स्थानार्थः । आमाशयो जलाशय इति यथा । कथम् ? उपपृक् पृथिव्या उपेत्यैव समिलितस्य स्थाने समर्चिता पृथिव्यां भूमौ पतितस्तिष्ठतीत्यर्थः । हतो हि सन् मेघं उदकरूपेण भूमौ पतितस्तिष्ठति । स्कन्धो वृक्षस्य समास्कन्नं स्वमुपश्लिष्टं वृक्षे । इदमपीतरत् प्रास्यावयवरूपं काये आस्कन्नत्वात् इति । असुनप्रत्ययान्तः स्कन्धशब्दोऽस्ति । स्कन्धशब्दश्चाकारान्तः प्रसिद्धः । उभयं प्रदर्शितम् ।

तुञ्ज इत्यनवगतम् । तुजेर्हिंसार्थस्य चलनार्थस्य वा । वज्रोऽपि तुञ्ज उच्यत इत्याह तुञ्जतेर्दानार्थस्येति संवाल्यर्थस्यावगमं दर्शयति । तुजिर्हिंसायां तुजिश्चलने चेति पठ्यते । तेनास्यं दानार्थत्वमगमयंति । त्रितभावे रूपमुपपन्नमेव । उदाहरणम्— ।

[ इत्येकादशस्या- ( षष्ठस्या- ) ध्यायस्य
सप्तदशः खण्डः ]

---

१-[ ऋ० १।३२।५ ] 'अहन्वृत्रं' इत्येव प्रतीकम् B. C.
२-अहनवान् C.
३-सर्वाशसन्धि B. C.
४-'वं' इति त्रुटितम् B.
५-वधकेह B C.
६-कारणं B.
७-स्कन्धांसीव B. C.
८-स्थूलः अधोभागायता B. C.
९-अमतेः B.
१०-अहिगन्ता C
११-उपपृक् B. C.
१२-मेघा ( घ C. ) देक B. C.
१३-समास्कन्नं C.
१४-पीतरः B पीतरं C.
१५-प्रास्यवयव C. अत्र कदाचित् 'आस्यावयव' इति वा पाठो भवेत् । .
१६-स्कन्धस्थान B. स्कन्धस्थान C.
१७-असुद् B. असुत C.
१८-कारान्तः अन्तः प्रसिद्धः B. C.
१९-'ना' इति द्विर्लिखितम् C.
२०-साधात्व B. C.
२१-त्तेनास्या (स्या० B.) B. C.
२२-'गमः य' इत्येव 'ति' इति त्रुटितम् C.
२३-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ अष्टादशः खण्डः । ]

तुञ्जे तुञ्जे य उत्तरे स्तोमा इन्द्रस्य वज्रिणः ।
न विन्धे अस्य सुष्टुतिम् ॥

मधुच्छन्दसः । तुञ्जे तुञ्जे दाने दाने । कस्य ? सामर्थ्याद् वृष्टिधनानां वा ये उत्तरे पूर्वेभ्यः प्रकृष्टतराः स्तोमा मदीया इन्द्रस्य वज्रिणः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तैरपि न विन्धे विदेर्लाभार्थस्येदं रूपम्, न लभे । अस्येन्द्रस्य सुष्टुतिं तैरपि नाशेषानिन्द्रगुणान् प्रकाशयितुं शक्नोमीत्यर्थः । एतदुक्तं भवति येऽपि दानपरितुष्टस्य ममात्यन्तमहान्तः स्तोमास्तेपीन्द्रस्य गुणैकदेशवर्तिनः समस्तगुणप्रकाशनमप्राप्ताः किं पुनरन्य इति ।

वर्हणा इत्यनवगतम् । परिवर्हणेति धात्वर्थकथनम् । धात्वर्थश्च वृद्धिर्हिंसा वा । निवर्हतेर्वधकर्मसु पाठात् । वृद्ध्यर्थस्य वृहेर्भूते कर्तरि ल्युट्, परिवृद्धः प्राप्तो महत्वोपेतः । ततस्तृतीयैकवचने वर्हणेति प्राप्ते तृतीयायाः 'सुपां सुलुक्पूर्वसवर्णा' इत्याकारः । हिंसार्थे वा भावे ल्युट्, वर्हणं ततः पूर्ववद् विभक्तेराकारः । अतो वर्हणमित्यवगमः । सर्वथा वर्हणा इत्यनवगतम् । उदाहरणम्—

अर्चा दिवे बृहते शूष्यं वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः ।
बृहच्छ्रवा असुरो वर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥

सव्यनामापन्नस्येन्द्रस्यार्षम् । अर्चेतिः सामर्थ्यादुच्चारणार्थः । आत्मन एवायमन्तरात्मना प्रैषः । अर्च उच्चारय हे अन्तरात्मन् । दिवे बृहते तादर्थ्य एते, दीप्तस्य महतश्चेन्द्रस्यार्थं शूषं बलं ततो निमित्तार्थे यद् बलस्य निमित्तं बलवृद्धिकरमित्यर्थः । किं तत् ? वचः स्तुतिलक्षणम् । स्तूयमाना हि देवता वीर्येण वर्धत इति । उच्चारय प्रापय शूष्यं वच इति यस्येन्द्रस्य । किम् ? उच्यते । स्वक्षत्रम् इत्यपठितमपीह बलनाम द्रष्टव्यम् । स्वक्षत्रं बलं न पराश्रितं यस्य तदन्यपदार्थः । यस्येन्द्रस्य धृषतः परानभिभवतो धृषद् धृष्टं प्रगल्भं मनो यः

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १।७।७ ] 'तुञ्जे तुञ्जे' इत्येव प्रतीकम् B. C.
३–'दाने' इति मुद्रितम् C.
४–यते: B. ५–विन्दे B.
६–सुष्टु किं B.
७–परितुष्टस्य C.
८–वर्हिणा C. ९–वर्धि B.
१०–[ निघ० २।१९ ] ११–भृति B.
१२–वर्हेण C. अयं पाठः सन्दिग्धः ।
१३–[ पा० ७।१।३९ ]
१४–इत्याकारः B. C.
१–[ ऋ० १।५४।३ ] 'अर्चा दिवे' इत्येव प्रतीकम् B. C.
२–इन्द्रे यस्य B C.

स्वंबलेन शत्रून् घ्नन्[1] न कुतश्चिन्मनसा बिभेतीत्यर्थः। येन च बृहच्छ्रवा रथो हि पः इति तच्छब्दश्रुतेर्यच्छब्दोऽध्याहार्यः। बृहच्छ्रवाः श्रव इति धननाम महाधनोऽसुरो वृत्रोऽन्यो वा शम्बरः। वर्हणा वृहिर्वृद्ध्यर्थः, इन्द्रस्यैवेदं विशेषणं प्राप्तमहिम्ना परिवृद्धेनेन्द्रेण। अथवा निवर्हयतेर्वर्हणा हिंसोच्यते। तेन[2] कृतः। कदा कृतः? उच्यते। पुरो हरिभ्यां प्राग् हरिभ्यां प्राप्ते दूरस्थेनैव[3] सतेत्यर्थः। कीदृशः कृतः? उच्यते[4]। वृषभो वर्षिता रुधिरौघस्य सर्वतः क्षारयन्[5] क्षतजं व्रणजमित्यर्थः[6]। न चैतत् सुकरम्। यतो रथो हिशब्दो यस्मादर्थे यस्माद्रथ ईहिता प्रतिमुखमभिगन्ता स[*] अत्यन्तशूर इत्यर्थः।

ततनुष्टिरित्यनवगतम्[7]। ततो नुन्नमित्यवगमः। ततो धर्मसन्तानादप्रिहोत्रादेः कर्मणो नुन्नोऽपेतः[8]। ततो नुन्नः सन् ततनुष्टिः। अथवा ततन् इत्येतत् शब्दरूपं तनोतेर्भोगसन्तानं वा। उष्टिशब्दो[10] वशेः कान्तिकर्मणः। भोगसन्तानं वष्टीति ततनुष्टिः[11]। विषयभोगसन्तानकाम इत्यर्थः। उदाहरणम्—।

[इत्येकादशस्या-(षष्ठस्या-) ध्यायस्य

अष्टादशः खण्डः[12]]

---

१–'न' इति नास्ति B. 'न' इति नास्ति C.
२–'ते' इति त्रुटितम् B. C.
३–दूरस्तेनैव B. C.
४–उच्यन्ते C.
५–दारयन् C.
६–व्रणज C. * 'सोऽस्य॰' इति युक्तम्।
७–ततुष्टिमित्यन C.
८–'नु' इति त्रुटितम् C.
९–अवेतः C.
१०–उपिशब्दो B. C.
११–ततनुष्टिम् B. C.
१२–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ एकोनविंशः खण्डः । ]

यो अस्मै घ्रंस उत वा य ऊधनि सोमं सुनोति भवति द्युमाँ अह ।
अपाप शक्रस्ततनुष्टिमूहति तनूशुभ्रं मघवा यः कवासखः ॥

संवरणस्य प्राजापतेः पुत्रस्यार्षम् । यो यजमानः । अस्मै इन्द्राय । घ्रंसे दिवा वा य ऊधनि ऊधनीति रात्रिनाम रात्रौ सोमं सुनोति सर्वदा यजत इत्यभिप्रायः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । स भवति द्युमान् दीप्तिमान् ऐश्वर्ययुक्त इत्यर्थः । अहेति पदपूरणो विनिग्रहार्थीयो वा एवार्थे, भवत्येव दीप्तिमान् । अन्यस्तु शक्रः शक्तं इन्द्रः । ततनुष्टिं ततोऽनुष्टधर्माणं इन्द्रियविषयभोगसन्तानकामं वा अपाप ऊहति 'प्रसमुपोदः' इत्येवमेतच्छान्दसत्वाद् अपशब्दस्यापि पादपूरणे द्विर्वचनम् । अपोहति सर्वतोऽपनयति विनाशयतीत्यर्थः । तनुशुभ्रं स्वस्यास्तन्वाः स्रगनुलेपनादिभिः शोभयितारम् । मघवा यः कवासखः कुशब्दस्यायं 'कव-चोष्णे' इति सखिशब्दे कवादेशश्छान्दसत्वाद् द्रष्टव्यः । कुसखा स्वयं भोगप्रवृत्तो दृष्टप्रसाधनसखायोऽपि तस्य भोगप्रधाना एव न यागशीला इत्यर्थः ।

घ्रंस इति पठ्यमानस्य निर्वचनार्थ उपक्षेपः । रसा अवश्यायो आदित्येन । रात्रिशब्दनिर्वचनार्थं प्रसिद्धं तावदाह गोरूधः प्रसवकाले अङ्गान्तरेभ्य उच्छ्रिततरं भवति । यद्वा उपश्लिष्टमुद्धृतमुधृतमिव केनचित् । ततश्चासौ रसानुप्रदानसामान्याद् रात्रिरप्यूध उच्यत इति निर्वचनार्थ उपक्षेपः पठ्यमानस्यैव । ततनुष्टिशब्दार्थप्रदर्शनमलंकरिष्णुमित्यादि । तनुं शोभयितारमिति पाठः । कपूयाः पापाः ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ५।३४।३] 'यो अस्मे ('स्मै' नास्ति)' इत्येव प्रतीकम् B. C.
३–वरणस्य B.
४–घ्रंसे B. C.
५–अपवा B. C.
६–'ऊधनि' इति त्रुटितम् B.
७–भवि C. ८–पादपूरणे B.
९–अन्यस्तु C.
१०–शक्रः B.
११–'त' इति त्रुटितम् B. C.
१२–धर्मात् C.
१३–[पा० ८।१।६] प्रसमुपोद (पोदम C.) B. C.
१४–अपिशब्द B. C.
१५–पदपूरणे B. C.
१६–मेघवा भवान् यः कवासुरः B.
१७–[पा० ६।३।१०७] कु चोष्णे B. C.
१८–कुसखाः C.
१९–पि गस्तस्य B. C.
२०–घ्रंश B. घ्रंस्य C.
२१–ततश्चो C.
२२–रात्रिरप्यूध B. C.
२३–ततुष्टि B. C.

इलीबिशे इत्यनवगतम् । इलाबिलेशय इत्यवगमः । इलो बलमन्नं तन्निष्पत्तिहेतुभूतमुदकमनेनैलाशब्दवमार्येण इलाशब्देनोच्यते । बिले उदके शेते इति बिलेशयः सन् वर्णव्यापत्तिलोपादिना इलीबिशः । मेघोऽभिधेयः उदाहरणम्—

न्याविध्यदिलीबिशस्य दृळ्हा वि शृङ्गिणमभिनच्छुष्णमिन्द्रः ।
यावत्तरो मघवन् यावदोजो वज्रेण शत्रुमवधीः पृतन्युम् ॥

हिरण्यस्तूपस्य कस्यचिदार्षम् । न्यविध्यद् निकृत्य विद्धवान् कस्य ? इलीबिशस्य मेघस्य दृळ्हा दृढानि दुर्वधानि । कानि ? सामर्थ्यादुदकनिर्गमबिलानि । तं शृङ्गिणं शृङ्गिणीति ज्वलतो नामधेयं दीप्तिमन्तमित्यर्थः । व्यभिनद् विविधं भिन्नवान् । शुष्णं बलनामैतत् सामर्थ्याचान्तर्नीतमत्वर्थं द्रष्टव्यम् । बलवान् । कः ? इन्द्रः कस्यचिद् बलान्युदुघट्टितवान् । कंचित्तु शतशर्करं भग्नवानित्यर्थः ।

परोऽर्धर्चादिः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम् । यावद् यत्परिमाणं तरः इलनामैतत् स्वसेनालक्षणं बलं हे मघवन् यत्परिमाणं च ओजः शारीरलक्षणं बलम् । यावदिति श्रुतेः साकाङ्क्षत्वात् तावच्छब्दोऽध्याहार्यः । तावता सर्वेण वज्रेण च स्वशत्रुमवधीः छान्दसत्वाद् वर्तमाने लुङ् जहि । अस्मदीयं वा पृतन्युं संग्रामेप्सुम् ।

किर्येधा इत्यनवगतम् । किर्येधा कममाणधा इति चावगमः । कियद्धैर्यपरिमितं स्वबलं धारयति । क्रममाणं चाभिमुखं परबलं धारयति निरुणद्धीति दधातेर्विचि रूपम् । इन्द्रो विशेष्यः । उदाहरणम्—

[ इत्येकादशस्या-( पञ्चस्या- ) ध्यायस्य
एकोनविंशः खण्डः । ]

---

१–इलीबश C. २–इलाविशया C.
३–उभेलाशब्द B. अयं पाठः सन्दिग्धः ।
४–इलीवशः C
५–[ऋ० १।३३।१२] 'न्याविध्यत' इत्येव प्रतीकम् B. C.
६–चिर् ता B. चिद् ताव C.
७–विघवान् B.
८–'कस्य' इति त्रुटितम् B.
९–र्धर्चेद प्रत्य C.
१०–परिमाणं B C. ११–तरं B.
१२–शारीरलक्षणं B.
१३–तावतः B. तोवत C.
१४–संग्रामकाम C.
१५–कियन्धा B. C. 'कियद्धाः' इति सविसर्गः पाठो युक्तः ।
१६–इति या वेत्यवगमः B. C.
१७–कियत्परि B. कियद्वपरि C.
१८–विरुणन्धीति C. १९–विशेष्यम् B.
२०–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ विंशः खण्डः । ]

अस्मा इदु प्र भरा तूतुजानो वृत्राय वज्रमीशानः कियेधाः ।
गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥

नोधस आर्षम् । अस्मै इदु पदपूरणौ, प्रभैत प्रहर तूतुजानः क्षिप्रनामैदं त्वरमाणः । हिंसार्थो वा तुजिः, हिंसन् । वृत्राय वज्रम् एतं वृत्रं हन्तुं क्षिप्रं वज्रं क्षिपेत्यर्थः । ईशानः कियेधाः प्रत्यक्षकृतोऽयं मन्त्रः । अव्यतिरिक्तप्रातिपदिकार्थप्रथमान्ते चैते । अतो यत्तच्छब्दावध्याहृत्य एकवाक्यता नेये । यस्त्वमीशान ईश्वरः कृत्स्नस्य जगतः कियेधाश्च कियतोऽप्यविरायमाने धरिमाणस्य बलस्य धारयिता महाबल इत्यर्थः । स प्रहर वज्रमिति । प्रहृत्य च गोर्न पर्व विरदा यथा नौ गोर्विकर्ता गोः पर्व अवयवं विरदेत् तद्वत् विरद विकृन्त मेघमित्यर्थः । तिरश्चा तिरश्चीनम् । इष्यन्नर्णांसि 'इष गतौ' सामर्थ्याच्चेहान्तर्नीतण्यर्थो द्रष्टव्यः, गमयन्नुदकानि । अथवा इच्छतेरेवायं व्यत्ययेन श्यन् विकरणम् इच्छन्नुदकानि । अपां चरध्यै भुवं प्रैति चरणाय न छविकृत्ते मेघे तदन्तर्गता आपो भुवं गन्तुं प्रैतिसमर्था इति ।

भूमिरित्येतदनवगतम् । भ्रामयतेरिति धातुनिर्देशः । भ्रमणमित्यवगमः । भ्रमिता स्वयं भ्रमितान्येषामित्यर्थः । उदाहरणम्—

इमामग्ने शरणिं मीमृषो न इममध्वानं यमगाम दूरात् ।
आपिः पिता प्रमतिः सोम्यानां भृमिरस्यृषिकृन्मर्त्यानाम् ॥

हिरण्यस्तूपस्य । अत्रेतिहासः-हिरण्यस्तूपो यागार्थमग्निं विहृत्य रक्षोभयाद् दूरं

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १।६१।१२ ] 'अस्मा इदु प्र (व B. प C.)' इत्येव प्रतीकम् B. C.
३–प्रहरतु प्रहर B. C.
४-'त' इति त्रुटितम् B. C.
५–गोर्ण (र्न C.) व पर्व विर यथा B. C.
६–'नौ' इति नास्ति C.
७–वि (पि C.) कृते B. C.
८–सन्दिग्धमिदं पदम् ।
९–इष्यन्नर्णा (र्ना B.) सि B. C.
१०–[धा० ४।२१ ]
११–गमयातु (यादन्तु C.) दकानि B. C.
१२–अत्र 'विकरणः' इति युक्तं स्यात् ।
१३–परि C.
१४–चरणाय B.
१५–न छविकृत्ते C.
१६–'भुवं प्रति गन्तुं समर्था इति स्पष्टं स्यात् ।
१७–'भृ' 'रि' इति त्रुटितम् C.
१८–'भ्र' इति त्रुटितम् 'मण इत्य' C.
१९–[ ऋ० १।३१।१६ ] 'इमामग्ने' इत्येव प्रतीकम् B. C.
२०–'भयाद' इति त्रुटितम् B.
२१–दुरं B. C.

प्रणश्य गतेषु रक्षस्सु प्रत्यागतः कृतापराधाभिप्रायेण अग्निमाह । इमां हे अग्ने रागि 'मृट हिंसायाम्' मीमृषः 'मृषतिस्तितिक्षायाम्' इत्यस्य स्वार्थिको णिच्, लोडर्थे लुङ्, मृषस्व क्षमस्व नोऽस्माकम । कतमः ? उच्यते । इममध्वानं त्वा यमगाम विहत्य अनिष्ट्वा रक्षोभयाद् गतस्य दूराद्दूरम् । किं कारणमेवमुच्यते ? यस्माद् आपिः प्राप्तो ज्ञातिः स्वम् । कीदृशः ? पिता पितृस्थानीयः । प्रमतिः प्रकृष्टे मतिः प्रमतिरनुग्रहपरः । केषाम ? सोम्यानां सोमार्हाणां सोमसम्पादिनाम् । किञ्च भूमिरसि लोकत्रये विभ्रमितासि त्रिष्वपि लोकेष्वप्रतिहतगतिरित्यर्थः । ऋषिकृत तमोपघातद्वारेण च दर्शनकृद् मर्त्यानामेव । इतीयमितिहासपक्षेण योजना ।

नित्यदर्शने त्वन्यथा योज्यते । इमां हे अग्ने रागि संसारप्राप्तिलक्षणां हिंसां मीमृषः मृजेरियं जकारस्य षकारापत्त्या छान्दसं रूपं न मृषेः, मार्जयापनय । अस्माकमिमं ससाराध्वान यमगाम प्राप्ताः स्मः । दूरान्मरणप्रबन्धरूपायाः सृष्टेः प्रभृति आसंसारमित्यर्थः । किं कारणम् ? यस्मात्त्वमापिः पिता प्रमतिः सोम्यानां यस्मात्त्वं भूमिरसि भ्राम्यतेर्ण्यन्तस्येदं रूपम्, भ्रमयितासि भ्रान्तेः कर्ता । ऋषिकृद् दर्शनकृच्चासि सम्यग्ज्ञानकारणञ्चासि मनुष्याणाम् । एतदुक्तं भवति भ्रान्तेः सम्यग्ज्ञानस्य च त्वं कर्तासि । मर्त्यानां त्वदायत्तौ च संसारमोक्षौ । त्वं च पितृवत् सर्वयजमानानामनुग्रहपरः । नोऽस्मान् सम्यग्ज्ञानोपादानेन मोचयास्मात् संसारादिति । तथाच स्मरणम्—

> सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते ।
> दर्शनेन विहीनस्तु संसारं प्रतिपद्यते[25]॥ इति ॥

विप्पितं इत्यनवगतम् । विप्रान इत्यवगमः । विकारोपजनवर्णलोपादिर्द्रष्टव्यः ।

---

१–इम B.　२–अरणि B. रिणी C.
३–[धा० १।१६] धातुपाठे 'ह्ट' इति दीर्घपाठः ।
४–वि ( मि C. ) मृषं B. C.
५–[धा०४।५८] 'मृष तितिक्षायाम्' इति धातुपठिपाठः । मृषस्वि (स्ती C.) ति B. C.
६–लोभृर्थे C.　७–मृष्यास्य C.
८–अत्र 'कतमम्' इति युक्तं स्यात् ।
९–उच्यके C.　१०–यमयगाम C.
११–व (वि C.) भृत्यां विभृत्यानिष्ट्वा B. C.
१२–आविः B. C.　१३–प्रापो ज्ञातिस्वं C.
१४–सौम्यानां B. C.
१५–भ्रमसि B. C.　१६–तं मापघात B.
१७–तृतीयमिति B. C.
१८–मृदेदं B. C.
१९–त्वामपि B.　२०–प्रता B. C.
२१–यस्माप B. यस्मा च C.
२२–भ्र ( भू C. ) मिरसि B. C.
२३–'ण' इति त्रुटितम् C.　'०कारणश्चासि' इति युक्तं स्यात् ।
२४–'र्ध' इति त्रुटितम् C.
२५–[ मनु० ६।७४ ] दर्शनेन विहीनं तु B. C.
२६–विष्पत C.　२७–लोपादि द्रष्टव्यम् C.

विस्तीर्ण इत्यर्थः । उदाहरणम्—

इमे दिवो अनिमिषा पृथिव्याश्चिकित्वांसो अचेतसं नयन्ति ।
प्रव्राजे चिन्नद्यो गाधमस्ति पारं नो अस्य विष्पितस्य पर्षन् ॥

वसिष्ठस्य । इमे प्रकृता मित्रो वरुणो अर्यमा* च अनिमिषा अनिमिषेण महता यत्नेनेत्यर्थः । दिवो द्युलोकात् पृथिव्याः पृथिवीलोकाच्च चिकित्वांस इदमप्यस्य कर्म अज्ञानेन गन्तव्यमित्येतज्जानन्तः । अचेतसम् अज्ञं कं देशं केन वा यास्यामीत्येतदजानन्तमित्यर्थः । प्राणिनं नयन्ति यत्नानेन परिपक्वस्वकर्मवशाद् गन्तव्यम् । यत एनान् मित्रादीन् ब्रवीमि प्रव्राजे चिर प्रकर्षेण व्रज्यते यस्मिन् स प्रव्राजो मरणकालस्तस्मिन् । चिच्छब्दो यदर्थे, यदि नद्योऽस्याः संसारनद्या गाधं प्रतिष्ठास्थानं येनास्मिन् संसारनदीश्वभ्रे निमज्जन्तो धारयामहे तज्ज्ञानं कर्म वा किञ्चिदस्ति तत. पारं कूले नोऽस्मान् विष्पितस्य विप्राप्तस्य विस्तीर्णस्य संसारनदीश्वभ्रस्य पर्षन् पारयन्तु गमयन्तु प्रापयन्त्वित्यर्थः । अनादिश्च संसारः श्लिष्यते अन्तेवांश्चापवर्गेण । अतः पारमपवर्ग इहाभिप्रेतः ।

तुरीपमित्यनवगतम् । तूर्णापीत्यवगमः । उदकमभिधेयम् । तद्धि तूर्णमाप्नोत्येवंशीलं तूर्णापि सत्तुरीपम् । उदाहरणम्—।

[ इत्येकादशस्या (षष्ठस्या-) ध्यायस्य
विंशः खण्डः । ]

---

१–[ऋ० ७।६०।७]'इमे दिवः' इत्येव प्रतीकम् B. C.
२–वसिष्ठस्ये B.
३–प्रकृतो B. C. * 'वरुणोऽर्यमा' इति युक्तम् ।
४–गतद्व्यमित्ये B. गतव्यमित्ये C.
५–प्रद्रुजो B. C.
६–परं कुलेन (म C.) मास्मान् (द C.) B. C.
–विष्पतस्य B. C.
८–श्लिष्यन्ते B. C.
९–'अन्त' इति त्रुटितम् B.
१०–पर C. अन्तःपुरम B.
११–तूर्णावित्यर B. C.
१२–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ एकविंशः खण्डः । ][1]

तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मना ।
त्वष्टा पोषाय वि ष्यतु राये नाभा नो अस्मयुः[2]॥

दीर्घतमसः[3]। तत् नोऽस्मद[4]र्थं तुरीपं[5] तूर्णापि, तूर्णव्यापि अद्भुतं महन्नामेदम्, सारतश्च महद् महत्त्वं तदिहाभिप्रेतं माभूत् पौनरुक्त्यं परेणेति तेन सारतो महदित्यर्थः। पुरु वाशब्दश्चार्थे बहु च वृष्ट्युदकं परिमाणतः। अरं पर्याप्तञ्च सर्वकामेभ्यः पुरु विश्वमेतत्, क्रियाविशेषणम्। कथम्? विश्वं पुरु सुष्ठु भृशमित्यर्थः। त्मना[6] आत्मनैव त्वष्टा मध्यमस्थानः पोषाय पुष्ट्यर्थं विष्यतु[7] स्यतिरुपसृष्टो विमोचने विमुञ्चति। राये षष्ठ्यर्थे एषा चतुर्थी। कस्य पुष्ट्यर्थम्? रायो धनस्य गवादेः क्वचित् मुञ्चतु नाभा नाभौ जगतो*भिभूतायां वेद्यां[8] वा नोऽस्माकं स्वभूतायाम् अस्मयुः त्वष्टृविशेषणमेतत्, अस्मान् कामयमानस्त्वष्टा। महत् सम्भृतमिति अद्भुतशब्दविवेचनं द्रष्टव्यमिति[9]।

रास्पिन इत्यनवगतम्। कथम्? रपतेः रसतेर्वा कर्तरि चेति कर्मसाधनो घञ् भावे वा रासो[10] वा रापो[11] वा शब्द उच्यते तद्वद् रापि वा रासि वा सत् सकारपकारोपजननेन[12] रास्पिन्[13] शब्दः। वहदकं स्तोतृ[14] वोच्यते। ततस्तादर्थ्या[15]दस्तीत्यर्थे[16] औदित्वादकारः प्रकृतिभावश्च द्रष्टव्यः, रास्पिनो[17] दण्डिमती[18] शालेति यथा। अतश्च[19] शब्दश्च तोदकेन तद्वा। मेघोऽभिधेयः। उच्चार्यमाणेन स्तोत्रेण स्तोता वा। उदाहरणम्—

उत त्या मे यशसा श्वेतनायै व्यन्ता पान्तौशिजो हुवध्यै ।
प्र वो नपातमपां कृणुध्वं प्र मातरा रास्पिनस्यायोः[20]॥

---

१–आदर्शपुस्तकेऽत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ ऋ० १।१४२।१० ] 'तन्नस्तुरीपं' इत्येव प्रतीकम् B. C.
३–धि ( दी C. ) थ तमसः B. C.
४–'अस्मद' इति त्रुटितम् B.
५–तुरीवं C.   ६–आत्मना C.
७–विष्टपवतु B. * 'तो ताभिभू०' इति युतम्।
८–यां वा वेद्यां वा B. यां वेद्यां वा C.
९–'इति' इति B. 'ति' इति च C. पुस्तके त्रुटितम्।
१०–'रासो वा' इति नास्ति B.
११–'रापो वा' इति नास्ति C. रावो वा B.
१२–कारवकारो B. C.
१३–राष्पिन् C.   १४–स्तोतुं B.
१५–'द' इति त्रुटितम् C.
१६–[ पा० ५।२।१२७ ]
१७ राप्सनः B. राष्पिनः C.
१८–दण्डिमनी C.
१९–अस्य वाक्यस्य पाठः सन्दिग्धः।
२०–[ ऋ० १।१२२।४ ] 'उत ( द C. ) त्या मे' इत्येव प्रतीकम् B. C.

कक्षीवत आर्षम् । उतशब्दोऽप्यर्थे । त्यच्छब्दः समानार्थः । त्यच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यौ पूर्वमहं स्तुतवान् वैश्वदेवत्वात् सूक्तस्य त्यौ तावप्यश्विनौ मे तादर्थ्यचतुर्थ्येषा, ममार्थाय मदनुग्रहायेत्यर्थः । यशसा यशःशब्दोऽत्र धननामा अन्ननामा वा कीर्तेश्च पर्यायो वा अन्तर्नीतमत्वर्थश्च द्रष्टव्यः । तेन धनवन्तौ वा कीर्तिमन्तौ वा । श्वेतनौ श्वेतनेत्येतदपठितमपि उषोनाम द्रष्टव्यम् । पष्ठ्यर्थे चात्र चतुर्थी, तैच्छुतेश्च उदयकाल इति शेषः । उषस उदयकाले व्यन्ता व्यन्तौ खादन्तौ पुरोडाशादीनि पान्ता पिबन्तौ सोमम् । औशिजे इत्यहं कक्षीवान् हुवध्यै ह्वयतेरर्चतिकर्मणः । एतद्रूपं कैध्यैप्रत्यये । ओषधिवनस्पतयः प्रेसोरणे च स्तोतुमिच्छामीति शेषः । प्रशब्दः कृणुध्वमित्येतेन सम्बध्यते । य इत्यपि प्रथमायाः स्थाने यसादेशश्छान्दसत्वात् । यूयमपि हे पुत्रादय ऋत्विजो वा नपातमपां प्लुवान्नपात् सविता । कथम् ? 'अद्भ्यो हि वैद्युतात्मना अग्निर्जायते अग्नेः सविता अग्नेर्वा आदित्योऽजायत' इति श्रुतेः । अथवा पञ्चवौ अग्निद् अन्नच ओषधिवनस्पतयोऽग्नि नपातम् । प्रकृणुध्वं करोतिरत्र क्रियासामान्यवचनत्वात् स्तुतौ वर्तते प्रकर्षेण स्तुत । प्रमातरा प्रकर्षेण मातृभूते द्यावापृथिव्यौ स्तुत । कस्य मातृभूते ? उच्यते । रास्पिनस्य स्तुतीनां रापितृ रासितुर्वा । आयोर्मनुष्यनामेदं मनुष्यस्तोतुरित्यर्थः । मेघस्य वा स्वेनानुग्रहेण निर्मात्रोरनयोर्गमनस्वभावकस्य ।

ऋञ्जतिरित्यनवगतं धात्वर्थमिति यत आह ऋञ्जतिः प्रसाधनकर्मा । विपमस्य समीकरणं वा वर्गीवा करणादेवमुच्यते । प्रसाधनमात्मसात्करणं तदर्थ इत्यर्थः । अस्य च

१–'त्यच्छब्दस्तच्छब्दसमानार्थः' इति युक्तं स्यात् ।

२–कीर्तिश्च B. C. ३–धनवन्तो B.

४–ीतिमन्तो B.

५–श्व ( श्व C. ) तनाथे श्व (श्व C.) तने B. C.

६–त्येतदप्यपठि B. त्येदपठि C.

७–कृतच्यूतेश्च B. चतु तच्चूतेश्च C.

८–डाशादिनि B. ९–वान्ता C.

१०–यन्ती पिब च सोमं C.

११–औशिज C. १२–कक्षीवान् B. C.

१३–'व' इति द्विर्लिखितम् B. C.

१४–कथ्यै B.

१५ अयं पाठः सन्दिग्धः ।

१६–'न सम्बध्यते' इति द्विर्लिखितम् C.

१७–हे म पुत्रा C. अत्र कदाचित् 'हे मम पुत्रादयः' इति वा पाठो भवेत् ।

१८–सपिता B.

१९–अद्भ्यो हि B.

२०–[ अनुपलब्धमूलमिदं वचनम् ]

२१–अत्रायं पाठः सन्दिग्धः ।

२२–मा कृणुध्वं B. C.

२३–'त्व' इति त्रुटितम् B.

२४–'त' इति C. पुस्तके त्रुटितम् ।

२५–'प्र' इति नास्ति B.

२६–विपयस्य B.

२७–'वर्गीकरणात्' इति वा पाठोऽत्र भवेत् ।

भाऋजीक इत्येतेन गतार्थतां मन्यमानो भाष्यकारो निगमं नाध्यगीष्ट । तथोदाहरणं प्रदर्श्यते—

दूतं वो विश्ववेदसं हव्यवाहममर्त्यम् ।
यजिष्ठमृञ्जसे गिरा ॥

वामदेवस्यार्षम् । अग्निरुच्यते । दूतं वः द्वितीयैकवचनस्यायं वसादेशश्छान्दसत्वात्, त्वाम् । कीदृशम् ? विश्ववेदसं सर्वस्य वेदितारं सर्वज्ञमित्यर्थः । सर्वथैनया हव्यवाहं हविषां वोढारम् । अमर्त्यं मरणवर्जितम् । यजिष्ठम् अतिशयेन यष्टारम् । ऋञ्जसे व्यत्ययेन मध्यम उत्तमस्य स्थाने ऋञ्जे गिरा स्तुत्या । प्रदर्शनमिदं हविषो दानेन स्तुत्या च प्रसाधयामि ।

ऋजुरित्यप्यस्यैव ऋञ्जतेः प्रसिद्धः, अकुटिल इत्यर्थः । उदाहरणम्—

ऋजुनीती नो वरुणो मित्रो नयतु विद्वान् ।
अर्यमा देवैः सजोषाः ॥

गौतमस्य । अस्मान् मित्रो वरुणश्च यत्र स्वर्गे ब्रह्मलोके वास्माभिः कृते कर्मणि गन्तव्यं तत्र नयतु विद्वान् । किम् ? सामर्थ्यात् कर्मफलविपाकं भक्तानां चास्माकम् । न च केवलौ मित्रावरुणौ । किं तर्हि ? अर्यमा च देवैः सह सम्प्रीयमाणः ।

प्रतद्वसू इत्यनवगतम् । प्राप्तवसू इत्यवगमः । पकारलोपोपजनह्रस्वत्वादीनि द्रष्टव्यानि । अश्वावभिधेयौ । उदाहरणम्—

इह त्या सधमाद्या युजानः सोमपीतये ।
हरी इन्द्र प्रतद्वसू अभि स्वर ॥

नारदस्यार्षम् । इह अस्मद्यज्ञे त्या तौ सधमाद्यौ सह मादयितव्यौ युजानौ रथे आत्मीये । किमर्थम् ? सोमपीतये आत्मनः सोमपानार्थम् । हरी यावात्मीयावश्वौ हे इन्द्र प्रतद्वसू प्राप्तऋजीपाख्यधनौ । अभिस्वर स्वरतिर्गतिकर्मा अभिगच्छ ।

हिनोत इत्यनवगतम् । प्रहिणुत इत्यवगमः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
एकविंशः खण्डः । ]

---

१-निगमयन्नध्यष्ट B.
२-[ ऋ० ४।८।१ ] 'दूतं वः' इत्येव प्रतीकम् B. C.
३-विश्वदेवसं C. ४-सन्दिग्धमिदं पदम् ।
५-व्यत्ययेन C. ६-प्रसाधयामि B.
७-[ ऋ० १।९०।१ ] 'ऋजुनीति ( ती ) नः' इत्येव प्रतीकम् B. C. ८-अर्यमा B.
९-प्राप्ते वसू C. १०-जनः इव B. C.
११-[ ऋ० ८।१३।२७ ] 'इह ( हे C. ) त्या' इत्येव प्रतीकम् B. C.
१२-अस्मभ्यं B. १३-सधमान्या B. C
* 'युजानौ' इति युक्तम् ।
१४-स्वरतिग्यतिकर्मा C.
१५-भिनोत C. १६-प्रहिअत C.
१७-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ द्वाविंशः खण्डः । ][1]

हिनोता नो अध्वरं देवयज्या हिनोत ब्रह्म सनये धनानाम्।
ऋतस्य योगे वि ष्यध्वमूधः श्रुष्टीवरीर्भूतनास्मभ्यमापः[2]॥

कवषस्य। आप एकधनलक्षणा उच्यन्ते[3]। 'हि गतौ'[4] सामर्थ्याद्यात्रान्तर्नीतण्यर्थः। हिनोत गमयत[5] समापयत वा। नोऽस्माकम्[6]। अध्वरं[7] यज्ञम्। किमर्थम्? देवज्या चतुर्थ्या लुग् द्रष्टव्यः[8], देवयज्यायै देवयागार्थम्। हिनोते च गमयत ब्रह्म स्तुत्याख्यं वर्धयत स्तुतिं प्रति निमित्तभावादेवमुच्यते। किमर्थम्? सनये सनिर्लाय[10] यज्ञफललक्षणानां धनानाम्। किञ्च यदिदमृतस्य यज्ञस्य योगे सम्बन्धिनि सप्तमीश्रुतेर्वर्तेत इति शेषः। यज्ञसम्बन्धितामापन्न इत्यर्थः। किं पुनस्तत्? ·········भ्यां[11] युज्यमानत्वात् योगशब्देन शकटमुच्यते। योग इति सामीपिकमधिकरणम्। गङ्गायां गाव इति यथा। यज्ञसम्बन्धिनो[12] हविर्धानस्य शकटस्य समीपे ऊधःस्थानीयमधिषवणचर्म एतत् प्रति सोमरसेन मिश्रीभूय विष्यध्वं विमुञ्चतात्मानं पूरयत तद्रसेनेत्यर्थः। तच्च कुर्वत्यः श्रुष्टीवरीः[13] सुखवतीर्द्वितीया प्रथमार्थे, सुखवत्यः सुखकर्य इत्यर्थः। भूतन भवत अस्मभ्यं हे आप एकधनाः।

योगशब्दार्थकथनप्रसङ्गेन शकटं निराह शकृता युक्तं तद्विशिष्टेन शकृता गोमये-[14]नेटति मार्गे[15] शैकृन्मुञ्चतीत्यर्थः। शनैर्वा शकति गच्छति गन्तृवशात्तु शब्देन चेत्यर्थभूतेन[16] शकति।

चोष्कूयमाणैः[17], चोष्कूयत इति पदद्वयमनवगतधात्वर्थम्। कुत एतत् यतः 'स्कुञ्[18] आप्रवणे' पठ्यते। इह च दानार्थः। अशोपदेशत्वाच्च[19] षत्वानवगमः। क्वचिद् क्षुद्[20]दसनार्थ-त्वादनेकार्थत्वमपि। उदाहरणम्—

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते।
२—[ ऋ० १०।३०।११ ] 'हिनोता नः' इत्येव प्रतीकम् B. C.
३—आप एतधन C.
४—[ धा० ५।११ ]
५—हमयत B. C.
६—नस्यावम् B.
७—अघ्वर्क B. अध्वत् C.
८—द्रष्टव्यम् B
९—हि नो तु च B. C.
१०—सनिश्चय C. सन्दिग्धमिदं पदम्।
११—त्वाभ्यागमश B. त्वाभ्योग C.
१२—न्धिना हवि B. C.
१३—श्रुष्टिनरीः ( नीः C. ) B. C.
१४—मये ताडयति C.
१५—मार्गेण श (C.) कृन्त (न्ते C.) नागती B. C.
१६—भूतन्तन्तुकति B. C.
१७—माणञ्चोष्कू C.
१८—[ धा० ९।६ ] स्कुड् C.
१९—एषोपदेश B.
२०—शु (षु C.) दसना B. C.

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इन्द्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥

हिरण्यस्तूपस्य । निशब्द असक्त इत्येतेन सम्बध्यते । सर्वसेनः समग्रया सेनयोपेन इन्द्रः । इषुधीन् तूणीनि असक्त 'षञ्ज सङ्गे' सजति आत्मनः पृष्ठे रथे वा बध्नातीत्यर्थः । निग्रहाय ईश्वर इन्द्रः शत्रूणां स्वभूता गाः समजति "'अज गतिक्षेपणयोः' सम्यक् क्षिपति स्वराष्ट्रं प्रति प्रेरयति अपहरतीत्यर्थः । यस्य शत्रोर्गा अपहर्तुं वष्टि कामयते तस्य सर्वस्यापहरति न केनचित् प्रतियोद्धुं शक्यत इत्यर्थः । अथवा दानकाले यदर्पणं तदत्र क्षेपणमभिप्रेतम् । आश्रितेभ्यो दानकाले सम्यक् क्षेपयति अर्पयति यस्यार्पयितुं कामयते यस्मै दातुमिच्छति तस्मै ददातीत्यर्थः । अथवा गावोऽत्र आपोऽभिप्रेताः । निषज्येषुधीन् मेघं घ्नन् अपः सम्यक् क्षिपति । यस्य वष्टि यजमानस्य वा ।

परोक्षवत् प्रत्यक्षकृतवद् भिन्नं वाक्यम् । चोष्कूयमाणः स्कुनातेर्दानार्थस्य यङि रूपम् । अत्यर्थं पुनः पुनर्ददत् हे इन्द्र भूरि बहु वामं वननीयमत्यन्तोत्कृष्टम् । किम्? सामर्थ्याद्धनं मा पणिर्भूः पणिर्वणिगुच्यते, मा वणिक्सदृशोऽल्पदो भूरित्यर्थः । अस्मदधि अस्माकमुपरि अस्मभ्यं माल्पं कदाचिदद इत्यर्थः । हे प्रवृद्ध शरीरेण महन् ।

स्कुनातेर्दानार्थतां दर्शयन्नाह ददिन्द्रेति । अनेकार्थत्वप्रदर्शनायाह एधमानद्विळित्यादि ।

शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः ।
एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान् ॥

गर्गस्यार्षम् । शृणोतेर्व्यत्ययेनात्र आत्मनेपदोत्तमैकवचनं श्नुप् विकरणः कर्मणि लट् प्रथमैकवचनस्य स्थाने । श्रूयते प्रख्यायत इत्यर्थः । वीरः शूरः इलामि । किं कुर्वन्?

१–[ ऋ० १।३३।२ ] 'नि सर्वसेनः ( नं C. )' इत्येव प्रतीकम्
२–आसक्त B. 'निशब्दोऽसक्त' इत्युचितम्
३–तूणाणि C. ४–[ धा० १।१०२२ ]
५–रजति C. ६–आत्मानं B.
७–[ धा० १।२३० ]
८–प्रतियोद्धुं C. ९–तस्मै C.
१०–त्र वाभिप्रेताः B. गावोऽत्रापोऽभिप्रेताः C.
११–तरः B. C. १२–वज्रे B. C.
१३–कृतवान (न C) भिन्ने B. C.
१४–नाणं B. C. *'स्कुनाते०' इति युक्तं स्यात् ।
१५–मा पणिभूः B. C.
१६–माल्यं B. माल्पं C. १७–चिद्दा B.
१८–ददिन्द्रेति B. ददिन्द्रे इति C.
१९–विलिकादि B. विलितादि C. 'मानद्विळि०' इति युक्तम् ।
२०–[ ऋ० ६।४७।१६ ] 'शृण्वे ,(विरः C.)' इत्येव प्रतीकम् B. C.
२१–'गं' इति त्रुटितम् C.
२२–शास्त्र C. २३–प्रत्ययेक B.
२४–वीरः शूरः' इति त्रुटितम् B. इलमिति सन्दिग्धः पाठः ।

उच्यते । अभमुं दमयन यावान् कश्चिदुग्रोऽप्रसह्यः शत्रुस्तं सर्वं दमायन्[1] । अन्यमन्यं चात्मनः[2] स्तोतारम्[3] । अतिनेनीयमानो[4]ऽतिशब्दः पूजायाम, अतिपूजितं शोभनमर्थं नयन् । किम् ? सामर्थ्यान् समृद्धिम्[5] । सर्वं च स्तोतारमात्मनः समृद्धं कुर्वन्नित्यर्थः । किञ्च एधमानद्विड् ह्रूयतां[+] इन्द्र । किं सर्वेषाम् ? न[6] । किं तर्हि ? अयष्टॄन्[*] । कुत एतत् ? सामर्थ्याद्उभयस्य दिव्यस्य पार्थिवस्य च धनस्य राजा ईश्वरः । चोष्कूयते स्कुनातिरत्र[7] व्युदसनार्थे । अत्यन्तं व्युदस्यति निराकरोति । कीदृशान् ? विश. 'विश प्रवेशने' अनुप्रविष्टानात्मीयभूतानाश्रितानपि[8] इत्यर्थः । इन्द्रो मनुष्यान् । किं सर्वान् ? न । किं तर्हि ? ऋद्धानयष्टॄन् । कुत एतत् ? एधमानद्विडिति वचनात् द्विष्यमाणस्य च व्युदस्यमानत्वात् ।

एधमानद्विडिति[9] अहशब्दो व्युदस्यतीत्यस्यानन्तरो द्रष्टव्यः । व्युदस्यत्येव । अतिनेनीयमान इत्यस्यार्थं वचनम् अस्वतोऽभ्यादधातीति[10] । उच्छिन्नान् करोतीत्यर्थः । उभयोर्नामाख्यातयोर्निर्वचनं चोष्कूयमाण[11] इत्यादि ।

सुमदित्यनवगतम् । स्वयमित्यवगमः । उदाहरणम्—

उप प्रागात् सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।
अन्वेनं विप्रा ऋषयो मदन्ति देवानां पुष्टे चकृमा सुबन्धुम्[12] ॥

प्रकर्षेणो गगात् । लोडर्थे लुङ्, उपागच्छतु । सुमत् स्वयमेव । अत्रैकवाक्यतार्थे यत्तच्छब्दौ योग्यतार्थसम्बन्धावध्याहार्यौ । यन्मे मम मदीयमिति शेषः[13] । अधायि शुद्धोऽयर्थं दधातिर्निरुक्तार्थो द्रष्टव्यः । न्यधायि[14] निहितम् । यन्मम मदीयेन[15] । किं पुनस्तत् ? उच्यते । यज्ञेनेदं यदेस्यादिति । सामर्थ्याद् यज्ञसाध्यं विशिष्टं फलम् । तदर्थं देवानां[16] गर्भभूतानां[17] या आशा प्रार्थना हविर्भूतमिममश्वं भक्षयेत्येवंरूपा । उपेत्युपसर्गश्रुतेर्योग्यक्रियाध्याहारः, उपागच्छतु । कैः ? वीतपृष्ठः वीतेः कान्तिकर्मणः वीतं कान्तं पृष्ठं यस्य

---

१-सर्वेदमाय B. C. 'दमयन्' इति युक्तं स्यात्

२-मन्यश्चात्मन B. C. ३-'ता' इति त्रुटितम् C.

४-इति नेनीय B. C. ५-समृद्धि C.

+ 'ह्रूयतां' इति युक्तम् ।

६-'न' इति नास्ति B. C.

* 'अयष्टॄणाम्' इति युक्तं स्यात् ।

७-[ धा० ६।१४३ ]

८-'अपित' इति सन्दिग्धं पदम् ।

९-मानाद्विलिन वच B. C.

१०-'असुन्वतः सुन्वतोऽभ्यादधाति' इत्येवं मूल निरुक्ते पाठः ।

११-चूष्कूयमाण B.

१२-[ ऋ० १।१६२।७ ] 'उप प्रागात्' इत्येव प्रतीकम् B. C. १३-शेषार्थे C.

१४-अधानि C. १५-मदीयः C.

१६-यस्त्या B. यस्या C.

१७-यानां गर्भभूता C.

१८-'क्ष' इति त्रुटितम् B. C.

१९-स्याम् B. C.

२०-कं पीतपृष्ठं पीतेः कान्तिकर्मणः पीतं कान्तं B. C.

सः। अश्वमेधसंभूतोऽयमश्व इत्यर्थः। उपागच्छन्ते च अनुशब्दो मदन्तीत्येतेन सम्बध्यते। एनमश्वमनुमदन्ति। मदिरत्र सामर्थ्यान्मतेरर्थे। लोडर्थे च लट्, अनुमन्यन्ताम्। के? विप्रा मेधाविन ऋत्विजः। देवानां पुष्टे पोषणे पुष्टं भावे निष्ठा निमित्तार्थे च सप्तमी, पोषणनिमित्ते पुष्ट्यर्थमित्यर्थः। चकृत कृतवन्तः। सुबन्धुं सुबन्धनं यूपे रशनया सम्यग् बद्धमित्यर्थः।

आश्वमेधिक इति प्रकरणमनुसारयति। प्रकरणमप्यर्थाभिव्यक्तावलमित्यभिप्रायः। तथाच शास्त्रान्तरे वक्ष्यति 'प्रकरणश एव मन्त्रा निर्वक्तव्याः' इति।

दिविष्टिषु इत्यनवगतम्। दिर एषणीषु इत्यवगमः। 'इषु इच्छायाम्' इत्यस्य वा करणसाधनः क्तिन्। द्यौर्गम्यते प्रार्थ्यते वा याभिस्ता यागक्रिया इष्टयस्तासु दिविष्टयः। उदाहरणम्—

स्थूरं राधः शताश्वं कुरुङ्गस्य दिविष्टिषु।
राज्ञस्त्वेषस्य सुभगस्य रातिषु तुर्वशेष्वमन्महि॥

देवातिथेरार्षम्। स्थूरं स्थूलं परिमाणतः विपुलं सदित्यर्थः। किं तत्? राधो धनम्। शताश्वं शतेनाश्वानां युक्तम्। कुरुङ्गस्य कुरुङ्गनाम्नो राज्ञः। त्वेषस्य 'त्विष दीप्तौ' अस्य पचाद्यचि त्वेषस्य। सुभगस्य सुधनस्य स्वभूतासु दिविष्टिषु स्वर्गसाधनभूतासु यागक्रियासु या रातयस्तासु। यागाङ्गभूतेषु दक्षिणालक्षणेषु दानेष्वित्यर्थः। तुर्वशेषु तुर्वश इति मनुष्यनाम ततः सप्तमी निर्धारणे, मनुष्याणां मध्ये वयम् अमन्महि मन्महीति याच्ञायामत्र। सामर्थ्यात्तत्पूर्वको लाभो लक्ष्यते। अलभामहि लब्धवन्तो वयम्।

स्थूलं निगमप्रसक्तं निराह एकत्र संहिता आभिमुख्येन स्थिता मात्रा अवयवा यस्य स महानित्यर्थवचनम्। स्थूलप्रतियोगिप्रसङ्गेन अणुपरिमाणं निराह अणुः अनु स्थवीयांसमिति

१–साभूतोऽय B. २–मच्छतं च B. C.
३–एवमश्व B. *'मने०' इति युक्तम्
४–अनुमलन्वा: B.
५–पोषणे निमित्ते B. C.
६–'सुबन्धुं' इति नास्ति B. C.
७–रूपे B.
८–रयमि B. रणमभ्यार्थाभिव्यात्कावलमि C.
९–[ अनुपलब्धमूलमिदम् ]
१०–[ धा० ६।७० ]
११–धौगम्य B. यौगम्य C.
१२–'व' इति नास्ति C.
१३–[ ऋ० ८।४।१९ ] 'स्थूरं राधः' इत्येव प्रतीकम् B. C.
१४–तिथेराषु C.
१५–'श्वा' इति द्विर्लिखितम् C.
१६–'कुरुङ्गस्य' इति नास्ति B. C.
१७–[ धा० १।१०२६ ]
१८–[ पा० ३।१।१३४ ]
१९–'अह' इति त्रुटितम् C.
२०–'अ' इति त्रुटितम् B.
२१–याज्ञयामत्र C. २२–आत्मपरिमाणं B. C.
२३–'अनु' इति नास्ति B. C.

अणुः स्थवीयसोऽनु पश्चात् ततोऽल्पपरिमाण इत्यर्थः । अनुपूर्वस्यांश्रेः क्विनि स्थवीयांसमन्वश्नतीति अन्वग्भिति प्राप्ते उपसर्ग एवायं कृतेणत्वलुप्तनामकरणः । लुप्तः क्वचित् प्रत्यय उत्तरपद इत्यर्थः । अस्य दृष्टान्तो यथा साम्प्रति भवं साम्प्रतं काल एवोच्यते । लुप्तेऽपि मध्यमे प्रतीतिर्वर्तमान एवोच्यते । भेदाभेदविवक्षाकृतो विशेषः । यथा घातस्पत्यं चर्तय इति । कुरुं निराह कुरूनसौ पुत्रत्वे गतवान् । राजत्वेन कुलगमनाद्वा कुलीन इत्यर्थः । कुलव्यवस्थागमनाद्वा । शत्रुकुलानि वा जेतुम् । प्रसङ्गादाह कुर्दः कृन्ततेः शत्रूनसौ छिनत्ति वा पापाचारानसाधून्वा । क्रूरमित्यस्यस्यैव कृन्ततेः कर्म वा व्याघ्रादि वा तदप्युच्छिनत्ति उच्छेद्यं वा । अनुप्रसक्तं कुलं कुष्णातेर्वृद्धयर्थस्य विकुषितं हि तद् महदित्यर्थः । वह्यो हि सनाभयः कुलमुच्यते ।

दूत इत्यनवगतम् । तत्पुनः 'वाहिष्ठो वां हवानाम्' इत्यत्र 'दूतो जवतेर्वा' इत्येवं व्याख्यातम् ।

जिन्वतीत्यनवगतम् । अत्र किल धात्वर्थोऽनवगतः । प्रीणनलक्षणे हि इवितिदिविधिं' इत्यत्र जिन्वतेरपोऽभिप्रायः । उदाहरणम्—

समानमेतदुदकमुच्चैत्यव चाहभिः ।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः ॥

इति प्रसङ्गादुत्तरत्र व्याख्यास्यते ।

इति निरुक्तविवरणसमुच्चये
एकादशस्या-[ षष्ठस्या-] ध्यायस्य
चतुर्थः पादः ।
[ द्वाविंशश्च खण्डः
समाप्तः । ]

---

१–पस न पश्चात् B. C.
२–स्यां च ( स्याश्च: C. ) क्वनि B. C.
३–अन्वचि प्राप्ते B. C.
४–पावायं C.
५–कृतो त्वलुप्तनाम B.
६–'चतय' इति सन्दिग्धं पदम् ।
७–'द्व' इति त्रुटितम् B. C.
८–कुरुं B. C. ९–शतनसौ C.
१०–करमित्यस्यैव B. C.
११–कृष्णाते B. C. १२–विकूपितं B. C.
१३–[ ऋ० ८।२६।१६ ]
१४–[ निरु० ५।१ ] जपतेर्वा C. जवपनेर्वा B.
१५–अयं पाठः सन्दिग्धः ।
१६–रपोऽभि C.
१७–[ ऋ० १।१६४।५१ ] 'समानमेतदुदकम्' इत्येव प्रतीकम् B. C.
१८–[ निरु० ७।२३ ] गामुत्तर C.
१९–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।

## [ अथ पञ्चमः पादः । ]

अमंत्र इत्यनवगतम् । अमात्र इत्यवगमः । मात्रा परिमाणम् । अपरिमाणो महानित्य र्थप्राप्तवचनम् । अभ्यमितो वा मिनातेर्मिनोतेर्वा वधकर्मणः । अभ्यमितः सन् अमत्रः । उदाहरणम्—

> महाँ अमत्रो वृजने विरप्शु[6] ग्रं शवः पत्यते धृष्ण्वोजः ।
> नाह विव्याच पृथिवी चनैनं यत् सोमासो हर्यश्वममन्दन् ॥

विश्वामित्रस्य । इन्द्र उच्यते । महान् शरीरेण । अमत्रोऽमात्रोऽपरिमाणश्च बलेन अहिंसितपूर्वो वा केनचित् । वृजने वृजनशब्दः क्रियानिमित्तको बलनिमित्तो वान्तर्नीतमत्वर्थः संग्रामे द्रष्टव्यः । वर्ज्यन्ते यत्र धार्णैर्योद्धारस्तस्मिन् प्रजनवति बलवति वा संग्रामे । विरप्शिर्विरपणशील आह्वानकृत् शत्रूणामभिभवितृ ओजो बलम् । किं बहु ? नाह विव्याच अहशब्दो विनिग्रहार्थीयत्वादेवार्थे व्यचिर्व्याप्त्यर्थः, नैव व्याप्नोति पृथिवी त्वन 'चनेति निपातः स्वार्थे तच्छ्रुतेर्द्यौश्चेत्युपसंग्रहः,पृथिवी च द्यौश्च माहात्म्येन द्यावापृथिव्यावप्यनेनैव व्याप्नुत इत्यर्थः । यच्छब्दो यदेत्येतस्यार्थे व्यत्ययेन वा नपुंसकम् । यदा यं वा इन्द्रं सोमासः सोमा हर्यश्वं हरी अश्वौ यस्य तम् अमन्दन् मोदयन्ति तर्पयन्ति चेत्यर्थः ।

ऋचीषम इत्यनवगतम् । अर्चनमृक् स्तुतिः तया तुल्यः । ऋचा सम इत्यवगमः । ऋचा सम इति वाक्येनार्थप्रदर्शनम् । याप्यतिशयाभिप्रायेण क्रियते साप्यस्याशाहावत् समैव भवति नातिरिच्यत इत्यर्थः । उदाहरणम्—

> इह श्रुत इन्द्रो अस्मे अद्य स्तवे वज्र्यृचीषमः ।
> मित्रो न यो जनेष्वा यशश्चक्रे असाम्या[17] ॥

---

१–अयं सर्वः पादारम्भात्मकः पाठो नास्ति C.
२–अमात्र C.
३–रिमाणं B.
४–स्यर्थः प्रात B.
५–मिना मिनाने मीनोतेर्वा C.
६–[ऋ० ३।३६।४] 'म (मा C.) हाँ (हाइ C.) अमत्रः' इत्येव प्रतीकम् B. C.
७–हिंसतपूर्वो C.
८–न ( प्र B. ) जने प्रजन B. C.
९–वर्ज्यते B. C.
१०–पार्णैर्यो C.
११–प्रजनव ( प C. ) ति B. C.
१२–विरच्छद् C.
१३–'वि' इति त्रुटितम् B.
१४–चनेति B. C.
१५–तच्छु ( च्छू C. ) तेर्यौश्चे ( B. ) B. C.
१६–वप्यौनैव C.
१७–[ ऋ० १०।२२।२ ] 'इह श्रुतः' इत्येव प्रतीकम् B. C.

विमदस्यार्षम् । इहास्मिन् यज्ञे श्रुतः प्रख्यात इन्द्रः । अस्मे अस्माभिः । अत्र स्तवे व्यत्ययेनोत्तमैकवचनं कर्मणि प्रथमपुरुषस्यैकवचनस्य स्थाने, स्तूयते वज्री आवृतवज्रः । ऋजीषमः तुल्ययाप्यधिकगुणाध्याहाररूपेण अधिकतास्तुतिरनुवादिनी भवति सा यस्येत्यर्थः । किञ्च मित्रो न मित्र इव यथा स्निग्धः कश्चित् कस्यचित् जनेषा आकारः स्वार्थे यश इत्येतस्माच्च परो द्रष्टव्यः । गुणाभिधानं कार्यात् तद्वत् सर्वजनेषु स्तोतृभ्यो यष्टृभ्यश्च यशश्चकारोऽत्र । असामि अनाशा अप्रसायि च तत्करोति अनवरतमित्यर्थः । सुसमाप्तं वा पर्याप्तमित्यर्थः ।

अनर्शरातिरित्यनवगतम् । अनश्लीलदानमित्यवगमः । अर्शसशब्दोऽश्लीलवाची । अश्लीलं किम् ? पापकम् । कस्मादिति चेत् ? यस्मात् पापवचनं प्रतिपत्तये रातिः पापिष्ठस्य दाता । तद्विपरीतोऽनर्शरातिः । उदाहरणम्—

अनर्शरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः ।
सो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥

नृमेधस्यार्षम् । अनर्शरातिम् अपापकदानम् उत्कृष्टस्य दातारमित्यर्थः । वसुदां विभं-जन्तमेतत् । अश्लीलमक्षरवर्णसामान्यान्निराह अश्निमदिति । अश्नयः कोऽयस्ताभिस्त-द्दश्नीमान् । तच्चात्र वैषम्योपलक्षणम् । तलश्च विषमहेतुत्वाद् अश्निमत् विषममित्याह । अश्निमत् सदश्लीलम् अश्लीलं सदर्शराति रातिर्दानम् अश्लीलविषया रातिर्दानं यस्य सोऽर्शरातिः पापिष्ठस्य दाता तद्विपरीतोऽनर्शरातिः । वसुनो धनस्य दातारमिन्द्रं होतः उपस्तुहि अन्तरात्मन् वा । किं कारणम् ? यतः भद्रा इन्द्रस्य रातयः कल्याणानि स्तोतृभ्यो

१–विमन्दस्या C. २–अस्मै B. C.
३–ध्याहारोपेण C.
४–स यस्येत्यर्थः B. समस्येत्यर्थः C.
५–'मित्रो न' इति नास्ति B C.
६–चकारोऽत्र: B. शस्करोऽत्र C.
७–अप्रसायि B. ८–अनश्लील C.
९–ब्दोऽश्लील वा C.
१०–अश्लीलं C.
११–पावकम् B. C. १२–यतः C.
१३–ये रात्रिः B. येत् रात्रिः C.
१४–तद्व (C.) परीतोदर्शं (श B.) रात्रिः B. C.
१५–[ ऋ० ८।९९।४ ] अर्शराति आत्मनं दशरात्रं B. आत्मान दशरात्रि C.
१६–आनर्शरात्रि C.
१७ अपावक B. C. * 'विजन्त०' इत्युचितम् ।
१८–अशीमन् B. C.
१९–अश्नीमा (म C.) न् B. C.
२०–रात्रि र्दुरात्रिर्दानं C.
२१–श्लीला विष B. अश्लीलविषमारतिर्दानं C.
२२–सोऽर्शतिः (र्ति C.) B. C.
२३–नर्शरात्रिः C. 'अश्लीलमक्षरवर्णसामान्यान्निराह' इत्यारभ्यात्रपर्यन्तः पाठो मन्त्रव्याख्याया अनन्तरमेव पठितो युक्तः स्यात् ।
२४–उपस्तु (स्त C.) हिः B. C.

यष्टृभ्यश्च इन्द्रस्य स्वभूतानि दानानि महदैश्वर्यकारीणीत्यर्थः। यतश्च स इन्द्रः अस्य स्तोतुः काममिच्छामभिलषितार्थविषया प्रार्थनां विधतो विदधतः परिचरतो न रोषति न कोपयति न हिनस्तीत्यर्थः। मन आत्मीयं पुनर्दानाय चोदयन् सातत्येन ददद्दित्यर्थः।

अनर्वेत्यनवगतम्। अर्तेः 'अन्येभ्योऽपि दृश्यन्ते' इत्येवं वनिपि रूपम्। 'अर्वणस्त्रसावनञः' इति वचनादत्र भावाभावः सिद्धः छान्दसत्वादनवगतः। प्रतिशास्वातन्त्र्यं चात्र विवक्षित नागमनप्रतिषेधमात्रं गन्तुः। तथाचाह अप्रत्यृतोऽप्रतिगतोऽन्यस्मिन् अन्यमनोश्रितः स्वतन्त्र इत्यर्थः। उदाहरणम्—

अनर्वाणं वृषभं मन्द्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः।
गाथान्यः सुरुचो यस्य देवा आशृण्वन्ति नवमानस्य मर्ताः [13]॥

अगस्त्यस्यार्षम्। अनर्वाणमगतमन्यं प्रत्याश्रिततया अपराश्रयमित्यर्थः। वृषभं वर्षितारम्। मन्द्रजिह्वं मन्द्रयतिरर्चतिकर्मा जिह्वेति वाङ्नाम। मन्द्रा जिह्वा वागस्य स मन्द्रजिह्वस्तं स्तुत्यवाचमित्यर्थः। मोदनवाचं वा सर्वे हि बृहस्पतेः स्तनयित्नुलक्षणां वाचमुपश्रुत्य मोदयन्ते। अत एवंगुणं बृहस्पतिं वर्धय स्तुहि अन्तरात्मन्। कीदृशं बृहस्पतिम्? नव्यं नवनीयं स्तुत्यम् अर्कैः स्तुतिरूपैः। यस्य बृहस्पतेः किम्? उच्यते। गाथान्यः गाथा गाथेति वाङ्नाम सा चार्थसामर्थ्यात् स्तनयित्नुलक्षणा तां दर्शयति प्रेरयति गाथान्यस्तनत इत्यर्थः। सुरुचो विद्युद्रूपतया सुदीप्तः। यस्य देवा आशृण्वन्ति आभिमुख्येनाकर्णयन्ति। नवमानस्य तनतेः शब्दकर्मणश्छान्दसमेतद्रूपम्। स्तनयित्नुलक्षणं शब्दं कुर्वतः। नच केवलं मनुष्या देवा मनुष्याश्च।

अथवा गाथाः स्तुतयस्तासां नेता बृहस्पतिर्गाथानीः। कुत एतत्? पुरोहितत्वात्।

---

१–'विधतः' इति नास्ति B. C.
२–हिनस्ति व्यर्थः C.
३–पुनर्ददनाय C.
४–चोदयत् B. C.
५–[ पा० ३।२।७५ ] दृश्यते B. C.
६–इत्येव रूपं वनिरूप B. इत्येवं वनिरूप C.
७–[ पा० ६।४।१२७ ] असावनं च B. C.
८–वचनात्र B. वचना C. '०दत्र तभा०' इत्युचितम्।
९–वगतम् B.　　१०–वारु B.
११–अत्र भूतः B. C.
१२–महाश्रितः B. C.
१३–[ ऋ० १।१९०।१ ] 'अनर्वाणं' इत्येव प्रतीकम् B. C.
१४–वि वृषभं C.
१५–रचयति क B.
१६–वाङ्नामा आत्मा B. वाङ्नात्मा C.
१७–'तं' इति नास्ति B. जिह्वतं C.
१८–अत्रैकं 'गाथा' इति पदं व्यर्थमेव।
१९–'दर्शं' इति त्रुटितम् C. 'दयति' इति पाठे सत्यत्र कदाचित् 'नयति' इत्येव मूलपाठः स्यात्।
२०–'मनुष्या देवा' इति त्रुटितम् C.
२१–'गाथानीः' इति युक्तं स्यात्।

'बृहस्पतिर्हि देवानां पुरोहित आसीत्' इति श्रुतेः। तस्य गाथान्यः सुदीतिरित्यादि समानम्। नवमानस्य स्तुवत इत्येवमितिहासदर्शनेन व्याख्येयम्। अनर्वाणमप्रत्यृतमिति पाठः। अनर्वमित्यपपाठः।

असामीत्यनवगतम्। अत्र च सामिशब्द एवानवगतो यत आह सामिप्रतिषिद्धमसामीति। सामीति कस्मात्? स्यतेः समाप्त्यर्थस्येति केचित्। तेन सामि समाप्तम् असमाप्तं चोच्यते तस्या नञ् प्रतिषेधः ततश्चासामि असमाप्तमित्यर्थः। अथवा न सामीति। किं तर्हि? सुसमाप्तमिति पाठान्तरेणार्थमाह। उदाहरणम्—

असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः।

ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषम्॥

कण्वस्य। असामि असमाप्तमनन्तमित्यर्थः। सुष्ठु वा समाप्तं महदित्यर्थः। ओजः शारीरं बलं बिभृथ यूयं धारयथ हे सुदानवो दानुशब्दो दातृवचनः 'दाभ्यामन्यत्रोणादयः' इति वा साधनवचनो वा तेन साधनदातारः शोभनदानव इत्यर्थः। नच केवलं शारीरमेव बलम्। किं तर्हि? असामि असमाप्तमेव। हे धूतयः छान्दसत्वात् कर्तरि द्रष्टव्यः कम्पयितारः शत्रूणाम्। शवः सेनालक्षणं बलम् अपिच बलं तादृशमेव द्विषेणापि बलेनोपेता यूयमित्यर्थः। यतश्चैवमतो ब्रवीमि ऋषिद्विषे शौनमेतत्प्रभृतीनामृषीणां द्वेष्ट्रे हे मरुतः परिमन्यवे मन्युरिति क्रोधनाम परिगतः प्राप्तो मन्युर्येन स परिमन्युस्तस्मै परिमन्यवे नित्यक्रुद्धायेत्यर्थः। अथवा मन्युर्मन्यतेर्दीप्तिकर्मण इति मन्युशब्देन दीप्तिरुच्यते। परिगतदीप्तये।

गल्दयेत्यनवगतम्। गालनेन इत्यवगमः। उदाहरणम्—।

[इत्येकादशस्या- (पञ्चस्या-) ध्यायस्य
त्रयोविंशः खण्डः।]

१–'बृहस्पतिर्हि वै देवानां पुरोहितः' [ऐत० ब्रा० ८।२६]
२–सावीति B. 'सामीति' इति मुद्रितम् C.
३–'इति' इति नास्ति C.
४–[ऋ० १।३९।१०] 'असाम्योजः' इत्येव प्रतीकम् B. C.
५–'त्य' इति मुद्रितम् C. [पा० ३।४।७५]
६–सूतयः B. C. ७–'द्विषेण०' इति युक्तम्
७–'बलेनोपेताः' इति युक्तं स्यात्।
८–सूयमि C.
९–ऋषिविद्विषे B. C.
१०–अयं पाठः सन्दिग्धः।
११–सिरिर्मिणः C.
१२–अयं तृतीयान्तपाठश्चिन्त्यः। तृतीयान्तपाठेऽपि 'दीप्त्या' इति स्यात्।
१३–'गल्दया' इति मुद्रितम् C.
१४–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते

# [ अथ चतुर्विंशः खण्डः ][1]

मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा।
भूर्णि मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥[2]

मेधातिथेः। मा इति प्रतिषेधश्चुक्रुधमित्याख्यातेन सम्बध्यते । सततयाच्ञा हि लोके क्रोधहेतुत्वेन प्रसिद्धा। यतो ब्रवीमि सदा याचन् अपि शब्दलोपो द्रष्टव्यः, त्वा त्वां सर्वदा याचन्नपि अहं मा चुक्रुधं भूर्णिमिव भूर्णिमृगं न भूर्णिं भ्रमणशीलं मृगं सिंहादिकं यथात्मविनाशाय कश्चित् क्रोधयते तद्वत्। न चाहमात्मवधायैव याचे। किं तर्हि ? सोमस्य गल्दया गालनेन क्षारणेन प्रदानेन पूरणेन तृप्तेरर्थः। नच गल्दयैव केवलया। किन्तर्हि। गिरा गीत्या च स्तुत्या च कारणेन। यतोऽहं सवनेषु यज्ञेष्वभिषवेषु सोमं प्रयच्छामि स्तौमि अतो नित्ययाचकोऽपि सन् मा चुक्रुधमित्यर्थः । ईशानमित्यादिरर्थान्तरोपन्यासः। कोनामाऽसावीश्वरं न याचयिष्यत इति। एवमस्य सोमसम्बन्धात् गल्दाशब्दस्य गालनार्थत्वमुपपन्नम्।

अस्यैव च पूरणार्थत्वं पूर्यमाणधमनीयसम्बन्धात् स्पष्टयिष्यन्नुदाहरणान्तरमुपन्यस्यति स्म वामदेवस्य—

आ त्वा विशन्त्विन्दव आ गल्दा धमनीनाम्।

आविशन्तु त्वामिन्द्रः सोमाः। किं स्तोकाः ? नेत्युच्यते । आगल्दा धमनीनाम्। धमन्यो हि ग्रीवानाड्य उच्यन्ते। आगलनात् पूरणात्। कण्ठनाडीनां यावत्तावदापूर्णत्वात्। गालितुमारब्धा इत्यर्थोऽस्य शेषः।

रसेन मे रसं पृण वाजिनो मे यज्ञं वहानि ।इति।

अस्यार्थः। रसेनोदकेन वृष्ट्याख्येन मे यदर्थं पार्थिवमुदकं पृण आपूरयेत्यर्थः। किञ्च वाजिनोऽन्नवन्तो देवा मे मम स्वभूतं यज्ञं प्रतीति शेषः, वहान वहन्तु प्रापयन्तु। कम् ?

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ऋ० ८।१।२०] 'मा त्वा सोमस्य' इत्येव प्रतीकम् B. C.
३–यज्ञा B. स्न्दा C.
४–'तर्पये' इति युक्तं स्यात्।
४–गद्द (तृप C.) दंशनं B. C.
५–खल्वा चक्रेगत B.
६–दिरन्तार्थान्तरो C. ७–गलनार्थमुप B.
८–'र' इति त्रुटितम् C. र्णं सान्मुप B.
९ [आपस्तम्बश्रौतसूत्रे ८,७,१०। मानवश्रौतसूत्रे १,७,२,१८] १०–मिन्द्वदसोमाः B. C.
११–अयो हि B. C. १२–कर्णनाडीनां C.
१३–[आपस्तम्बश्रौतसूत्रे ८,७,१०। मानवश्रौतसूत्रे १,७,२,१८।]
१४–अत्र 'वाजिनो' इति युक्तं स्यात्।
१५–येषाम B. C.

सामर्थ्यादात्मानम् । वाजिनश्च यज्ञमागच्छन्त्वित्यर्थः । यज्ञं वान्तं प्रापयन्त* अविघ्नेन समापयन्त्वित्यर्थः ।

नानाविभक्ती तुशब्दो विशेषणार्थः । उदाहरणद्वयेपि गल्दाशब्दस्य पूरणार्थत्वमधिशिष्टम् । इयांस्तु विशेषः । पूर्वं तु तृतीयान्तं स्त्रीलिङ्गम् । उत्तरत्र पञ्चम्यन्तो नपुंसकलिङ्ग इति । तत्र विभक्तिप्रदर्शनपुरस्सरम् आगल्दादिति पूरणार्थतामेव भाष्यकारो दर्शयति ।

जल्हव इत्यनवगतम् । ज्वलनवर्णहीना इत्यक्षरवर्णसामान्यादवगमः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
चतुर्विंशः खण्डः । ]

---

* 'प्रापयन्तु' इति युक्तं स्यात् ।

१–आविघ्नेन B.

२–विभक्तिः (क्ति C.) B. C.

३–गल्दशब्द B. गल्दाशब्द C.

४–तत्रो विभ B.

५–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ पञ्चविंशः खण्डः । ][1]

न पापासो मनामहे नारायासो न जल्हवः ।
यदिन्न्विन्द्र वृषण सचा सुते सखाय कृणवामहे[2] ॥

हस्तो नाम तस्यार्थम्[3] । न पापासो वेदग्रहणाद् यस्योत्तरकालं च यथाशास्त्रं[4] ब्रह्मचर्यस्य कृत्स्नस्य वेदाध्ययनस्य चात्मरूपस्य[5] च तपसोऽभावाच्च[6] वयं पापा इति मनामहे मन्यामहे । स्यादेतत् सत्यप्येतस्मिन् निर्धनत्वान्नित्यकर्मविलोपात्[7] पापा एवेति । एतच्च न । यतो नारायासो दानं मनसि भाद्याराधना.[8] । यो हि स्वभावाच्च राति स निर्धनो न वयम् । स्यादेतत्, सत्यप्यधिकारेऽनाहिताग्नित्वात् पापा इत्येतदपि न । यतो न[9] जल्हवो नापि ज्वलनेन हीना । यद् व्यत्ययेन नपुंसकैकवचनं पुंसो बहुवचनस्य[10] स्थाने यस्मादर्थे,पाप एव वयं[11] यस्माद्वा इन्द्र[12] यदपरणौ, इन्द्र वृषणं[13] वर्षितारं सचा सह सर्वैः ऋत्विग्भिः सुतेऽभिषुते सोमे[14] यष्टृयष्टव्यत्वलक्षणेन स्तोतृस्तुत्यत्वलक्षणेन च सख्येन[15] सखाय कृणवामहे कुर्मो यजाम. स्तुमश्चेत्यर्थ. । एवं विहितानुष्ठानेन प्रतिषिद्धवर्जनेन च परितुष्टात्मा भार्गव ऋषिरित्थमवोचत् ।

बकुर इत्यनवगतम् । भास्करो भयङ्करो भासमानो द्रवतीति[16] चेत्यवगम । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या-) ध्यायस्य
पञ्चविंशः खण्डः । ][17]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ८ । ६१ । ११] 'न पापास' इत्येव प्रतीकम् B. C.
३'तसाय' इत्येव C. अत्र 'भर्गो नाम तस्यार्षम्' इति युक्तं स्यात् ।
४–यथाशास्त्रं B C.
५–चात्मरूपस्य B.
६–तपसोऽभावा B.
७–निर्धनत्वा B. C.
८–रातिः सनि (नि B.) न्य (बन्ध B.) न B C.
९–'न' इति त्रुटितम् B. C.
१०–पुंसा बहु B.
११–पापा वै वयं C.
१२–उद्रे B इद्रे C.
१३–वृष्णं B
१४–सोमेषु C.
१५–सख्येन B.
१६–दृश्यतीति B द्रुश्यतीति C.
१७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ षड्विंशः खण्डः । ][1]

यवं वृकेणाश्विना वपन्तेषं दुहन्ता मनुषाय दस्रा ।
अभि दस्युं बकुरेणा धमन्तोरु ज्योतिश्चक्रथुरार्याय [2]॥

कक्षीवत आर्षम् । यवग्रहणमत्र प्रदर्शनार्थम् । यवादि धान्यम् । वृकेण वृको लाङ्गलमुच्यते लाङ्गलेन । हे अश्विना अश्विनौ वपन्तौ वपन्तौ इषमित्यन्ननाम तद्धेतुत्वादत्र वृष्टयुदके वर्तते । अन्नहेतुभूतं च वृष्टयुदकम् । दुहन्ता दुहन्तौ क्षारयन्तौ सर्वस्य मनुष्यस्यार्थाय । दस्युमुपक्षपयिता रक्षःपिशाचादिकम् । बकुरेण भास्करेण दीप्तेन भयंकरेण वा भासमानगमनेन वा । केन ? सामर्थ्यात् स्वेनायुधेन ज्योतिषा[12] वा धमन्ता धमतीति वधकर्मा अभिघ्नन्तौ । उरु विस्तीर्णमात्मनो ज्योतिस्तेजः प्रभावलक्षणं चक्रथुः कृतवन्तौ युवाम् । आर्याय आर्यजनार्थाय यववपनवृष्टिदोहनदस्युहननैस्त्रिभिः कर्मभिर्महाप्रभावौ युवां जातौ साधूनामनुग्रहार्थमित्यर्थः ।

अथैकपदनिरुक्तम् । वृको[16] विकर्तनाद् भूमेः । 'भूमिं भूमिशयांश्चैव हन्ति काष्ठमयोमुखम्' इति अभिधेयप्रसङ्गात् लाङ्गलमाह लगतेर्लगिः सङ्गे[18], सज्जति हि तद्भूमौ । लाङ्गूलवद्वा पुच्छसादृश्यात् । लाङ्गलमत्र हलमभिप्रेतम् । मात्रया तद्वत् । प्रसङ्गात् प्राण्यङ्गमिराह लगतेः, लग्नं हि तत् पृष्ठस्यान्ते गोगवयाश्वादेरिति । लिङ्गतेर्वा[23] खलत्वात् । लम्बतेर्वा दीर्घत्वात् । ज्योतिषा चोदकेन वेति । केचिद् वाशब्दं[24] चार्थे वर्णयन्ति ज्योतिषा चोदकेनेति[25] च । अरिशब्दादीश्वरवचनादपत्ये तद्धित इत्याह ईश्वरपुत्र इति ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १ । ११७ । २१] 'यवं वृकेण' इत्येव प्रतीकम् B. C.
३–लवमह B.  ४–धानम् B.
५–पचन्तावपन्तौ B.
६–'दुहन्ता' इति नास्ति B.
७–'दुहन्तौ' इति नास्ति C.
८–'प' इति नास्ति C.
९–'दीप्तेन' इति त्रुटितम् B.
१०–वट B C.  ११–पा B.
१२–ज्योतिषो पा (वा C.) हि B. C.
१३–धमनीति B. C.  १४–अर्याय C.
१५–यव पवन वृष्टि B' C.
१६–वृकोपिकर्त C.
१७–[अनुपलब्धमूलमिदम्]
१८–'लगे सङ्गे' [धा० १ । ७८७]
१९–अत्र 'सजति' इति युक्तं स्यात् ।
२०–लांगलेत्वाद्वा B.C.
२१–लांगूलमत्र B. C.
२२–सन्दिग्धमिदं पदम् । कदाचिदत्र 'मात्रया' इति पाठः स्यात् । परिमाणेन तत्सदृशमित्यर्थः ।
२३–'लङ्गतेर्वा' इति मुद्रितनिरुक्तमूले पाठः ।
२४–शब्दधार्थे B. C.
२५–'चोदकेन चेति' इति युक्तं स्यात् ।

बेकनाटोनित्यनवगतम् । खलुशब्दो वाक्यालङ्कारार्थः। कुसीदिनो वृद्धिजीविनो वार्धुषिका वा अभिधेयाः । द्विगुणकारिण इत्यादयोऽवगमाः। बे इति द्विशब्दस्यार्थेऽपभ्रंशो दृष्टः। एकं कार्षापणमृणिकाय प्रयच्छन् तौ द्वौ मह्यं प्रतिदातव्याविल्येवमभिधेयेन दर्शयन्ति। ततो द्विशब्दादेकशब्दाच्चाटयतेश्च बेकनाटा एतत् । एतेनाह द्विगुणकारिणो वा दायिनो वा द्विगुणं कामयन्त इति वेति। उदाहरणम्—

कदू महीरधृष्टा अस्य तविषीः कदु वृत्रघ्नो अस्तृतम् ।
इन्द्रो विश्वान् बेकनाटाँ अहर्दृश उत क्रत्वा पणीँरभि ॥

प्रागाथस्य कलेरार्षम्। कदु छान्दसत्वात् किमः कादेशः कदु क्वच। उकारः पदपूरणः। महीः अधृष्टा इति तविषीविशेषणे एते। तविषीति बलनाम। तेनायमर्थः। महान्त्यधर्षितानि अनभिभूतपूर्वाणि अस्येन्द्रस्य स्वभूतानि बलानि सेनालक्षणानि। कदु उकारो बैकारार्थे। क्व वा वृत्रघ्नः वृत्रस्य हन्तुः। अस्तृतं स्तृणातिर्वधकर्मा अहिंसितपूर्वं केनचित् शारीरं बलम्। अत्रैकवाक्यतायै उक्तानां बलानामप्रतिनिर्देशार्थो यच्छब्दोऽध्याहार्यः। यैः शारीरसेनालक्षणैर्वा बलैरिन्द्रो विश्वान् सर्वान् बेकनाटान् वार्धुषिकान्। तेषामेव विशेषणम्, अहर्दृशः अहःशब्देनात्र अह्नां हेतुत्वात् सूर्य उच्यते। तं ये पश्यन्ति ते सूर्यदृशः। ननु सर्व एव सूर्यं पश्यन्ति ? उच्यते। विशेषणार्थमेतत्। इहैव जन्मनि पश्यन्ति जन्मान्तरेऽपि न द्रक्ष्यन्ति पापकारित्वात् क्रिमिस्थावरादिप्राप्ताः। अथवा इमान्येवाहानि ऐहलौकिकान्येव पश्यन्ति न पारलौकिकानि। दृष्टप्रधाना नास्तिकास्ते अहर्दृशः। उत उतशब्द एवार्थे। क्रत्वाशब्दात् कर्मवचनात् परो द्रष्टव्यः। कर्मणैवानुष्ठानेन पणीन् वणिजश्च वणिक्सदृशान् शूद्रकल्पानित्यर्थः। तथाच स्मरणम्—

गोरक्षकान् वाणिजिकांस्तथा कारुकुशीलवान् ।
प्रेष्यान् वार्धुषिकांश्चैव विप्राञ्शूद्रवदाचरेत् ॥

अभ्युपसर्गश्रुतेर्योग्यक्रियापदमध्याजहार भाष्यकारोऽभिभवतीति विनाशयतीत्यर्थः ।

अभिघेतनेत्यनवगतम् । अभिधावतेत्यवगमः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या-) ध्यायस्य
षड्विंशः खण्डः । ]

———

१–वाणिजकान् B. C.
२–'तथा' इति त्रुटितम् B.
३–[मनु० ८ । १०२]
४–अभ्युपसर्गे P.
५–धेतेनेत्यवगतम् C.
६–हि धावते B. C.
७–आदर्शपुस्तकेऽत्र खण्डसमाप्तिनिर्देशो दृश्यते ।

## [ अथ सप्तविंशः खण्डः। ][1]

जीवासो अभि धेतनादित्यासः पुरा हथात्।
कद्ध स्थ हवनश्रुतः[2]॥

ऋषेः समन्दपुत्रस्य मत्स्यरूपस्यार्षम्। मत्स्यनामैव वा। यतो धीवरेण जालेन गृहीता आदित्यानित्यमाहुः। जीवासो जीवन्तोऽस्मान्[3] अभिधेतन अभिधावत रक्षत मोचयतेत्यभिप्रायः। आदित्यासो हे आदित्याः पुरा हथात्[4] प्रास्सनधार्यावत्याऽनेन[5] धीवरेण मार्यामह[6] इत्यर्थः। कद्ध हशब्दोऽनुशब्दस्यार्थे स चार्त्रे खेदे द्रष्टव्यः। यतो व्याचष्टे क्व नु स्थ येन शृणुत विलम्बमाना वा। हवनश्रुतो हे आर्तानामाह्वानस्य श्रोतारः।

मत्स्यानामित्याद्यर्थकथनमर्थाभिव्यक्तये प्रदर्शनं चेदमन्यत्राप्यर्थाभिव्यक्तये। आर्षं दर्शनीयमिति आर्षसम्बन्धेन प्रसक्तं मत्स्यं निराह मधुनि स्यन्दत इति। मधुशब्दात् स्यतेश्च मत्स्या इति। मोदन्ते हृष्यन्त्यन्योऽन्यं भक्षणायेति वा मदेर्भक्षयतेश्च मत्स्या इत्यर्थः। जौला यस्मात् जले चरन्ति भवन्तीति तद्धितार्थः।

अंहुर इत्यनवगतम्। तत्रांहुर्व्याख्यातः। 'अंहतिश्चांहश्चांहुश्च हन्तेः' इति। ततोंऽहुशब्दात् पापवचनाद् रो मत्वर्थे। अंहस्वीनित्यवगमः। अस्योदाहरणे प्रदर्शयितव्ये। एतत्समानार्थस्य सारूप्यप्रसङ्गाद् अंहूरणशब्दस्य तावन्निगमं दर्शयति कृण्वन्नंहूरणादिति। उदाहरणम्

त्रितः कूपेऽवहितो देवान् हवत ऊतये।
तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी[16]॥

कुत्सस्य त्रितस्य वार्षम्। त्रितो नामर्षिः कूपेऽवहितोऽधोनिहितः पतित इत्यर्थः।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ऋ० ८।६७।५] 'जीवाश्च' इत्येव प्रतीकम् B.C.
३–अत्र 'जीवतोऽस्मान्' इति युक्तं स्यात्।
४–हथात B. C.
५–प्रासनताया C. अयं पाठः सन्दिग्धः। अत्र कदाचित् 'प्राग्हननात् धावमानेन' इति पाठो भवेत्।
६–'मार्यामहे' इति युक्तं स्यात्।
७–न श्रुतेः हे अत्तानामाह्वानस्य B.
८–दशनीति C.
९–'मधौ स्यन्दते' इति मुद्रितनिरुक्ते पाठः।
१०–'त्रि' इति मुद्रितम् B.
११–माद्यन्तिसा हृष्य B. C.
१२–अत्र 'जाले' इति स्यात्।
१३–[निरु० ४।२५] निर्धाइवाच B. C.
१४–अंहस्पतीयव B.
१५–अंहरशब्दस्य B.
१६–[ऋ० १।१०५।१७] 'त्रितः कूपे' इत्येव प्रतीकम् B. C.

देवान् ह्वत ऊतये अत्र लुङ् द्रष्टव्यः, आहूतवान् । यदि वा कुत्सस्येदमार्षं ततो विरुद्ध एव परोक्षरूपेण प्रथमपुरुषनिर्देश इति व्याख्यातम् । अहं त्रितो नाम देवानाहूतवानित्यर्थः । किमर्थम् ? ऊतये सूक्तायुक्तेतिहासप्रदर्शिते मानसे यज्ञे सोमेन प्रदर्शिते तर्पणाय पालनाय वा आत्मनस्तदा मयोनं शुश्राव श्रुतवान् बृहस्पतिः कृण्वन् होता चेयं शतृप्रत्ययो द्रष्टव्यः । प्रयोजनस्य च हेतुत्वेन विवक्षा । किम्?सामर्थ्याद् रक्षणं वा उद्धारं वा । किम्?सामर्थ्यात् क्रियासामान्यवचनत्वात् करोतिरत्र रक्षणार्थे उत्तारणार्थो वा रक्षितुमुत्तारयितुं चेत्यर्थः ।

अंहूरणाद् अंहूरणोऽहुरान्निरुक्तः । अंहुर एवांहूरणः स्वार्थिको नशब्दस्तद्धितो दीर्घत्वं च छान्दसत्वात् । इतिहासप्रदर्शितपापकर्मणो वृत्रकात् तृणकण्टकादिभिरुद्वेगकरैरावृतादन्धकूपाद्वा । उरु क्रियाविशेषणमेतत्, विस्तीर्णं रक्षितुमुत्तारयितुं वा चिरकालमित्यर्थः । वित्तं मे अस्य 'विद ज्ञाने' श्रवणेन यज्ज्ञानं तदिह नाभिप्रेतम् । अस्येत्यतिसन्निहितत्वात् स्तोत्रस्य प्रतिनिर्देशः । द्वितीयार्थे षष्ठी । शृणुतं ममेदं स्तोत्रमित्यर्थः । अथवा अस्येति दुःखम् । विज्ञानेन चात्र तत्पूर्वकमुत्तारणं लक्ष्यते । तेनार्थानुग्रहस्वभावकतया मामितः कूपादुत्तारयतमित्यर्थः । हे रोदसी द्यावापृथिव्यौ ।

इदानीमंहुरस्योदाहरणमाह—

सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ ''॥

त्रितस्य । सप्त प्राधान्येन सप्तसंख्याका मर्यादा अनतिक्रमणीया व्यवस्थारूपास्ते मर्यादाः । कवयो धर्मविदो मेधाविन ऋषयो वेदा एव वा । ततक्षुः कृतवन्तः । ऋषिपक्षे नित्यत्वात्तासामनुष्ठितवन्त इत्यर्थः । व्याकृतवन्तः । तासामेकाम् ईदृश्यर्थे तासां मध्ये एकामपि । अभीत्ययं गादित्येतेन सम्बध्यते । एकवाक्यतार्थे यत्तच्छब्दावध्याहार्यौ । योऽभिगाद् अभ्यगाद् अभिगच्छति अभिक्रामतीत्यर्थः । सोऽहुरोऽहंस्वान् पापवानित्यर्थः ।

---

१–सन्दिग्धमिदं पदम् । अत्र कदाचित् 'तदाज्ञानं' इति पाठो भवेत् ।
२–अत्र 'कुर्वन्' इति पाठः स्यात् ।
३–रणादुत्तरो निरु B. रणादंहुरो निरु C.
४–अंहुरण एवां हूरणादः (दC.) B. C.
५–वृत्रकात् B.
६–'कण्टकादिहद्वेगक' इति त्रुटितम् C.
७–दायरूपा वा B. C.
८–[धा० ३ । ५४]
९–यज्ञानं B. यज्ञानं C.
१०–'शृणुतं' इति नास्ति B.
११–[ऋ० १०।५।६] सप्त मर्यादाः' इत्येव प्रतीकम् B. C.
१२–तामामिदमेकमप्यर्थं B. तामामेकमिदमप्यर्थं C.
१३–अभ्यगात् C.

परस्यार्धर्चस्य सम्बन्धार्थं शेषोऽध्याहार्यः । यः[1] स्तुता एना अभिगच्छति[2] स इह लोके तावद्योर्मनुष्यस्य सर्वस्य स्कम्भः स्कम्भभूत आश्रयो भवति, प्रायेणोत्तरकालमपि परलोके उपमस्य कृत्स्नस्य जगत उपनिर्मातुरादित्याख्यस्य आन्तरपुरुषस्य नीडे नीडस्थानीयमण्डल[3] इत्यर्थः । पथाम् उदकमपि पाथः, उदकानां वा वृष्ट्याख्यानां विसर्गे विसर्जनेऽन्तरिक्षे धरुणेषु उदकनामेदम्, उदकेषु चन्द्रमण्डलरूपेषु चन्द्रमण्डल[4] इत्यर्थः । अनेकाधिकरणश्रुतेः[5] सामानाधिकरण्यानुपपत्तेश्च विकल्पः[6], इह वेह वा स्थाने तस्थौ तिष्ठति आस्ते ।

यद्यपि विहितानुष्ठानस्यैवैतत् फलं तथाप्यतिक्रमहेतोरधर्मस्य प्रतिबन्धुरभावेन सामान्येनोक्ता न विशेषेणेत्यत आह स्तेयं सुवर्णस्य तल्पारोहणं गुरुस्त्रीगमनं भ्रूणहत्या ब्राह्मणगर्भस्य व्यापादनं दुष्कृतस्येत्यादिना एषामेव संपादनमभिप्रेतम् । पातके[7] महापातकविषये अनृतोऽयम्[8] अनृतवचनं मिथ्याभिशंसनामित्यर्थः ।

यते इत्यनवगतम् । सत्त्ववाचि प्रथमान्तं यत्यदवीत इति[9] वाक्यस्यार्थे पदम् । वलशब्दादन्तेश्च यतो दुर्बल इत्यर्थः । अन्यस्तु यतेति निपातोऽसत्त्ववचनोऽव्ययम् । यत आह निपातः खेदानुकम्पयोरिति । तत्र निपात इति पदजात्यवधारणम् । निपातत्वादनवगतमनेकार्थं च । खेदो दुःखं मानसमनुकम्पा दया तयोर्वर्तते[10] । 'चादयोऽनुदात्ताः' इत्यपवाद[11]वचनादनुदात्तत्वम् । उभयोरेकमुदाहरणम् ।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
सप्तविंशः खण्डः । ][12]

---

१-यस्तु ता C. अत्र 'यस्तु न एता' इत्येव युक्तः पाठः स्यात् । अभिगच्छतीत्यस्य अनुतिष्ठतीत्यर्थे 'यस्तु ता एता' इत्यपि पाठो युक्तः संभवति । यस्तु ता एताः सप्त मर्यादा अनुतिष्ठति पालयतीत्यर्थः ।

२-गच्छन्ति B. C.

३-विले विलस्थानीये B.

४-श्रुतः सा (स C.) मा B. C.

५-विकल्पद B. C.

६-सप ( पा C. ) दन B. C.

७-अपातके B. C.

८-अनृतोऽन्यं B. C.

९-यक इत्य C.

१०-कम्पपादयतोर्वर्त B. कम्पपादया C.

११-[ फि॰ सू॰ ४।१६ ] स. तत्वे वेदे (दा C.) त्यात्रपवाद B. C. 'निपाता आद्युदात्ताः' [फि॰ सू॰ ४।१२] इत्युत्सर्गेण निपातानां सर्वेषामाद्युदात्तत्वे प्राप्तेऽपवादसूत्रं चादय इति ।

१२-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ अष्टाविंशः खण्डः । ][1]

वतो बतासि यम नैव ते मनो हृदयं चाविदाम ।
अन्या किल त्वां कक्ष्येव युक्तं परि ष्वजाते लिबुजेव वृक्षम्[2] ॥

यमीयमसंवादे यमी यमं कामयमाना 'तन्वा मे तन्वं सं पिपृग्धि' इति 'न वा उ ते तन्वा तन्वं सं पिपृच्याम्' इत्येवमन्तेन प्रत्याख्याता सती सेर्ष्यमाणा यममुपालभते स्म । वतो बलादतीतैः परिष्वजते वत हि कष्टं दुर्बलोऽसि यम । नैव एवशब्दश्चार्थे नञ्च ते तव मनो हृदयं च परमार्थम् अविदाम मनसो हृदयस्य निश्चयस्य चाविज्ञानात् । केन कारणेन दुर्बल इति न विजानीम इत्यर्थः । अथवा सशिरःकम्पभूमेरङ्गुलीतर्जनमाह अोः ज्ञातम् । अन्या किल कापि स्त्री त्वां कक्ष्येव यथा कक्ष्याऽश्वस्य हस्तिनो रज्जुमात्मना* संबद्धमश्वं हस्तिनं वा परिष्वजते तद्वत् परिष्वजाते लडर्थे पञ्चमः परिष्वजते । लिबुजेव द्वितीयोपमा । लिबुजा व्रततिर्वल्लीत्यर्थः । सा यथा वृक्षं सर्वात्मना वेष्टयेत् परिष्वजेत तद्वत् । अन्यस्यामपि सौभाग्यगुणेन गर्वितायामङ्गनायामासक्तहृदयत्वाद् दुर्बलोऽसीत्यर्थः ।

लिबुजाशब्दं निगमप्रसक्तमभिधेयतोऽभिधानतश्च निराह व्रततिरित्यभिधेयं वा तत्पुरोवात एतल्लीयते विभजतीति शब्दनिर्वचनम् । श्लिष्यन्तीति कन्दिलं वेष्टयन्तीत्यर्थः । पर्यायप्रसक्तमाह व्रततिर्वरणाच्चेत्यादि । वरणादाच्छादनात् ततनाच्चयनात् । वृणोतेस्तनोतेश्चिनोतेश्च त्रयाणामप्यर्थस्य समवायसम्भवात् त्रिधातुजमित्यर्थः ।

वाताप्यमित्यनवगतम् । उदकं वृष्टिलक्षणमभिधेयम् । वातः पुरोवात एतद् वृष्ट्युदकमाप्याययति । ततो वात आप्यायनोऽस्येति वाताप्यायनं इत्यवगमः । अथवा वातो

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० १०।१०।१३ ] 'वतो वतासि' इत्येव प्रतीकम् B. C.
३–यमकोमय C.
४–[ ऋ० १०।१०।११ ] तवा ( त्वा B. ) मे तन्वां सं (सः B.) विपृन्धि ( विपद्धि B. ) B. C.
५–[ ऋ० १०।१०।१२ ] तन्वा तन्वां ( B. C. ) सं विपृच्याम् B.
६–बल: B. C. ७–दतीतं B.
८–'मे' इत्येव B. C.
९–'च' इति नास्ति B. C.
१०–अपि हमनसो B. C.
११–भूमेरा (दा C.) ङ्गुली B. C.
१२–अज्ञातं B. आज्ञातं C.
*–'रज्जुरात्मना' इति युक्तम् ।
१३–परिष्वजते B. १४–'ज' इति त्रुटितम् C.
१५–लिबुपेव B. C. १६–प्रतनी वल्ली B. C.
१७–प्रततीरिव B. C. १८–वातः पुरोवात C.
१९–विभुजतीति B. C.
२०–'चिनोतेः' इति नास्ति B.
२१–'ततो' इति युक्तम् । २२–'०यनम्' इति युक्तम् ।

यदाप्याययति तेन वातेन तदाप्यायत इति कर्मोपपदस्याप्यायतेराङ्पूर्वस्य कर्तरि प्रत्ययो द्रष्टव्यः। उदाहरणम्—

नू नो रयिमुप मास्व नृवन्तं पुनानो वाताप्यं विश्वश्चन्द्रम्।
प्र वन्दितुरिन्दो तार्यायुः प्रातर्मक्षू धियावसुर्जगम्यात्[3]॥

नोधस आर्षम्। सर्वाः सौम्याः पावमान्य इति सोम उच्यते। नू नः नु इति क्षिप्रनाम क्षिप्रमस्माकम्। रयिं धनम्। उपमास्व उपनिर्मिमिक्ष्व कुरुष्व अस्मभ्यं देहीत्यर्थः। कीदृशम्? नृवन्त नृभिः परिचारकमनुष्यैस्तद्वन्तं पुनानः पूयमानस्त्वम्। नच केवलं रयिमेव। किं तर्हि? वाताप्यम् उदकं वृष्टिलक्षणम्। विश्वश्चन्द्रे चन्द्रश्चन्दतेः कान्तिकर्मणः। अथवा 'चदि आह्लादने' इत्यस्य। ततश्च विश्वचन्द्रमिति प्राप्ते 'ह्रस्वाचन्द्रोत्तरपदे मन्त्रे' इति सुट् सर्वकान्तं ह्लादकं वा। प्रशब्दस्तारीत्याख्यातेन सम्बध्यते। किञ्च वन्दितुः स्तोतुर्मम इन्दो हे सोम प्रतारि कर्तरि चिण् लोडर्थे च लुङ् छान्दसत्वाद् द्रष्टव्यः। प्रतरतु प्रवर्धतामायुः। प्रातः अन्तर्नीतवीप्सार्थमेतत्। किम्? प्रातः प्रातश्च। मक्षु क्षिप्रम्। धियावसुः कर्मधनो वा। कैः पुनरसौ? सामर्थ्यादिन्दुः। जगम्यात् जंहतेर्गतिकर्मण एतद् रूपम्। अस्मद्यज्ञं गच्छेत्याशास्महे। ह्लादशीलादि स्तुत्यं कर्मास्माकमुपागमेत्वित्यर्थः।

चाकनिमित्यनवगतम्। चायतिर्ति वा कामयमान इति यावगमः। उदाहरणम्—

वने न वायो न्यधायि चाकञ्छुचिर्वां स्तोमो भुरणावजीगः।
यस्येदिन्द्रः पुरुदिनेषु होता नृणां नर्यो नृतमः क्षपावान्[25]॥

१–यथा आप्याय B.
२–'न' इति त्रुटितम् C.
३–[ ऋ० ९.९३.५ ] 'नू ( आ C. ) नो रयिम्' इत्येव प्रतीकम् B. C.
४–नौधस C.
५–नून B. तनुं C.
६–क्षिप्रं न अस्मा C.
७–उपमास्वे B. C.
८–नृपर्त B. C.
९–तन्वन्तं B. C.
१०–पुनाना B. ११–वाताप्यः C.
१२–विश्वं चन्द्रं च चन्दतेः B.
१३–[ धा० ११६८ ] चदि ह्लादने C. धातुपाठे तु 'चदि आह्लादे' इति पाठः।
१४–विश्वः च B. विति विश्वश्च C.
१५–[ पा० ६।१।१५१ ] १६–सुन् B.
१७–तरित्याख्या B. C.
१८–पणितुः B. वणितुः C.
१९–मतानि B.
२०–कं पुन B. C.
२१–ह्लादशाह्लानि B.
२२–मुपगम B.
२३–चाकिमित्यवग C.
२४–तायमान C.
२५–[ ऋ० १०।२९।१ ] 'वने न वायो' इत्येव प्रतीकम् B. C.

वसुकस्यार्षम् । वनशब्देनात्र वनावयवो वृक्षो लक्ष्यते । उरपदयन्निव वीक्ष्यमाण इव कामयमान इव वा । शुचिः अपगताशेषवक्ष्यदोषः सौगुण्यादिगुणयुक्त इत्यर्थः । वां युवयोः स्वभूतः । कः पुनरसौ ? सोमः । भुरणी हे भर्तारौ देवानां पत्नीयजमानौ । गतिकर्मणो भुरण्यतेरेतद्रूपम् । क्षिप्रनाशौ वा कर्मार्थमितश्चेतश्च गन्तारौ क्षिप्रेण वा अजीगः जिगर्ति गृह्णाति वशे स्थापयतीत्यर्थः । कम् ? सामर्थ्यादिन्द्रमागच्छन्तमेव । कीदृशः सोमः ? यस्य च सोमस्येन्द्र पुरुदिनेषु बहुष्वहस्सु होता ह्वयतेरर्चतिकर्मण एतद्रूपम् । नास्तीदृशो नासीत्येयं स्तोता यं वो मां प्रत्ययमागच्छतु नान्यमित्येवमाह यो ता । कीदृश इन्द्रः ? उच्यते । नर्यो नृभ्यो हितः । नृणां नृतमो मनुष्याणां मध्ये प्रकृष्टमनुष्यः सर्वैः पुरुगुणैरुपेत इत्यर्थः । क्षपावान् क्षपा रात्रिः, रात्रिशब्देन रात्रिपर्यायाणां स्तोतॄणां चाद्भूता यतिः सोच्यते, तया राध्या तद्वानित्यर्थः ।

वेः पुत्रो वीय इत्येवमेकपदत्वेन वायशब्दं व्याख्याय भाष्यकारः शाकल्यमुपालभते स्म वी इति य इति च पदद्वयं चकार । तत्तु न युक्तम् । यत एवं पदद्वये सति 'यद्वृत्तान्नित्यम्' इत्येवमुदात्तमेवाख्यातं न्यधास्यदित्येवमेवाभविष्यत् । अनुदात्तं चेदम् । तस्मादेदं पदद्वयम् । किं तर्हि ? एकं यथैव वयमवोचामेति । किञ्च अनुपमार्थः सुष्ठु स्वभिप्रायोऽपरिशुद्धः । आनर्थक्यमेवानेन दर्शयति । यावद्वो दिव इत्यादिसम्भवाद् य इत्यस्योद्देशार्थेऽस्मिन् प्रत्युपक्रमार्थत्वेन कस्यचिदप्युद्दिश्यमानस्याभावादनर्थकः । तस्माद् एकं पदमेतत् । स्वरूपानुपपत्तेरानर्थक्यप्रसङ्गाच्चेति भाष्यकारस्य निश्चयः ।

य इति सोमस्योद्देशः,वायकमिति चाख्याने न नामशब्दः, अपि सम्प्रत्यर्थे । तेनापिमित्यर्थः । ततश्चायं यः सोम आत्मनः पानं कामयते । यच्छन्दश्रुतेस्तच्छब्दोऽध्याहार्यः । स वने वनविकारभूते ग्रहचमसादौ सुतहत्कलशादौ वा स्थापि ऋत्विग्भिर्निहितो

यतश्चायते। शुचिर्वामित्यादि समानव्याख्यानमिति। चाकन्निति चाख्यातं कथं गम्यत इति चेत् 'अग्निर्वेरूथं मम तस्य चाकन्' इति मन्त्रान्तरे दर्शनात्। अतश्चैतदेवंरूपमाख्यातम् 'आ नो भर सुवितं यस्य चाकन्' इति यद्वृत्तात्सम्बन्धान्निघातप्रतिषेधे सत्युदात्तश्रुतिर्न भवति।

रथर्यतीत्यनवगतम्। रथीयतीति प्राप्ते रेफ उपजनः, स पुनरस्यामिधेयः सिद्धः प्रसिद्ध एव वेदे बहुशः प्रयोगात्। तत्रैन्नुरिच्छाकर्मसामान्येन क्यच् प्रत्ययेति प्रति निर्दिश्यते तं य ईप्सति स उच्यत इति स्पष्टतायै प्रकृतिविशेषं दर्शयति रथं कामयत इति। उदाहरणम्—

एष देवो रथर्यति पवमानो दशस्यति।
आविष्कृणोति वग्वनुम्॥

शुनःशेपस्यार्षम्। एष सोमो देवो दानादिगुणो रथर्यति रथीयति हविर्धानशकटाख्यानम्। इन्द्रस्य वा स्वभूतमापतन्तम्। ईहतेर्वा रथो नरं हरणं वा गमनमात्मनो देवान्प्रतीच्छतीत्यर्थः। पवमानः पूयमानः क्षरणार्थो वा पुनातिः क्षरन्। दशस्यति दाशतेर्वा दानकर्मण एतद्रूपम्। दशतिर्वा सामर्थ्यादपठितोऽपि दानकर्मा द्रष्टव्यः। ददाति स्तोतृभ्यो यष्टृभ्यश्च। किम्? सामर्थ्यात् यथाभिलषितमर्थम्। अथवा दशापवित्रमत्रैकदेशेऽदशाशब्देन भीमभामादिवदुच्यते। दशापवित्रं दशा तदिच्छति दशस्यति। छान्दसत्वात् ह्रस्वत्वं सर्वप्राति दिकेभ्य इष्यते दधिष्यन्ति मधुष्यन्तीति यथा। अथवा दशस्यति दशसंख्यातां सुप्रिमात्मनः परिमाणमिच्छति सुकं पूर्ववत्। आविष्कृणोति आविष्करोति च प्रकाशयति च। किम्? वग्वनुं वग्नुरित्यस्य वाङ्नामच्छान्दसो वशब्द उपजनः। अभिषवग्रावाभिघातजं स्वसम्बन्धि कूर्दनुशब्दं स्तोत्रशस्त्रलक्षणं वा वाचम्।

१—'चाकन्निति' इति नास्ति B. C.
२—[ ऋ० १।१४८।२ ]
३—[ ऋ० १०।१४८।१ ]
४—प्रकृतिः प्रति C.
५—'तं' इति त्रुटितम् B.
६—[ ऋ० ९।३।५ ] 'एष देवः' इत्येव प्रतीकम् B. C.
७—रथं B. अत्रायं पाठः सन्दिग्धः।
८—'क्षरणार्थो वा पुनातिः' इति त्रुटितम् C.
९—क्षरं B.
१०—तिवेश साम C.
११—अत्रैकादशो दशा B. अत्रकादेशो नशा C.
१२—भामवादि B.
१३—तदशस्यति B.
१४—दधिष्यति B.
१५—सुक् C. अत्र 'क्यच्' इति 'शेषं' इति वा पाठो युक्तो भवेत्।
१६—पशुनं पशुरित्य B. C.
१७—न्दसैवसुशब्दः B. न्दसेवसुशब्दः C.
१८—तजस्वस C.
१९—वग्धिनं B. C.
२०—कूटानु B.
२१—पाचा B. पाचम C.

पचेर्वा कर्मण्यौणादिको वनुप्रत्ययो वक्तव्यः । स्वगुणमनेकाकारमाविष्करोतीत्यर्थः ।

इति [ आचार्यमहेश्वरकृते ] निरुक्तविवरणसमुच्चये
एकादशस्या- [ षष्ठस्या- ] ध्यायस्य
पञ्चमः पादः समाप्तः ।

---

[ अष्टाविंशश्च खण्डः
समाप्तः । ]

---

१-पचेर्वा B. C.
२-वुनप्रत्य B.
३-अयं कोष्ठकान्तर्गतः पाठो नास्मादर्शपुस्तकेषु ।
४-'समाप्तः' इति नास्ति C.

## अथ षष्ठः पादः ।

असक्रामित्यनवगतम् । असंक्रामणीमिति वा ल्युटि णिलि प्रत्यये वावगमः । अथवा समानशब्द उपपदे क्रमेः 'जनसन' इत्येवं विटि 'विड्वनोरनुनासिकस्य' इत्यात्वे 'समानस्य छन्दसि' इति च सभावे एतद्रूपम् । सभावेषु क्रामतीति सक्रा न सक्रा असक्रा ताम-सक्राम् । छान्दसत्वादनवगतम् । उदाहरणम्—

पुरु हि वां पुरुभुजा देष्णं धेनुं न इषं पिन्वतमसंक्राम् ।
स्तुतश्च वां माध्वी सुष्टुतिश्च रसाश्च ये वामनु रातिमग्मन् ॥

भरद्वाजस्य । हिशब्दो यस्मादर्थे । पुरु बहु वां युवयोः पुरुभुजा हे पुरुभुजौ बहूनां हविषामभ्यवहर्त्तारौ पालयितारौ वा यजमानानाम् । देष्णं दानं यस्मात् प्रभूतदायिनौ युवां तस्माद् धेनुं दोग्ध्रीं गां नोऽस्मभ्यम् । इषम् अन्नं च पिन्वतं क्षारयतं दत्तमित्यर्थः । असक्राम् असंक्रामणीं यावज्जीवमनपायिनीम् । यद्वा समेष्वक्रान्तामगतामसमत्वं सजातैर-प्राप्तपूर्वामित्यर्थः । किञ्च स्तुतश्च स्तुतः स्तविरूपं स्तोतारश्च ये केचित् पृथिव्यां ते सर्वे वां युवयोः हे माध्वी मधुसम्बन्धि मधुनः पूर्णौ माधवः 'तस्येदम्' इत्यणि गुणाभावश्छान्द-सत्वात् । कोऽसौ ? इतिः । कुत एतत् । 'यो ह वां मधुनो दृतिराहितो रथचर्षणे । ततः पिबतमश्विनौ' इति मन्त्रान्तरे दर्शनात् । तेन तद्वतीं माध्वीम् 'ईयनिपौ छन्दसि' इति मत्वर्थे ईकारः । सुष्टुतिश्च शोभना च या काचित् स्तुतिः सर्वा युवयोरेव । रसाश्च सोम-

१-अयं पादारम्भात्मकः पाठो नास्ति C.
२-प्रत्ययो वावगमः B. C.
३-[ पा० ३।२।६७ ]
४-लिटि B. विलिटि C.
५-[ पा० ६।४।४१ ] विष्वनो C.
६-[ पा० ६।३।८४ ]
७-स्वभाव C.
८-'न सक्रा' इति नास्ति B. C.
९-[ ऋ० ६।६३।८ ] 'पुरु हि वाम्' इत्येव प्रतीकम् B. C. १०-युवयोर्वैः पुरु B. C.
११-हविष्यामभ्य C.
* '०वहर्तारौ' इति युक्तं स्यात् ।
१२-देष्र्ण B. C.
१३-प्रभूतयिना B.
१४-'तः' B. C.
१५-मनसायिनीम् C. 'मनवसायिनीम्' इति वा पाठोऽत्र समीचीनो भवेत् ।
१६-मेष्वाक्रान्ता B.
१७-मस्मात्स B. १८-स्तुत्वे B.
१९-सन्दिग्धमिदं पदम् ।
२०-[ पा० ४।३।१२० ]
२१-[ ऋ० ८।५।१९ ]
२२-तद्वन्ती माध्वी C.
२३-'छन्दसीवनिपौ च वक्तव्यौ' इति वार्तिकम् [पा० ५।२।१०९ ] इति सूत्रे वर्तते ।
२४-साश्च सोम B. साश्च सो C.

लक्षणा ये त्वां युवयो रातिर्दीनम् अगमन् अनुगच्छन्ति । युवाभ्यां ये प्रदीयन्त इत्यर्थः ।

आधव इत्यनवगतम् । आधवनादिति निर्वचनम् । आकम्पनादित्यर्थः । कर्तरि ल्युट् आधवन इति प्राप्ते । ननु पचाद्यचि सिद्धम् । एवं तर्हि आधावयतीति आकम्पयतीति ण्यर्थे पचाद्यजनवगतम् । भाष्ये त्वाधावनादित्यन्तर्नीतण्यर्थो द्रष्टव्यः । उदाहरणम्—

मंसीमहि त्वा वयमस्माकं देव पूषन् ।
मतीनां च साधनं विप्राणां चाधवम् ॥

विमदस्यार्षम् । मंसीमहीति मनेः स्तुतिकर्मणो रूपम् । स्तुयाम त्वा त्वाम् । वयमित्याशास्महे । कीदृशं त्वाम् ? अस्माकं हे देव पूषन् मतीनां बुद्धीनां साधनं साधयितारम् उदयेन सर्वकर्मविषयाणां प्रज्ञानां प्रवर्तयितारमित्यर्थः । विप्राणां च मेधाविनां चान्येषामपि द्विजानामाधवं श्रद्धापरिचर्यादिषु दूरे धावयितारमाकम्पयितारम् ।

अनवब्रव इत्यनवगतम् । ब्रुवो वचनम् । तेन अनवक्षिप्तवचन इत्यवगतेः । अप्रतिहतशासन इत्यर्थः । अनवक्षिप्तपूर्वं पार्थिवानां वचो येन सः । उदाहरणम्—

विजेषकृदिन्द्र इवानवब्रवो३ऽस्माकं मन्यो अधिपा भवेह ।
प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ॥

विजेषकृद् विजयस्य कर्ता इन्द्र इव यथा इन्द्रस्तथाऽनवब्रवोऽप्रतिहतवचनोऽस्माकं हे मन्यो आधिपाः अधिकृताय पाता रक्षिता भव इह प्रकृते यज्ञे लोके वा । कस्मादेवमुच्यते अधिपा भवेति ? उच्यते । यस्मात् प्रियमिदं ते तव नाम । सहुरे अभिभवनशील गृणीमसि गृणीमः स्तुमो वयं नाम स्तुतिद्वारेणेयं नामवत एव स्तुतिरुच्यते । किञ्च विद्म जानीम तम् । उत्साम् उत्स्यन्दन्ते उद्गच्छन्ति उत्पद्यन्ते यतो विकाराः स उत्सं कारणं प्रज्ञाख्यं यतस्त्वमाबभूथ आभिमुख्येन भूत उत्पन्न इत्यर्थः ।

---

१–रातिं म्लानिं C.
२–आधावन B.
३–ऽयन्ति आक B. C.
४–'ज' इति त्रुटितम् B. '०जनवगत:' इति युक्तम् ।
५–'उदाहरणम्' इति त्रुटितम् B.
६–[ऋ० १०।२६।४] 'मंसीमहि' इत्येव प्रतीकम् B. C.
७–मिमिदस्यार्षम् B. C.
८–पुरुषन् C.
९–बुद्धिनां C.
१०–साधना B. C.
११–त्वं B.
१२–माधावं B.
१३–अत्र 'इत्यवगमः' इति युक्तं स्यात् ।
१४–[ऋ० १०।८४।५] 'विजेषकृदिन्द्रः ( दिन्द्र C. )' इत्येव प्रतीकम् B. C.
१५–वनवं B.
१६–यान B. मान C.
१७–गृणीमहि B.
१८–'उत्सं' इति त्रुटितम् B.
१९–इत्सं B.
२०–आभिमुख्या C.

सदान्वे इत्यनवगतम्। सदानोनुव इत्यवगमः । सदाकणलक्षणशब्दकारिणीत्यर्थः । नोनूयतेर्नोनुवा तस्याः सम्बोधनं सदेत्येतेन पुनः पुनर्दर्शनम्। दुर्भिक्षादिदेवता अलक्ष्मीर्वाऽभिधेया। उदाहरणम्—

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
एकोनत्रिंशः खण्डः। ]

---

१—सदा भोन्व C.
२—'त' इति त्रुटितम् B.
३—अभक्षीर्वा B. अक्षीर्वा C.
४—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ त्रिंशः खण्डः । ]

अरायि काणे विकटे गिरिं गच्छ सदान्वे ।
शिरिम्बिठस्य सत्वभिस्तेभिष्ट्वा चातयामसि ॥

शिरिम्बिठस्यार्षम् । दुष्प्रमाया दुर्भिक्षस्याधिदेवता काचिदुच्यते । अरायि रातेर्दानकर्मण औणादिके इति युक्ति च अरायिशब्दोऽदातृवचनः, हे अरायि काणे विकटे विकृतदर्शने विकृतगते च गिरिं पर्वतं गच्छ मात्रासिष्ठाः सैवोच्यते तदा कॅणलक्षणशब्दकारिणि । इह यान्यदातृत्वादीनि दुर्भिक्षे मनुष्याः कुर्वन्ति तेषामत्र निमित्तभूतत्वाद् दुर्भिक्षाधिदेवतैवेति सैवोच्यते । मनुष्याणामदातृत्वकाणत्वविकटत्वसदाक्रन्दनशब्दकर्त्यानां निमित्तभूतेत्यर्थः । शिरिम्बिठस्य मेघस्य यानि स्वभूतानि तदुदरकोटरगतानि तेभिस्तैः सत्वैभिः उदकैस्त्वा त्वां चातयामसि चातयतिर्नाशने चातयामो नाशयामः । अथवाऽस्यर्चा कालकर्णी उच्यते । सा हि न किञ्चिद् ददाति काणा च विकटा च । सा कुरकुटायते सा अरायीत्येवमादीनामत्रोच्यते गिरिं गच्छ । अनिच्छन्तीमपि च बलात् शिरिम्बिठस्य ऋषेः स्वभूतानि यान्यलक्ष्मीकानि कर्माणि तैस्तां नाशयामः ।

निगमप्रसक्तानुप्रसक्तं निराह काणोऽविक्रान्तमर्पगतं दर्शनमस्येति क्रमेः । काणो विगतचक्षुरित्यौपमन्यवो मन्यते । कणतेर्वा धातोः । अणुभावात् कारणात् । आचार्यमतान्तरदर्शनमेतत् । कथं पुनः कणतेः काणः ? उच्यते । शब्दसारूप्यभूयस्त्वात् । कणतिशब्दोऽणुभावे भाव्यते लोके । तथाच प्रयोगं दर्शयति अणु कणतीति । अल्पं शब्दं कुर्वन् कणतीत्युच्यते । ततश्च मात्राभावाद् अल्पपरिमाणत्वसामान्यदर्शनाद् अणुभावात्

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १०।१५५।१] 'अरायि काणे' इत्येव प्रतीकम् B. C.
३–गिरिविस्योर्पम् C.
४–अयं पाठः सन्दिग्धः । ५–काते B. C.
६–रायिकाभिशब्दो B. C.
७–करणलक्ष B. C. अत्र 'करणलक्षण' इति वा पाठो भवेत् ।
८–शाब्द B. ९–क्रोधिरे B. C.
१०–करणल B.
११–अत्र 'करणशब्द' इति वा पाठो भवेत् ।
१२–'कल्पनां D. कालानां C.
१३–'नि' इति नास्ति B.
१४–तेभितवैः B. C.
१५–भित उदकस्त्वा B C. १६–पातया B.
१७–चातयथा B. C. १८–कुटा कुटा B. C.
१९–'क' इति त्रुटितम् C. * '॰मपगतं' इति युक्तं स्यात् ।
२०–मस्म ( स्मा C. ) ति B. C.
२१–अणभावात् B.C. 'अणूभावकर्मणः' इति स्यात् ।
२२–णुभावो B. 'कणतिः शब्दाणुभावे' इति पाठः स्यात् ।

कारणात् । अणुभावादिति[1] पाठः । औत्तरपदिक[2]दीर्घत्वं द्रष्टव्यम् ।

विकटो विक्रमेरेव[3] । विक्रान्ता विकृता वा गतिरस्येति । कुटतेर्[4]वा न क्रमेः । उकारस्याकारो वैपरीत्यम्[5] । विकुटितो ह्यसौ कुब्जीभूतो भवति । शिरिम्बिठशब्दः क्रियायोगेन मेघे द्रष्टव्यः[6] । तथाच प्रयोगं दर्शयिष्यति । शीर्यते[7] बिठे अन्तरिक्ष इत्यर्थः । कुत एतत् ? यत आह चीरिटमन्तरिक्षमित्यत्रोक्तं[8] तेन चीरिटेन[9] चीतं व्याख्यातम् । कालकर्णि अलक्ष्म्यभिधानमेतत्[10] । क्रियाशब्दो वा काला चासौ कर्णी चेति तया उपेतस्तामनेन सूक्तेन नाशितवान् । अद्यत्वेपि[11] कृतकृच्छ्रादिपुरश्चरण आस्यदग्ने उदके सूक्तमेतज्जपन् अलक्ष्मीं नाशयेत् । तथाच गौणकार्यः[12] पाठः 'शिरिम्बिठस्त्यलक्ष्मीघ्नः'[13] इति । सैत्वशब्दः[14] कर्मवचनः ।

पराशर इत्यनवगतमनेकार्थं च । ऋषौ पराशीर्ण इत्यवगमः, इन्द्रे पराशातनः । इतिहासपक्षे निर्वचनमेतत् । एवमवस्थस्य वसिष्ठस्य[15] नप्ता । शमीचिरमते शक्तौ जात इत्यर्थः । उदाहरणम्—

प्र ये गृहादममदुस्त्वाया पराशरः शतयातुर्वसिष्ठः ।
न ते भोजस्य सख्यं मृषन्ताधा सूरिभ्यः सुदिना व्युच्छान् ॥[16]

वसिष्ठस्यार्षम् । प्रेत्ययमममदुरित्येतेन सम्बध्यते । ये गृहादिति सप्तम्याः स्थान एषा पञ्चमी । गृहे तस्य यज्ञगृहे त्वामिन्द्रं प्रैममदुः[17] मदेस्तृप्तिकर्मणः स्तुतिकर्मणो वा रूपम् । प्रकर्षेण तर्पितवन्तः[18] स्तुतवन्तो वा । त्वाया[19] युष्मद् इच्छास्यन्वि[20] त्वामिच्छति तदर्थे तत्वा प्रत्ययादिति चाकारे तृतीयैकवचनं[21] लुकि छान्दसमेतद्रूपम् । त्वय्[22]या त्वत्काम्यया त्वदिच्छयेत्यर्थः[23] । पराशरः पराशरश्च शतयातुर्[24]बहूनां शातयिता तेन रक्षोघ्नं शस्त्रमाहतमा-

---

१–अणुभावा B.
२–'क' इति नास्ति B. C.
३–विक्रमेरेव B.   ४–कुटतेर्वा B. C.
५–विक ( कि C. ) टितो B.C.
६–मेघो द्रष्टव्यः B. C.
७–शीर्यते B. शिवर्यते C.
८–चिरीटमन्त B. C.
९–चिरीटेन B.C.
१०–अलक्ष्या ( क्ष्य C. ) भिधा B. C.
११–अयन्ते ( न्ते C. ) पि B. C.
१२–गौणकार्यः C.
१३–'यदरायीत्यलक्ष्मीघ्नं' [ बृ. दे. ८।५९ ]
१४–नत्वशब्दः B. C.
१५–परिसिष्ठस्य C.
१६–[ऋ० ७।१८।२१] 'प्र ये गृहा१ ( प्रयोगहागात C. )' इत्येव प्रतीकम् B. C.
१७–अत्र 'प्राममदुः' इति स्यात् ।
१८–तवतीं ततः स्तु B. तवती तस्तु C.
१९–त्वया B.
२०–क्वचित् B. क्वचि C.
२१–त्वयप्रतथा C. अयं पाठः सन्दिग्धः ।
२२–'त्वन्ने' इति युक्तं स्यात् ।
२३–अत्र 'त्वायया' इति पाठः स्यात् ।
२४–गदया तु बहू B. गतया तु यबहू C.

सीदिति स्मर्यत इतिहासे ।वसिष्ठश्च प्रमादयः, नेत्ययं प्रतिषेधो मृपन्तेत्येतेन सम्बध्यते ।[2] ते तत्र भोजस्य भोजनस्य दातुः । य इति श्रुतेः साकाङ्क्षत्वात् त इत्यध्याहार्यम् । स्तुत्यस्तोतृलक्षणं यष्टृयष्टव्यत्वलक्षणं च सख्यं न मृपन्ति मृप आमर्षे आमृषं विस्मरणं न विस्मरन्ति, विच्छेदं वा न विच्छिन्दन्ति न विनाशयन्तीत्यर्थः । एतदर्थशब्दश्रुतेर्यस्मादित्यध्याहार्यम् । यस्मान्न मृपन्ति अथ एतस्मात् कारणाद् व्यत्ययेन सूरिणां स्तोतॄणामेषा सुदिना शोभना व्युच्छेन व्युच्छन्ति विवसन्ति अवगच्छन्तीत्यर्थः ।

अनेकार्थतां दर्शयन्नाह इन्द्रोऽपीत्यादि । यातूनां रक्षसाम् ।

इन्द्रो यातूनामभवत् पराशरो हविर्मथीनामभ्या ३ विवासताम् ।

अभीदु शक्रः परशुर्यथा वनं पात्रेव भिन्दन्त्सत एति रक्षसः ॥

इत्युदाहरणं व्याख्यातं सत इत्येतत्प्रसङ्गेन ।

क्रिविर्दतीत्यनवगतम् । विकृन्दतीत्यवगतम् ।आयुधविशेषोऽभिधेयः । उदाहरणे दिद्युदित्येतत्सामानाधिकरण्यात् । उदाहरणम्—

यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्तन ।

यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा ॥

यूयं नः अस्माकम् । हे उग्राः अप्रसह्याः क्रूरा वा शत्रुषु मरुतः । सुचेतुना शोभनेन चित्तेनानुग्रहपरेण । अरिष्टग्रामाः ग्रामाः संघाता उच्यन्ते, वणिग्ग्रामादिदर्शनात् हे अहिंसितसंघाताः । सुमतिं शोभनां बुद्धिम् । मन्यतेर्वार्चतिकर्मणो मतिः स्तुतिस्तां पिपर्तन पालयत पूरयत वा । केन ? उच्यते । यत्र निमित्तार्थ एषा सप्तमी प्रयोजनस्य चं निमित्तत्वेन विवक्षा यस्मिन्निमित्ते यदर्थमित्यर्थः । वो युष्माकं सम्भूता दिद्युद् वज्रनामेदम्, वज्रनामसामायुधमात्रवचनत्वाद् इह शतघ्न्यां वर्तते, शतघ्नी रदति लिखति । फल ? सामर्थ्या-

1—वसिष्ठ च B. C.

2—'ते' इति नास्ति B. C.

3—'भोजस्य' इति नास्ति B.

4—'भोजनस्य' इति नास्ति C.

5—दातुं B.

6—मन्ये अथाशब्दः श्रूयते आयशब्दः । परमथाशब्दोऽप्यथेत्यस्यैवार्थे ।

7—स्तारिणां B. 'सूरीणां' इति युक्तं स्यात्

8—सुदिना B. C. 9—व्युच्छात् B. व्युच्छान् C.

10—[ऋ० ७।१०४।२१] 'इन्द्रो यातूनाम्' इत्येव प्रतीकम् B. C.

11—[निरु० ३।२०]

12—सतत B. सन्तत C.

13—वगतः C.

14—हरणे दिद्यु B.

15—[ऋ० १।१६६।६] 'यूयं न उग्राः' इत्येव प्रतीकम् B. C.

16—चित्त ( च C. तेन B. C.

17—'च' इति नास्ति B.

18—दिद्यु B. दिद्युत् C.

न्मेघम् । क्रिविर्दती विकर्तनदन्ती । रिणाति रिणातिर्गतिकर्मायं गच्छति च तमनुप्रविशती-त्यर्थः । कथमिव ? परशुः क्षुधितेव पशून् क्षुधितिरिव क्षुधिते क्षुरिके वा अनायासेनेत्यर्थः । वर्हणा महता वेघेनेति शेषः । केन निमित्तेन रदति ? तेनोदकेन ।

वरूळतीत्यवगतम् । कृत्तदतीत्यवगमः । एवं देवतेत्यध्याहार्यम् । कृत्तदन्त इति तु न्याय्यम् । उदाहरणे देवतापदसामानाधिकरण्यात् । सर्वथा मन्त्रे स्त्रीलिङ्गप्रतिरूपकमेतत् । यतः पुंलिङ्गमेव दर्शयति । कः तरळ इति पाठः । उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
त्रिंशः खण्डः । ]

---

१–त्रिविर्दती B. C.
२–'रिणाति' इति त्रुटितम् B.
३–वेधेनेति B.
४–तेन निमित्तेन रुदती B. येन निमित्तन रद C.
५–दन्ती (B.C.) त्यनव C.
६–तु नार्थ B.
७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ एकत्रिंशः खण्डः । ][1]

वामं वामं त आदुरे देवो ददात्वर्यमा ।
वामं पूषा वामं भगो वामं देवः करूळती[2] ॥

वामदेवस्य । वामं वननीयं[3] यावत् किञ्चित् प्रशस्यम् । किं पुनस्तत् ? सामर्थ्याद् धनम् । ते तुभ्यम् आदुरे हे देवानामादरि[4] यजमान । देवो ददातु । कतमः ? अर्यमा । वामं प्रशस्यमेव । देवः करूळती ददात्विति सर्वत्रानुषङ्गः ।

करूळतीति देवतान्तरम् । एवंविधस्य साविज्ञानपदत्वाभावात् । परगुणस्य च निर्वचने गुणिनोऽप्रत्यक्षत्वाद् अश्रुतसम्बन्धस्य चान्याय्यत्वात् प्रकृतस्यैव गुणाभिधानमेतदिति विनिश्चयः । तत् कस्येति विचारवाक्योपन्यासप्रयोजनस्तच्छब्दः । कः करूळती नाम ? उच्यते । आनन्तर्याद् भगः तस्यायं गुणयोगान्वादेश[3] इत्येकं दर्शनम् । कृत्ता दन्ता अनेन शत्रूणामिति च योर्भोत् सुकृत्तदन्तो देवः । वामं वाममिति वीप्साप्रयोगैः सर्वशेषतया पुरः पठितः ।

पूषेत्यपरदर्शनम् । नास्मात् परमस्ति, एतदेव प्रकृष्टं दर्शनमित्यर्थः । कुत एतत् ? ब्राह्मणे पूष्णोऽदन्तकत्वश्रवणात् । 'तत् पूष्णे पर्याजहुः ।' तस्य दन्तात् परोवाप अत्र च पविश्योदने द्रष्टव्यः । 'तस्मादाहुरदन्तकः पूषा' करं भाग इति । व्यवहितस्यापि श्रुतिलिङ्गदर्शनादेव पूष्ण एव प्रयोगत्वादन्वादेशो क्लृप्से कल्पयितव्यो न भागस्य । तस्मादानन्तर्यं न कारणमित्याह सोऽदन्तक इत्यादि ।

दन इत्यनवगतम् । ददातेर्मनसश्च दानमनस इत्यवगमः । उदाहरणम्—

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ॰ ४ । ३० । २४] 'वामं वामं' इत्येव प्रतीकम् B. C.
३–वननिवं C.
४ वां मदरिः (रि C.) B. C.
५–'वं' इत्येव B. C.
६–कुरुलति B. करूळति C.
७–इतीति B. इ इतीति देद देवता C. अत्र 'करूळतीति न देवान्तरम्' इति पाठः स्यात् ।
८–स्वात् सावद् B. त्वात् भावात् C.
९–पदगुणस्य C.
१०–करूळति B. करूळति C.
११–नन्तर्यात्  १२–मर्ग B.
१३–गाप (न्वC.) देशमित्येकदर्शन B.C.
१४–'त्' इति नास्ति B.C.
१५–प्रयोगाः C.
१६–कत्वात् (C.) श्रव B. C.
१७–[शत॰ ब्रा॰ १ । ७ । ४ । ] तत्पूष्णे प्र (प्र C.) जहुः B. C.
१८–करम्भभाग B.
१९–इत्युपगते C.

दनो विर्श इन्द्र मृध्रवाचः सप्त यत्पुरः शर्म शारंदीर्दर्त् ।
ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः ॥

अगस्त्यस्यार्षम्। दनो दानमनसः सामर्थ्यादस्य भाष्यकारो ? जहार। अस्माकं विशो मनुष्यान् हे इन्द्र मृध्रवाचो मृध्रशब्दो मृदुवचनः, मृदुवचश्च मृदुर्वाग्वचनात् क्विबिति शेषः। सप्त व्यत्ययेन नपुंसकं पुंलिङ्गस्थाने यस्मादर्थे वा यदे। यस्माद्वा सप्तसंख्याकामिमं पुरः शर्म सुखं क्लेशेन वेत्यर्थः। शारदीर्दर्त् शरदि भवाः, दृणातेश्छान्दसमेतद्रूपम् । दारितवानसि दारयसि वा। विदार्य च ऋणो ऋणातेर्गतिकर्मणोऽर्तेर्वा रूपं गमयसि प्रापयसि अपः वृष्टिलक्षणा अनवद्याः प्रशस्याः अर्णा नदीनामैतत्, नदीं प्रति। यूने 'यु मिश्रणे' मिश्रयित्रे च हविर्भिः स्तुतिभिश्च देवानाम्। वृत्रं धननामेदम्। पुरुकुत्साय कर्ता स्तोमानां कुत्सं-वन्धो बह्वीनां स्तुतीनां कर्त्रे यजमानाय। रन्धीः 'राध साध संसिद्धौ' संराधयसि ददासीत्यर्थः। यस्माद्वा इदंमिन्द्रं च जातवेदसि कस्माद्वा नो मृध्रवाचं कुर्विति सम्बन्धः।

शरोऽस्त्यिनवगतम्। संश्रृणोतेरिच्छायां छान्दस आरुः प्रत्ययो द्रष्टव्यः। संशोतेहिंसार्थस्येति केचित्। संशरणदीर्घेनिद्रया दीर्घेदिदृक्षया संशयानं वा हिंसात्मनस्तामिच्छतीति शरारुः संशिशयिषुरिति वा पाठान्तरे प्राप्ते उदाहरणम्—

अवीरामिव मामयं शरारुरभि मन्यते ।
उताहमंस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥

मामयमिन्द्राणी इन्द्रेण। किम्?शूरपत्नी नस्त्वमभ्यमिवि अरोगे अभिरुजसि याधसे दिवं वृषाकपिमित्येवमुक्ता तं प्रत्याह अवीरामिति वेति, वीरेण पालयित्रा रहितामिव मामयं शरारुः संशिशयिषुर्वा दीर्घनिद्रयाभिमन्यते । दुष्टेनाशयेनाभिभवति । उत पदं चार्थे अहंशब्दाच्च परो द्रष्टव्यः, अहं चास्मि भवामि भर्त्रात्यर्थं त्वया वीरिणी सावलेपमाह

१-[ऋ० १। १७४। २] 'दनो (तो C.) विशः' इत्येव प्रतीकम् B. C.
२-वाजश्च B. C.
३-दुवागवच B. दुगवच C.
४-व्ययव्यत्ययेन B. यद्यत्ययेन C.
५-यं B. यः C.
६-अयं पाठः सन्दिग्धः ।
७-'शे' इत्येव B. C. ८-रदीर्दर्त B.C.
*-''ऋणोः' इति विसर्गान्तः पाठः स्यात्।
९-आपः B. C. १०-दिह अनवद्यप्रशस B. C.
११-[धा० २। २३]
१२-[धा० ५। १६, १७]
१३-इन्द्र C. सन्दिग्ध एवास्य वाक्यस्य पाठः।
१४-मगशतिपन C. १५ हिंसात्मन C.
१६-[ऋ० १०। ८६। ९] 'अवीरामिव' इत्येव प्रतीकम् B. C.
१७-'द' इति त्रुटितम् C.
१८-उत्पयदश्चा B. उत्पयदश्चा C.
*-'परं द्रष्टव्यम्' इति युक्तम्।
१९-चर्वी B. चर्वि C.

इन्द्रपत्नी तवेन्द्रस्य पत्नी तत्रैतस्यास्त्वमसहाय इति तच्च न यतो मरुत्सखा मरुतः सहायो यस्य तव। किं वा सखिभिस्तव। यस्त्वं विश्वस्मात् सर्वस्मात् जगत ईश्वरः उद्धततरो वालो मूर्खः।

इदंयुरित्यनवगतम्। क्वचिन्मान्ताव्ययप्रतिषेधादनेकार्थं च। प्रत्ययस्यार्थभेदादिदं कामयमान उच्यते कर्मेदं सामान्येन प्रदर्शिते यथाभिलषितं धानादि द्रव्यमिच्छति स इदंयुः। तेन चेदं वसुयुः, वागंयुः, कियुः, विप्रयुरित्याद्यवगतानवगतक्यजन्तमात्रोपसंग्रहार्थं निगमेषु पठिता विशेषार्थमिति निरुक्तकाराभिप्रायः। अत एव च सामान्यस्य विशेषोऽनुदाहरणमिति। तेषां च वसूयवो वसुकामा इत्यादिषु बहुधागतत्वाद् विशेषेणेह किञ्चिद् भाष्यकार उदाजहार। अनेकार्थत्वं दर्शयन्नाह अथापि तद्वदर्थे भाष्यते युज्यत इत्यर्थः। तदिति मतुप्प्रकृतिः सामान्येन निर्दिश्यते। तेन तद्वदर्थे मत्वर्थ इत्यर्थः। उदाहरणम्—

इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः।
अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्रयन्ता॥

सव्यतामापन्नस्येन्द्रस्यार्षम्। अश्रायीति च्विण्प्रत्यये कर्तरि द्रष्टव्यः। इन्द्र आश्रितवान् सहायत्वे सुध्यः सुधीः सुप्रज्ञः सुकर्मा वा। निरेके नियमेन रिच्यन्ते प्राणैर्योद्धारो यत्र स निरेको निर्गत एकोऽप्यन्यः सहायो यस्मात् स निरेकः। कः पुनरसौ? ऐकान्तिकमरणसहायवर्जितात्यन्तभीषणसंग्रामैः। तत्र कान्? उच्यते। पज्रेषु पाजैः स्तुतिविषयं बलं तेन तद्वन्तः पज्रा अङ्गिरस इत्यभिप्रेताः। द्वितीयार्थे चात्र सप्तमी पज्रान् स्तुतिबलेन बलवतोऽङ्गिरस ऋषीनित्यर्थः। कथमाश्रितवान्? उच्यते। अश्वयुर्गव्यू रथयुर्वसूयुः अश्व-

---

१–तचैतस्यात् C. 'सास्त्वं सहाय' इति स्यात्।
२–'तः' इति त्रुटितम् C.
३–अयमत्र कस्य मन्त्रपदस्यार्थ इति न ज्ञायते। अस्मिन् मन्त्रव्याख्यानेऽनेकत्र सन्दिग्धोऽनवगतार्थश्च पाठोऽस्माभिर्यथादृष्ट एव लिखितः।
४–धनादि B.
५–तम्यं इच्छ B. C.
६–मनुप्रकृतिः B. C.
७–'उदाहरणम्' इति त्रुटितम् C.
८–[ऋ॰ १।९१।१४] 'इन्द्रो अभा (श्रा B.) यि' इत्येव प्रतीकम् B. C.
९–द्रष्टव्यम् C.
१०–सधीः
११–सप्रज्ञः C.
१२–र्मा वा ( व B. ) तिरेके B. C.
१३–तिरेकः B. C.
१४–संग्रामे B. C.
१५–'तत्र' इति त्रुटितम् B.
१६–वाजः B. C.
१७–वज्रा: B. C.
१८–वज्रान् B. C.
१९–अश्व ( श्व C. ) युः B. C.

दनो विश इन्द्र मृध्रवाचः सप्त यत्पुरः शर्म शारदीर्दर्त्।
ऋणोरपो अनवद्यार्णा यूने वृत्रं पुरुकुत्साय रन्धीः ॥

अगस्त्यस्यार्षम्। दनो दानमनसः सामर्थ्यादिन्द्रस्य भाष्यकारो ? जहार। अस्माकं विशो मनुष्यान् हे इन्द्र मृध्रवाचो मृध्रशब्दो मृदुवचनः, मृदुवचेश्च मृदुर्वाग्वचनात् क्विबिति शेषः। सप्त व्यत्ययेन नपुंसकं पुंलिङ्गस्थाने यस्मादर्थे वा यत्। यस्माद्वा सप्तसंख्याकामेवं पुरः शर्म सुखं क्लेशेन येत्यर्थः। शारदीर्दर्त् शरदि भवाः, दणातेश्छान्दसमेतद्रूपम्। दारितवानसि दारयसि वा। विदार्य च ऋणो ऋणातेर्गतिकर्मणोऽर्तेर्वा रूपं गमयसि प्रापयसि अपः वृष्टिलक्षणा अनवद्याः प्रशस्याः अर्णा नदीनामैतत्, नदीं प्रति। यूने 'यु मिश्रणे' मिश्रयित्रे च हविर्भिः स्तुतिभिश्च देवानाम्। वृत्रं धननामेदम्। पुरुकुत्साय कर्त्रा स्तोमानां कुत्सं-बन्धो बह्वीनां स्तुतीनां कर्त्रे यजमानाय। रन्धीः 'राध साध संसिद्धौ' संराधयसि ददासीत्यर्थः। यस्माद्वा इदमिन्द्रं च जातवेदसि कस्माद्वा नो मृध्रवाचं कुर्विति सम्बन्धः।

शरारुरित्यनवगतम्। संशृणोतेरिच्छायां छान्दस आरुः प्रत्ययो द्रष्टव्यः। संशोते-र्हिंसार्थस्येति केचित्। संशरणदीर्घनिद्रया दीर्घनिद्रक्षय। संशयानं वा हिंसात्मनस्तामिच्छतीति शरारुः संशिशयिषुरिति वा पाठान्तरे प्राप्ते उदाहरणम्—

अवीरामिव मामयं शरारुरभि मन्यते।
उताहमस्मि वीरिणीन्द्रपत्नी मरुत्सखा विश्वस्मादिन्द्र उत्तरः ॥

मामयमिन्द्राणी इन्द्रेण। किम् ? शूरपत्नी नस्त्वमभ्यमिपि अरोगे अभिरुजसि याचसे दिव्यं वृषाकपिमित्येवमुक्ता तं प्रत्याह अवीरामिति वेति, वीरेण पालयित्रा रहितामिव मामयं शरारुः संशिशयिषुर्वा दीर्घनिद्रयैवाभिमन्यते। दुष्टेनाशयेनाभिभवति। उत पदं चार्थे अहंशब्दाच्च परो द्रष्टव्यः, अहं चास्मि भवामि भर्त्रीत्यर्थं त्वया वीरिणी सावलेपमाह

१–[ऋ० १। १७४। २] 'दनो (नो C.) विशः' इत्येव प्रतीकम् B. C.
२–वाजश्च B. C.
३–दुवागवच B. दुगवच C.
४–व्यत्ययेन B. यत्ययेन C.
५–यं B. यः C.
६–अयं पाठः सन्दिग्धः।
७–'शं' इत्येव B. C.   ८–रदीदेर्श B.C.
*–'ऋणोः' इति विसर्गान्तः पाठः स्यात्।
९–आपः B. C. १०–दिह अनवद्यप्रशस B. C.
११–[धा० २। २३]
१२–[धा० ५। १६, १७]
१३–इन्द C. सन्दिग्ध एवास्य वाक्यस्य पाठः।
१४–मगारुतिस्मन C.   १५ हिंसामात्मन C.
१६–[ऋ० १०। ८६। ९] 'अवीरामिव' इत्येव प्रतीकम् B. C.
१७–'द्र' इति त्रुटितम् C.
१८–उत्पयदश्चा B. उत्पयदथा C.
*–'परं द्रष्टव्यम्' इति युक्तम्।
१९–चर्थे B. चर्वे C.

इन्द्रपत्नी तवेन्द्रस्य पत्नी तत्रैतस्यास्त्वमसहाय इति तच्च न यतयो मरुत्सखा मरुतः सहायो यस्य तव। किं वा सखिभिस्तव। यस्त्वं विश्वस्मात् सर्वस्मात् जगत ईश्वरः उद्धततरो बालो मूर्खः।

इदंयुरित्यनवगतम्। क्वचिन्मान्ताव्ययप्रतिषेधादनेकार्थं च। प्रत्ययस्यार्थभेदादिदं कामयमान उच्यते कर्मेदं सामान्येन प्रदर्शिते यथाभिलषितं धनादि द्रव्यमिच्छति स इदंयुः। तेन चेदं वसुयुः, वाजयुः, कियुः, विप्रयुरित्याद्यवगतानवगतक्यजन्तमात्रोपसंग्रहार्थं निगमेषु पठिता विशेषार्थमिति निरुक्तकाराभिप्रायः। अत एव च सामान्यस्य विशेषोऽनुदाहरणमिति। तेषां च वसूयवो वसुकामा इत्यादिषु बहुधागतत्वाद् विशेषेणेह किञ्चिद् भाष्यकार उदाजहार। अनेकार्थत्वं दर्शयन्नाह अथापि तद्वदर्थे भाषते युज्यत इत्यर्थः। तदिति मतुप्प्रकृतिः सामान्येन निर्दिश्यते। तेन तद्वदर्थे मत्वर्थ इत्यर्थः। उदाहरणम्—

इन्द्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः।
अश्वयुर्गव्यू रथयुर्वसूयुरिन्द्र इद्रायः क्षयति प्रयन्ता॥

सव्यतामापन्नस्येन्द्रस्यार्षम्। अश्रायीति चिण्प्रत्यये कर्तरि द्रष्टव्यः। इन्द्र आश्रितवान् सहायत्वे सुध्यः सुधीः सुप्रज्ञः सुकर्मा वा। निरेके नियमेन रिच्यन्ते प्राणैर्योद्धारो यत्र स निरेको निर्गत एकोऽप्यन्यः सहायो यस्मात् स निरेकः। कः पुनरसौ? ऐकान्तिकमरणसहायवर्जितात्यन्तभीषणसंग्रामैः। तत्र कान्? उच्यते। पज्रेषु पाजैः स्तुतिविषयं बलं तेन तद्वन्तः पज्रा अङ्गिरस इत्यभिप्रेताः। द्वितीयार्थे चात्र सप्तमी पज्रान् स्तुतिबलेन बलवतोऽङ्गिरस ऋषीनित्यर्थः। कथमाश्रितवान्? उच्यते। अश्वयुर्गव्यू रथयुर्वसूयुः अश्व-

---

१—वचैतस्मात् C. 'शास्तं सहाय' इति स्यात्।
२—'वः' इति त्रुटितम् C.
३—अयमत्र कस्य मन्त्रपदस्यार्थ इति न ज्ञायते। अस्मिन् मन्त्रव्याख्यानेऽनेकत्र सन्दिग्धोऽनवगतार्थश्च पाठोऽस्माभिर्यथादृष्ट एव लिखितः।
४—धनादि B.
५—वय्यं इच्छ B. C.
६—मतुप्प्रकृतिः B. C.
७—'उदाहरणम्' इति त्रुटितम् C.
८—[ऋ० १।५१।१४] 'इन्द्रो अश्रा (इना B.) यि' इत्येव प्रतीकम् B. C.
९—द्रष्टव्यम् C.
१०—तधीः
११—सप्रज्ञः C.
१२—र्मा वा (व B.) तिरेके B. C.
१३—तिरेकः B. C.
१४—संग्रामे B. C.
१५—'तत्र' इति त्रुटितम् B.
१६—वाजः B. C.
१७—पज्राः B. C.
१८—पज्रान् B. C.
१९—अश्व (श्च C.) यंयुः B. C.

धान् गोमान् रथवान् वसुमानिन्द्रः, इदि ऐश्वर्ये। ईशो यावत् किञ्चित् त्रैलोक्यं धनं सर्वस्य चेषति क्षयतिरैश्वर्यकर्मा अयं राय ईष्टे। प्रयन्ता च यमिर्दानार्थः,प्रदाता च स्तोतृभ्यः। न हीन्द्रोऽस्मदादिवदश्वादि कामयते। अतस्तद्धदर्थे।

कीकटा इत्यनवगतम्। किंकृताः क्रिया इत्यर्थगमः। मन्त्रे सप्तम्यन्त इति तथैवार्थ निगमेषु पठितः। उदाहरणम्—।

[ इत्येकादशस्या-(षष्ठस्या-) ध्यायस्य
एकत्रिंशः खण्डः। ]

---

१–इन्द्रः B. C.

२–चलवति B. C.

३–अयरोय C.

४–इष्टे B. C.

५–वदद्स्वादि B.

६–'तद्धदर्थे' इत्यस्मात् परं B. पुस्तके 'कीकटेषु' इति, C. पुस्तके च 'उदाहरणम्। कीकटेषु' इत्यधिकः पाठो वर्तते।

७–किकटा C.

८–इत्यवावगमः C.

९–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ द्वात्रिंशः खण्डः । ]

कि ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् ।

आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धया नः ॥

विश्वामित्रस्य । किं ते तव कृण्वन्ति कुर्वन्ति न क्वचिदुपयुज्यन्त इत्यर्थः । कीकटेषु कीकटनाम्नि अनार्यनिवासे देशे कृपणा वा कीकटाः कृपणेषु वा गावस्ता नाशिरं दुह्रे आशिरशब्देन सोमस्य श्रपणार्थं दध्युच्यते । तेन चात्र तत्प्रकृतिभूतमाशिरार्थं पयो लक्ष्यते । तेनाशिरार्थं पयो न दुह्यत इत्यर्थः । न तपन्ति घर्मं नापि स्वपयःप्रदानद्वारेण तपन्ति रोचयन्ति दीपयन्ति घर्मं महावीरपात्रं प्रवर्ग्येऽपि नोपयोगं गच्छन्तीत्यर्थः । एतेन साम्नाय्यादीन्यपि प्रदर्शितं द्रष्टव्यम् । एतज्ज्ञात्वा तास्तावद् आकारो भरेत्येतेन सम्बध्यते । अस्मभ्यमाभर आहर देहीत्यर्थः । नच केवलास्ता एव । किन्तर्हि ? प्रमगन्दस्य अत्यन्तकुसीदकुब्जस्य प्रमादकस्य नित्यप्रमुदितस्य वा अयष्टुरित्यभिप्रायः । पण्डकस्य वा पण्ढस्येत्यर्थः । असावप्यनधिकृत इत्यर्थः । तस्य वा स्वभूतं वेदो धनम् । तथा नैचाशाखं हीनजातीयापत्याद् शूद्रापत्यैश्च केवलैः शूद्रायानिपत्यत्रेत्यादि पातकहेतुत्वात् । तस्य च यत्स्वं नैचाशाखं त्वयि हे मघवन् रन्धय साधय देह्यस्मभ्यमित्यर्थः । एतेषां हि यत्स्वं तत्तव नोपयुज्यं यत्त्वस्मदीयं तत् सततप्रवृत्तयोगत्वात् तदुपयोगाय । अतोऽस्मभ्यं तद्देहीत्यर्थः । आहर च धनं यदश्रशीलानामिति ।

एकपदनिरुक्तम् । किंकृताः किमर्थमुत्पादिता अदो वाएः किमा करोतेश्चेत्यर्थः । अथवा यागदानादिभिः किंकृताभिः किं पिबतसोदतेत्येवंमाया एव प्रेप्सा प्रेक्षा येषां ते अश्र-

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२—[ऋ० ३।५३।१४] 'किं ते कृण्व (व C) न्ति' इत्येव प्रतीकम् B. C.

३—श्रवणार्थं C.

४—तपन्ति रोचयन्ति दिप (य D.) यन्ति B. C. 'रोचयन्ति' इति सन्दिग्धं पदम् ।

५—र्थं विनोप C.

६—अत्र 'दापपि' इति 'दिग्वपि' इति वा पाठो युक्तो भवेत् ।

७—हरेत्ये B. C. ८—भाहर B. C.

९—प्र उ ग (गा B.) न्दस्य B. C.

१०—अत्यन्ते C.

११—कुत्सीद B.

१२—पण्डकस्य वा पण्डस्ये B. C.

१३—यप्यनधि C. १४—वेदं C.

१५—यथा नैचाशाखं B. अत्र यथायथ पाठः सन्दिग्ध एव ।

१६—यद्भेया (B. C.) शूद्रा B.

१७—तवि B. १८—'र' इति नास्ति B. C.

१९—'हि' इति त्रुटितम् B. C.

२०—यादयते B.

इधाना नास्तिकाः किंक्रियाः सन्तः कीकटाः । देवान् प्रति हरणात् हर्म्यः सन् घर्मः । महावीरोऽयमर्थः । मगन्दः द्वैगुण्यं प्राप्तो मामागमिष्यतीत्युपचयं प्रत्याकर्ण्य ददाति प्रयुङ्क्ते इत्यर्थः । असदो गमेर्ददातेश्च मगन्दः, अपत्यार्थे प्रस्कण्ववत् प्रमगन्दः पितृक्रमागतं कौपीन्यं पश्येत्यर्थः । यत्स्वयं तस्य प्रमदको वा प्रमगन्दः ऐहलौकिक एव । पण्डको वा पापिष्ठगमनः तृतीयाप्रकृतिः स्त्रीरूपत्वात् लज्जया वा स्त्रीवन्निभृतं यो गच्छति सः । प्रोर्दको वा पुंस[*] अण्डौ प्रकर्षेणार्दयति मृद्नातीत्यर्थः । अण्डौ कस्मात् ? आणी इव यथा आणी रथस्य चक्रे संस्तम्भयेतां तद्वत् मृद्यमानौ व्रीडयतः । आणी अरणाद् गमनाद् अरणीरित्यर्थः । तत्स्वयं तस्य प्रमगन्दशब्दवाच्यस्य स्वमाहरेति सम्बन्धः । नीचैः पुत्रपौत्रादिरूपाः शाखाः सन्तानरूपा वा यस्य स नीचैःशाखः शूद्रायामेवोत्पादिता इत्यर्थः । स नीचैःशाखः, तस्य स्वं नैचाशाखम् । शाखाश्च शक्नोतेः खशायनिवृत्त्यर्थम् । रध्यतिर्वशगमने 'मा रधाम द्विषते' 'द्विषन्तं मह्यं रन्धयन्' इत्यादिप्रयोगदर्शनात् सिद्धम् । भाष्येप्युपन्यस्तत्वान्न व्याख्यायते मन्त्रः ।

बुन्द इत्यनवगतम् । इषुरभिधेयः । भिन्दो वा नेदमवगमप्रदर्शनम् । किन्तर्हि ? धातुप्रत्ययार्थप्रदर्शनम् । प्रत्ययस्तु यदि भिदेः पचादिकोऽच् ततो भेद इति स्यात् । अथ इगुपधलक्षणः कः, भिद इति भवितव्यम् । एवं तर्हि भिदेरपि पाघ्रादिविहितः शः शिष्ट-

---

१-समन्तः B.
२-धर्म्यः सद्धर्मः ( र्मः C. ) B. C.
३-गतः B. C.
४-'मा' इति त्रुटितम् B. C. ष्यन्नित्युप B. C.
५-गमन्दः B. C.　६-कावीन्यं B.
७-'यस्स्वं' इति स्यात् । 'यत्स्वयं तस्य' इति नास्ति C. निरर्थकोऽप्ययमत्र पाठः ।
८-एवं । पण्यको वा B. C.
९-अयं पाठः सन्दिग्धः ।
१०-प्राददको वा B. C.
* 'पुंसः' इति सविसर्गः पाठ उचितः ।
११-अन्धौ प्रकर्षेणार्दयति मृद्नातीत्य B. C.
१२-गन्धौ ( अण्डौ C. ) तस्मात् B. C.
१३-मृद्यमानौ B. C.
१४-'अ' इति त्रुटितम् B. C.　१५-आरणीरि C.
१६-शाखाः B. C.
१७-वित्यर्थः B. यत्यर्थः C.
१८-नी ( नै C. ) चैः शाखं B. C.
१९-शाखाश्च शक्नोति खश B. C.
२०-[ऋ० १०|१२८|५]
२१-[ऋ० १|५०|१३]
२२-सिद्धिम् C.
२३-'मन्त्रः' इति नास्ति B.
२४-तेदमवगमप्रदर्शनात् B. C.
२५-प्रत्ययस्तं B. C.
२६-[पा० ३|१|१३४] दिके च B. C.
२७-इति B. C.
२८-[पा० ३|१|१३५]
२९-[पा० ३|१|१३७] घ्राघ्रादि C.
३०-'शः' इति नास्ति B. C.

प्रयोगात् तत्र साधनशब्दो द्रष्टव्यः। अथवा औणादिकव्युत्पत्त्या भिन्द इति वा भयद इति वा भासमानो द्रवतीति वा वाक्यार्थे पदवचनम्। विदारणभयदानभासमानद्रवलक्षणानामर्थे सम्भवात्। अक्षरवर्णसामान्याच्चेदमाह। उदाहरणम्—।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
द्वात्रिंशः खण्डः। ]

---

१–भिंदे इति B. C.
२–'भ' इति त्रुटितम् B. C.
३–'वा' इति त्रुटितम् B.
४–विदारण ( णं B. ) B. C.
५–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ त्रयस्त्रिंशः खण्डः ]

तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः ।
उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिद् ऋदूवृधा ॥

कुरुस्तुतेरार्षम् । इन्द्र उच्यते । तुविक्षं बहुविक्षेपं बहुशरविक्षेपसहं विस्तीर्णमण्डलमत्यायतमित्यर्थः । ते तव स्वभूतं सुकृतं वा सुसंस्कृतम् । सूमयं सूर्मय इति सुखनाम सुसुखं साधूनां वा सुखकरत्वात् सुष्ठु सुखमित्यर्थः । मण्डितौ वा ऋदूपे बाहुविशेषणमेतत्, ऋतुशब्दोऽर्द्देतेर्हिंसार्थस्य शत्रूणामर्दनेन पातयितारौ । चित् पदपूरणः । ऋदूवृधौ मर्मवेधिनावित्यर्थः ।

ऋदूपे इत्यस्य निर्वचनम्–अर्दनपातिनावित्यादि । अर्दनेन हिंसया वेधनेन ताडनेन आत्मनो गमनेन तत्वंत इषोर्यच्छरीरं शरीरिणं पातयितारौ अर्दनपातिनौ मर्मणि रूपादे मर्मण्यर्दनवेधिनाविति । नेदं 'व्यध ताडने' इत्यस्य रूपम् । किं तर्हि ? तौदादिकस्य 'विध विधाने' इत्यस्य । अर्दनेन विधतः कुरुतस्ताडयत इति । विधानं चानुष्ठानकरणम् । तेन च क्रियासामान्येन क्रियाविशेषो लक्ष्यते । अतोऽर्थः स एव ताच्छीलिकेन णिनिप्रत्ययेन दर्शितः । इह धनुःसम्बन्धाद् इषुरिति गम्यते बुन्दः । अस्यैवार्थस्य दार्ढ्यार्थमुदाहरणं दर्शयति स्म ।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
त्रयस्त्रिंशः खण्डः । ]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० ८।७७।११ ] 'तुवि ( वी C. ) क्षं ते' इत्येव प्रतीकम् B. C.
३–सुतमयं B. 'सूमयं' इति त्रुटितम् B.
४–'सूम' इति त्रुटितम् B. C.
५–'ऋदुशब्दो' इति पाठो युक्तो भवेत् ।
६–ऋपूर्विधौ B. ऋपूवृधो C.
७–मवेधितावित्यर्थः B. C.
८–अर्दनखातानापिसादि B. C.
९–'न' इति त्रुटितम् B.
१०–हिंसाया B. C. ११–त्रासनेन B. C.
१२–तलवत B. १३–शरीरणं C.
१४–पायथितारो B. वातयितारो C.
१५–अत्र'रूपादे:'इति'उपाधे:'इति वा पाठो भवेत् । विषयस्य स्थितलक्ष्यस्य वा मर्माणीत्यर्थः ।
१६–नापि B. 'ति' इति त्रुटितम् B. C.
१७–[ धा० ४।७५ ]
१८–दिक इत्यस्य B. C. १९–[ धा० ६।४४ ]
२०–'वि' इति द्विर्लिखितम् B. C.
२१–'त' इति द्विर्लिखितम् B. C.
२२–ताडयत इति B.
२३–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

# [ अथ चतुस्त्रिंशः खण्डः । ]

निराविध्यद् गिरिभ्य आ धारयत् पक्वमोदनम् ।
इन्द्रो बुन्दं स्वाततम् ॥

कुत्सस्युतेरार्षम् । निर्विध्यति गिरिभ्यो गिरिशब्दान्मेघनाम्नो निर्धारणषष्ठ्याः स्थाने एषा पञ्चमी । गिरीणां मेघानां मध्ये य आधारयद् आभिमुख्येन धारयति । पक्वं परिपक्वं योग्यमुदकानाम् । ओदनं मेघनामेदम्, मेघम् । कोऽसौ ? इन्द्रः । कथं निरविध्यत् ? बुन्दमिषुं स्वाततमाकृष्टं कृत्वेति शेषः । तृतीयायाः स्थाने वा द्वितीया । बुन्देन स्वाकृष्टेनेत्यर्थः । ओदनशब्दं निराह उदकदानं ददातीति दानमुदकदानम् । व्याख्यातो बुन्दः ।

[12] बृन्दमित्यनवगतम् । समुदायोऽभिधेयः । तत्पुनरेतेन बुन्देन व्याख्यातः, क्रियायोगसमवायसम्भवात् । वीणासमवायाच्च प्रसिद्धत्वान्निगमो न प्रदर्शितः ।

वृन्दारकोऽप्येवमेव व्याख्यातः पूजावचनः । तत्र प्रयोगो वृन्दारक इति वैदिके । उपनिषत्सु प्रयोगः ।

किरित्यनवगतम् । कर्तेत्यवगमः । उदाहरणम्— ।

[ इत्येकादशस्या-( षष्ठस्या- ) ध्यायस्य
चतुस्त्रिंशः खण्डः । ]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।
२–[ ऋ० ८।७७।६ ] 'निराविध्यद् गिरिभ्यः' इत्येव प्रतीकम् B. C.
३–शब्दा मेघ B. C.
४–धाति B. C.
५–'परिपाक' इति युक्तं स्यात् ।
६–दका ( क C. ) नाम B. C.
७–स्योदन मेघ B. C.
८–विधर C.
९–मा ( स्मा C. ) कमाकृ B. C.
१०–बुन्देषा ( स्या C. ) कृष्टो नेत्य B. C.
११–मदनशब्दं B.
१२–वृन्दमित्य B. C. आदर्शपुस्तकेष्वत्र प्रकरणे, वृन्दपदे वृन्दारकपदे च सर्वत्र बकार एव पठ्यते ।
१३–यो निपेयः B. C.
१४–बुन्दो न B. C.
१५–करित्यन C.
१६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

[-अथ पञ्चत्रिंशः खण्डः । ]

अयं यो होता किरु स यमस्य कमप्यूहे यत्समञ्जन्ति देवाः ।
अहरहर्जायते मासि मास्यथा देवा दधिरे हव्यवाहम् ॥

सौन्धीकस्याग्नेर्विश्वेषां च देवानां संवादे देवानामिदमार्षम् । अयं यो होता ह्वाताऽग्निः । कः ? किं कर्ता उकारः पदपूरणः । सोऽयं मध्यरश्मिसंयमनाद् यम आदित्योऽभिप्रेतः आदित्यस्य । कथं पुनरग्निरादित्यस्य कर्ता ? उच्यते । 'अग्नेर्वा आदित्यो जायते' इति श्रुतेः । कमेपि कमित्यन्ननाम अन्नमपि काल्यमूहे वहति । यत् समञ्जन्ति सम्यग्गच्छन्ति व्याप्नुवन्ति भक्षयन्तीत्यर्थः । के ? देवाः । किञ्च अहरहः अहन्यहनि अग्निहोत्रहोमार्थमाहवनीयात्मना जायते मासि मासि पिण्डपितृयज्ञार्थम् । प्रदर्शनं चैतत् । अर्धमासदर्शपूर्णमासार्थम् । संवत्सरे च सोमयागार्थम् । अथ शब्दस्य एतस्मादर्थस्य श्रवणाद् यस्मादित्यध्याहार्यम् । यस्मादेव जायसे अथैतस्मात् कारणाद् देवा एवं दधिरे । शुद्धोऽप्ययं ददातिर्निपूर्वार्थे द्रष्टव्यः, निदधिरे निहितवन्तः । हव्यवाहं हविषो वोढारम् । अस्मिन्नधिकारे स्थापितवन्त इत्यर्थः ।

उल्बमित्यनवगतम् । ऊर्णोतेरिति धातुनिर्देशार्थम् । ऊर्णोतेर्ह्रस्वत्वरेफलोपत्वादिर्वेध प्रत्ययः । वृणोतेर्वा वकारस्योकारो यधे प्रत्ययः । गर्भस्याच्छादनमभिधेयम् । उदाहरणम्—

महत्तदुल्वं स्थविरं तदासीद् येनाविष्टितः प्रविवेशिथापः ।
विश्वा अपश्यद्बहुधा ते अग्ने जातवेदस्तन्वो देव एकः ॥

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १०।५२।३] 'अयं यो होता' इत्येव प्रतीकम् B. C.
३–सौचि (B. C.) कुत्स्याग्नेः B.
४–मिन्द्रमार्षम् B. C.
५–किम् B C.
६–इकारः B. C.
७–साय B. सुः य C.
८–रानिकादित्य B. राग्निचादित्यस्य C.
९–[अनुपलब्धमूलमिदं वचनम् ।]
१०–तमपि कमित्यन्नं नाम B. C.
११–तमपि काल्य B. C. 'अन्नं हविः काल्य' इति वा स्यात् ।
१२–यागवन् B. भो यागमत् C.
१३–मन्त्रशब्दस्य B. C.  १४–एतस्यार्थस्य B.
१५–णात्तसादित्य B. णादस्मादित्याद्य C.
१६–अत्र 'दधातिः' इति युक्तं स्यात् ।
१७–भविकारे C.
१८'रेफत्वादिः' इति पाठो युक्तः ।
१९–यश्व C.
२०–[ऋ० १०।५१।१] 'महत् तदुल्वम्' इत्येव प्रतीकम् B. C.

सौचीकस्याग्नेर्विश्वेदेवानाम् । महत् बहुलं जरायोरन्तर्गर्भवेष्टनं स्थविर स्थूलं चिरन्तनं वा आसीत् । येन उल्वेनावेष्टितः प्रविवेशिथ प्रविष्टवान् वा । उत्तरार्धर्चे-व्याख्यानमर्थेदियं प्रकृतव्याख्यानस्याभावात् । किञ्च विधाः सर्वा ऋतुषु अप्सुभिर्ष्वभिषु च प्रविष्टा अपश्यद् दृष्टवान् । बहुधानेकप्रकारं ते तव स्वभूताः हे अग्ने जातवेदः स्त्रियंत्वमूकः... ति देव एकः ।

ऋचीसमित्यनवर्गतम् । पृथिव्यभिधेया । अगतभासमित्येवमाद्याः शब्दसमाश्रय उपपद्यन्ते । धात्वन्यत्वकृतो विशेषः । उदाहरणम्—।

[ इत्येकादशास्या-( पष्ठस्या-) ध्यायस्य
पञ्चत्रिंशः खण्डः ]

---

१—सोचीकमग्निः विश्वेदेवा नः ( न्द: C. ) B. C.

२—वागत् B. C.

३—वेष्टितं B.

४—दृष्टवान् वा C.

५ अत्र पाठ सन्दिग्धः ।

६—सन्दिग्धोऽयं पाठः । शेषवाऽत्र 'अप्सु दिक्षु च' इति पाठः कदाचित् स्यात् ।

७—र्धीयत B. अत्र त्रुटित. कश्चन पाठः ।

८—गमेतम् B. गमेतम् C. एतदनन्तरं च 'अपग (ह B.) समाससमित्येवमाद्याः (नाः B.) शब्द-समाश्रयः' इत्यधिकः पाठः B C.

९—आदर्शपुस्तकेष्वत्र गण्डगमानिर्दिष्टो न दृश्यते ।

## [ अथ षट्त्रिंश॰ खण्डः । ]

हिमेनाग्निं घ्रंसमवारयेथा पितुमतीमूर्जमस्मा अधत्तम् ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथु सर्वगणं स्वस्ति ॥

हिममुदकमत्राभिप्रेतम् । उदकेन वृष्ट्याख्येनाग्निम् । लुप्तोपममेतत् सामर्थ्याद् द्रष्टव्यम् । अग्निमिव अग्निसदृशमित्यर्थः । किं पुनस्तत् ? घ्रंसम् अहर्नामेदम् । अहः सामर्थ्याद् ग्रीष्मान्तवर्ती । तदवारयेथा युवां शीतीकुरुथ इत्यर्थः । 'पितुमतीं पितुरित्यन्ननाम । ऊर्जमित्यूर्क्शब्देनापि उदकलक्षणो रस उच्यते । पितुमतीमूर्जमन्नमन्नं च रसम् । अन्नसहितं पेयमुदकमित्यर्थः । पुरोडाशादिसहितमाज्याहुतिलक्षणं वास्मा अग्नयेऽधत्तम् । वृष्टिद्वारेण दत्तम् किञ्च ऋबीसे पृथ्वीद्रव्ये प्रथितमधोनिहितम् । अत्रिम् अत्तारं हविषामोषधिवनस्पत्यादीनां वा । अश्विना हे अश्विनौ आर्षविफलभूतानां धान्यानां रूपेण उन्निन्यथु ऊर्ध्वं नयथ । सर्वगणं सर्वेण नामगणेन युक्तमग्निं य कश्चिदोषध्यादीनां गणस्तेन सर्वेणाग्निरेव युक्तः । कथम् ? ओषध्यादीनां पृथिवीविकारत्वात् पार्थिवादग्नेरनन्यत्वाद् अग्नेरेतद्रूपमापन्नस्य रूपं स्वस्ति अविनाशोऽयं न भवति तथा ।

इति निरुक्तविवरणसमुच्चये
एकादशस्या [ षष्ठस्या- ] ध्यायस्य
षष्ठः पादः समाप्तिमगमत् ।
समाप्तश्चाध्यायः ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ॰ १।११६।८] 'हिमेनाग्निम्' इत्येव प्रतीकम् B C
३–'स' इति त्रुटितम् B C
४–ध्रंसमहरणा ( ना C ) मेव (द C) म् B C
५–युवाः C.
६–पितुमिति B पितुमति C
७–दृष्टिद्वारेण C ८ प्रनित C.
९–'हि' इति त्रुटितम् B C
१०–उन्निनयथु ( थु C ) B C
११–सर्वगुण B
१२–'गणन युक्तमग्नि' इत्येतावान् पाठस्त्रुटितः B
१३–ध्यादीनोमगण B
१४–'थ' इति त्रुटितम् B C
१५–'दने' इत्येव पाठः C
१६–द्रूप आपन्न C
१७–नाशो यो न C
१८–अथ वोद्दृश्यार्गतः पाठो नास्त्यादर्शपुस्तकेषु ।
१९–'समाप्तिमगमत्' इति नास्ति C